न चोपदेशः संभवति — वाचकपदाभावात्, तदभावे च ब्रह्मज्ञानाभावेन लक्षणैव न प्रवर्तेत, लक्षणायाः वाच्यार्थसंबन्धितया विज्ञात एव ज्ञानजनकत्वस्वाभाव्यात्। नच — ब्रह्मज्ञानं शब्देनविना संभवति तस्यौपनिषदत्वादिति भावः। ननु — अस्तु प्रश्नपूर्वकमुपदेशेनैव ब्रह्मज्ञानं तथापि न ब्रह्मज्ञानासंभवः ब्रह्मपदलक्ष्यं ब्रह्मेवेत्युपदेशसंभवादित्यत आह — **न च तदेवेति** ॥ माभूद्ब्रह्मेत्युपदेशो ब्रह्मपदेन, पदान्तरेण तु उपदेशः स्यादिति शङ्कते — **अथ तत्र पदान्तरमिति** ॥ इति चेन्नेति शेषः। एतेन — तेनेत्युत्तरवाक्येनानन्वय इति परास्तम्। तदपि पदं न ब्रह्मज्ञानजनकं मुख्यार्थसंबन्धितया ब्रह्मज्ञानाभावादिति भावेनाह — **तेनापीति** ॥ अस्त्येव निर्गुणस्य किंचिद्वाचकं पदं नतु घटादिवत् अनेकपदवाच्यत्वमिति मन्यमानस्तटस्थः शङ्कते — **अथ किंचिदिति** ॥ एतेन— यत्किंचित्पदवाच्यत्वसाधनस्यैवाधिकरणप्रमेयत्वात् तस्य पूर्वपक्षिणाङ्गीकृतत्वेन समीहितसिद्धेः 'किं पदान्तरेणापराद्ध' मित्युत्तरग्रन्थवैयर्थ्यमिति परास्तम्। अधिकरणप्रमेयस्य तावता सिद्धत्वेपि सिद्धान्तविरुद्धस्य तटस्थचोद्यस्य निराकर्तव्यत्वेनोत्तरग्रन्थस्य सार्थकत्वात्। **लक्ष्यपरपदस्येति** ॥ लक्ष्यपरपदस्यधर्मानभिधायकस्य ब्रह्मवाचकत्वमुपपद्यते, ब्रह्मणः तत्प्रतिपाद्यस्वरूपत्वात्, प्रतिपाद्यार्थाभाव एव लक्षणायाः स्वीकर्तव्यत्वात्, 'सत्यं ज्ञान' (तै०. उ०. २-) मिति लक्षणपदानां तु गुणाभिधायकत्वान्न ब्रह्मवाचकत्वम्, सत्यादिपदप्रतिपाद्यानां सत्यत्वादिधर्माणां ब्रह्मण्यभावात्, प्रतिपाद्यार्थाभावे च लक्षणाया आश्रयणीयत्वादिति वैषम्यमिति भावः। **लक्षणपदानामपीति** ॥ सत्यज्ञानादिपदानाम् अन्यत्र सत्यत्वाद्यवच्छिन्नधर्मिवाचकत्वेपि ब्रणणि ब्रह्मगतविशेषावलंबनेन प्रवृत्तानां वाचकत्वोपपत्तेः। न हि नानार्थाः सैन्धवादिशब्दाः समुद्रोत्पन्नत्वादिनिमित्तमालंब्य लवणादौप्रवृत्ताः तदपहाय सिन्धुदेशोत्पन्नत्वादिकं निमित्तीकृत्य, तुरगादौ प्रवृत्ता इत्येतावता न तद्वाचका भवन्ति, येन सत्यज्ञानादिशब्दा न ब्रह्मवाचकाभवेयुरिति भावः। **लक्षणपदानामिति** ॥ भवेत्सत्यज्ञानादिपदानां ब्रह्मवाचकता यदि ब्रह्मगतविशेषावलंबनेन ब्रह्मणि तेषां प्रवृत्तिः स्यात् नचैवं किंनाम तेषां ब्रह्मस्वरूपमात्रावलंबेन प्रवृत्तिरिति लक्षणैवशरणमिति भावः।

**पर्यायतापातादिति ॥** पर्यायेणैव प्रयोगः स्यात्, सहप्रयोगो न स्यादिति भावः। एतेन – एकार्थवाचित्वस्यैव पर्यायताप्रयोजकत्वेन एकार्थलक्षकत्वस्य तदप्रयोजकत्वात् पर्यायतापातादित्ययुक्तमिति परास्तम्। **प्रयोजनबाहुल्यादिति ॥** सत्यज्ञानादिपदानां अनृतादिव्यावृत्तिज्ञापनरूपपृथक् पृथक्प्रयोजनसद्भावात् सहप्रयोग इति भावः। **वाच्यविशेषराहित्य इति ॥** सत्यादिपदानां ब्रह्मणि अर्थविशेषसमर्पकत्वाभावे अनृतादिव्यावृत्तिज्ञापनरूपप्रयोजनासिध्या प्रयोजनशतानुसंधानेपि सह प्रयोगोनेत्यर्थः। **अत इति ॥** पर्यायत्वप्रसङ्गस्यावर्जनीयत्वात्, सत्यज्ञानादिपदानां न लक्षकत्वम् अपितु वाचकत्वमित्यर्थः। वाच्यत्वस्य लक्षणोपयोगित्वमुपसंहरति – **इत्यस्त्येवेति ॥** इति उक्तप्रकारेण वाच्यत्वस्य लक्षणोपयोगोस्त्येवेत्यर्थः। एतेन – लक्षणपदानां लक्षकत्वाभावस्य वाच्यत्वस्य लक्षणोपयोगं प्रति हेतुत्वाभावात्, तयोर्हेतुहेतुमद्भावकथनमयुक्तमिति परास्तम्। हेतु हेतुमद्भावस्यानुक्तत्वात्।

**पूर्वपक्षस्तु** – न ब्रह्मणः शास्त्रमुख्य र्थत्वम्, अवाच्यत्वात्; नचासिद्धो हेतुः, 'यतोवाचो निवर्तन्त' इत्यादिश्रुतेः, नह्यवाच्यस्य शास्त्रमुख्यार्थता संभवतीति न शास्त्रोक्तजगत्कारणत्वं तस्येति।

**सिद्धान्तस्तु** – अवाच्यत्वाद्ब्रह्मणो न शास्त्रमुख्यार्थत्वमिति यदुक्तं न तद्युक्तम् – ईक्षणीयत्वान्यथानुपपत्त्या वाच्यत्वस्य सिद्धत्वात्। नचेक्षणीयत्वमसिद्धमिति वाच्यम् – 'स एतस्मा' दित्यादिश्रुति सिद्धत्वात्। नच – वाच्यत्वानुमानस्य 'यतोवाचो निवर्तन्त' इत्यादिश्रुतिबाधः – 'यतोवाच' इति श्रुतेः अप्रसिद्धत्वाभिधायकत्वेन अवाच्यत्वानभिधायकत्वात्। तदुक्तम् – 'अप्रसिद्धेरवाच्यं तद्वाच्यं सर्वागमोक्तित' इति। (६) ननु – भवत्येव ब्रह्म वाच्यं तथापि नेक्षणीयत्वान्यथानुपपत्त्या वाच्यत्वसाधनं युक्तं तदीक्षणीयत्वस्यासिद्धत्वात्। न च– 'स एतस्मा' दिति श्रुति सिद्धं तस्येक्षणीयत्वमिति वाच्यम् – तस्या गौणात्मपरत्वात् इति चेत्; न – 'आत्मन्येवात्मानं पश्ये' दिति श्रुत्या ईक्षणीये आत्मशब्दश्रवणात्। ईक्षणीयस्य निर्गुणत्वमिद्धेः 'स एतस्मा' दिति श्रुतेः तत्परत्वस्यैव वक्तव्यत्वात्। समाख्यालब्धस्यैव श्रुत्यर्थत्वात्। (७) 'ननु–आत्मन्येवा-

त्मानं पश्ये ' दिति श्रुतौ आत्मशब्दश्रवणेऽपि सगुणपरत्वमेवास्तु, नहि आत्मशब्दो- विष्णौपरमुख्य इत्येतावता आत्मशब्दघटितवाक्ये न गौणपरमितिसंभवति। ' हृदिह्येष आत्मे ' त्यादावपि गौणपरत्वाभावादिति चेत्, न — ' यस्यानुवित्त ' इति श्रुतौ तन्निष्ठस्यमोक्षोपदेशात्। नहिबद्धात्मज्ञानेन बन्धनिवृत्तिरूपमोक्षः संभवति। (८) अन्याव चोविमुंचथेति हेयत्व प्रतिपादकवचनविषयत्वाभावप्रसंगाच्च, न गौण आत्मा ईक्षणीय श्रुति प्रतिपाद्यः, मोक्षसाधनीभूत ज्ञानविषयस्य हेयत्व प्रतिपादकवचनविषयत्वासम्भवात्। (९) न केवलं ईक्षणीयत्वान्यथानुपपत्त्या ब्रह्म वाच्यं प्रतिपत्तव्यम् किंतु 'पूर्णमदः पूर्णमिद' मिति श्रुतिविषयत्वान्यथानुपपत्त्या ब्रह्म- वाच्यं प्रतिपत्तव्यम्। (१०) नन्वस्तु निर्गुणस्य वाच्यत्वसिध्याऽवाच्यत्वानुपपत्तिरूप बाधकाभावात् श्रुति प्रतिपाद्यत्वम्, तथापि न कारणत्वं प्रसिध्दशाखासुकारणत्वे- नोक्तत्वेऽपि अप्रसिद्धशाखासु अकारणत्वेनोक्तिसम्भवादिति चेत्; न — सर्व- वेदोत्पाद्यज्ञानस्यैकविषयत्वेन विरोधशंकानवकाशात्, तदुक्तम् – 'सर्ववेदायुक्तयः सुप्रमाणाः ब्राह्मं ज्ञानं परमं त्वेकमेव। प्रकाशयन्ते न विरोधः कुतश्चित् वेदेषु सर्वेषु तथेतिहास' इति। (११) न केवलं ईक्षणीयत्व श्रुत्युक्तवयोरन्यथानुपपत्त्या ब्रह्मणो- वाच्यत्वम्, अपितु ' साक्षीचेता केवलो निर्गुणश्चे ' ति निर्गुणपदविषयत्वान्यथा- नुपपत्त्या ब्रह्म वाच्यं प्रतिपत्तव्यम्। ततश्च — अवाच्यत्वरूपबाधकाभावात्, उपक्रमादिलिंगैर्विचारे क्रियमाणे तस्यैवकारणत्वावगतेः, गति सामान्याच्च, कारणत्वं तस्यैवेति सिद्धम् (५ अ०.)



[ ६ अधिकरणम्. ]

### ॐ आनन्दमयोऽभ्यासात् ॐ ( सू०. १२. )

**किमध्यायशेषेणेति**॥ ननु – ब्रह्मणः शास्त्रविषयत्वात् ब्रह्मस्वरूप- निरूपणानवशेषे शास्त्रशेषवैयर्थ्यस्यैवोचितत्वेन किं शास्त्रशेषेणेत्येव वक्तव्यम्, नतु अध्यायशेषेणेति, किंच इतः प्राक्तनानामधिकरणानाम्, अध्यायपादपीठत्वे- नाऽनध्यायत्वात् किमध्यायेनेत्येव वक्तव्यम्, नत्वध्यायशेषेणेतीति चेत्. न — नैतदेवंविज्ञायते अध्यायस्यशेषः अध्यायशेष इति, किं तर्हि अध्यायरूपः शेषो-

ऽध्यायशेष इति । ततश्च 'आनन्दमयोऽभ्यासा' दित्यारभ्य 'अनावृत्तिः शब्दादनावृत्तिः शब्दा' ( ४ - ४ - २३ ) दित्यन्तः शास्त्रशेषः अध्यायसंज्ञक इति 'किमध्यायशेषेणे' त्येवोक्तं भवतीतिनोक्तदोषः । **तत्कृत्यमाहेति** ॥ अध्यायचतुष्टयकृत्यस्य परस्परं विलक्षणत्वेन पृथगेव वक्तव्यत्वात्, उत्तराध्यायस्यकृत्यंतु तत्र तत्रैव वक्ष्याम इति भावेन प्रथमाध्यायकृत्यंतावदाह आचार्यो भाष्यकार इत्यर्थः । अत एव उत्तराध्यायनिरूपणभाष्यस्य व्यावर्त्यशंकायाः अत्रैवोक्तत्वेन उत्तराध्यायटीकायां तामप्रदर्शयित्वा एतदध्याय प्रतिपाद्यं दर्शयतीत्येवावतारितम्, अन्यथा इहैवगतार्थतामाशंक्य किमध्यायेनेति तत्रापि ब्रूयादिति द्रष्टव्यम् । **कृत्यांतराभावेऽपीति** ॥ अनुक्तार्थनिरूपणरूप प्रयोजनांतराभावेऽपि उपक्रमाद्यन्वयाच्छास्त्रीयशब्दानां सम्यक् निरूपण मनेनाध्यायेन कुर्वन्सूत्रकारः; अन्यपरत्वसंदेहविषयेषु वाक्येषु भगवत्परत्वसाधकोपक्रमादि लिंगयोगरूपो यः समन्वयः 'तत्तुसमन्वया' (ब्र० सू० १ - १ - ४ ) दिति सूत्रे समन्वयशब्देनोक्तः तमेव समन्वयं भगवत्परत्वसाधकोपक्रमादिलिंगयोगं प्रतिवाक्यग्रहणेन दर्शयति । ततश्च अनुक्तार्थप्रतिपादनरूप प्रयोजनान्तराभावेऽपि समन्वय प्रकटनरूपप्रयोजनसद्भावान्नाध्यायशेषस्य वैयर्थ्यमिति भावः । एतेन — यदि — उक्तसमन्वय निरूपणमेव अध्यायप्रयोजनं स्यात्, तर्हि आनन्दमयादिसूत्रेषु 'अभ्यासः, लिंग' मित्यादिरूपेण प्रतिवाक्यग्रहण पूर्वकं उपक्रमादिकमेव प्रदर्शनीयं स्यात्, ननु 'आनन्दमय' इत्यादिसाध्यांशप्रदर्शनमिति परास्तम् उपक्रमादि लिङ्गानि, वाच्यवाचकभावसंबन्धश्चे, त्युभयप्रदर्शनस्य इहाभिमतत्वात् । कुतः समन्वयसूत्रोक्तं समन्वयं प्रतिवाक्यग्रहणेन प्रदर्शयतीत्यत आह — **अन्यथेति** ॥ अत्र वाक्ये 'अन्यथे' ति 'अन्यदेव समन्वयादित्यपिवक्तुं शक्यत्वा' दिति च, प्रक्षिप्तम् । ततश्चैवं टीकावाक्यपाठः — प्रतिज्ञामात्रस्य हेतून्यासमात्रस्य हेत्वसाधकत्वात्, प्रतिवाक्यग्रहणेनोपक्रमादिकं प्रकटयतीति पूर्वेणसंबंधः । अवश्यं चैतदेवं विज्ञेयम्, 'अन्यदेव समन्वयादित्यपिवक्तुंशक्यत्वात्' इत्यस्य अन्यथा प्रतिज्ञामात्रस्य असाधकत्वा' दित्यनेनान्वयाभावात् । नहि यो हि प्रतिज्ञामात्रमसाधकमितिब्रूते स स्वयम् अर्थसाधनाय प्रतिज्ञामात्रं करोतीति संभवति येनेदं

अन्यदेवसमन्वयादित्यपिवक्तुं शक्यत्वादित्येतत् पूर्वेणसंगतं स्यात् । सूत्रोदाहरणकृत्यमाह – **एतदधिकरणेति** ॥ एतदधिकरणमारभ्य अध्यायपादाभ्यामन्तर्भावसंगति प्रसक्ति सूचनाय सूत्रोदाहरणमित्यर्थः । अत एव प्राक् ' अध्यायपादसङ्गतिस्तु आनन्दमयाधिकरणमारभ्य गवेषणीये ' त्युक्तम् । समस्तेनेति प्रायेणेति च मातावंध्येति वद्व्याहतमित्याशङ्कां विषय व्यवस्थया परिहरति – **चतुर्थपादेत्वित्यादिना** ॥ **नहीति** ॥ यदिसमस्तेनाध्यायेन समन्वयोनिरूप्यते तर्हि–अध्यायस्य एकार्थत्वं प्राप्तमेवेति पादभेदो न स्यात् । प्रतिपाद्यभेदायत्तत्वात् पाद भेदस्येति भावः । **शब्दास्तावच्चतुर्विधा इति** ॥ सूत्रनिष्पत्तेः पुरा चतुर्विधाः शब्दा आसन्, चतुर्विध प्रतिपत्तिविषया आसन्नितियावत् । एतेन — शब्दानां-स्वतः चातुर्विध्याभावात् शब्दा श्चतुर्विधा इत्ययुक्तमिति परास्तम् । स्वतः चातुर्विध्याभावेपि चतुर्विध प्रतिपत्तिविषयत्वेन चतुर्विधा इत्युपचारविषयत्वसंभवात् । **अन्यत्रैव प्रसिद्धा इति** ॥ प्रबल श्रुतिलिंगादिभिः अन्यपरा एवेति विज्ञाताः, अन्यत्रैव प्रसिद्धाः, कस्मिंश्चिद्वाक्ये, विद्यमानाः भगवत्पराः, कस्मिंश्चिद्वाक्ये विद्यमाना अन्यपरा, इत्येवं विज्ञाता उभयत्र प्रसिद्धाः, लोकव्यवहारबलेन वा, श्रुत्यादि बलेन वा, अन्यपरा एवेति विज्ञाता अन्यत्र प्रसिद्धाः, भगवद्वाचकत्वेन विज्ञाताः तत्र प्रसिद्धा इत्यर्थः । एतेन – अन्यत्र प्रसिद्धानाम्, अन्यत्रैव प्रसिद्धेषु, अन्यत्रापि प्रसिद्धेषु वा, अन्तर्भावो भवेत् अन्यत्रत्वस्य अन्यत्रैव अन्यत्रापीति पक्षद्वयव्यतिरेकेण विश्रान्तरत्वाभावात् चातुर्विध्याभिधानमयुक्तमिति परास्तम् । अन्यत्र प्रसिद्धा इत्यनेन लोकव्यवहार बलेन श्रुत्यादिबलेन वा अन्यपरा एवेति विज्ञाता शब्दविशेषाणां विवक्षितत्वात् । नन्वेवमपि – अन्यत्रप्रसिद्धा उभयत्र प्रसिद्धा इति विभागोनोपपद्यते अन्यत्र प्रसिद्धानां शब्दानामपि बलवच्छ्रुति लिंगादिभिः अन्यत्रैव प्रसिद्धत्वात् । कथमन्यथा आनंदमयाद्यधिकरण पूर्वपक्षेषु ब्रह्मादि श्रुतीनां, सूर्यप्रोक्तत्वादि लिंगानां चोपन्यासः । नच — ब्रह्मश्रुत्यादीनां न बलवत्त्वमितिवक्तुं युक्तम्, पूर्वपक्षदार्ढ्याभावप्रसंगात् । नच – पूर्वपक्षिभिन्नस्य अन्यत्र प्रसिद्धत्वं उभयत्र प्रसिद्धत्वं विवक्षितम्, पूर्वपक्षिणः श्रुत्यादिभिः प्रसिद्धत्वेपि नान्यत्र प्रसिद्धत्वहानिरितिवाच्यम् – अन्यत्रैव प्रसिद्धाऽव्यक्तादि-

शब्दानां पूर्वपक्षि भिन्नस्य पुरुषस्य श्रुत्यादिभिरन्यत्र प्रसिद्धत्वाभावेन अन्यत्रैव प्रसिद्धत्वाभावापातात् । नच– 'अव्यक्तात्पुरुष.पर' इत्याद्युक्तावरत्वादि लिंगपर्यालोचनयैव पूर्वपक्षि भिन्नस्य ते अन्यत्र प्रसिद्धा इति तेषां अन्यत्रैव प्रसिद्धत्वमितिवाच्यम् — अवरत्वादिलिङ्गत्वलेन अन्यत्रैव प्रसिद्धा इति ज्ञातुः पूर्वपक्षित्वानपायात् । न हि पूर्वपक्षिणः शृंगमस्ति, यद्व्यतिरेकान्नायं पूर्वपक्षीति प्रतीमः । किंच– यथा आनंदमयादिशब्दा लोकतोऽन्यत्र प्रसिद्धाः, तथा चतुर्थपादव्युत्पाद्या अव्यक्तादिशब्दा अपि लोकतोऽन्यत्र प्रसिद्धाः, कथमन्यथा चतुर्थपादीयाऽव्यक्ताद्यधिकरणेषु समन्वयसूत्रमन्यत्रैव प्रसिद्धिं संदेहबीजत्वेनाभिदध्यात् । नच – लोकतोऽन्यत्रैव प्रसिद्धिः संदेहबीजम् अपितु श्रुतियुक्तयादिभिरन्यत्रैव प्रसिद्धिः संदेहबीजमिति वाच्यम्, तस्या एव पूर्वपक्षनिश्चयत्वेन संशयहेतुत्वा संभवात् । नच — लोकप्रसिद्धेरपि संशयहेतुत्वासंभवः – अन्यमात्रपरत्वेन लोकविज्ञानस्य श्रुत्यादिमूलत्वेन दार्ढ्याभावात् । इदं रजतमिति जनातीति भ्रान्तिज्ञस्य संशयवत् संशयहेतुत्वोपपत्तेः । एव मुभयत्र प्रसिद्धा अपि, अन्यत्रैव प्रसिद्धाः, अतः परविद्याविषयोद्युभ्वाद्याश्रयोविष्णोरितर एवेति पूर्वपक्षिणाऽवभृतत्वात् । 'अन्यपरा एवे' ति अवधारण विषयत्वस्यैव अन्यत्रैव प्रसिद्धि शब्दार्थत्वात् । नहि वाक्यविशेषान्तर्गतो विष्णुपरः तदन्यवाक्यविशेषान्तर्गतोऽन्यपर इति प्रतीति विषयत्वमात्रेण उभयत्र प्रसिद्धत्वेन भाव्यं, न भाव्यं च विषयवाक्यांतर्गतो न विष्णुपरः, किंतु – तदन्यपर एवेति निश्चयविषयत्ववशात् अन्यत्रैव प्रसिद्धत्वेनेति राज्ञामाज्ञास्तीति चेत् सत्यम् — अन्यत्रोभयप्रसिद्धाः अन्यत्रैव प्रसिद्धाः, अन्यत्रैव प्रसिद्धाः अपि लोकतोऽन्यत्र प्रसिद्धाभवन्तीति । तथापि विभागोयुच्यते पृथापुत्रत्वसाम्येपि अर्जुनेपार्थत्वेन प्रसिद्धिवत् येषुलोकतः श्रुत्यादिनावा ऽन्यत्र प्रसिद्धत्वेन प्रसिद्धिः, तेशब्दा अन्यत्र प्रसिद्धशब्देन संगृहीताः, येषु अन्यत्रैव प्रसिद्धत्वेन प्रसिद्धिः, तेशब्दा अन्यत्रैवप्रसिद्धशब्देन संगृहीता इत्यंगीकारात् । एवंचसति येऽन्यत्र प्रसिद्धत्वेन प्रसिद्धाः, तानुपादायप्रथमद्वितीययोः पादयोः, ये उभयत्र प्रसिद्धत्वेन प्रसिद्धाः तानुपादाय तृतीयपादस्य, येत्वन्यत्रैव प्रसिद्धत्वेन प्रसिद्धाः तानुपादायचतुर्थपादस्यप्रवृत्तिः । एकस्यैवेंद्रस्य शचीपतित्वेन सहस्राक्षत्वेन पुरं-

दरत्वेन प्रसिद्धिवत् । एकस्यैव आकाशशब्दस्य अन्यत्रोभयत्र अन्यत्रैव प्रसिद्धत्वात् 'आकाशस्तल्लिंगा (१-२२) दिति प्रथमे 'आकाशोऽर्थांतरत्वादि व्यपदेशा' (३ - ४१ ) दिति तृतीये, कारणत्वेन चाकाशादि ' ष्विति चतुर्थेच, समन्वयोनिरूपितः । अत एव – ज्योतिः शब्दस्य 'ज्योतिश्चरणाभिधाना' ( १ - २६ ) दिति प्रथमे, 'ज्योतिर्दर्शना' ( ३ - ४० ) दिति तृतीये, 'ज्योतिरुपक्रमात्तुतथाह्यधीयत एक ' ( ४ - १० ) इति चतुर्थेच समन्वयोनिरूपपन्ना । **सर्वेपिनामलिंगात्मकतयेति** ॥ स्वशक्यार्थ बोधका नामात्मकाः, अवयवशक्यार्थबोधकालिंगात्मका इत्यर्थः । इदंचलिंगात्मकत्वं पंकजादिपदेषु ' यस्मिन्द्यौ ' रित्यादि वाक्येषुचाऽविशिष्टं पंकजादिपदानामिव, ' यस्मिन्द्यौ ' रित्यादिवाक्यानामपि स्वावयवशक्तयार्थबोधकत्वात् इति बोध्यम् । **तेषु न तत्र प्रसिद्धानामिति** ॥ यद्वाक्यान्तर्गताभगवत्प्रसिद्धाः, तद्वाक्यं विषयवाक्यत्वेनोदाहृत्य तदन्तर्गतानां तेषां समन्वयोनवाच्य इत्यर्थः । एतेन – ' ऋतं सत्यंपरंब्रह्म पुरुषं कृष्णपिंगलम् । ऊर्ध्वरेतं विरूपाक्षं शंकरं नीललोहित ' मिति वाक्यान्तर्गत ब्रह्मशब्दस्य शंकरादिश्रुतिबलेन ' अन्यपरएवायं ब्रह्मशब्द ' इति प्राप्तपूर्वपक्षस्य परिहाराय समन्वेतव्यत्वात् । तत्र प्रसिद्धानां समन्वयोनवाच्य इत्युक्तमिति परास्तम् । एतद्वाक्यान्तर्गतपदस्य अन्यत्रैव प्रसिद्धत्वेन तत्र प्रसिद्धत्वाभावात् । **अमुख्यत्वेन प्राथम्यायोगादिति** ॥ ननु – उभयत्र प्रसिद्धशब्दानामपि अन्यत्र प्रसिद्धशब्दानामिवान्यत्र प्रसिद्धिपराकरणपूर्वकं भगवत्परत्वंसमर्थनीयं, समर्थ्यतेच ' द्युभ्वाद्यायतनं स्वशब्दा ' ( १ - ३ - १ ) दित्यादौ,अन्यथा–' नानुमानमतच्छब्दात् ; प्राणभृच्चे '( ब्र०. सू०. १-३. २, ३ ) त्येतावन्मात्रेण अन्यत्रप्रसिद्धि पराकरणसंभवात्, ' द्युभ्वाद्यायतनं स्वशब्दा ' दित्यस्य वैयर्थ्यंस्यात् । किं चैवं सति तृतीयपादस्यसमन्वयाप्रतिपादकत्वेन समन्वयाध्याये अन्तर्भावोनस्यात् इति चेत् स्यादयंदोषः, यदि तृतीयपादे समन्वयोनव्युत्पादनीयो, नव्युत्पाद्यते चेति ब्रूमः, न चैवं किं नाम समन्वेतव्यशब्दोक्तगुणलाभायसमन्वयो नव्युत्पादनीय इति । समन्वेतव्यशब्दस्य उभयत्रप्रसिद्धित्वेन तद्वाच्यगुणस्य परमात्मनि पूर्वपक्षिणा अंगीकृतत्वात् । किमर्थं तर्हि समन्वय उच्यते इति चेत् समन्वेतव्य

शब्दवाच्यगुणस्य अन्येष्वुयोगनिरासायेतिब्रूमः। विष्णवन्यपरत्वेनाभिमतयावद्वाक्यान्तर्गत समन्वेतव्यशब्दस्य भगवतिसमन्वये भगवदन्यस्य समन्वेतव्यशब्दोक्तगुणयोगो निराकृतो भवति । **प्रमाणवैधुर्यादिति** ॥ ततश्चैवंयोजना–उभयत्रप्रसिद्धशब्दानां समन्वयफलस्य अन्यत्रप्रसिद्धिपराकरणमात्रस्य, अन्यत्रप्रसिद्धशब्दसमन्वयप्रतिपादनलभ्यफलादमुख्यत्वेन प्राथम्यायोगात् तृतीयपादे तत्समन्वयोक्तिरिति । इदमुक्तंभवति–अन्यत्रप्रसिद्धशब्दस्यसमन्वयोक्तेः फलद्वयं, भगवतिसमन्वेतव्यशब्दोक्तगुणलाभः, अन्यत्रतद्योगनिरासश्चेति । उभयत्रप्रसिद्धशब्दसमन्वयस्यतु भगवतितदभिधेयगुणयोगस्य पूर्वपक्षिणाकृतत्वात् अन्यत्रतद्गुणयोगनिरासएव फलमिति । **अन्यपराणांमध्य इति** ॥ लिङ्गात्मकानामवयवशक्तिमालंव्यधर्मवाचिनां, स्वशक्त्याधर्मिवाचिभ्योनामात्मकेभ्योऽमुख्यत्वेन, तत्समन्वयोक्तिः द्वितीयपाद इत्यर्थः । एतेन लिङ्गात्मकानामपि धर्मिवाचिभ्यः अमुख्यत्वकथनमयुक्तमिति परास्तम् । **ततोन्यत्रेति** ॥ स्वशक्त्याऽर्थ प्रतिपादकत्वेन प्राधान्यात् तत्समन्वयः प्रथमपादेप्रदर्श्यत इत्यर्थः । लोकतोऽन्यत्रप्रसिद्धानां प्रथमपादे, श्रुत्यादिभि, रन्यत्रप्रसिद्धानां द्वितीयपादेसमन्वयः प्रतिपाद्यत इति भावः । एतेन समन्वेतव्यशब्दानां नामात्मकत्वलिंगात्मकत्वभेदेन, पादभेदनिरूपण मयुक्तं, नामलिंगात्मकत्वयोर्भेदस्य, तृतीय चतुर्थसमन्वेतव्यशब्देष्वपि सद्भावेन तस्यपादभेदाऽप्रयोजकत्वादिति परास्तम्। लोकतोऽन्यत्रप्रसिद्धत्व श्रुत्यादिभिरन्यत्रप्रसिद्धत्वरूपभेदस्यैव पादभेदप्रयोजकतयाऽभिमतत्वात्। नामलिंगात्मकत्वोक्तेः स्वरूपकथनार्थत्वात् । अत एव टीकायां ‘ प्रथमपादेलोकतोन्यत्र प्रसिद्धाऽऽनन्दमय नाम्न’ इत्युक्तं, द्वितीयपादेतु लोकतोन्यत्र प्रसिद्धाऽऽदित्य श्रुतिसहपठित सर्वगतत्वलिंगात्मकस्येत्युक्तम् । अन्यत्रप्रसिद्धानां नामात्मकानां प्रथमपादे, लिंगात्मकानां द्वितीयपाद इत्यादि नियमस्तु सूत्रे उदाहरणतयोपादानविषय एवेतिबोध्यम्। एतेन – आनंदमयशब्दसमन्वयोक्तौ, समानन्यायत्वात् अन्यत्रप्रसिद्धनामात्मकाऽन्नमयादि शब्दसमन्वयसिद्धिवत्, समानन्यायाक्रान्तानामुभयत्र अन्यत्रैव प्रसिद्धशब्दानां समन्वयसिद्धिर्भवेदेवाऽविशेषात् । एवंच प्रथमपादे अन्यत्रप्रसिद्धनामात्मकानां समन्वयोनिरूप्यत इत्यादिपादार्थकथनमयुक्तमिति परास्तम् । अन्ये-

**त्विति** ॥ स्पष्टलिंगानां स्पष्टलिंगं समन्वयज्ञापकं येषांतेस्पष्टलिंगाः तेषांशब्दनां ब्रह्मनिष्ठतया प्रथमेसमन्वयः प्रतिपाद्यते, द्वितीयतृतीययोस्तु अस्पष्टानां नविद्यंते स्पष्टानियेषांतेऽस्पष्टाः तेषां शब्दानांसमन्वयः प्रतिपाद्यत इति पादार्थानाचक्षत इत्यर्थः । प्रायेणान्यत्रप्रसिद्धानामितिभाष्येण शास्त्राध्यायपादसंभवेपि न श्रुत्यधिकरणसंगतिसूचनं संभवतीतिभावेन शंकते । **नन्विति** ॥ अन्यत्रप्रसिद्धानां शब्दानांसमन्वयः प्रतिपाद्यतेऽस्मिन्पादे इत्यभिधानात् अस्मिन् अधिकरणे आनंदमयनाम्नो ब्रह्मणि समन्वयसमर्थनात्, शास्त्राध्यायपादसंगतिः सूचिताऽस्तु, तथापि न कृतार्थता श्रुत्यधिकरणसंगत्योरसूचनात् । एवंचानंदमयस्य विष्णुत्वसमर्थनरूपस्य अधिकरणप्रमेयस्य पूर्वस्यसंगतिर्वक्तव्या साच केयतः श्रुत्याधिकरणाभ्यां संगतिंदर्शयतीत्यर्थः । एतेन — आकाशाद्यधिकरणोपक्रम इव अस्तिशास्त्रादिसंगतिरित्युक्तया श्रुत्यधिकरणसंगतिं दर्शयतीतिवक्तव्यं ननु 'नन्वस्तु शास्त्राध्यायपादसंगतिः तथापि कापूर्वं संगति' रिति प्रष्टव्यं, शास्त्रादिसंगतेरनुक्तत्वेन अभ्यांगीकारायोगात्, 'तथापि' इत्यस्य अनन्वयाच्चेति परास्तम् । पादप्रतिपाद्यंवदताभाष्यकृता संगतेः सूचितत्वेन सर्वापिसंगतिः सूचितेति मन्यमानस्य शंकोदयसंभवात् । यद्यपि समन्वयसूत्रेणप्रपंच्यप्रपंचकभावलक्षणसंगतेरुक्तत्वात् कापूर्वसंगतिरिति प्रश्नोऽनुपपन्नः, तथापि तस्याः संगतेः सर्वाधिकरणसाधारणत्वात् असाधारणसंगतेरनुक्तत्वात् प्रश्नोनानुपपन्नः । यद्यपि पादस्यशास्त्राध्यायात्मकत्वात्पादसंगतिरेवशास्त्राध्यायसंगतिरिति 'अस्तु पादसंगति' रिति वक्तव्यम् — तथापि पादस्यशास्त्राध्यायपादसंज्ञाविषयत्वात् पादसंगतिरेवशास्त्राध्यायपादसंगतित्वेनोपचरिता । अत एव — अस्तुशास्त्राध्यायपादसंगतिरित्येकवचनम्, अन्यथा — 'श्रुत्यधिकरणसंगती' इत्यत्र द्विवचननिर्देशवत् इहापि 'संगतय' इति बहुवचननिर्देशं कुर्यादिति । **अतः संगतिसद्भावादिति** ॥ जिज्ञासाधिकरणे प्रतिपाद्यस्यब्रह्मणः आनंदमयाधिकरण प्रतिपाद्यस्य आनंदमयस्यच अवयवावयविभावलक्षणसंबंधसद्भावादित्यर्थः प्रतिपाद्ययोः संबंधस्यैवसंगतित्वादितिभावः । तेन जिज्ञासाधिकरण प्रतिपाद्यस्यब्रह्मणः तैत्तिरीयश्रुतौ आनंदमयपुच्छत्वश्रवणेपि तयोरधिकरणयोः संगतिलाभः पुच्छत्वेनप्रतीतिमात्रस्य संगतिं प्रति अप्रयोजकत्वादिति

परास्तम् । 'तस्यप्रियमेवशिर' इत्यादिना शिरआद्यवयवादीनां उपकारादि साधन जन्यसुखविशेषात्मकत्वमुच्यत इति प्रतीतिनिरासायाह – **तत्तत्प्रवर्तकतयेति ॥** यद्यपि 'तत्तत्प्रवर्तकतया तत्तद्व्यपदेश' इति वाक्यं सर्व पुस्तकेषुनदृश्यते, तथापि– एतद्वाक्योक्ततत्तद्व्यपदेशगतिकथनस्यप्राह्यत्वादिदंवाक्यं व्याख्यातम् । प्रियादि-प्रवर्तकतया 'प्रियमेवशिर' इत्यादिव्यपदेश इति भावः । नह्यवयविनांविनेतिभाष्य-मयुक्तं विष्णुत्वसमर्थनस्य आवश्यकत्वान्निरूपणादित्यत आह – **यद्यानंदमय-इत्यादिना ॥ तदा न ब्रह्मजिज्ञासेति ॥** भिन्नांशत्वेजीववत् सर्वोत्तमत्वेन जिज्ञास्यत्वं न स्यादितिभावः। आनंदमयस्य ब्रह्मणोऽन्यत्वेपि 'तद्वि जिज्ञासस्वे' ति श्रुतिविहितत्वात् ब्रह्मजिज्ञासाभवेदेवेत्यत आह – **अवयविन एवेति ॥** जिज्ञा· साविधिगतस्य ब्रह्मशब्दस्य आनंदमयेलक्षणसंभवेन आनंदमयजिज्ञासैवविध्यर्थः स्यादिति भावः । मुख्यार्थबाधाभावाल्लक्षणानयुक्तेत्यत आह – **अवयविजिज्ञासां विनेति ॥** अवयवस्यप्राधान्येन जिज्ञासायोगात् मुख्यार्थबाध इति भावः । अस्तु तर्हि आनंदमयजिज्ञासैव श्रुत्यर्थः, तथाच तस्यविष्णुत्वसमर्थनंव्यर्थ मित्यत-आह–**ब्रह्मविज्ञासाचेति ॥** श्रुत्युक्ता ब्रह्मशब्दरूढिलभ्या ब्रह्मजिज्ञासा आनंद-मयस्य विष्णुत्वसमर्थनेन संभवेसति न हातुंशक्या । सर्वथामुख्यार्थासंभव एव-लक्षणायाः स्वीकर्तव्यत्वादितिभावः । उपसंहरति– **अत इति ॥** आनंदमयस्य अतः पुच्छरूपाद्विष्णोरन्यत्वेसति ब्रह्मजिज्ञासा न संभवति इति यतः अतो ब्रह्म-जिज्ञासासिध्यर्थमित्यन्वयः । **अत्र आनंदमयोविषय इति ॥** अत्रद्वेदर्शने – आनंदमयशब्दो लिंगात्मक इति एकं दर्शनम्, नामात्मकमिति अपरम् तत्राद्यं सत्तर्कदीपावलि तत्वप्रदीपकृतोर्दर्शनम् । 'ब्रह्मणि अर्थान्तरानिरूढसमन्वय प्रति-पादकेऽस्मिन्पादे आनंदमयादिशब्दानां केषुचिदर्थान्तरानिरूढानां समन्वय प्रति-पादनात् प्रायेणेति' इति सत्तर्कदीपावल्याम्, 'आनंदादिगुणवाचिनां आनंदमया-दिगुणवाचिनां स्वशब्दानां समन्वयसिध्यर्थम् आनंदमयाधिकरणे लिंगविचारात्, इंद्रादिबहुनाम्नां समन्वयसौलभ्याय उत्तरत्रान्तस्थत्वलिंगविचारात्, तस्मात् प्रायेण अन्यत्र प्रसिद्धानां नामशब्दानां ब्रह्मणि समन्वयं वक्ति अस्मिनपाद' इति तत्वप्रदीपेच, आनंदमयशब्दस्य लिंगात्मकत्वोक्तेः । द्वितीयंतु – टीकाकृतो-

दर्शनम् — अत्रान्तरस्थत्वलिंगमनन्वयप्रतिपादनात्प्रायेणेतीति अंतरस्थत्वाधिकरणस्यैव व्यावर्त्यत्वोक्तिः । अन्यथा — आनंदमयाधिकरणस्यापि व्यावर्त्यत्वमवक्ष्यत् । तत्राद्यमतस्य 'गुणसामान्यवाचिनाम् । गुणवाचिनांच प्रथममाहदेवः समन्वय' मित्यनुव्याख्याने आनंदमयशब्दस्यधर्मविशिष्टधर्मिवाचकत्वोक्तिर्मूलम् । द्वितीयमतस्यतु — 'आनंदमयरूपेतु ब्रह्मणः पुच्छतेक्तितः । समस्ताब्रह्मताप्राप्तेरानन्दमयनामही' त्यनुव्याख्याने नामत्वोक्तिर्मूलम् । नचपरस्परविरोधादन्यतरस्याऽप्रामाण्यं वाच्यम् – आनंदमयशब्दस्य योगरूढत्वेन मतद्वयोक्तनामात्मकत्व लिंगात्मकत्वयोर्भावात् । पूर्वमते नामात्मकत्वस्याऽनिषेधात्, द्वितीयमते च लिंगात्मकत्वस्याऽनिषेधात् । कथं तर्हि टीकायां अंतःस्थत्वाधिकरणस्यैवप्रायशब्दव्यावर्त्यत्वोक्तिरिति चेत्, तस्यकेवललिंगात्मकत्वेन पादेऽन्तर्भावोनेति सूचनायेति ब्रूमः । कथं तर्हितत्वप्रदीपे आनंदमयाधिकरणस्यप्रायशब्दव्यावर्त्यत्वोक्तिरितिचेत्, आकाशाद्यधिकरणेष्विव आनंदमयाधिकरणे केवलनामात्मकसमन्वयोनेति सूचनार्थमिति ब्रूमः । **किं वाविष्णुरिति॥** 'इति संदेह' इति शेषः । हिरण्यगर्भनिष्ठब्रह्मशब्दस्य आनंदमयेश्रवणात् आनन्दमयशब्दपर्यायस्य शतानंदशब्दस्य हिरण्यगर्भेश्रवणात् तयोरैक्यमिति गूढाभिसंधिः । पूर्वपक्षमाह–**आनन्दमय इति॥** ब्रह्मशब्द एवाऽऽनंदमयस्य हिरण्यगर्भत्वसाधनायोपन्यस्त इति मन्यमानः शङ्कते – **ब्रह्मशब्दस्येति ॥** भवेद्ब्रह्मशब्द आनंदमयस्य हिरण्यगर्भत्वसाधकः यदितन्मात्रनिष्ठःस्यात्, नचैवमिति भावः । 'इति चेत्' इत्यनन्तरं नेतिशेषोबोध्यः । पूर्वपक्षीस्वाऽभिसंधि मुद्घाटयति । **आनंदमयशब्दार्थवदिति ॥** नाऽस्माभि र्ब्रह्मशब्दमात्रेण हिरण्यगर्भत्वं साधितं येनोक्तदोषःस्यात्, किंतु परस्परनामसांकर्येण तयोरैक्यमिति साधयाम इति भावः । एतेन – शतानंदनाम्नः पक्षधर्मताभावात् ब्रह्मशब्दस्य जीवादावपिसत्त्वात् व्याप्त्यभावेन हिरण्यगर्भत्वसाधनाय तयोरुपन्यासोऽनुपपन्न इति परास्तम् । आनंदमय हिरण्यगर्भयोरभेदसाधनाय नामसांकर्यस्यहेतुत्वेनेहाऽभिमतत्वात् । ययोर्नामसांकर्यमसतिबाधके तयोरभेद इति व्याप्तिसद्भावात् । नासत्यदस्तयोर्नामसांकर्येऽपि बाधकवशात् नाभेद इति भावः । **सूर्यप्रोक्तत्वादिति॥** सूर्यान्तर्गतत्वादित्यर्थः । अप्रयोजकताशंकापरिहाराय तस्य

रुद्रलिंगत्वमाह – **रुद्रस्येति** ॥ सूर्यान्तर्गतत्वं न रुद्रस्य, नापि बृहस्पतेः, किंतु इंद्रस्यैवेतिमन्यन्ते, अपरे – बृहस्पतेरेव न रुद्रेंद्रयोः, अन्येतु – अन्यस्यैव न रुद्रेन्द्रबृहस्पत्यादीनांमन्यन्ते । तेषांपूर्वपक्षमाह । **ययोरिति** ॥ एतेन– सूर्यान्तर्गतत्वस्य रुद्रादिसाधारण्ये रुद्र एव आनंदमय इत्याद्यवधारणार्थं हेतुतया तस्योपादानमयुक्तमिति परास्तम् । तस्य रुद्राद्यसाधारण्यं मन्यमानैर्हेतुतया उपादानस्योचितत्वात् । आनंदमयः चित्प्रकृतिर्भवितुमर्हति, ब्रह्मशब्दविषयत्वेन बाधकाभावात् जगदुपादानत्वेन साधकसद्भावादिति गूढाभिसंधिः । पूर्वपक्षमाह– **चित् प्रकृतिर्वेति** ॥ ब्रह्मशब्दस्य चित्प्रकृतिरूपसाध्यसामानाधिकरण्यज्ञापनायाह – **आनंदमयनिष्ठेति** ॥ एतेन — आनंदमयस्य चित्प्रकृतित्वसाधनाय तत्रैवहेतोर्वक्तव्यत्वेनाऽचित्प्रकृतेर्हेतुविधानमयुक्तमिति परास्तम् । ब्रह्मशब्दोहेतुत्वेनोक्त इति मन्यमानः शंकते – **कथमिति** ॥ इति चेत् इत्यनन्तरं- 'ने'ति । शेषः पूर्वपक्षीस्वाऽभिसंधिमुद्घाटयति–**सोऽकामयत इति** ॥ ब्रह्म शब्दविषयत्वं बाधकाभावप्रदर्शनायोपन्यस्तम् । बहुभाव एव हेतुत्वेन उपन्यस्त इति भावः । साध्यसहचाराभावात् व्याप्यत्वासिद्धोहेतुरित्यत आह — **तदभिमानत्वादिति** ॥ मुख्योपादानत्वस्यसाध्यसहचाराभावेपि 'सोऽकामतते' ति श्रुत्युक्तकामनोपपत्तये हेतुत्वेनाभिमतस्यौपचारिकोपादानत्वस्यसाध्यसहचारित्वात् नव्याप्यत्वासिद्धिरिति भावः । **बहुभावादेवेति** ॥ 'बहुस्या 'मिति वाक्ये मुख्य एव बहुभावोविवक्षितः । कामनाया अभिमानिद्वारासंभवात् ततश्च अचित्प्रकृतित्वसाधनमेवोचितमिति भावः । आनंदमया जीवाः, जीवात्मकाऽन्नमयादिप्रायपठितत्वात् इति मन्यमानस्य पूर्वपक्षमाह — **तत्तद्देहगतेति** ॥ नानंदमया जीवत्वेन अभ्युपगन्तुंयुक्ताः ब्रह्मशब्दाऽविषयत्वादित्यत आह — **बृहजातीति** ॥ तस्य जीवेपि सद्भावात् न ब्रह्म शब्दविषयत्वं बाधकमिति भावः । ब्रह्म शब्द एव हेतुत्वेनोक्त इति मन्यमानस्य शंकामनूद्यनिषेधति — **नचवाच्यमिति** ॥ स्वाभिप्रेतं हेतुमाविष्करोति — **अन्नरसमय इति** ॥ सर्वपूर्वपक्षसाधारणम् अवधारणव्यावर्त्यमाह — **यद्यपीत्यादिना** ॥ तत्तद्देवतालिंगसद्भावात् यथा तत्तद्देवानांप्राप्तिः, एवं मुख्यतोविष्णुवाचकब्रह्मशब्दसद्भावात्विष्णोरप्यस्ति प्राप्ति-

रित्यर्थः । ननु – आनंदमयेति प्रतिज्ञाभांगो विष्णुरेवेति व्याख्यातव्यः, किंचिति व्यर्थमित्या शंकायामाह — कस्तर्हीति ॥ 'न ते आनंदमयशब्देनोच्यंत' इत्यनन्तरं हेतोरेवाऽऽकांक्षितत्वेन विष्णुरेवेत्यस्याऽनाकांक्षितत्वादवक्तव्यत्वं स्यादिति नत आनंदमयशब्देनोच्यंत इति उक्तयनन्तरं विष्णुरेवेत्युक्तः संगत्यर्थं किंचिदनेनाकांक्षामुत्पाद्य सूत्रप्रतिज्ञाभागं व्याचष्ट इत्यर्थः । ब्रह्म शब्दाभ्यासंदर्शयति — असन्नेवेति ॥ अत्र सूत्र आनंदमयशब्दस्य उदाहरणमात्रत्वात् । अन्नमयादिषु यद्विष्णुत्वसाधकं प्रसिद्धं तदेवहेतुत्वेनग्राह्यम, एवंच आनंदमये ऽभ्यासो हेतुः, अन्नमयादिषु ब्रह्म शब्द एव हेतुरितिबोध्यम् । एतेन – आनंदमये विज्ञानमये च अभ्याससद्भावेपि, अन्नमयादिषु अभ्यासाभावात् भागासिद्धो-हेतुरिति परास्तम् ॥

'येऽन्नं ब्रह्मे' त्यादिरुपादभ्यासात्तैतरीयके ।
अन्यासुचैतद्रूपासुशाखास्वपि सहस्रशः ।
आनंदमय इत्याद्यैः शब्दैर्वाच्यो हरिः स्वयम् ।'

इत्यनुव्याख्यानस्य तैत्तरीयकेविद्यमानात् । 'येन्नं ब्रह्मोपासते, ये प्राणं ब्रह्मोपासते, आनदं ब्रह्मणोविद्वान्, विज्ञानं ब्रह्मेति चेत् वेद, विज्ञानंदेवाःसर्वे ब्रह्मज्येष्ठमुपासते, असत् ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेतिचेद्वेदे' (तै. उ. २-) त्यादि ब्रह्मशब्दाभ्यासात्, उपलक्षणतया सूत्रगृहीता ब्रह्मशब्दादयश्च एतद्रूपासुसहस्रशाखासु 'आनंदमयः विज्ञानमयः' इत्याद्यैः शब्दै हरिः स्वयंवाच्य इत्यर्थः ब्रह्मशब्दस्यचाभ्यासात् पंचरूपादिषुस्फुटमिति अनुव्याख्यानस्यापि अन्नमयादिपंचरूपेषु अन्नादिषुमध्ये आनंदमयवत् विज्ञानमयेऽभ्यासात् सूत्रस्थाऽऽनंदमयशब्दोऽन्नमयादीनां उपलक्षकोबोध्यः । अन्यथा – अन्नमयादीनामब्रह्मत्वप्राप्त्या तदंतर्गत विज्ञानमये व्यभिचरितो ब्रह्मशब्दस्याभ्यासः, कथ मानंदमयस्य ब्रह्मत्वंसाधयेदित्येवाऽऽशयः, नत्वन्नमयादिषु सर्वत्र ब्रह्मशब्दाभ्यासोऽस्तीत्याशयः । अन्नमयादिषु सकृदेव ब्रह्मशब्दश्रवणेनाभ्यासस्याऽभावात् । न वा सूत्रकृता ब्रह्मशब्द एव हेतुत्वेनोक्तोऽभ्यास इत्याशयः । आनंदमयशब्दस्योपलक्षकत्वसिद्धौ अन्नमयादिषु असिद्धिपरिहाराय ब्रह्मशब्दोहेतुत्वेन विवक्षित इत्यर्थसिद्धिः, ब्रह्मशब्दमात्रस्यहेतुत्व-

सिद्धौ च व्यभिचारप्रसंगेनाऽऽनन्दमयत्वापत्त्या तत्परिहारायाऽऽनंदमयशब्दस्योपलक्षकत्वासिद्धिरिति अन्योन्याश्रयप्रसंगात् । ननु — 'आनंदमयोऽभ्यासात्' इत्यत्राऽभ्यासस्यहेतुत्वं सूत्रकृता विवक्षितमित्युक्तम् , सुधाविरुद्धत्वात् , तथाहि— 'एकविषयासकृदुक्तिर्मुख्योऽभ्यासः । नचैवमत्रास्ति, किंतु — असकृदुक्तिमात्रमिति विज्ञापयितुं 'इत्यादे' रित्यनुक्त्वा इत्यादिरूपा' दित्युक्तम् , अन्नमयादिविषयत्वेन ब्रह्मशब्दस्य श्रुतत्वादित्युक्तं भवतीति ब्रह्मशब्दस्य हेतुत्वाभिधानादिति चेत् , स्यादयं दोषः, यदि ब्रह्मशब्दाभ्यासो न हेतुरिति सुधाशयः स्यात् , न चैवं, किंतु , ब्रह्मशब्दाभ्यासः ब्रह्मशब्दश्चहेतुरित्याशयः, तत्राऽऽद्यः सूत्रेकण्ठोक्तः, द्वितीयस्तु उपलक्षणतया सूचित इति विवेकः। ततश्च — एवं सुधावाक्ययोजना — नन्वनुव्याख्याने 'येऽन्नंब्रह्मे' त्यादिरूपादभ्यासादित्युक्तं येऽन्नंब्रह्मेत्यादेः सकृदुक्तत्वेन अभ्यासत्वाभावादित्यत आह — एकविषयाऽसकृदुक्तिरिति । एकविषयाऽसकृदुक्तिः सौत्राऽभ्यासपदस्यमुख्योर्थः । नचैवंरूपोऽभ्यासोऽन्नमयादिषु सर्वत्रास्ति, किंतु — अन्नमयादिपंचविषयेषु मिलित्वाबहुवारमुक्तिरस्तीति न सौत्रहेतोरसिद्धिः शंकनीयेति सूत्रकृता ब्रह्मशब्दोभ्यासश्चेति हेतुद्वयं विवक्षितम् , अन्नमयादिषु आनंदमय विज्ञानमययोरिव ब्रह्मशब्दाभ्यासरूपहेत्वभावेपि उपलक्षणतयोक्त ब्रह्मशब्दरूपहेतुसद्भावात् नासिद्धिरिति ज्ञापयितुं इत्यादेरित्यनुक्त्वा इत्यादिरूपादित्युक्तमिति भावः ।' येऽन्नंब्रह्मे ' त्यनुव्याख्याने अभ्यासादित्युक्तेर्भावमाह — अन्नमयादिविषयत्वेनेति ॥ उदाहरणत्वेन सूत्रोपात्तादभ्यासपदात्सूचितो ब्रह्मशब्दरूपोहेतुः अत्र अनुव्याख्याने अभ्यासपदेनोक्त इति भावः । ननु – आनंदमयशब्दस्य अन्नमयादिशब्दोदाहरणत्वाभिधानमयुक्तम् , अनुव्याख्यानसुधाविरुद्धत्वात् 'उपलक्षणत्वं शब्दानामानंदमयपूर्विणा' मित्यनुव्याख्याने आनंदमयशब्दस्य अन्नमयादिशब्दोपलक्षकत्वोक्तेः, 'अजहल्लक्षणाचैषा तेनाऽऽनंदमयस्यत्यागो न मन्तव्य' इति सुधायामुक्तत्वात् इति चेत् स्यादयंदोषः, यदि आनंदमयशब्दस्य अन्नमयादि शब्दोपलक्षकत्वमिति सुधानुव्याख्यानयोराशयोऽर्थः। 'अजहल्लक्षणाचैषे' ति सुधावाक्यस्य सूत्रकारीयाऽऽनंदमयशब्दोच्चारणस्य एवा अन्नमयादि शब्दोदाहरणेच , अजहल्लक्षणा तुल्या यथा छत्रिणः समायान्तीत्यत्र-

छादिशब्दस्य शक्यतत्संबंध्युभयग्राहकत्वं, एवम् आनंदमयशब्दोच्चारणस्य उच्चार्यमाणानंदमयशब्दस्य तत्समानन्यायाऽन्नमयशब्दस्य च ग्राहकत्वं, ननु 'सभाराजाऽमनुष्यपूर्वे पा.सू.२-४-२३' त्यत्रराजशब्दोच्चारणस्यैवपर्यायमात्रस्य ग्राहकत्वमित्याशयोबोध्यः। एतेन उच्चारणस्योच्चार्यमाण शब्दस्यपरित्यागेनसमानन्यायशब्दग्राहकत्वस्य क्वाप्यदर्शनात् अजहल्लक्षणातुल्यत्वाभिधानमयुक्तमिति परास्तम् । उच्चारणेपि उच्चार्यमाण शब्दपरित्यागस्य सभाराजेत्यादौ दर्शनात् । इदमत्रतत्वम् 'आनंदमयोभ्यासा' दित्यादिसूत्रे सूत्रकारीयमानंदमयादिशब्दोच्चारणं नसमन्वेतव्यशब्दानां परिगणनाय अनंतशाखानिर्णयाभावप्रसंगात् किंतु समन्वेतव्यशब्दानामुच्चारणमात्रम्, एवं सति 'अग्नयेत्वाजुष्टं निर्वपामी' त्यत्र अग्निपदस्थाने सूर्यपदोहवत् आनंदमयोभ्यासादित्यादिसूत्रेषु समन्वेतव्य शब्दस्थाने समानन्यायानामन्नमयादिशब्दानामूहः कार्यः, ततश्चैवंसूत्रपाठो भवति – 'आनंदमयोऽभ्यासात्', मन्नमयो ब्रह्मशब्दात्, विज्ञानमयोऽभ्यासा' दित्यादि । अत एव सुधायां – 'यद्यत्र आनंदमयशब्दःस्वमात्रस्य ग्राहकः स्यात्, नचैवं किं त्वत्रानंदमयशब्दस्य समानन्यायानामन्नमयादिशब्दानामुपलक्षकत्व ' मित्युक्तम्, नहि आनंदमयशब्दोच्चारणमन्नमयादिशब्दानामपि अस्मिन् सूत्रे उच्चार्यत्वमिति ज्ञापनार्थमित्यभिप्रायाभावे आनंदमयशब्दः स्वमात्रस्यग्राहकः स्यादि' ति सुधावाक्यं युज्यते । आनंदमयशब्दस्यार्थवाचित्वेन शब्दपदार्थकत्वाभावात् । कथमन्यथा 'तस्ये' त्यनेन आनंदमयशब्दस्य संबंधः स्यात् । तस्मात् आनंदमयशब्दोच्चारणस्य अन्नमयादि शब्दग्राहकत्वमिति सुधाशयो बोध्यः । एवमन्यान्यपि सुधावाक्यानियोज्यानि । अवश्यंचैतदेवं विज्ञेयम्, 'आनंदमयोविष्णुरभ्यासात्, अन्नमयोविष्णुर्ब्रह्मशब्दात्' इत्यादियोजनासंभवात् । आनंदमयशब्दस्याऽन्नमयादिशब्दोपलक्षकत्वांगीकारेतु आनंदमयशब्दस्य अजहल्लक्षणया आनंदमयरूपार्थो ऽन्नमयादि शब्दोभयपरत्वापत्त्या परतात्पर्यविषयस्य वाक्यार्थसमन्वयानियमेनानंदमयरूपोर्थः, अन्नमयादि शब्दा विष्णुरेवेति वाक्यार्थः स्यात्, नचासौ युक्तः, 'ब्रह्मणोऽन्नमयादिशब्दरूपत्वाभावात्, वाक्यविशेषग्रहणस्य पूर्वपक्षविशेषोपादानस्य सिद्धान्तप्रमाणविशेषस्वीकारस्य च उदाहरणार्थत्वात् इति सुधायामुक्तत्वाचेति '

ब्रह्मशब्दाभ्यासब्रह्मशब्दयोरन्नमयादिषु श्रवणेपि कुतोऽन्नमयादयो विष्णुत्वेन प्रतिपत्तव्या इत्यत आह टीकायाम् — **ब्रह्मशब्दस्येति** ॥ भाष्ये ' तदेव ब्रह्मपरमं कवीना ' मित्यादि श्रुतिस्मृत्युदाहरणं यथा 'किंतु विष्णुरेवे' ति प्रतिज्ञातार्थ सिध्युपयोगि तथैव 'नते आनंदमयशब्देनोच्यंत' इति प्रतिज्ञातार्थसिद्धेरप्युपयोगातिभावेन 'तथापि नत आनंदमयशब्देनोच्यंत ' इति वाक्यं अर्थतोऽनुवदाति-- **न च तत एवेति** ॥ तत एव तथापि हिरण्यगर्भादीनां प्राप्तिः आनंदमयशब्दवाच्यत्व प्राप्तिर्नाशंक्येत्यर्थः । एतेन — हिरण्यगर्भादीनां प्राप्तिमाशंक्य तथापि नते आनंदमयशब्देनोच्यंत इति भाष्ये निषिद्धत्वेन च 'तत एवे' त्यनेन पुनराशंक्यनिराकरण मनुपपन्नमिति परास्तम् । अस्याग्रन्थस्य 'नते आनंदमयशब्देनोच्यंत' इति भाष्यस्योपयोगोऽस्तीति सूचनार्थत्वात् । यदर्थमनुवादः, तदाह — **अपूर्णत्वेति**॥ भाष्ये—**वासुदेवात्मकमिति** ॥ यतिः वासुदेवात्मकं ब्रह्म, मूलमन्त्रेण, प्रणवेन वा, पूजयेदित्यर्थः । टीकायाम् (१३. सू.) **उक्तर्थमाक्षिप्येति** ॥ तटस्थरीत्या उक्तार्थमाक्षिप्येत्यर्थः । एतेन — यथा अविकारित्वान्नानंदमयो विष्णुः, तथानंदमयस्य पुच्छमपि अविकारिणः विकार्यवयत्वायोगात् । ततश्च न जिज्ञासाक्षेप इति परास्तम् । अस्य तटस्थत्वेन जिज्ञासाक्षेपानाग्रहात् । अत्रगुणसूत्रम् । ' विकारशब्दान्नेति चेन्न प्राचुर्या 'दिति । विकारार्थकमयडन्तशब्दाऽभिधेयत्वेन दोषवानानंदमयो न विष्णुः, सदोषनिर्दोषयोरभेदायोगादिति चेत्, न—प्रकृत्यर्थानन्द प्राचुर्यान्निमित्तादानन्दमयशब्दवाच्यस्य दोषित्वाभावादिति सूत्रार्थः । (१३-सू०) **नायमानंदमय इति** ॥ आनंदमयशब्दघटितै तद्वाक्यप्रतिपाद्यो न विष्णुः, किंतु प्रकृत्यादय एवेत्यर्थः । **विकारेति** ॥ एतद्वाक्य प्रतिपाद्ये विकाराभिधायकमयट् प्रत्ययप्रयोगादित्यर्थः । मयट् प्रत्ययप्रयोगायोगादितिवक्तव्ये मयट् शब्दप्रयोगादित्युक्तिः शब्दात्मकोयं प्रत्यय इति ज्ञापनाय।'सन्ति हि शब्दात्मका अपिप्रत्ययाः । द्विर्वेगोयुगच्छब्दः प्रत्ययोवक्तव्यः, उष्ट्रगोयुगम्, खरगोयुगम्; स्नेहनैतैल च् शब्दश्च प्रत्ययोवक्तव्यः इंगुदतैलम्, भवनेक्षेत्रे शाकटशब्दश्च प्रत्ययोवक्तव्यः, इक्षुशाकटम्, मूलशाकटम ' इति महाभाष्योक्तेः । **प्रचुरानंदत्वादिति** ॥ आनंदमयस्य आनंदमयपदवाच्यत्वे यद्यानंदविकारित्वं प्रवृत्तिनिमितं स्यात्, तदा विष्णोस्तदभेदो न स्यात्, न चैवं किं नाम प्रचुरानंदत्वं

प्रवृत्तिनिमित्तं 'द्व्यचः छंदसी' ( पां. सू. ४-३- ) ति सूत्रेण विकारावयवार्थक मयटः छंदसि द्व्यच एव विधानात् आनंदशब्दस्यत्र्यच्त्वेन विकारार्थक मयट् प्रत्ययायोगादिति भावः। ननु प्राचुर्यार्थकोमयडित्ययुक्तम् , मयटः प्राचुर्येऽनुशासनाभावादित्यत आह — तादात्म्यार्थ इति ॥ प्रयोगसिद्धत्वात् नानुशासनापेक्षेति भावः। उक्तंचमहाभाष्ये—'यथा लक्षणमप्रयुक्त' इति अप्रयुक्ते लौकिकप्रयोगेणाऽनिश्चिते यथा लक्षणं प्रयोक्तव्यं नियमेन लक्षणमनुसर्तव्यम् , लौकिकप्रयोगेण निश्चितेतु न नियमेन लक्षणापेक्षेत्यर्थः। ननु—आनंदप्रचुरत्वाध्यानंदमय इति नवक्तव्यं तत्कथं प्रचुरानंदत्वादिति आनंदमयपदव्याख्यानमित्यत आह -- आनंदेति ॥ आनंदमयपदार्थप्रदर्शनाय प्रकृतिप्रत्ययक्रमानुसारेण आनंदप्रचुर इत्यभिधाने ब्रह्मण्यनानंदस्यप्राप्तिः स्यात् । प्रचुरान्तसमासस्य समानाधिकरणाऽल्पविरोध्यतिशयवाचित्वस्य 'ब्राह्मणप्रचुरोग्राम' इत्यादौदर्शनात्, ब्रह्मणि अनानंदप्राप्तिर्माभूदि· त्येतदर्थंप्रचुरानंद इति विपरीतसमासः कृतः प्रचुरपूर्वपदं समासपदं प्रयुक्तमित्यर्थः। एतेन — आनंदमय पदस्य एकत्वेन असमासत्वात् 'विपरीत समासः कृत' इत्ययुक्तमिति परास्तम् । आनंदमयशब्दार्थनिरूपणाय प्रचुरपूर्वपदसमासपद प्रयोगस्य इहाभिमतत्वात् । ननु — आनंदप्रचुर इत्युक्ते विरोधिनोऽन्यस्यप्राप्तिः प्रचुरानंद इत्युक्ते नेति वैषम्यं कुत इत्यत आह — प्रचुरानंद इति ॥ प्रतीत्यनुसारेण व्यवस्थाभ्युपगन्तव्येति भावः। अंगीकृत्यचेदमुक्तम् । वस्तुतस्तु — आनंदप्रचुर इत्युक्तेपि नाऽनानंदस्यप्राप्तिः, 'अन्नप्रचुरोमखः प्रकाशप्रचुरः सवित' त्युक्ते मखे सवितरिच दुर्भिक्षांधकारलेशाप्रतीतेः । अत एव सुधायां 'विरुद्धार्थप्रातेरशाब्दत्वात् तत्प्रचुरशब्दो हि तस्यतस्मिन् महत्वमात्रमाह। विरुद्धार्थसद्भावस्तु प्रमाणांतरगम्य' इत्युक्तम् । ननु विकारार्थत्वेमयडनुपपत्तिवत् प्राचुर्यार्थत्वेपि प्रायपाठानुपपत्तिलक्षणबाधकसद्भावात् न प्राचुर्यार्थत्वमिति भावेन शंकते — नायमानंदमयेति ॥ अत्यल्पत्वादिति ॥ अन्नमयशब्देन गुणलाभात् तत्समन्वयस्य वैयर्थ्यंस्यादिति भावः। कुतोयमिति ॥ 'भाव' इत्यनंतरम् 'इति चेन्न' ति शेषः। कथमन्नमयशब्द इति ॥ सर्वभूताद्यत्वसर्वभूतात्तृत्व प्रचुरान्नत्ववाची कथंस्यादित्यर्थः। भवेदेतदिति ॥ प्रचुरान्नार्थकत्वं तदा-

नुपपन्नं भवेदित्यर्थः । **न चैवमिति** ॥ आद्यसूत्रोक्तमन्नमयादीनां ब्रह्मत्वमयुक्तम् । अनेकेश्वरापातात्, विकारशब्दादिति सूत्रोक्तो बाधकोद्धारश्चाऽनुपपन्नः, अनेकार्थकस्य मयटः प्राचुर्यार्थकत्वमेवेत्यत्र नियामकाभावेन प्राचुर्यादितिहेतोः संदिग्धाऽसिद्धत्वादिति भावः । एतेन– उभयपक्षेदोपदर्शनादित्ययुक्तम्, आनंदमयसूत्रे अन्नमयादीनां ब्रह्मत्वस्य निर्णीतत्वेन मयटो विकारार्थकत्वे ब्रह्मत्वानुपपत्ति रूपबाधकस्य विद्यमानत्वादिति परास्तम् । 'एकमेवाद्वितीय' ( छां. ६ -२ - १ ) मिति श्रुति विरोधेन पंचानां ब्रह्मत्वनिरासानंतरं मयटो ऽर्थद्वयेपि दोषाऽदर्शन सद्भावत् । **येन्नं ब्रह्मेति** ॥ न मयटः प्राचुर्यार्थकत्वनिर्णयाय हेत्वंतरं मृग्यं, ब्रह्मशब्दस्यैव अन्नमयादीनां ब्रह्मत्वसाधनद्वारा मयडर्थनिर्णायकत्वात्, नचानेकेश्वरापत्तिप्रसंगाद्ब्रह्मशब्दस्यान्नमयादीनां ब्रह्मत्वसाधकत्वासंभवः, ब्रह्मणो बहुरूपत्वेन पंचानां ब्रह्मत्वेपि अनेकेश्वरप्रसंगाभावादिति भावः । **एकार्थत्वोपपत्तेरिति** ॥ प्राचुरर्यार्थकत्वनिर्णयोपपत्तेरित्यर्थः । **यदा खल्विति** ॥ 'अनुजज्ञे' इत्यनंतरं 'तस्मा' दिति शेषः॥ एतेन अस्यवाक्यस्य 'नच सूत्रविरोध' इति पूर्ववाक्येनाऽनन्वय इति परास्तम् । यद्यपि – आनंदमयस्य अभ्यासादेव ब्रह्मत्वमसाधयत्, तथापि – अभ्यासस्यसाधकत्वं ब्रह्मशब्दस्यसाधकत्वेनाविनाऽनुपपन्नमिति ज्ञापनाय ब्रह्मशब्दात् आनंदमयस्य ब्रह्मतामसाधयदित्युक्तम् । **अन्यथेति** ॥ ब्रह्मशब्दस्याऽन्नमयादीनां ब्रह्मत्वसाधकत्वाभावे अभ्यासशतसाहित्येपि आनंदमयस्य ब्रह्मत्वसाधको नस्यात् इति भावः । **इति चेदिति** ॥ उच्यत इति शेषः । **अल्पाक्षरत्वादेवेति**॥ 'ना सूत्रय' दिति पूर्वेणसंबंधः। तर्हि– 'अन्नमयो ब्रह्मशब्दा' दिति सूत्रमस्तु इत्यत आह – **आदिमत्वेपीति** ॥ **संगतत्वेनेति** ॥ विस्पष्टसंगति सद्भावेनेत्यर्थः । तदुक्तं 'आनंदमयरूपेतु ब्रह्मणः पुच्छतोक्तितः । समस्ताब्रह्मता प्रास्तेरानंदमयनामही' ति । एतेन – अन्नमयादीनां ब्रह्मत्वनिरूपणे संगतिरस्ति नवा, आद्ये आनंदमयस्यसंगतत्वेनेति विशेषोक्तिर्नस्यात्, 'अन्नमयो ब्रह्मशब्दा' दिति सूत्रप्रसंगश्च । नद्वितीयः – अन्नमयादीनां समन्वयोक्ति वैयर्थ्यप्रसंगात् । 'जन्माद्यस्ययत' इति सूत्रोक्त जगत्कारणत्व लक्षणस्यान्नमये श्रूयमाणत्वेन संगतिसद्भावाच्चेति निरस्तम् – ( १४ - सू. ) तदेव

**हेत्वंतरेणेति** ॥ विष्णुरेवानंदमय इत्युक्तमेवार्थं हेत्वंतरेण ' अन्योऽन्तर आत्मा आनंदमय ' इत्युक्तस्यांऽतरात्मनः पूर्णत्वसाधनायोपन्यस्तेन जगच्चेष्टकत्वहेतुना प्रतिपादयत् सूत्रमित्यर्थः । अंतरात्मनः पूर्णानंदत्वसिद्धये विष्णुलिंगं जगच्चेष्टकत्वहेतुतयोच्यते नच तयोर्भेदे विष्णुलिंगेना ऽन्तरात्मनः पूर्णानंदत्वसिद्धिः संभवतीति तयोरैक्य मभिप्रेतमिति ज्ञायत इति भावः – एतेन जगच्चेष्टकत्वान्यथानुपपत्त्या विष्णुःपूर्णानंदोऽस्तु तथापि न पूर्वोक्तस्याऽऽनंदमयस्य विष्णुत्वं सिध्यति विष्णोःप्रागुक्तानंदमयशब्दवाच्यत्वे प्रमाणानुपन्यासादिति परास्तम् । अत्रगुणसूत्रम् – ' तद्धेतुव्यपदेशाच्चे ' ति । तस्यांऽन्तरात्मनः पूर्णानंदत्वसिद्धये तद्धेतोः = विष्णुलिंगस्य व्यपदेशात् विष्णुरेव पूर्णानंदः, नह्यन्यस्य पूर्णानंदत्वसिद्धये अन्यलिंगव्यपदेशोयुज्यते, असिद्धिप्रसंगादिति भावः । श्रुत्यर्थमाह — **आसमंतादिति**॥ यद्यपि– आसमंतात् काशमानो ऽन्तरात्मेति वक्तव्यम्, तस्यैवाऽऽनंदमयत्वप्रतिज्ञानात् । तथापि – अंतरात्मनः पूर्णानंदत्वसिद्धये उपन्यस्तेनलिंगेन तस्य विष्णुत्वमपि सिद्धंभवति इति द्योतनाय विष्णुरित्युक्तम् । जगच्चेष्टकत्वान्यथानुपपत्त्या आकाशशब्दोक्तस्यांऽतरात्मनः पूर्णानंदत्वसिद्धावपि न विष्णुत्वसिद्धिरित्यत आह — **अन्यस्येति** ॥ जगच्चेष्टकत्वस्य स्वतंत्रधर्मत्वात्, अन्यस्य स्वातन्त्र्याभावात्, पूर्णत्वसिध्यर्थमुपन्यस्तं जगच्चेष्टकत्वं विष्णुत्वमंतराऽनुपपन्नं विष्णुत्वमपि साधयतीति भावः । इममेवाऽभिप्रायं व्यनक्ति — **अत इति** ॥ श्रुत्युक्तलोकचेष्टकत्वाऽन्यथानुपपत्त्या अंतरात्मा विष्णुरानंदमयश्चस्यादित्यर्थः। पूर्णानंदत्वसिद्धये लोकचेष्टकत्वहेतोरनुपन्यासात् । अंतरात्मनः पूर्णानंदत्वसिद्धिरस्तु, न विष्णुत्वसिद्धिः, अन्यसाधनायोपन्यस्तेन अन्यसिध्ययोगादित्यत आह — **आनंदमयप्रकरण इति** ॥ आनंदमयप्रकरणे अंतरात्मनः पूर्णानंदत्व एव पूर्णानंदत्वसिध्यर्थमेव विष्णोरेव चेष्टकत्वाख्यहेतुव्यपदेशात्, विष्ण्वसाधारणधर्मव्यपदेशात्, पूर्णानंदतया प्रवृत्तिनिमित्तेन आनंदमयशब्दवाच्यः अंतरात्माविष्णुरेवेति सिध्यतीत्यर्थः । यद्यपि – आनंदमयप्रकरणे अंतरात्मनः पूर्णानंदत्वसिध्यर्थमेव हेतुरुपन्यस्तः तथापि तेन विष्णुत्वमपिसिध्यति तस्य विष्ण्वसाधारणधर्मत्वेन विष्णुत्वं विनाऽनुपपन्नत्वात् । उक्तंच महाभाष्ये – अन्यार्थउभपात्तस्यापि

अन्यसाधकत्वम् , ' शालयर्थं कुल्याः प्रणीयंते ताभ्यश्च पानीयं पीयते उपस्पृश्य-तेच शालयश्च भाव्यंत ' इति । एतेन – ' विष्णोरेव पूर्णानंदत्व एव लोकचेष्ट-कत्वाख्यहेतुव्यपदेशात् ' इत्यत्र एवकारद्वयवैयर्थ्यमिति परास्तम् । पूर्णानंदत्व-सिद्ध्यर्थमेवोपन्यस्तस्य अन्यत्रापि उपयोग इति सूचनाय द्वितीयैवकारस्याऽऽवश्यक-त्वात् , विष्णोरेवाऽयंहेतु· विष्ण्वसाधारणधर्म इति यावत् , तस्य व्यपदेशादिति ज्ञापनाय प्रथमैवकारस्याप्यावश्यकत्वात् । नन्विदंसुधाविरुद्धम् , तथाहि – 'महा-नंदत्व एवास्य हेतुः कोऽन्यादिति स्फुट' मित्यनुव्याख्यानसुधायाम् ' इदानीमानंद-मयशब्दस्य विष्णुवाचित्वं तद्गतमयटश्च प्राचुर्यार्थत्वं हेत्वंतरेणोपपादयत् ' तद्धेतु व्यप-पदेशाच्चे ' ति सूत्रं व्याचष्टाति –**महानंदत्व एवेति** ।। आनंदमयप्रकरणे ' कोह्येवान्यात् कः प्राण्यायदेष आकाश आनंदो नस्या' दिति अस्यविष्णोरेव महा-नंदत्व एवच हेतुरुक्तः, तेन ज्ञायते विष्णुरेवानंदमयशब्दार्थः, मयट् प्राचुर्यार्थइति । यदि हि आनंदमयो विष्णोरन्यः स्यात् , मयट् च विकारार्थो भवेत् , तदा श्रुतिः अन्यस्यआनंदविकारित्वं कमपि हेतुंब्रूयात् , विष्णोर्महानंदत्वे हेतुकथनंत्वसंगतमेव। अनेन तदितिषष्ठ्यन्तं सप्तम्यन्तंच तत्वेणोपात्तमित्युक्तं भवति । तस्य विष्णोः, तत्व महानंदत्व इत्युक्तत्वात् । नन्वत्र आकाशस्यआनंदत्वाभावे अननं प्राणनंच कस्यापि नस्यादित्येतावदुच्यते नतु विष्णोर्महानंदत्वे कश्चिदपि हेतुरुच्यत इत्यत उक्तं स्फुटमिमि, तत्कथमिति चेत् आकाशशब्दस्तावद्विष्णुपर इति वक्ष्यते, ' आकाश-स्तलिंगा ' ( ब्र० सू० १ - १ - २२ ) दिति । तथाच विष्णोरानंदत्वे जगतो-निश्चेष्टकत्वप्रसंगमापादयंत्या जगच्चेष्टकत्वं हेतुत्वेन विवक्षितमिति विवक्षुः त-स्याऽऽनंदत्वेनव्याप्तिमुपपादयतीत्युक्तेरिति चेत् , स्यादयं दोषः—यदिसुधाग्रन्थस्य 'कोह्येवान्या' दितिवाक्ये अंतरात्मनः प्रागुक्तानंदमयत्वे हेतुर्नोच्यत इत्यर्थः स्यात् , नचैवं किंनाम अंतरात्मनः आनंदमयत्व एव हेतुरुच्यत इत्याशयः, सुधार्थपर्या-लोचनया तथैवप्रतीतेः, तथाहि – आकाशेजगच्चेष्टकत्वरूपविष्णुलिंगश्रवणात् आकाशोविष्णुरस्तु, आनंदमयः कुतो विष्णुरित्यत आह – **आनंदमयप्रकरण-इति** ।। कोह्येवान्यादिति वाक्ये अंतरात्मन एव पूर्णानंदत्वेहेतुरुच्यते, ' कोह्येवा-न्या'दिति वाक्यस्य आनंदमयप्रकरणत्वात् नहि अंतरात्मन आनंदमयत्वं प्रतिज्ञाय

तत्प्रकरण एवाऽन्यस्याऽऽनंदमयत्वेहेतुरुच्यत इति संभवतीति भावः। एतेन—'कोह्येवान्या' दिति श्रुत्या आकाशशब्दवाच्यस्यविष्णोः पूर्णानंदत्वेहेतुरुच्यते चेत् विष्णुरानंदमयोभवेदेव, श्रुत्युपपादितस्यतद्भावाभावे कारणाभावात् एवं च सति आनंदमयप्रकरण इत्यभिधानंव्यर्थमिति परास्तम्। विष्णुलिंगत्वेनाभिमतस्य जगच्चेष्टकत्वस्याऽऽनंदमयशब्दवाच्यांऽन्तरात्मगतत्वज्ञापनाय आनंदमयप्रकरण इत्युक्तेरावश्यकत्वात्। अन्यथा—जगच्चेष्टकत्वरूप विष्णुलिंगस्य आकाशे श्रुतत्वात् आकाशस्य विष्णुत्वमस्तु आनंदमयस्य कुतो विष्णुत्वमिति शंकादुर्वारा स्यात्। 'महानंदत्व एवाऽस्ये' ति मूलंयोजयति—**अस्येति**॥ अस्य महानंदत्व एवचेति संबंधः। ततश्चैवंयोजना—अस्य अंतरात्मनः महानंदत्व एव हेतुरुक्तः, नत्वानंदविकारित्वे स च हेतुः विष्णोरेवालिंगम। महानंदत्वसाधनायोपन्यस्तस्य जगच्चेष्टकत्वस्य विष्ण्वसाधारणधर्मत्वात्। एतेन—'अस्यविष्णोः महानंदत्व एव हेतुरुक्त' इत्येतावता पूर्णत्वात् विष्णोरेवेत्येवकारोऽव्यर्थ इति परास्तम्। जगच्चेष्टकत्वस्य विष्णुलिंगत्वज्ञापनाय विष्णोरेवेत्यवधारणस्यावश्यकत्वात्। **तेन ज्ञायत इति**॥ अन्तरात्मनः प्रतिज्ञातमहानन्दत्वेविष्णुलिंगव्यपदेशात् विष्णुरेवानंदमयशब्दवाच्यांऽतरात्मा, महानंदत्व एव हेतुव्यपदेशात् प्राचुर्यमेवमयडर्थः न विकारित्वमिति विवेकः। **कथमपिहेतुंब्रूयादिति**॥ पूर्णानंदत्वसाधकं विष्णुलिंगं न ब्रूयादिति भावः। **विष्णोर्महानंदत्व इति**॥ यदि विष्ण्वन्यस्यानंदविकारित्वसाधनाय प्रवृत्तः स्यात् तर्हि महानंदत्वव्याप्यविष्णुलिंगकथनमसंगतं स्यात्। न हि विष्ण्वन्यस्यानंदविकारित्वसाधनाय प्रवृत्तस्य विष्णुलिंगकथनं महानंदत्वव्याप्यकथनं उपयुज्यत इति भावः। **तस्यविष्णोरिति**॥ 'तस्यविष्णोस्तत्वे' ति प्रक्षिप्तं 'अस्य महानंदत्व इत्युक्त्वा' दित्येव पाठः। एतेन-महानंदत्व एवाऽस्येति मूले 'तस्य विष्णोःतत्वे' त्य दर्शनात् अन्यथाऽनुवाद इति परास्तम्। **तत्कथमिति**॥ विष्णुलिंग सद्भावात् अंतरात्माविष्णुरिति कथं न कथमपि विरोधि आकाशश्रुतिसद्भावात्। लिंगापेक्षया श्रुतेर्बलवत्त्वादिति भावः। सिंहावलोकनन्यायेन स्फुटमित्युक्तस्यविवरणं करोति—**तथाचेति॥ टीकायाम् इत्याशंकांपरिहरन् इति**॥ इत्याशङ्कां परिहरिष्यन् भाष्यकार अन्नमयादीनां पंचानामपि ब्रह्मत्वं प्रतिपादयत् सूत्रं पटित्वा व्याचष्ट

इत्यर्थः। एतेन–अस्मिन्सूत्रे विष्णोरानंदमयावयवत्वोक्त्यादिनेति पूर्वोक्तबाधकानुद्धारा-त्तत्सूत्रस्यैतच्छंकानिवर्तकत्वं नास्तीति 'यदुक्त' मित्यादिनोक्ताऽवतारिका अनुपपन्ना,सूत्रनिवृत्त्याऽऽशंकाया एव अवतारिकात्वात् इति परास्तम्। यदुक्तमित्याद्यवतारिकाग्रन्थस्य 'नचावयवत्वविरोध' इत्यादि भाष्यप्रयोजन वर्णन परत्वेन सूत्राऽवतारिकारूपत्वाभावात्। अत एव सुधायां अन्नमयादीनां पंचानामुक्तयंतरेण परब्रह्मत्वं प्रतिपादयितुं सूत्रमित्युक्तम्, अन्यथा - विष्णोरानंदमयावयवत्वोक्तेः, नान्नमयादीनां परब्रह्मत्वमित्याशंकां परिहरन् सूत्रमित्यवक्ष्यत् । 'मांत्रवर्णिकमेवे' ति सौत्रैवकार प्रयोजनाऽनिरूपणात् भाष्यं न्यूनमित्यतः 'ब्रह्मविदाप्नोति पर' मिति भाष्याभिप्रायमाह — **आनंदमिति** ॥ एतेन — भाष्ये मन्त्रवर्णोपलक्षितमेव 'ब्रह्मशब्दानुसंधानाद्गीयत' इति उक्तार्थस्यरूढत्वात् नेदमानंदमयादिपंचकपरं ब्रह्मेति तात्पर्यवर्णनमयुक्तं, तस्यैव मदालम्यत्वादिति परास्तम्। तस्यैवकारलभ्यत्वात्। **एकार्थप्रतीतेरिति** ॥ जीवकत्वं, विनाशकत्वंच तावत् सत्यशब्दार्थः, तथाहि—अस्तिदेवदत्त इत्युक्ते जीवतीप्रतीते र्जीवनं सच्छब्दार्थः, तथा विशीर्णता च सच्छब्दार्थः,सन्नमित्युक्ते विशीर्णतायाः प्रतीतेः, तथा च अस्तेः शत्रंतस्य, सदेः क्विबंतस्यवासादिति रूपम्, भावसाधनं चैतत् सत्त्वं जीवनं विशरणं च यापयतीतिसत्यंब्रह्म तथा जीवनवाचिनि विशीर्णवाचिनिवासच्छब्दे कर्मण्युपपदे यातेरंतर्णीतण्यर्थात् 'आतोनुपसर्ग' (पा.३-२ ) इति क प्रत्ययः 'उभयसंज्ञान्यपि छंदांसि दृश्यंत' इति ( पा. सू. १-५-१ ) महाभाष्योक्तेः उपपदस्य भसंज्ञायां सत्यमिति रूपम्। अन्नशब्दार्थश्च अद्यते उपजीव्यत इति जीवकत्वं, अत्ति संहरति इति संहारकत्वं चेति तयोरैकार्थ्यम्। प्राणशब्दार्थश्च प्राणंति चेष्टन्ते जीवंति अनेनेति प्राण इति सर्वभूतानां गतिजीवनदातृत्वम्, तथा सादिति धात्वर्थोगतिः। जीवनंचाऽस्तिधात्वर्थः, ताभ्यां यथासंभवं शतरिक्विपि च कृते सदितिभवति,ततश्च भावसाधनं सत् सत्त्वं गति र्जीवनं तदुभयंयापयतीति सत्यमिति सत्यशब्दार्थोपि गतिजीवनप्रदत्वमेव। ततश्च — प्राणमयसत्यशब्दयोरेकार्थत्वम्, मनः शब्दोज्ञानार्थः, मनु अवबोधन इति धातुव्याख्यानात्, तस्मादसुन् प्रत्यये मन इति भवति। ततश्च मनोमयज्ञानशब्दयोरेकार्थत्वम्। विज्ञानमयज्ञानशब्दयोरेका·

र्यत्वं स्पष्टम् । आनंदमयप्रकरणं च नाऽऽनंदशब्दार्थकथनरूपं, किंतु 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति ब्रह्मणोऽभिहितेलक्षणे तत्राऽन्यलक्षणस्याऽसंभवशंकानिरासाय आनंदमयप्रकरणे आनंदपूर्णत्वेन हेतुना ऽनन्तत्वं प्रसाध्यत इति द्रष्टव्यम् । (सू-१५) **तदर्थ भूतानामिति॥** मन्त्रवर्णार्थवाचकाना मित्यर्थः । **युक्तिसमुच्चयार्थ-इति॥** ममाव्ययुक्तेः, अभ्यासलिंगाभ्यां समुच्चयार्थः चशब्द इत्यर्थः । 'नच—अवयवत्वविरोध' इति भाष्यस्य प्रागुक्तशंकानिवर्तकत्वज्ञापनाय प्रागुक्तशंकामनुवदति — **नन्विति ॥ अवयवाद्यभेदादिति ॥** अवयव आदिः यस्येति तद्गुणसंविज्ञानबहुव्रीहिणा अवयवावयविनौ गृहीत्वा तयोरैक्यमुक्तमिति बोध्यम् । **अवयविन इति ॥** श्रुत्युदाहरणात् प्रागुत्पन्नां शंकां परिहर्तुं प्राक् श्रुति रुदाहृता । इदानीं तामेव शंकां परिहर्तुं स्मृतिं चाहेत्यर्थः । एतेन — श्रुत्युदाहरणानंतरं अवयविनोऽवयवत्वं न संभवति इति शंकाया अनुदयात्, तत्परिहाराय स्मृत्युदाहरणमयुक्तमिति परास्तम् । **अघटित घटकेति॥** शक्तेरतः परं विरोधशांतिरितिशेषः । प्रत्यक्षागमाभ्यां विरोधाऽपरिहारात् भाष्यस्य न्यूनतां परिहर्तुमाह— **किं च किं प्रमाणेनेति॥** प्रमाणेन प्रत्यक्षागमरूपेण 'अतर्क्ये हि कुतस्तर्क' इत्यस्याऽपूर्णत्वात् शेषं पूरयति । **साधको बाधको वेति ॥ तथापीति ॥** परमात्मनः अतर्क्यत्वेपि न तर्कविरोधः । अवयवित्वस्य स्वावयवत्वाभावेन सह व्याप्त्यभावेन तर्कस्य आभासत्वात् इति भावः । ननु — स्वस्यस्वावयवत्वस्य क्वाप्यदर्शनेन विरुद्धत्वात् कथमवयवित्वस्य न स्वावयवत्वाभावेन व्याप्तिरित्यत आह— **लोक इति॥** लोकेपरिदृश्यमानावयवत्वाविरोधस्य परिमितशक्तिप्रयुक्तत्वेन स्वाभाविकत्वाभावात् । नावयवित्वस्य स्वावयवत्वाभावेन व्याप्तिरिति भावः । एतेन — 'तथापि न तद्विरोध' इत्यस्य लोकेपरिमितशक्तित्वेन विरोधा' दित्यनेनाऽनन्वय इति परास्तम्, अवयवित्वस्य 'न स्वावयवित्वाभावेन व्याप्ति' रित्यध्याहृतमाध्येनाऽन्वयांगीकारात् । ननु — माभूदवयवित्वानुमानविरोधः — तथापि ईश्वरोनावयविस्वेसत्यवयवः, परिमितशक्तित्वादित्यनुमानविरोधस्तु स्यादेवेत्यत आह — **विरोधोपयोगीति॥** असिद्धत्वात्परिमितशक्तित्वानुमानं बाधकमिति भावः । **भाष्ये. अप्रमेयेति ॥** अप्रमेये अपरिच्छिन्नशक्तिमति हरौ परिमितशक्तिः कुतः नकुतो.

पीत्यर्थः । 'ऐश्वर्यान्नविरोधश्चेति मूले = अचिंत्यशक्तया विरोध परिहारोभवती-त्युक्तम्, इहतु परोक्ताऽनुमानस्यासिद्धि रुच्यत इति भेदः । **प्रकृतस्यैवेति** ॥ अव्यवधानेन प्रकृतदेहस्य पुरुषशब्देनोक्तत्वात् आत्मनः तदभावात् 'स वा एष' इत्यनेन देहस्यैव परामर्शो नात्मन इत्यर्थः । पुरुषशब्देन देहस्य प्रकृतत्वेपि आत्म-परामर्शोयं किं न स्यादित्यत आह — **एकेनैवेति** ॥ सवा एष इत्यनेन देह-परामर्शो द्विवारमुच्चरितस्य पुरुषशब्दस्य ऐकार्थ्यं भवतीति देहपरामर्श एवाऽभ्युप-गन्तव्यः नात्मपरामर्शः, तथा सति एकस्यैव द्विरुक्तस्य पुरुषशब्दस्य भिन्नार्थकत्व-प्रसंगादिति भावः । **यथाप्रकृतिमिति**॥ 'प्रकृतिं पुरुषं चैव विध्द्यनादीउभावपि' (१३- ) ति गीतायां पुरुषपदेन जीवपरयोः प्रकृतत्वेपि 'पुरुषः प्रकृतिस्थोपि भुङ्क्ते प्रकृतिजान् गुणान्' इत्युत्तरश्लोके पुरुषशब्देन परमात्मपरित्यागेन जीव एवोच्य-ते 'प्रकृतिजान्गुणान्' ( गी. १३-) इति दुःखानुभवितृत्वविशेषणादिति यथा— अभ्युपगम्यते, तथा इहापि 'अन्नात्पुरुष' इति पुरुषशब्देन परमात्मदेहयोः प्रकृतत्वेपि 'सवाएषपुरुषोऽन्नरसमय' इत्यत्र देहपरित्यागेन परमात्मैवोच्यत इत्यभ्युप-गन्तव्यम् रसशब्देन विशेषणादिति भावः । **निर्देशवैयर्थ्यादिति**॥ अनपरोक्षीकृत-ब्रह्माणं पुरुषं प्रति इदमेवशिर इत्याद्यपरोक्षनिर्देशस्य बोधानुपयोगित्वेन वैयर्थ्य-मिति भावः । ( १६ - सू. ) **हेतुव्यपदेशस्येति** ॥ हेतुव्यपदेशस्यापि न साधकत्वं हेतुत्वेनाभिमतस्य जगच्चेष्टकत्वस्य विष्णुलिंगतया स्पष्टमप्रतिभानात्, श्रीपतित्वा-दिवद्विस्पष्टब्रह्मलिंगत्वाभावादिति भावः । **ब्रह्मविदाप्नोतिपरमित्यादाविति** ॥ आदिशब्देन 'अदृश्येऽनात्म्य' इत्यादिवाक्यग्रहणम् । भाष्ये ( १७ - सू. ) 'ते ये शत' मिति श्रुत्युदाहरण मानंदतारतम्यविधायकश्रुत्युक्तदेवानामानंदमयात् भेदज्ञापनाय' अदृश्येऽनात्म्य इत्यादिश्रुत्युदाहरणं प्रकृत्यादीनां सर्वेषां भेदज्ञापनाय- 'सयश्चाय' मिति श्रुत्युदाहरणंतु ब्रह्मादिजीवसमूहस्य भेदज्ञापनायेति भावेनाह— **तेयेशतमित्यादिना**॥ अदृश्ये इति अनात्म्य इत्यादि श्रुतिगतपदव्याख्यानाय श्रुति प्रतीकधारणमेतत्, नतु व्याख्येयप्रतीकमिति बोध्यम्, एतेन — 'अदृश्य' इति प्रतीकमुपादाय तस्यव्याख्यानमकृत्वा अनात्म्यपदव्याख्यान मयुक्तमिति परास्तम्। **ब्रह्मादिजीवसमूह इति** ॥ यद्यपि ब्रह्मणः एतत्कल्पीयोत्कृष्टापकृष्टजीवसमूहेषु

स्थितिरस्ति, तथापि—अतीतानागतकल्पस्थितजीवेषुमुक्तेषुचस्थितिर्नास्तीति तन्द्या-वृत्तिः । **भवेदेतदिति** ॥ आनंदमयस्यब्रह्मादिभेदांगीकारेभवेदेतच्छ्रुतिविरोधः, 'तत्त्वमस्या' दि श्रुतेः ब्रह्मादिजीवानां परमात्माऽभेदोवाक्यार्थः स्यात्, नचैवं किंनाम ब्रह्माद्यंतर्यामिरूपाणां परमात्माभेदोवाक्यार्थः, नच त्वमित्यादिनिर्देशाऽयोगः : 'नामानिसर्वाणी' ति श्रुत्या विष्णोरेव तत्त्वमस्यादिवेदांतर्गतत्वमहमादिशब्दवाच्यत्वोक्तेः । त्वमहमादिशब्दैः अंतर्यामिग्रहणासंभवरूपबाधकाभावादितिभावः । एतेन — यदि 'नामानिसर्वाणी' ति श्रुत्या विष्णोः सर्वशब्दवाच्यत्वोक्तेः, तत्त्वमस्यादि श्रुतेः नाद्वैतार्थकत्वं तर्हि ततएव ज्योतिष्टोमादिवाक्यानां कर्मादिविधायकत्वं न स्यात् ततश्चकर्मकृमादिलोप इति परास्तम्, तत्त्वमस्यादि वाक्यानामपि अविरुद्धवाक्यार्थांगीकारेण पदसमन्वयमंगीकृत्य वाक्यार्थेवैधुर्याऽनंगीकारात् । **संतुचैताः श्रुतय इति** ॥ तत्त्वमसीत्यादिश्रुतयो ब्रह्मादीनां परमात्माभेदपराः संतु, तथापि ब्रह्मादिजीवानां परमात्मना सह उक्तस्यभेदस्य न 'तत्त्वमसी'त्यादि श्रुतिविरोधः। ताभिरन्योन्याभावरूपभेदमंगीकृत्य सकलस्वामित्वरूपपारिभाषिकसर्वतादात्म्यस्य प्रतिपादनादिति भावः। **एवंस्वामित्वेति**।। अन्तर्यामितया अंतर्यामित्वार्थतयेत्यर्थः । 'तत्त्वमसी' त्यादि श्रुत्युक्तंपारिभाषिकं जीवऐक्यं स्वामित्वरूपंप्रागुक्तम्, इदानींतु श्रुत्युक्तमैक्य मंतर्यामित्वमित्युच्यत इति भेदः ॥ **असर्वात्मकोपीति** ॥ सर्वप्रतियोगिकभेदवानपि अंतर्यामित्वरूपगौणतादात्म्यप्रतिपादनाय प्रवृत्त 'तत्त्वमसी' त्यादि श्रुत्या सर्वात्मकत्वेनाऽविद्वद्भिर्ज्ञायते, तथा अंतर्याम्यपि अंतर्यामित्वरूपगौणतादात्म्यवानपि 'तत्त्वमसी' त्यादि श्रुतितात्पर्याऽज्ञानात् अनंतर्यामित्वेनजीवाभिन्नत्वेनाविद्वद्भिर्ज्ञायते तथादेहांतर्गतोपिरामकृष्णादिः अज्ञैः प्रत्यक्षेणबहिर्मात्रवृत्तित्वेन ज्ञायते । यद्यपि — ज्ञानिभिः एकएवेतिज्ञायते तथापि विशेषबलात् सबहुधाज्ञायत इत्यर्थः । 'असर्व' इति श्रुत्युदाहरणप्रयोजनमाह — **अनेनेति** ।। 'असर्व' इति श्रुत्युदाहरणेन असर्वस्य असर्वात्मकस्य परमात्मनः,'तत्त्वमसी' त्यादौ सर्वत्वोक्तिः अंतर्यामित्वादेव नत्वास्तवतादात्म्याभिप्रायेणेति भावः। **विशिष्टैक्येति** ।। एवं तत्त्वमसीत्यादि सर्वाद्वैत श्रुतीः त्रेधा व्याख्यायेदानीमेकमेवाद्वितीयमित्यादिश्रुतीः विशिष्टैक्यार्थतया व्याचष्ट इत्यर्थः। अने-

नैकमेवाद्वितियमित्यादिश्रुतेः सर्वोत्तमवस्त्वेकमेव द्वितीयंतु नास्तीत्यर्थः सूचितः।
एतेन – तत्त्वमसीत्यादिश्रतीनां विशिष्टैक्यार्थपरतया योजनाऽसंभवात् विशिष्टैक्यार्थपरतयाच तां स्मृत्या व्याख्यातीति अयुक्तमिति परास्तम्, 'एकमेवाद्वितीय' मित्यादिं श्रुतेरेव विशिष्टैक्यमर्थः, नतु 'तत्त्वमसी' त्यादि श्रुतीनां विशिष्टैक्यमर्थइत्याशयात् 'नैतदिच्छंतिपुरुषमेकं कुरुकुलोद्वह' इति स्मृतेः अद्वैत श्रुति व्याख्यानत्वाभावात् 'स्मृत्याव्याख्याती' ति अयुक्तमित्यत आह – अत्रेति ॥ सत्यमस्मिन्नर्थेपुरुषैक्यमेवनिराक्रियते तथापि 'बहूनांपुरुषाणां हि यथैकायोनिरुच्यते। तथातंपुरुषंविश्व माख्यास्यामि गुणाधिक' मित्युत्तरश्लोके एकमेवाद्वितीयमित्यादिश्रुतेः विशिष्टैक्यमर्थ इति भावेन विशिष्टैक्यमुच्यत इति स्मृतेः श्रुतिव्याख्यानत्वमुपपन्नमिति भावः। 'बहवः पुरुषा ब्रह्मन् उताहो एकएवतु' इति प्रश्नेसति 'नैतादिच्छंति पुरुषमेकं कुरुकुलोद्वह' इत्यनेन पुरुषैक्यंनिराकृतम् कथंतर्हि 'एकमेवाद्वितीय' मित्यादौपुरुषैक्यव्यपदेश इत्यत उक्तम् – बहूनामिति ॥
कारणत्वेन अभिमतानां पुरुषाणां सत्वेपि 'द्यावाभूमीजनयन्देव एक' इत्यादि श्रुतौ यथाविशिष्टकारणस्यैकत्वात् एकंकारणमित्युच्यते तथा 'एकमेवाद्वितीय' मित्यादि श्रुत्यर्थत्वेन तं विश्वं पूर्णगुणाधिकंपुरुष आख्यास्यामीतिस्मृत्यर्थः। **जीवपर एवेति** ॥ जीवत्ववैशिष्ट्यपरएवेत्यर्थः। **ब्रह्मशब्दस्येति** ॥ ब्रह्मशब्दस्य परब्रह्मत्वावच्छिन्नेमुख्यत्वात् असौजीवत्वे नोपपद्यते, ततश्च 'ब्रह्मैवस' न्निति श्रुतेः जीवभावं अविहायैव ब्रह्माऽप्येति इत्यर्थोनोपपद्यत इति भावः। एतेन – परब्रह्मैव सन्निति श्रुत्यर्थंवदतापि ब्रह्मशब्दस्य जीवपरत्वांगीकारात् नजीवेऽसावुपपद्यत इत्ययुक्तं कथमन्यथाजीवपरैक्यं सिध्येदिति परास्तम्। **परब्रह्मणीवेति** ॥ ब्रह्मत्वावच्छिन्नेमुख्योपि जीवत्वे उपपद्यत इत्यर्थः। **जीवस्येति** ॥ 'ब्रह्मैवस' न्निति ब्रह्मशब्दो जीवस्यपरब्रह्मत्वप्रतिपादक इत्यर्थस्वीकारे 'ब्रह्माप्येती' त्युत्तरग्रंथविरोधात् आद्यब्रह्मशब्दो जीवपर एवेति भावः। **प्रमाणांतरेति** ॥ प्रमाणांतरे जीवस्य न पर ब्रह्मत्वमिति विस्पष्टमभिधानेन तद्विरोधाच्च जीवपर एवेति भावः। ननु – यथाविस्मरणदशायां कंठमणेरविद्यमानप्रायत्वात्स्मरणानंतरं विस्मृतकंठमणिः पुमान् प्राप्तकंठमणिरहमित्येव व्यपदिशति तथा संसारदशायां विद्य-

मानमपि ब्रह्मत्वं अनुभवाभावेनाऽविद्यमानप्रायमिति साधनसंपूर्त्यनंतरं ब्रह्मत्वानुभवोभविष्यतीति भावेन 'ब्रह्माप्येती' तिव्यपदेशोभविष्यतीत्यत आह—**ननु विस्मृतकंठमणेरिति** ॥ नन्वित्यव्ययं यस्मादित्यर्थे । 'ननु प्राप्तकंठमणि' रित्यतः परं 'तस्मात् प्राप्तमणिरितिव्यपदेशदृष्टांतबलेन ब्रह्माप्येतीति व्यपदेशस्यमुख्यत्वासिद्धि' रिति शेषः । सत्यं विस्मृतकंठमणिः स्मरणानंतरं प्राप्तकंठमणिरहमिति व्यपदिशति, तथापि न त व्यपदेशदृष्टांतेन ब्रह्माप्येतीति व्यपदेशस्य मुख्यत्वासिद्धिः प्राप्तकंठमणिरिति व्यपदेशस्य गौणत्वात् यतो विस्मृतकंठमणिजनैः स्मृतकंठमणिरित्येवोच्यते नतु प्राप्तकंठमणिरिति । नच 'ब्रह्माप्येती' (बृ.६-४-६)ति व्यपदेशः तद्वद्गौणोऽगीकर्तुंयुक्तः अस्मदुक्तरीत्या मुख्यत्वेसंभवति गौणत्वांगीकारस्य अनुचितत्वादितिभावः । एतेन प्राप्तकंठमणिरहमिति व्यपदेशस्य अनुभवासिद्धत्वात् 'प्राप्तमणि' रिति नोच्यतइत्यभिधानमयुक्तमिति परास्तम् । स्मृतकंठमणेः पुरुषस्य व्यवहारमंगीकृत्यलोकव्यवहारस्यैवनिषेधात् । ननु माभूत्प्राप्तमणिरहमिति व्यपदेशस्य गौणत्वात् तद्दृष्टांतेन 'ब्रह्माप्येती' ति व्यपदेशस्यमुख्यत्वासिद्धिः, 'परमंसाम्यमुपैती' ति व्यपदेशदृष्टांतेन भवेदेवमुख्यत्वसिद्धिः, 'परमंसाम्यमुपैती' (मु.५-६) त्यत्र प्राप्तस्यैवसाम्यस्य प्राप्त्युक्तेरित्यत आह—**परमंसाम्यमुपैतीत्यादाविति** ॥ अप्राप्तभोगादेरपीत्यपिशब्दएवार्थे 'प्राप्त्युक्ते' रित्यनंतरं 'नैतद्दृष्टांतेनापि ब्रह्माप्येतीति व्यपदेशस्यमुख्यत्वासिद्धि' रिति शेषः । भवेदेतद्दृष्टांतेन ब्रह्माप्येतीति व्यपदेशस्य मुख्यत्वसिद्धिः, यदिप्राप्तस्यैवसाम्यस्य प्राप्तिरुच्यत इति स्यात् न चैवं किंनाम अप्राप्तभोगादेरेव प्राप्तिरुच्यते संसारदशायामानन्दभोक्तृत्वेन भगवत्साम्यस्य प्राप्तत्वाभावात्, अत एव श्रुतौपरमंसाम्यमिति साम्यस्य परमत्वमुक्तम्, एवंच दृष्टांतदार्ष्टांतिकयो वैषम्यात् नैतद्दृष्टांतेन प्राप्तस्यैव ब्रह्मत्वस्यप्राप्तिप्रतिपादक 'ब्रह्माप्येती' ति व्यपदेशस्य मुख्यत्वासिद्धिरिति भावः । (१८ सू०.) **विमतानिशरीराणीति** ॥ नन्वेवंजीवानामेव परस्परमैक्यसिद्धिर्भवेत्, न परमेश्वरेणेतिनैतदुदाहरणमिति चेत्, न — नैतदनुमानं साक्षादुपहितस्वरूपाणां प्रतिक्षेत्रं क्षेत्रज्ञानामभेदंसाधयति प्रत्यक्षविरोधात्, किंनाम निरुपाधिकेनरूपेण अभेदं साधयति, तच्चनिरुपाधिकंरूपं ब्रह्मैवेति न किंचिदत्र अनुपपन्नमिति । आदिशब्देन

विमतात्मानः परमात्मनो नभिद्यंते आत्मत्वात्परमात्मवत् इत्यनुमानंग्राह्यम् । तटस्थः शंकते – ( १९ - सू ) **नन्वस्त्वेवमिति** ।। एतेन – पूर्वपक्षिणा आनंदमयपुच्छस्य ब्रह्मत्वांगीकारेण आनंदमयस्य ब्रह्मत्वानंगीकारात् आनंदमयेनपरब्रह्मणेत्युक्तमयुक्तमिति परास्तम् । **युक्तातज्जिज्ञासेति।। अवयविनंविना अवयवमात्रस्य ज्ञेयत्वायोग इति** ।। बाधकस्यपरिहृतत्वादिति भावः ।

**पूर्वपक्षस्तु** – आनंदमयचतुर्मुखावभिन्नौ नामसांकर्यात्, विद्यतेखलुचतुर्मुखनिष्ठो ब्रह्मशब्दः, आनंदमयमधिकृत्य ‘ अस्ति ब्रह्मेतिचेद्वेदे’ ( तै०. उ०. २-६ ) ति ब्रह्मशब्दश्रवणात् आनंदमयसमानार्थकशतानंदनामच हिरण्यगर्भे ततो हिरण्यगर्भ एव आनंदमयोनान्य इत्येकः पूर्वपक्षः । आनंदमयोरुद्रः ‘ पश्चात्सावादित्य ’ ( तै०. उ०. २-८ ) इत्यानंदमयस्य सूर्येप्रोक्तत्वात् सूर्यांतर्गतत्वस्य रुद्रलिंगत्वात् उक्तंच सूर्योजलं महीवह्नि र्वायुराकाशमेवच । दीक्षितो ब्राह्मणः सोम इत्येतास्तनवःक्रमात् ’ इति ततश्चरुद्र एव आनंदमयइत्यन्यः । इंद्र एव आनंदमयः सूर्याधिष्ठातृत्वात् तस्यइंद्रलिंगत्वादित्यपरः । बृहस्पतिरेव आनंदमयः सूर्याधिष्ठातृत्वात् तस्य च बृहस्पतिलिंगत्वादित्यन्यः । चित्प्रकृतिरेव आनंदमयः ‘ सोऽकामयत बहुस्या ’ ( तै०. उ०. २-६ ) मिति स्वाभिमन्यमानस्य बहुभावकामित्वात् नच ब्रह्मशब्दो बाधकं ‘ममयोनिर्महद्ब्रह्म’ इति योनिशब्दाभिधेय चित्प्रकृतौ ब्रह्मशब्दश्रवणात् इत्यपरः । अचित्प्रकृतिरेव आनंदमयः, नच ‘ सोऽकामयत ’ त्युक्तकामनाविरोधः अभिमानिद्वाराकामनोपपत्तेरित्यन्यः । तत्तदेहगतसर्वजीवावा आनंदमयः ‘ अन्नरसमयः प्राणमय ’ ( तै०. उ. २-९ ) इत्युक्तजीवप्रायपाठात् अन्नमयादीनामन्नादिविकाराभिमानित्वेन जीवत्वस्यवक्तव्यत्वात् । नच ब्रह्मशब्दोबाधकं ‘ ब्रह्माणिजीवाःसर्वेपी ’ ति जीवेपि ब्रह्मशब्दश्रवणादित्यपरः ।

**सिद्धांतस्तु** – विष्णुरेव आनन्दमयः ‘असन्नेवसभवति, असद्ब्रह्मेतिवेद चेत्, अस्तिब्रह्मेति चेद्वेदे ’ ( तै०. उ०. २ - ) ति ब्रह्मशब्दाभ्यासात्, ‘ तदेवब्रह्म ’ (तल०. उ०. १-४ ) त्यादि श्रुति स्मृतिषु ब्रह्मशब्दस्य वि-ष्णावेव परममुख्यत्वस्य उक्तत्वात् । (१३) ननु नायमानंदमयोविष्णुः मयट् शब्दस्यविकारार्थत्वात् विष्णोश्चाऽविकारित्वादिति चेत्, न – द्व्यचश्छं दसी ’ ( पा- ४ - ३१५०) ति सूत्रेण छंदसिद्व्यच एव मयटो विधानात्, आनंदमयशब्दस्यच-

त्यत्त्वेन ततो विकारार्थकमयटोऽसंभवात्,कस्तर्हिमयडर्थ इति चेत्, प्राचुर्य एवेति ब्रूमः। नात्रमयटः प्राचुर्यार्थकत्वंवक्तुं युक्तम्, अन्नादिविकारार्थकाऽन्नमयादि-शब्दांतर्गतमयट्प्रायपाठात् इति चेत्, न — अन्नमयादीनामपि ब्रह्मत्वेन तद्गत-मयटो विकारार्थकत्वाभावात्। नच — अन्नमयादिशब्दानामन्नादिप्राचुर्यार्थत्वे अल्पार्थता 'अद्यतेऽत्ति च भूतानि तस्मदन्नं तदुच्यते' (तै०.उ०.२·२) इति श्रुत्या सर्वभूतोपजीव्यत्वसर्वात्तृत्वयोरेवाऽन्नमयशब्दार्थत्वात्, ननु– 'ओषधीभ्यो-ऽन्नम्, अन्नात्पुरुष' (तै. उ. २-२) इति देहमुक्त्वा 'सवाएषपुरुषोऽन्नरसमय' (तै०. उ०. २·१) इति देहपरामर्शात्, अन्नादिविकारित्वमेव अन्नमयशब्दार्थ इति चेत्, न — 'सवाएषपुरुष' इत्यत्र 'आत्मन आकाशः संभूत' (तै०. उ०. २-१) इत्युक्ताऽऽत्मपरामर्शांगीकारात्। (१४) अपिच — आनंदमये 'यदेष आकाश आनंदोनस्या' (तै०.उ०. २·७) दिति जगच्चेष्टकत्वरूप-विष्णुलिंगं व्यपदिश्यते, ततोऽयंविष्णुरेवप्रतिपत्तव्यः। (१५) किंच — सत्यं ज्ञानमनंतं ब्रह्म अन्नमयादिशब्दपंचकेनगीयते, सत्यज्ञानादिशब्दानामन्नमयादि-शब्दानांच, अर्थानुसंधानेमति एकार्थत्वप्रतीतेः नचानंदमयशब्दस्यब्रह्मत्वे ब्रह्मणः तत्पुच्छत्वोक्तिविरोधः, 'सशिरः सदक्षिणः पक्षः (तै०.उ०. २) इति श्रुत्या अवयविन एवाऽवयवत्वोक्तेः सर्वथानाऽऽनंदमयादि र्विष्णोरितरः। (१६-१७) 'ब्रह्मविदाप्नोतिपर' (तै०. उ०. २ - १) मित्यादौआनंदमयज्ञानेनमोक्षश्रवणात् 'तेयेशतं प्रजापतेरानंद' (तै०. उ०. २ - ८) इत्यादिना चतुर्मुखादीनां परिमितानंदोक्त्या अपरिमितानंदमयाद्भेदस्यसूचितत्वाच्च नाऽऽनंदमयादिर्विष्णो-रितरः। (१८) ननु– न चतुर्मुखादीनामानंदमयाद्विष्णोर्भेदः तस्य 'विमतात्मानः परमात्मनस्तत्त्वतोनभिद्यंते आत्मत्वात्परमात्मवत्' दित्यनुमानविरुद्धत्वात् इति चेत्, न — श्रुतिस्मृतिसाहाय्यरहितानुमानस्य कामगामित्वेनाऽनिर्णायकत्वात्। (१९) किंचास्मिन्प्रकरणे अस्यजीवस्य 'सोऽश्नुते सर्वान्कामान्सह, ब्रह्मणाविपश्चिते' (तै०. उ०. २·१) ति श्रुतिः आनंदमयेनयोगंशास्ति ततो मन्यामहे ब्रह्मा-दिजीवानामानंदमयेनभेद इति। तस्मात्सकलजीवादिभिन्नंपरंब्रह्मैवेतियुक्ता तज्जिज्ञा-सेति सिद्धम् (६ · अ०.)

[ ७ अधिकरणम्. ]

## ॐ अन्तस्तद्धर्मोपदेशात् ॐ ( २०. सू०. )

**अस्तिशास्त्रादिसंगतिरिति** ॥ अस्याधिकरणस्य शास्त्राध्याययोरंतर्भावः, पादेनत्वौपोद्घातिकीसंगतिः, एतधिकरणस्य लिंगसमन्वयद्वारा अन्यत्रप्रसिद्धेन्द्रादिनाम समन्वयसिध्युपयोगित्वादिति भावः । एतेन — अस्याधिकरणस्यपादसंगतिर्नास्तीति भाष्यकृतैवोक्तत्वात् पादसंगतिसूचकस्य 'इंद्रादिनामसमन्वयसिध्यर्थ' मिति विशेषणस्य वैयर्थ्यमिति परास्तम् । भाष्यकारोक्तांऽतर्भावलक्षणसंगत्यभावमंगीकृत्य संगत्यंतरसूचनाय विशेषणस्य प्रयुक्तत्वात् । **इत्युच्यत इति**॥ अनेन — आंनदमयाधिकरणतद्विषयवाक्योक्तस्यानंदमयस्यैतदधिकरणोक्तांतस्थस्यचाऽदृश्यत्वरूपैकधर्माक्रांतत्वमेवाऽस्याधिकरणस्य पूर्वाधिकरणतद्विषयवाक्याभ्यां संगतिरुक्तेति ज्ञातव्यम् । एव मुत्तरत्रापि द्रष्टव्यम् । एतेन—अदृश्यत्व मन्तस्थस्योच्यते इत्युक्त्या संगतिविशेषस्याऽनिरूपणात् श्रुत्यधिकरणसंगतीदर्शयतीत्ययुक्तमिति परास्तम् । अस्तु संगतिः तथापि नेदमधिकरणमारंभणीयम् , अंतस्थोविष्णुरिति निर्णयस्याऽनावस्यकत्वात् इत्यत आह — **तस्येति** ॥ अंतस्थस्यविष्णोरन्यत्वे अंतस्थवाक्योक्तमदृश्यत्वंच तस्यैवस्यात्, ततश्च — अदृश्यत्वेनोक्तानंदमयस्य-प्रत्यभिज्ञानात् विष्णन्यत्वप्रसंगःस्यादित्यर्थः । एतेन — तस्यविष्णोरन्यत्वे अदृश्यत्वंच अन्यस्यैवेत्ययुक्तं घटपटयोरदृश्यत्ववत् अंतस्थानंदमययोरुभयोरपि अदृश्यत्वसंभवात्' अत एव — आनंदमयस्याप्यन्यत्वप्रसंगादित्ययुक्तमिति परास्तम् । अंतस्थवाक्योक्तमदृश्यत्वमन्यस्यैवेत्याशयात् । आनंदमयस्याऽन्यत्वंतु प्रत्यभिज्ञावशेन प्रत्यभिज्ञायाः तादात्म्यसाधकत्वमित्यंगीकारात् । पूर्वाधिकरणोक्तब्रह्मशब्दाभ्यासादेः प्रत्यभिज्ञातोदुर्बलत्वशंकाप्रतिरुद्धत्वेन अबाधकत्वात् । **विष्णोरन्योवेतीति** ॥ अन्योवेत्यनेन इंद्रोवा, सूर्योवा, वरुणोवा, त्वष्टावा, अग्निर्वा, बृहस्पतिर्वे, तिकोटीनां ग्रहणम् । अन्यः प्रतीयते इति भाष्ये अंतस्थ इंद्रः, अंतस्थः सूर्यः, अंतस्थोवरुणः, अंतस्थस्त्वष्टा, अंतस्थोऽग्निः, अंतस्थोबृहस्पतिः, इति पूर्वपक्षाः प्रतिज्ञाता इत्यभिप्रायेण अन्यशब्दंव्याचष्टे – **अन्य इंद्रादिरिति** ॥ आद्यपूर्व-

पक्षेहेतुरिंद्रेति । एतेन — इंद्रश्रुतेरित्यस्य इंद्रादिःस्यादित्यनेन अनन्वयइति परास्तम् । इंद्रश्रुतेरित्यस्य इंद्रादिः स्यादिति प्रतिज्ञवाक्यं इंद्रः स्यादितिरूपेण-विभज्य अंगीकारात् । एवमुत्तरत्रापि द्रष्टव्यम् । द्वितीय आह — **सप्तेति** ॥ तृतीय आह — **अपामिति** ॥ चतुर्थेत्वाह — **त्वष्टेति** ॥ 'ब्रह्मेंद्रमग्निजगतः प्रतिष्ठांदिव आत्मानंसावितारं बृहस्पतिम्, चतुर्होतारं प्रदिशोनुक्लृप्तंवाचोवीर्यं-तपसा अन्वविंद(तै.आ.)दित्यादि शब्दानामन्यविषयत्वमिति न्यायविवरणानुसारेण अग्निरेव अन्तस्थ इति पूर्वपक्षे अग्निश्रुतिः जगत्प्रतिष्ठापकत्वंच लिंगसाधकम् । बृहस्पतिरेव अंतस्थ इति पूर्वपक्षेतु बृहस्पति श्रुतिः, वाग्वीर्यत्वंच, लिंगंसाधकम् । इंद्र एवांतस्थ इति प्रागुक्त पूर्वपक्षे इंद्रश्रुतिः तदभ्यासश्चसाधकः ॥ सूर्य एव अंतस्थ इति प्रागुक्त पूर्वपक्षेसवितृश्रुतिः 'दिव आत्मान' मित्युक्तदिवस्पतित्वंच साधकमित्यभिप्रेत्याह — **ब्रह्मेंद्रमिति** ॥ अत्रापि इंद्रादिः स्यादिति प्रतिज्ञावाक्यं बुध्याविभज्य इत्यादि 'श्रुति लिंगेभ्यश्चे' ति हेतुवाक्यमपि विभज्य यथासंभव-मन्वयोद्रष्टव्यः ! प्रागुक्तपूर्वपक्षेइत्वंतराभिधायकत्वाच्चशब्दः । एतेन — 'ब्रह्मेंद्रमग्नि' मित्यादि श्रुति लिंगेभ्यश्च इंद्रादिः स्यादित्ययुक्तम् एकस्य अनेकतादात्म्याऽयोगेन अंतस्थस्य इंद्रत्वे सूर्यादित्वस्य, सूर्यादित्वेतु इंद्रादित्वस्यच अयोगादिति परास्तम् । न केवलमिन्द्रादिशब्दानामिन्द्रादौरूढिः अपितु योगोप्यस्ति इत्याह— **केषामिति** ॥ **पूर्वपक्षफलमाहेति** ॥ सर्वेषां पूर्वपक्षाणांफलमाहेत्यर्थः । **तस्मादिति** ॥ यस्माददृश्यत्वमन्यस्य प्राप्तं, तस्मादेव आनंदमयत्वं प्राप्नोति प्रत्यभिज्ञानादेवेत्यर्थः । एतेन — इंद्रादीनामदृश्यत्वेपि आनन्दमयस्यनेंद्रादित्वं साधकाभावात् । नहि घट इत्येतावता पार्थिवत्वेनोक्ताः पटादयोपि घटा भवन्ति येनेन्द्रादीनामदृश्यत्वे अदृश्यत्वेनोक्तानंदमयस्य इंद्रादित्वं स्यादिति परास्तम् । प्रत्यभिज्ञाप्रत्यक्षस्य साधकत्वेनेहाभिमतत्वात् । 'अन्तः समुद्रेमनसाचरन्त' मिति श्रुत्युदाहरणेनैव समुद्रस्थत्वलिंगलाभात्, 'समुद्रे अंतः कवयोविचक्षते' इति श्रुत्युदाहरणं व्यर्थमित्यत आह — **अत्रेति** ॥ अत्रसूत्रे विष्णुत्वसाधकतयाक्षीराब्धिशायित्वं प्रलयोदशायित्वंच लिङ्गत्वेन विवक्षितम् । प्रलयोदशायित्वलिङ्गदर्शनाय 'अंतः समुद्रेमनसे' ति श्रुत्युदाहरणम् । तत्र — जलवाच्यर्ण शब्दसद्भावात् ।

क्षीराब्धिशायित्वलिंगप्रदर्शनाय 'समुद्रेन्तः कवय' इति श्रुत्युदाहरणम्। क्षीरसमुद्रशायिनः कविभिरीड्यत्वादिति भावः। (२१ सू०.) इत्याशंकामिति॥ अन्तस्थेनविष्णुनाइंद्रादीनामभेदः प्राप्त इत्येककोटिकसंशयं परिहरत्सूत्रमित्यर्थः। एतेन — विष्ण्वादिलिंगश्रुतीनामन्तस्थानामनेकत्वेनाप्युपपदयितुं शक्यत्वात्। अभेद एवेत्यवधारणानुपपत्तिरिति परास्तम्। अभेदसंशयस्यैवाभिमतत्वेनाऽभेद भ्रमस्याऽनभिमतत्वात्। **अन्यश्चेति**॥ प्रतिपत्तव्य इति शेषः। एवंच — पक्षद्वय इत्यादिनोक्तांशंकामनूद्य निषेधति – **नचेति**॥ एतदैक्यं कल्प्यमिति नवाच्यमित्यर्थः। एतेन— उभयप्रापकस्याऽन्तस्थस्याऽनेकत्वेनाप्युपपन्नत्वेन अन्यथाऽनुपपत्तेरभावात्, ऐक्यस्यकल्प्यत्वाभिधानमयुक्तमिति परास्तम्। तस्यैककोटिकसंशयानुवादात्वेनाऽन्यथानुपपत्त्या ऐक्यावधारणार्थत्वाभावात्। उभयप्रापकमसिद्धमेवेत्याह – **लिंगेनेति॥ नच – श्रुत्यादीनामिति**॥ इंद्रश्रुतेः लिंगापेक्षया स्वतोबलवत्त्वेन समाश्वरथित्वादिवस्पतित्वरूपयोर्लिंगयोरनेकत्वेन त्वष्टृश्रुतेः बृहस्पति श्रुतेश्च श्रुतित्वेन बलवत्त्वात् अबाध्यत्वमिति नवाच्यमित्यर्थः। **बाधोपपत्तेरिति**॥ इति भाव इति शेषः। ननु यत्प्रागुक्तम्, अन्तस्थत्वलिंगसमन्वय समर्थनमिन्द्रादिबहुनाम्नांसमन्वयसिध्यर्थमिति तदयुक्तम्—इंद्रादिनाम्नां भगवतियोगसंभवेन समन्वयाऽसंभवाभावात् तत्समन्वयस्याऽसमर्थनीयत्वादित्यतः सूत्रकाराभिप्रेतम्, इन्द्रादि नामसु पूर्वपक्षसिद्धान्त माह — **नचेंद्रादिष्वित्यादिना**॥ 'इंद्रोराजाजगतोयईश'(तै.आ. ) इत्यादिवाक्य प्रतिपाद्याइन्द्रादयोविषयः ते किं शचीपत्यादयः, उत विष्णुरूपाणीति संदेहः, इंद्रादिशब्दनां प्रसिद्धेंद्रादिषुयोगरूढिभ्यां प्रवृत्तत्वेन त एव इंद्रादिशब्दाभिधेया इति पूर्वपक्षः, विष्णुरेवेंद्रादिशब्दप्रतिपाद्यः, समुद्रशायित्व ब्रह्मांडवीर्यत्वादितद्धर्मोपदेशात्, इंद्रादिशब्दानां विष्णौमहायोगाद्विद्रूढेश्चेति 'अंतस्तद्धर्मोपदेशा' दिति आद्य सूत्रस्य भाव इत्यर्थः। एतेन — इन्द्रादिशब्दानां हरावमुख्यत्वेपि सावकाशत्वानपायात्, इंद्रादिशब्दानां हरावमुख्यत्वाशंका नयुक्ता, अत एव — महायोगरूढिभ्यांमुख्यत्वाभिधानंच व्यर्थं सावकाशत्वस्यमुख्यत्वानपेक्षणादिति परास्तम्। 'नचे' त्यादिग्रंथस्य अधिकरणसिद्धान्तसिद्धेंद्रादिनामसमन्वयोपयोगि पूर्वपक्षसिद्धान्तप्रदर्शनार्थत्वात्। अत्र-

**रूढितोपीति** ॥ ननु – कथमिदं विज्ञायते अज्ञमूलिकारूढिः अज्ञरूढिरिति आहोस्वित् अज्ञैर्ज्ञातारूढिः अज्ञरूढिरिति । किंचातः यदिविज्ञायते अज्ञमूलिकारूढिः अज्ञरूढिरि ति, तदा– असिद्धिः प्राप्नोति । नहींद्रादिशब्दानां पुरंदरादिपुरूढिरज्ञमूलिका, किन्तर्हि विद्वत्तमभगवन्मूलिका, तदुक्तम् –

'अनादिनिधाना नित्या वागुत्सृष्टास्वयं भुवा ।
ऋषीणांनामधेयानियाश्चवेदेषु दृष्टयः ।
वेदशब्देभ्य एवासौ निर्ममे समहेश्वर' इति
उग्रोभस्मधरोनग्नः कपालीति शिवस्यच
विशेषनामानिददौ स्वकीयान्यपिकेशव ' इति च ।

अथविज्ञायते अज्ञैर्ज्ञातारूढिरिति, तदा विद्वद्रूढिरपि अज्ञैर्ज्ञाता अज्ञरूढिः स्यात् । तथा इंद्रादिशब्दानां पुरंदरादिगता अज्ञरूढिरपि विद्वज्ज्ञेयत्वात् विद्वद्रूढिः स्यात् । ततश्च – सर्वथाविद्वदविद्वद्रूढयोर्भेदाभावात् नाऽज्ञरूढितोविद्वद्रूढेः प्राबल्यं संभवति । विद्वदविद्वद्रूढयोर्भेदपक्षेऽज्ञरूढेरेवप्राबल्यं युक्तं, बहुप्रतिपत्तिविषयत्वेन शीघ्रगामित्वात् । विद्वद्रूढेश्च बहुप्रतिपत्तिविषयत्वाभावेन मन्थरगामित्वादिति चेत्, उच्यते –

' अज्ञानां प्रतिपत्त्यर्थं विष्णुना कल्पिता तु या।
अज्ञरूढिरितिप्रोक्ता विद्वद्रूढिस्व कल्पिता '॥ इति

नब्रूमोवयं अज्ञमूलिकारूढिरज्ञरूढिरिति नापि अज्ञैर्ज्ञातारूढिरज्ञरूढिरिति येनोक्तदोषः स्यात्, किंनाम संज्ञैषातत्रभगवतः कल्पितारूढेरज्ञरूढिरिति, स्वभावसिद्धायारूढे र्विद्वद्रूढिरिति । एवंच – विद्वद्रूढेरज्ञप्रतीतिगोचरत्वेऽपि अज्ञरूढेर्विद्वत्प्रतीतिगोचरत्वेऽपि न सांकर्यं नापिप्राबल्यदौर्बल्यानुपपत्तिः । कल्पितत्वस्वाभाविकत्वाभ्यां तदुपपत्तेरिति । ननु – अथापि विद्वद्रूढिर्भगवतिसिद्धा नवा । आद्येऽधिकरणवैयर्थ्यं, तत्सिद्धेरधिकरणमूलत्वात् । नेतिपक्षे तदुपन्यासायोग इति चेत्, उच्यते — सिद्धैवेंद्रादिशब्दानांभगवति विद्वद्रूढिः, ' नामानिसर्वाणि ' ति श्रुतेः । नचाऽधिकरणवैयर्थ्यम् — ' इंद्रोराजाजगतोय ईश ' इत्यादि श्रुतिगतेंद्रादिशब्दानां तत्परत्वसाधनार्थमेवाधिकरणप्रवृत्तिरित्यंगी-

कारात् । ' तस्मादशेषाधिदैवगतशब्दव्याख्योहरि ' रित्युपसंहारटीकातु एतदधि-करणोक्तन्यायेनेंद्रादिनाम्नां भगवत्परत्वेसिद्धे ' नामानी ' ति श्रुतिबलेन शक्तिर-भ्युपगंतव्या नतु लक्षणेत्यर्थपरा, नतु वाच्यत्वमेवाधिकरणार्थ इत्यर्थपरा । नन्वत्र परमात्मनि ' इन्द्रादिनामसमन्वयसिध्यर्थमन्तस्थत्वलिंगसमन्वयसमर्थनादस्तिशास्त्रा-दिसंगति ' रित्युक्तं, तदयुक्तम् , अन्तस्थत्वेनहेतुना इंद्रादिनाम्नांसमन्वयस्यकूाप्य-नभिधानादित्यत आह — **अत्रलिंगसमन्वयसमर्थनमिति** ॥ लिंगसमन्वय-समर्थनार्थकेऽस्मिन्सूत्रे लिंगग्रहणं इंद्रादिनाम्नामुपलक्षणार्थ ' मिति भावः । तदु-क्तम् — ' उपलक्षणत्वं शब्दानामानन्दमयपूर्विणा ' मिति ।

इदमुक्तं भवति – स्यादयंदोषो यद्यनेनाधिकरणेनाऽन्तस्थत्वलिंगसमन्वयः, अन्तस्थत्वलिंगेनेंद्रादिनाम्नां समन्वय इति ब्रूमः, नचैवं किंनाम आनंदमयनाम्नः अन्नमयादिनामसमन्वयादिना मसमन्वयसिध्यर्थमुदाहरणत्ववत् अन्तस्थत्वलिंगस्यापि इंद्रादिनामसमन्वयसिध्यर्थ मुदाहरणत्वम् , इदमेवहि अस्यतादर्थ्यं यत्तत्सिध्युदा-हरणत्वमिति । एतेन – लिंगसमन्वयस्यबहुनामसमन्वयसिध्यर्थत्वस्यप्रागेवोक्तत्वात् पुनरभिधानेपौनरुक्त्यमिति परास्तम् । एतेनैवान्तस्थत्वलिंगसमन्वयसमर्थनस्य आनन्दमयाधिकरणोक्तस्याऽऽक्षेपपरिहारार्थत्वेन वैयर्थ्यशंकानुदयात् इंद्रादिनाम-समन्वयसिध्यर्थमिति परास्तम् । नन्वानन्दमये श्रुताऽदृश्यत्वलिङ्गस्य अन्य-गामित्वे आनन्दमयोप्यन्यः प्रसज्यत इति तल्लिंगमवश्यनिर्णेयं तन्निर्णयश्च द्वेधा घटते अन्तस्थत्वलिंगसमन्वयेनवा इन्द्राद्यन्यतमनामनिर्णयेनवा । तथापि – नामनिर्णये-नैव अदृश्यत्वलिंगनिर्णयः अधिकरणस्य पादान्तर्भावसंभवात् , नतु अन्त-स्थत्वनिर्णयेन लिंगनिर्णय इत्यत आह — **नामनिर्णयेनेति** ॥ नन्वमिहनाम-निर्णयेनापि अदृश्यत्व लिंगनिर्णयोभवतीति, तथापि सूत्रकृता लिंगनिर्णयेनैवादृश्य-त्वलिंगनिर्णयः क्रियते, अदृश्यत्वलिंगेन अन्तस्थत्वलिंगस्य संगतत्वात् संबन्ध-त्वात् । यद्यपि इंद्रादिनामान्यपि अदृश्यत्वलिंगेनसंबद्धानि तथापि न साक्षात् , किंतु अन्तस्थाभेदनिमित्तेनैवेति न तेषामुदाहरणम् । एतेन — अस्यपादस्य नाम-समन्वयात्मकत्वात् लिंगसमन्वयस्याऽनावश्यकत्वेन नामनिर्णयेन लिंगनिर्णयोऽर्थो-ऽति लिंगनिर्णायकत्वरूपप्रयोजनवर्णनमयुक्तमिति परास्तम् ।

**पूर्वपक्षस्तु**— अंतस्थ इंद्र एव भवेत्, 'इंद्रोराजाजगतोयईश'(तै०.आ०-३-११) इति, ब्रह्मेंद्रमग्निंजगतः प्रतिष्ठा (तै.आ. ३-११) मिति चन्द्रश्रुतेरित्येकः पूर्वपक्षः ; सूर्यएवायमन्तस्थः. 'सप्तयुंजन्तिरथमेकचक्र' (तै. आ. ३-११) मितिसूर्यलिंगात्, दिवआत्मानंसवितार' (तै. आ. ३ - ११) मिति दिवस्पतित्वलिंगात्, सवितृश्रुतेश्चेत्यपरः; वरुणएवाय मन्तस्थः 'अपांनेतार' (तै.उ. ३-११-२७) मितिवरुणलिंगादित्यन्यः, त्वष्टैवायमन्तस्थः, 'त्वष्टारंरूपाणिविकुर्वन्त' (तै. आ. ३-११) मितित्वष्टृश्रुते रित्यपरः ; अग्निरेवायमन्तस्थः 'ब्रह्मेंद्रमग्निंजगतःप्रतिष्ठा' (३-११-२१) मित्यग्निश्रुतेरित्यपरः ; बृहस्पतिरेवायमन्तस्थः 'सवितारं बृहस्पतिं' (तै.आ.३-११-२१) मिति बृहस्पति श्रुतेरित्यपरः, नचेन्द्रादयःशब्दा अन्यत्र नेतुंशक्यन्ते, तेषां देवेष्वेव रूढत्वात्, तेषामैश्वर्यादिशब्दप्रवृत्तिनिमित्तवत्त्वाच्च। नचाऽदृश्यत्वादिलिंगात् अन्तस्थो विष्णुः - श्रुत्यादिभ्यो लिंगमात्रस्य दुर्बलत्वात्, ततश्च अन्तस्थस्यान्यत्वाददृश्यत्वेनाभिमताऽनन्दमयोऽप्यन्यएवेति तस्यैव जिज्ञास्यत्व मिति।

**सिद्धान्तस्तु**— विष्णुरेवाऽन्तस्थः प्रलयार्णवशायित्वक्षीरार्णवशायित्वब्रह्मांड वीर्यत्वादि तल्लिंगात्। नच - श्रुतेः स्वतः प्रबलत्वात् लिंगानांनिरवकाशत्वेनाऽन्यतरेणाऽन्यतरबाधायोगात् विष्णुनेंद्रादीनामभेदो विवक्षितोऽस्त्विवतिवाच्यम् 'इन्द्रस्यात्मानिहतःपंचहोता। वायोरात्मानंकवयोनिचिक्युः। अन्तरादित्ये मनसाचरन्तं देवानां हृदयंब्रह्मान्वविन्द (तै. आ. ३-११) दित्यादिभेदव्यपदेशात्। नचोभयप्रापकान्यथानुपपत्या एतत्कल्प्यम् निरवकाशेन विष्णुलिंगेन सावकाशान्यप्रापक श्रुतिलिंगानां बाधोपपत्तेः। एवमिंद्रादि नामस्वपि पूर्वपक्षसिद्धान्तौ द्रष्टव्यौ। ततश्च - अयमन्तस्थ इंद्रादिश्च विष्णुरेवेतिसिद्धम्। (अ. ७.)

--

[८ अधिकरणम्.]

## ॐ आकाशस्तल्लिंगात ॐ (२२. सू०.)

ननु - तल्लिंगग्रहणं शक्यमकर्तुम्, अन्तस्तद्धर्मोपदेशा'दित्यतः 'तद्धर्मो-

पदेशा'दित्यनुवृत्त्यैव तल्लिंगादित्यर्थलाभसंभवात् । सूत्रं चैवंसत्यल्पाक्षरंस्यात् । यद्यनुवर्तते 'भेदव्यपदेशाच्चान्य' इत्यत्राप्यनुवर्तेत, नैषदोषः, तत्राऽनुवृत्त्यभावेऽपि उत्तरसूत्रेऽनुवृत्तिसंभवात् । तदुक्तं - महाभाष्ये - 'मण्डूकप्लुतयोऽधिकाराः यथा मण्डूका उत्प्लुत्योत्प्लुत्यगच्छन्ति तद्वदधिकारा' इति तस्मात् 'आकाशश्च'त्येवसूत्रमस्त्विति चेत्, मैवं – पूर्वसूत्रेहि धर्मपदं ब्रह्मांडवीर्यत्वसमुद्रस्थत्वादि धर्मपरं, तदेवचेदिहानुवर्तेत इहापि ब्रह्मांडवीर्यत्वादि धर्मपरमेवस्यात् । नच त आकाशउपलभ्यन्त इति असिद्धिशंकास्यात्, तत्परिहाराय शिष्याणां मनःखेदोमाभूदिति तल्लिंगग्रहणम् कथंतर्हि 'अतएवप्राण' इत्यादौ अतएवेत्युक्तिः, असिद्धिशंकासाम्यात् इति चेत्, न – अत्रहि 'परोवरीयानुद्गीथः सएपोऽनंत' (छा० १-९-१) इति परोवरीयस्त्वमुच्यते, परोवरीयस्त्वंच महालक्ष्म्युत्तमत्वम् 'सर्वस्मादुत्तमंप्रोक्तं परोइतिततःपरम् । परोवरंपरंतस्मात् प्रोक्तं पारोवरीयक'मिति उत्तराधिकरणे वक्ष्यमाणं श्रीपतित्वंचैनदेवेति नासिद्धिशंकेति नकाश्चिद्दोषः । वृत्ताधिकरणसंगतिमाह- । **कोहीति** ।। आनन्दमयाधिकरणप्रतिपाद्यैतदधिकरण प्रतिपाद्ययोराकाश शब्द विषयत्वमेव संबन्धइतिभावः । अस्तुसंगतिः, तथापि आकाशस्य कुतो विष्णुत्वं समर्थनीयमित्यत आह – **सचाऽऽकाश इति** ।। छंदोगश्रुत्युक्ताकाशस्य विष्णवन्यत्वबुद्धे तैत्तरीय श्रुत्युक्ताऽऽकाशोऽपि प्रत्यभिज्ञानात् सएवेतिबुद्धिःस्यात्, ततश्चानंदमयोप्यन्यएवेति बुद्धिःस्यादिति सानिर्णेयइत्यर्थः

ननु-श्रुत्युक्ताऽऽकाशस्य विष्णवन्यत्वबुद्धौ तैत्तरीय श्रुत्युक्ताऽऽकाशोऽपि अन्यएवेतिबुद्धिःस्यादित्ययुक्तम् तस्य कोह्येवान्यादिति हेतुव्यपदेशपूर्वकं सानन्दमयत्वस्य समर्थितत्वात् । नच – आनन्दमयत्वनिश्चयेऽपि विष्णवन्यत्वबुद्धिर्युक्ता, ब्रह्मशब्दाभ्यासादिना आनन्दमयोविष्णुरेवेति साधितत्वादितिचेत्, स्यादयंदोषः,- यदि यस्य-, ब्रह्मशब्दाभ्यासादिना आनन्दमयो विष्णुरितिनिश्चयः सएवाऽत्राधिकरणेऽधिकारीति ब्रूमः नचैवं किंनाम प्रत्यधिकरणमधिकारिणोभिद्यन्ते अधिकरणानां पृथग्विद्यात्वात् उक्तंचसुधायाम् –'सर्वाणिहि सूत्राणिप्रत्येकमनेकवेदवाक्यविचारपरत्वात् अवान्तर ब्रह्मविद्या'इति । एवंच सति - एतदधिकरणाधिकारिणः ब्रह्मशब्दाभ्यासादेरानन्दमयस्य विष्णुत्वनिश्चयाऽभावात्, अस्याऽऽकाशस्य विष्णवन्यत्वबुद्धौ

प्रत्यभिज्ञानात् तैत्तरीयश्रुत्युक्ताऽऽकाशानन्दमययोरप्यन्यत्वबुद्धिः स्यादेवेति न किंचिदनुपपन्नम् । एवमुत्तरत्रापि द्रष्टव्यम् । **तत्ररूढत्वादिति** ।। नन्वन्यत्रप्रसिद्धिः संदेहबीजमितिरूढेः संदेहबीजत्वस्योक्तत्वात् पूर्वपक्षहेतुत्वाभिधानमयुक्तमितिचेत्, न-आनन्दमयेप्रयोगापेक्षया रूढेःप्राबल्यज्ञानविधुरस्य रूढिः संदेहहेतुः, प्राबल्यज्ञस्य पूर्वपक्षहेतुरित्यंगीकारात् । एवमुत्तरत्रापिद्रष्टव्यम् ।

चेष्टाहिचेतनानां या सा भवेत्तत्प्रसादतः ।

अचेतनस्वभावस्तु विवरादिः कथं तत'

इत्यनुव्याख्यानदिशा अभ्यधिकाशंकामाह - **न चेति** ।। आकाशस्येत्यतःपरं 'इन्द्रादिव'दिति ग्राह्यम् । **अकाशस्येति** आकाशादिशब्दप्रवृत्तिनिमित्तस्य विवरत्वादेः स्वाभाविकस्य अन्याधीनत्वाऽयोगादित्यर्थः । **चेतनस्यहीति** ।। अत्र संभवतीत्यतःपरं दृष्टान्त दार्ष्टान्तिकयोर्वैषम्या'दितिशेषोद्रष्टव्यः।**इतिचेदिति**।। नेतिशेषः । ननु - सएवाऽऽनंदमयो भवतीत्युक्तम्, अचेतनस्याऽऽनन्दाऽसंभवादित्यतआह - **आकाशस्येति** ।। अचेतनत्वेन स्वत आनंदासंभवेऽपि अभिमान्यनुग्रहेण आनंदोभवेदेव, अभिमानिदेवानां कर्तुमकर्तुमन्यथाकर्तुं सामर्थ्यसद्भावादितिभावः । एतेन — अभिमानिन आनन्दमयत्वेऽपि आकाशस्य तदभावात्, आकाशस्याऽऽनन्दमयत्वे हेत्वभिधानमयुक्तम्, औपचारिकानन्दमयत्वोपपादनायाऽऽनन्दसाधकहेतूपन्यासस्याऽकर्तव्यत्वात् इति परास्तम् ! व्यासानुग्रहेण कीटस्यराजत्वमिव देवतानुग्रहेणाऽचेतनस्याप्याकाशस्य आनंदोभवतीत्यंगीकारात् । ननु - अस्तुछंदोगश्रुत्युक्त आकाशो भूताकाशः, तस्यतत्ररूढत्वात्, बाधकाभावे मुख्यार्थत्यागायोगात् । तथापि न तैत्तरीय श्रुत्युक्तआकाशो भूताकाशः, ब्रह्मशब्देन विष्णवभिन्नतया सिद्धे आनन्दमये आकाशशब्दप्रयोगेण तत्र रूढार्थग्रहणाऽयोगात्, रूढययोगेच योगस्यग्राह्यत्वेन विष्णोरेवाऽऽकाशत्वौचित्यात् । एवंच - तत्पूर्वाधिकरणाऽऽक्षेपइत्याशंक्य निषेधति - **अनेनेति** ।। अनेनेत्युक्तंहेतुंविवृणोति — **रूढेरिति** ।। इदमुक्तंभवति —स्यादयंतैत्तरीयश्रुत्युक्तस्याऽऽकाशस्य विष्णुत्वाभ्युपगमः, यदि तद्गताकाशशब्दस्य रूढिबाधकमानन्दमस्यविष्णुत्वसाधक मनुमानं प्रबलं स्यात्, नचैवं रूढेर्बलवत्त्वेन तद्बलेनाकाशाऽऽनन्दमययोरभेदेसिद्धे तस्य-

विष्णुत्वसाधकानुमानस्य बाधितविषयत्वादिति । ननु - सूत्रार्थनिरूपणावसरे 'आकाशइतिहोवाचे' (छा० १ – ९.–) त्यत्र भूताकाशस्यप्राप्तिः, नचाऽसौयुज्य-तइति न वक्तव्यम्, असूत्रार्थत्वादित्यत आह - **विषयादेरिति** ॥ सत्यं नचासौ युज्यत इत्यन्तो नसूत्रार्थः, तथापि नैतद्ग्रन्थवैयर्थ्यं, पूर्वपक्षफलाभिधानेन सूचितस्याविषयादेः मंदानांसुबोधत्वाय विषयादेरनुवादार्थत्वात् । अस्मिन्भाष्ये प्राज्ञानां मंदानांचा, ऽधिकारइतिद्योतनाय विषयादिकं प्राक्सूचयित्वा पश्चादनुवादःकृत इतिबोध्यम् । **नासावत्रवाच्यइति** ॥ असावत्रप्रतिपाद्यइति नयुज्यतइत्यर्थः । **नमन्तव्यमित्यर्थइति** ॥ इतःपरंटीकायां 'परोवरीयान् सर्वोत्तम' इति वाक्यं लेखकदोषाद्विच्छिन्नमिति तद्वाक्यमिहद्रष्टव्यम् अवश्यंचैतदेवंविज्ञेयम् । अन्यथा परस्मा' दिति श्रुत्युदाहरणमसंगतंस्यात् । 'परोवरीया'निति शब्दस्य कुतः सर्वोत्तमत्वमर्थ इत्यतआह - **परस्मादिति** । अत्रस्मृतिरिति न प्रथमान्तपाठः । किन्तु स्मृतेरिपंचम्यन्तः । एतेन – स्मृतिरितिप्रथमान्तस्याऽनन्वयइतिपरास्तम् ॥ ' विष्णोर्नुवीर्यगणनांकतमोऽर्हतीहयःपार्थिवान्यपिकविर्विममेरजांसि ' ( २-७ ) ति भागवतानुसारेण श्रुतिंव्याचष्टे— **विष्णोर्वीर्याणीति** । कमित्यस्यार्थःकइति । प्रवोचमित्यस्यार्थःप्रवक्तीति । श्रुतौ 'प्रवोच' मितिलुङ्प्रयोगेऽपि प्रवक्तीतिलट्प्रयोगः अत्र लुङो न भूतकालार्थत्वं किन्तु सर्वकालर्थत्वमितिद्योतनाय । एतेन – वर्तमाननिषेधेऽपि स्यादतीतादौ कश्चिदितिपरास्तम् । तिपो मिबादेशः तदुक्तंमहाभाष्ये – '**तिङांचतिङो** भवंतीतिवक्तव्यम । चषालं ये अश्वयूपायतक्षति तक्षंतीतिप्राप्त' इति। ततश्चैवंयोजना—कं कःविष्णोः वीर्याणि प्रवोच नु प्रवक्तुमर्हति, ज्ञानाभावात् नकोपीत्यर्थः। ननु – यः सर्वं ज्ञातुंप्रवक्तुंचाऽर्हति, अन्यथा सर्वज्ञत्वभंगइत्यतआहः – **यःपार्थिवानीति** ॥ योपि सर्वज्ञः सोऽपि पार्थिवानिरजांसि विममे कास्ना नेतिगम्यते । अयंभावः – विद्यमानस्याऽज्ञत्वमेव सर्वज्ञत्वविरोधि नतु अविद्यमानाऽज्ञत्वम् । एवंच — पार्थिवपरमाणूनामानंत्येन संख्यापरिच्छेदाभावात् , तदज्ञत्वं यथा न दोषाय एवमीश्वरगुणानां ततोप्यनंतत्वात् तदज्ञानं नदोषाय किंतु गुणएवेति । **अस्त्विति** ॥ अस्तुविष्णुलिंगेन श्रुते र्बाधः ततश्चाऽऽकाशादि शब्दानां भगवत्परत्वनिर्णयश्च, तथापि – ' नामानिसर्वाणी 'ति श्रुत्यवष्टं

मेनोक्तं विष्णोराकाशादिशब्दमुख्यार्थत्वं नोपपद्यते यत स्तत्रापिमते विष्णावाकाशश्रुतिरमुख्यैव, गुणपूर्तिसिद्धये विष्णावाकाशादि शब्दानां यौगिकत्वांगीकारात्, अन्यत्रैवरूढत्वांगीकारादितिभावः। एतेन – श्रुतिरमुख्यैवेति किं श्रुतेर्विष्णौ लाक्षिणिकत्वं प्रतिज्ञायते उत यौगिकत्वं नाद्यः – यौगिकत्वेन लाक्षिणकत्वसाधनाऽयोगात्। नद्वितीयः — साध्यावैशिष्ट्यादितिपरास्तम्। यौगिकत्वप्रयुक्तरूढ्यवधिकामुख्यत्वविशेषसाधनस्येहाभिमतत्वात्।

**पूर्वपक्षस्तु** – 'अस्यलोकस्ये' (छा० १–९) तिश्रुत्युक्ताऽऽकाशस्तावत् भूताकाशः आकाशशब्दस्य तत्र रूढत्वात्, नचायमाकाशो विष्णुः, आकाशशब्दस्य तत्र यौगिकत्वादिति सत्प्रतिपक्षतेतिवाच्यम् – योगस्यहीनबलत्वेनाऽप्रतिपक्षत्वात्। नचाकाशशब्द प्रवृत्तिनिमित्तस्याऽवकाशत्वस्य समवायेनाकाशवृत्तित्ववत्। स्वातंत्र्यलक्षणसंबन्धेन हरावपिसत्त्वात्। उभयत्रापि रूढिरविशिष्टेतिरूढया भूताकाशत्वानिर्णयइतिवाच्यम्–आकाशस्याऽचेतनत्वाद्भगवदधीनत्वाभावेन आकाशत्वस्य स्वस्वामिभावसंबन्धेन तद्वृत्तित्वाभावात्। एवं छंदोगश्रुत्युक्ताकाशे भूताकाशेसति तैत्तरीयश्रुत्युक्ताकाशोऽपि रूढिबलादेव भूताकाशः, 'सर्वाणिहवाइमानी' (छा० १-९-१) ति तस्याऽऽकाशस्य भूतकारणतयोक्तत्वात् कार्यगतचेष्टायाः कारणाधीनतादर्शनेन 'कोह्येवान्यादि' (तै० उ० २-१५) ति तैत्तरीयश्रुत्युक्तजगच्चेष्टकत्वलिंगस्य सावकाशत्वेनाऽबाधकत्वात्। एवंच–आनन्दमयोपि सएवेति न ब्रह्मजिज्ञासा संभवतीति।

**सिद्धान्तस्तु** – 'अस्यलोकस्ये' त्यत्राऽऽकाशस्तावद्विष्णुः निरवकाशपरोवरीयस्त्वादि विष्णुलिंगात्, आकाशशब्दस्य हरौमहायोगविद्वद्रूढिसद्भावेन तत्रैव मुख्यत्वात्, एवंच छंदोगश्रुत्युक्ताऽकाशस्य विष्णुत्वे तैत्तरीय श्रुत्युक्ताकाशोपि जगच्चेष्टकत्वलिंगबलादेव विष्णुः, चेष्टकत्वस्य कर्त्तर्येवमुख्यत्वात्, मुख्येसंभवति अमुख्यग्रहणायोगात्, सर्वचेष्टकत्वस्य सर्वोत्तमत्वव्याप्यत्वेन भूताकाशे सर्वोत्तमत्वस्याऽभावेन सर्वचेष्टकत्वाऽभावाच्च, आकाशस्यसर्वोपादनत्वाभावेन असंकुचितसर्वचेष्टकत्वाऽसंभवाच्च, अचेतनस्यानंदाऽयोगाच्च। नच – अचेतनस्यापि चेत-

नानुग्रहेण आनन्दःसंभवतीतिवाच्यम् — अप्रामाणिकत्वात् । तस्मादाकाश आनंदमयश्च सएवेति युक्ता ब्रह्मजिज्ञासेतिसिद्धम् (अ० ८)

—•—

[ ९. - अधिकरणम् ]

## ॐ अतएवप्राणः ॐ (सू० २३)

अतएवप्राण इत्यस्य 'तद्वैत्वंप्राणोभव' इति श्रुत्युपक्रमत्वभ्रमं निवारयितुं-माह — **अन्नमन्नमिति ॥ प्राणनाम्नइति ॥** यद्यपि - 'यद्वैतान्प्राणयोनवे' (तै. आ. ३-१४) ति श्रुतेरस्यलिंगात्मकत्वम्, तथापि - नामात्मकत्वस्यापिभावात् प्राणनाम्नइत्युक्तम् । **विषयइति ॥** संगतिमित्यनन्तरं दर्शयन्नितिशेषः । एतेन — संगतेर्मुखतएवाभिधानात् संगतिंसूचयतीत्यनुपपन्नमितिपरास्तम् । संगतिंदर्शयन् विषयसंशयौसूचयतीत्यभिधानात् । यद्यपि — प्राणशब्देनविषयोदर्शितः, तथापि - विषयत्वंनोक्तमिति तत्सूचकत्वाभिधानमुपपन्नम् । प्राणपदंवायौप्रसिद्धं परमानन्दत्वं विष्णुत्वेनसहचरितमिति विष्णुत्ववायुत्वकोटिस्मारकयोः परमानन्दप्राणशब्दयोरभिधानात् अस्यभाष्यस्य संशयसूचकत्वमुपपन्नमितिद्रष्टव्यम् । ननु परमानन्दत्वोक्तिमात्रेण कथंपूर्वाधिकरणेन संगतिरुक्ताभवेत्, अतीताधिकरणप्रतिपाद्ये परमानंदत्वाभावादित्यतआह — **यदुदितमिति ॥** अनेनानन्दमयाधिकरणैतदधिकरणप्रतिपाद्ययोः आनन्दमयत्वरूपैकधर्माक्रांतत्वंसंबन्धइत्युक्तंभवति । **तस्यचप्राणस्येति ॥** ननु - तस्यचप्राणस्यविष्णोरन्यत्वे आनन्दमयत्वमन्यस्यैव प्रसज्यतइत्युक्तम्, 'तद्वैत्व' मित्युक्तिबलादन्यस्यानंदमयत्ववत्, उक्तिबलादेव विष्णोरप्यानन्दमयत्वसंभवात्, अन्यथा शुक्लःकंबलः, शुक्लंवस्त्र, मित्युक्ते यदि वस्त्रस्यकंबलान्यत्वंस्यात्, तर्हि अन्यस्यैव शुक्लत्वंप्रसज्यतइति वस्त्रस्यापि कंबलत्वंप्रसाध्यंस्यात्, यदि तत्रोक्तिबलादुभयोरपि शुक्लत्वम्, इहापि तथास्त्वितिचेत्, सत्यम्-इत्युक्तिबलादन्यत्रानेकेषामेकजात्यवच्छिन्नधर्माक्रान्तत्वं संभवतीति बाधकाभावात्, न प्रकृते द्वयोरानन्दमयत्वंसंभवति, आनन्दमयत्वस्य सर्वेश्वरत्वाऽविना भूतत्वेन अनेकेश्वरत्वापातात्, नच तद्युक्तं जगद्विलयप्रसंगात् । ततश्च - अवश्यमेकस्याऽऽ

नेदयत्वापलापेकर्तव्ये विष्णोरेव तदपलपनीयं विष्णोस्तत्पुच्छत्वोक्तेः, आनन्दमये ब्रह्मशब्दस्तु तदवयवस्यब्रह्मत्वादुपचारेण नेय इति द्रष्टव्यम् । **लिंगदौर्बल्यादिति॥** यद्यपि - पूर्वपक्षिणा वायुरेवायंप्राणः प्रागुक्तानंदमयश्चेति वदता महाभोगत्वस्य विष्णुलिंगत्वानंगीकारात् , विष्णुलिंगमेवनेनिवक्तव्यम् । दौर्बल्यंतु सर्वथा नवक्तव्यम् तथापि अंगीकारवादेनेतिबोध्यम् । पूर्वाधिकरणेनगतार्थतापरिहाराय अभ्यधिकाशंकामाह — **नाधीति** ॥ आकाशशब्दस्य विष्णौयोगःसंभवति प्राणशब्दस्यतुयोगोऽपिनसंभवतीति आकाशशब्दविषयकशंकातः प्राणशब्दविषयकशंका बलवतीतिभावः । **अन्वयव्यतिरेकाभ्यामिति** ॥ यद्यपि जीवनकारणत्वान्वयव्यतिरेकौ नास्मदध्यक्षसिद्धौ, तथापि—स्वस्वोत्तमत्वविषये प्राणेन सह विवदमानाना मिंद्रियाभिमानिदेवानां प्रत्यक्षासिद्धौ अस्माकं तत्प्रत्यक्षत्वसिद्धिस्तु 'त्वमुक्थमसि त्वमिदं सर्वमसि तव वयं स्मस्त्वमस्माकमसी' ( ऐ.आ. २-१-४)तिदेवकर्तृकप्राणस्तुत्यन्यथानुपपत्त्या भवति । यद्वा — कुलालादिशरीरस्य घटाद्यन्वयव्यतिरेकदर्शनमेव घटादिकंप्रति कुलालाद्यन्वयव्यतिरेकदर्शनमिति लोकैरभ्युपगतत्वात् इहापि वायुविकारस्य तद्देहस्थानीयस्य जीवनान्वयव्यतिरेकदर्शनं वायोरन्वयव्यतिरेकदर्शनत्वेनोक्तमिति द्रष्टव्यम् अतएवसुधायां वायुविकारशरीरत्वान्मुख्यस्येत्युक्तम् नकेवलं जीवनहेतुत्व मन्वयव्यतिरेकगम्यम् , अपितु आगमसिद्धंचेतिभावेनाह — **यस्मादिति** ॥ यद्यप्यत्रतत्प्राप्तेरुत्पत्तिकारणत्वमेवोच्यते, तथापि — उत्पत्तिर्नाम प्राणशब्दाभिधेयेन्द्रियधारकदेहसंबन्धः, 'जीवप्राणधारण' इति धातुव्याख्यानात् , जीवनकारणत्वंच प्राणधारणकारणत्वमेवेति उत्पत्तिकारणत्वेन जीवनकारणत्वलाभादेतदुदाहरणमर्थवत् । **लिंगस्यमावकाशस्येति** ॥ अंगीकारवादोयं, विष्णुलिंगत्वमेवनेति हृदयम् । **मुख्यत्वादिति** ॥ उपलक्षणमेतत् प्राणवृत्तावेच तन्नाम्नि 'नद्वैत्वंप्राणोऽभव' इत्यादिनिर्देशानुपपत्तेश्चेत्यपिद्रष्टव्यम् । **संप्रदायविदइति** ॥ स्वमतंतु, नकेवलमङ्कगायाः श्रियोहमित्युक्तेः, अंकाश्रिताश्रीः. वक्षासि लक्षणभूतत्वाल्लक्ष्मीरितिसिध्दत्वान्नोक्तम्। अतएव तत्वप्रदीपे-अङ्काश्रिताश्रीः वक्षसिलक्षणभूतालक्ष्मीरित्युक्तम् , अंकवक्षस्थलाश्रितयोर्लक्ष्मीरूपयोरभिन्नत्वेन द्वयोरपि श्रीलक्ष्मीशब्दवाच्यत्वात् संप्रदायमतमपिप्रामाणिकत्वात्ग्राह्यम् । ननु - 'ईशानः-

प्राणदःप्रण ' इतिप्रमाणे परमेश्वरस्य प्राणदातृत्वाभिधानमयुक्तम् , अन्वयव्यतिरेकाभ्यां प्राणदातृत्वस्य मुख्यप्राणनिष्ठत्वावगमात् इत्याशंक्य निषेधति - **नचेति** ॥ ननु – अयंनिषेधो ऽनुपपन्नः, अन्वयव्यतिरेकासिद्धस्य मुख्यप्राण गतप्राणदातृत्वस्य बाधकाभावेनाऽपलापायोगादित्यतआह — **प्राणगतेति** । नवयमन्वयव्यतिरेकसिद्धं प्राणदातृत्वं मुख्यप्राणेऽपलपामः,येनोक्तदोषःस्यात् , किं नाम मुख्यप्राणे अन्वयव्यतिरेकासिद्धं प्राणदातृत्वमभ्युपगम्य तत्परमेश्वराधीनमिति । परमेश्वरः प्राणदइत्युच्यतइत्यर्थः ।

**पूर्वपक्षस्तु**— वायुरेवायंप्राणः प्राणशब्दस्य तत्र रूढत्वात्, नच प्राणश्रुतेः विष्णौसावकाशत्वं रूढेरभावात् , यौगिकार्थस्य जीवनकारणत्वस्य अन्वयव्यतिरेकाभ्यां वायावेवदर्शनात् , तस्माद्वायुरेवायंप्राणः, प्रागुक्तानन्दमयश्चेति न ब्रह्मजिज्ञासा संभवतीति ।

**सिद्धान्तस्तु** — विष्णुरेवायंप्राणः निरवकाशश्रीलक्ष्मीपतित्वलिंगात् ' ईशानःप्राणदःप्राण ' (सहस्रनाम) इतिविद्वद्रूढे महायोगस्यच विष्णौसत्वेन श्रुतेःसावकाशत्वात्, प्राणगतजीवनान्वयव्यतिरेकस्यापि ' न प्राणेन नाऽपानेन-मर्त्याजीवतिकश्चन ' ( का. उ. ५-४) इति श्रुतेः भगवदधीनत्वात् । तस्मात्प्राणः प्रागुक्ताऽऽनन्दमयश्च विष्णुरेवेति युक्ता तज्जिसेतिसिद्धम् ( ९ अ.)

[ १० - अधिकरणम् ]

## ॐ ज्योतिश्चरणाऽभिधानात् ॐ (सू० २४)

अत्र त्रीणिदर्शनानि — ज्योतिश्चरणाभिधानादित्यारभ्य चतुःसूत्री एकमधिकरणं, तत्र-आद्यसूत्रे अग्निसूक्तगतज्योतिःशब्दसमन्वयः, छंदःसूत्रे छान्दोग्यस्थज्योतिः शब्दसमन्वयः, ' भूतादिपाद ' सूत्रे गायत्रीशब्दसमन्वयः, 'उपदेशभेदा ' दितिसूत्रे गायत्रीज्योतिः शब्दयोरेकार्थत्वसमर्थनमित्येकं दर्शनम् । इदंच सत्तर्कदीपावलीकृतोदर्शनम् ।

तत्र ' ज्योतिश्चरणाभिधाना ' दितिसूत्रमुदाहृत्य ऐतरेयेश्रूयते ' विमेकर्णापतयत ' (ऋ० ६-९-६) इत्यादीति अग्निसूक्तस्थज्योतिर्वाक्यस्योदाहरणात् ।

तथा 'अथयदतःपरो दिवोज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु-लोकेष्विदंवावतत्यदिदमस्मिन्पुरुषेज्योति' (छां ३-१३-७) रिति श्रुत्यंतरादपि विष्णुरेवमुख्यज्योतिरिति प्रथमसूत्राभिप्रायंवर्णयित्वा, इदमेवाऽऽक्षिप्य समर्थयत्सूत्र-मुपन्यस्यव्याचष्टे — छंदोभिधानादित्यादिनेति। द्वितीयसूत्रस्य छांदोग्यज्योतिषा विष्णुत्वमाक्षिप्य समाधानपरत्वाभिधानात् गायत्रीशब्दो विष्णुपरइत्येतत्प्रतिपाद-यत्सूत्रमुपन्यस्यव्याचष्टे–' भूतादी ' त्यादिनेति। तृतीयसूत्रस्य गायत्रीशब्दसमन्व-यपरत्वाभिधानात्। चतुर्थसूत्रस्य गायत्रीज्योतिःशब्दयोरेकार्थपरत्वमित्यर्थस्य ' नचवाच्यं अथयदतःपर' इत्युक्तत्वात्, स्वर्गादिलोकात्परतो वैकुंठेदीप्यमानात्, ज्योतिःशब्दाद्विष्णो रन्यदेव 'पादोस्यसर्वाभूतानि त्रिपादस्याऽमृतंदिवि' त्यत्र स्वर्गस्थत्वेनोच्यतइति दिवीतिशब्दस्यद्योतमानत्वयोगेन वैकुण्ठपरत्वा' दित्यादिना समर्थितत्वात्। चतुस्सूत्र्या एकाधिकरणत्व आद्यसूत्रमारभ्य चतुर्थसूत्रपर्यन्तं ज्योतिः-शब्द विचारानुवृत्तिर्लिंगम्। आद्यसूत्रस्याग्निसूक्तस्थज्योतिःशब्दसमन्वयपरत्वांगी-कारे अग्निसूक्तस्थचरणाभिधानं सौत्रं ज्ञापकम्, भाष्यकारोयन्तु अग्निसूक्तस्थविषय-वाक्योदाहरणं ज्ञापकम्, द्वितीयसूत्रस्य छांदोग्यज्योतिःशब्दसमन्वयपरत्वांगीकारेतु 'छंदोभिधाना'दिति छांदोग्यवाक्यस्थपूर्वपक्षहेत्वभिधानंलिंगम्, तृतीयसूत्रस्यतु गायत्रीशब्दसमन्वयपरत्वे गायत्रीनिष्ठभूतादिपादत्वरूप विष्णुलिंगाभिधानंलिंगम्।

इदंचापरंदर्शनम् — तथाहि चतुःसूत्री एकमधिकरणं तत्र आद्यसूत्रे अग्निसूक्तस्थज्योतिःशब्दस्य समन्वयः। द्वितीयसूत्रे छांदोग्यस्थज्योतिःशब्द गायत्री-शब्दयोः समन्वयः। तृतीयसूत्रे गायत्रीशब्दस्य विष्णुपरत्वे हेत्वन्तराऽभिधानम्। चतुर्थ सूत्रेतु गायत्री ज्योतिःशब्दयोरेकार्थत्वसमर्थनम्। अत्राधिकरणे ज्योतिर्गाय-त्री शब्दयोः समन्वयाभिधानेपि गायत्रीविचारो महाविचारः। द्वितीयसूत्रोक्त-गानत्राणकर्तृत्व लिङ्गाभ्यां तृतीयसूत्रोक्तभूतादिपादत्वरूप लिङ्गेनचसंबधत्वेन बहु युक्तिसंबधात् ज्योतिर्विचारस्तु अवांतरः। कर्णादिविदूरत्वरूपैक लिङ्गसंबधत्वादिति। इदंच तत्वप्रदीपकारोक्त दर्शनम्। तत्र एकंचेदमधिकरणमित्युक्तत्वात्। आद्य-सूत्रस्य ज्योतिःशब्दसमन्वयपरत्वेनव्याख्यानात्। 'अग्निगायत्र्यादि शब्दार्थरूपो-साविति भाष्यस्याऽयमर्थः अग्न्यादितेजःशब्दानां गायत्र्यादिछन्दःशब्दानांचाऽर्थः

स्वरूपत्वेन निरूपणीयोविष्णुरेवेति बुध्यवधारणार्थंहि तच्छब्दैर्निगद्यते इति द्वितीय सूत्रे ज्योतिःशब्दवत् गायत्रीशब्दस्यापि समन्वेतव्यत्वसूचनात् । गायत्रीनिष्ठ-विष्णुलिङ्गप्रतिपादकस्य 'इयंवाबसा येयंपृथिवी' (छा० ३-१२-२) त्यादिवाक्यस्य ' गायति त्रायतिचे' त्यादिभाष्यस्थादिशब्दार्थत्वेनोपादानाच्च । यद्यपि द्वितीयसूत्रस्य 'ज्योतिःशब्दोनविष्णु' रित्येव पूर्वपक्षोदर्शितः, तथापि द्वितीयसूत्रे ज्योतिःशब्द-स्यैव समन्वयइत्याशय इतिनमन्तव्यम् । 'अग्निगायत्र्यादि शब्दाऽर्थरूपोसा' विति भाष्यव्याख्यानाऽवसरेपि उभयोःशब्दयोः समन्वेतव्यत्वसूचनात् , गायत्रीनिष्ठ-विष्णुलिंगप्रतिपादकेयंवावसेत्यादि वाक्योदाहरणाच्च । गायत्रीशब्दविषयक पूर्वप-क्षस्तु शिष्यैरेवोह्यतामितिभावेन स न दर्शितः । तृतीयसूत्रे गायत्रीशब्दस्य विष्णु-परत्वे हेत्वन्तराभिधानमितितु स्पष्टमेव । चतुर्थसूत्रस्यापि उक्तार्थत्वंस्पष्टम् । अस्मिन्नंतर्भेदाधिकरणे गायत्रीविचारस्य बहुयुक्तिसंबंधत्वेन महाविचारत्वात् ज्योतिर्विचारोऽवान्तरोऽवगन्तव्यइत्युक्तत्वात् । गायत्रीविचारस्य महाविचारत्वं, ज्योतिर्विचारस्य अवान्तरविचारत्वं तदभिप्रेतमिति द्रष्टव्यम् । चतुःसूत्र्या एका-धिकरणत्वे ज्ञापकंतु प्रागेवोक्तम् । द्वितीयसूत्रस्य शब्दद्वयसमन्वयपरत्वेतु 'छन्दो-भिधानान्नेतिचे'दिति पूर्वोक्त माक्षिप्य सूत्रकारीयं समाधानम् । 'तथाहि दर्शन' मितिसूत्रखण्डस्य 'गायतित्रायतिचे' त्यादिभाष्यकारीयं गायत्रीनिष्ठलिङ्गपरतया व्याख्यानंच ज्ञापकम् ।

इदमन्यच्चदर्शनम्— 'ज्योतिश्चरणाभिदाना' दित्येकमधिकरणम् ! त्रिसूत्री-अधिकरणान्तरमिति । अत्र आद्याऽधिकरणे ज्योतिःशब्द समन्वयः, द्वितीये गायत्रीशब्दसमन्वयः, इदंच टीकाकाराभिप्रेतम् । अत्र 'नित्यत्वादेवशब्दानाम्' इत्यनुव्याख्याने छंदःसूत्रस्याऽप्यधिकाशंकाप्रदर्शन मधिकरणभेदे लिङ्गम् द्वितीयाधि-करणे गायत्रीशब्दसमन्वय इत्यत्र 'तथाहिदर्शन' मितिसूत्रखण्डस्य, 'गायति-त्रायतिचेत्यादि' इति गायत्रीनिष्ठ विष्णुलिङ्ग प्रदर्शनपरतयाव्याख्यानं लिङ्गम् एवंच मतत्रयमपि विवक्षाभेदेन भाष्यकाराभिप्रेतम् । एवंच तत्र कैकंगृहीत्वा टीकाकाराणां प्रवृत्तिरिति न विरोधइति ।

**चंद्रिकायांतु** — "ज्योतिश्चरणाभिधानात्" अत्र त्रीणिदर्शनानि—

ज्योतिरित्यादिचतुःसूत्री एकमधिकरणम् , विषयवाक्यंतु अग्निसूक्तस्थं 'ज्योतिर्हृदय आहितंय' दिति वाक्यमेवेत्येकंमतम् । इदं 'ज्योति' रित्यस्यसूत्रस्य अग्निसूक्तस्थ-वाक्यमेवोदाहृत्य 'इदंचैकमधिकरण' मितिवदतस्तत्व प्रदीपकृतोऽभिप्रेतम् ।

मतांतरंतु चतुःसूत्र्या एकाधिकरणत्वेपि "विषयवाक्यं ज्योतिरित्यस्यापि 'अथयदतःपरोदिवोज्योति' रितिछान्दोग्यवाक्यमेवेति, इदंच 'छदोभिधाना' दितिं सूत्रव्याख्यानरूपम् 'नित्यत्वादेवशब्दाना' मित्यनुव्याख्यानम् 'ज्योतिश्चरणाभि-धाना' दित्यधिकरणं तात्पर्यतोविवृणोति" इत्यवतार्य ज्योतिःसूत्रस्य छान्दोग्य-वाक्यमेव उदाहरतः संन्यायरत्नावलीकारस्याभिप्रेतम् ।

मतांतरंतु ज्योतिःसूत्रमेकमधिकरणं 'छन्द' इत्यादि त्रिसूत्री अधिकरणा-न्तरमिति । इदंच टीकाकारस्याभिप्रेत मित्युक्तम् । अयंच केनाचित् विदुषा विज्ञातार्थस्य अनुवाद एव नतु वस्तुतोदर्शनत्रयस्वरूपनिरूपणम् अवश्यं चैतदेवं विज्ञेयम् ।तत्वप्रदीपकृता छन्दःसूत्रे छांदोग्यस्थज्योतिःशब्दगायत्रीशब्दयोःसमन्व-यस्य तृतीयसूत्रेगायत्री शब्दसमन्वयदृढीकरणस्या ऽभिप्रेतत्वेन छान्दोग्यस्थ ज्यो-तिर्गायत्री वाक्ययोः विषयवाक्यत्वप्राप्त्या इदमेवविषयवाक्यमित्यवधारणाऽयो-गात् कथमन्यथा 'भूतादिपाद' सूत्रव्याख्यानावसरे 'तावानस्ये' त्यनयाऋचा गायत्र्या भूतादयः चत्वारःपादा व्यपदिश्यन्तें । नच तस्य छन्दस्त्वे तदुपपद्यते उपपद्यतेच विष्णुत्व इत्यभिदध्यात् । तथासंन्यायरत्नावलीकृता सत्तर्कदीपावल्यां ज्योतिश्चरणाभिधानादिति सूत्रस्य ऐतरेयेश्रूयते 'त्रिमेकर्णा पतयत' इत्यादीति अग्निसूक्तस्थ ज्योतिर्वाक्यस्य विषयवाक्यत्वेनोदाहरणात् ज्योतिःसूत्रस्य छान्दोग्य-वाक्यमेव विषयवाक्यमित्यभिधानायोगात् । सन्यायरत्नावल्यांतु 'छन्दोभिधाना' दिति सूत्रव्याख्यानरूपं 'नित्यत्वादेवशब्दाना' मित्यनुव्याख्यानमवतार्य छान्दोग्य वाक्यस्य उदाहृतत्वात् छंदःसूत्रस्यैव तद्विषयवाक्यत्वमूह्यम् । ततश्च ज्योतिःसूत्रस्य छान्दोग्यवाक्यमेव विषयवाक्यमिति कल्पनं निर्मूलमिति । अतएव ज्योतिःसूत्रस्य छान्दोग्यमेव विषयवाक्यमित्युपपादनाय प्रवृत्तःचन्द्रिकाग्रन्थोप्यनुवाद एव नतुवास्त-वार्थनिरूपणाय प्रवृत्त इतिबोध्यम् । एवमेवंजातीयके सर्वत्रद्रष्टव्यम् । ततश्च न दोषित्वमिति ।

ननु – परंप्रति सिद्धार्थानुवादिनोपि दोषित्वमेव अयुक्तार्थवर्णनकृत्त्वात्, 'एवमसौब्राह्मणंहंति, एवमसौसुरांपिबती' ति ब्राह्मणंहन्तुः सुरांपिबतःप्रत्यवायदर्शनादितिचेत्, न–वैषम्यात्, एवमसौब्राह्मणं हंतीति ब्राह्मणंहंतुः ब्राह्मणहन्तृत्वादेव पातित्यं नतु अनुकरणात्, एवमसौसुरांपिबतीति सुरांपिबतः सुरापानादेव पातित्यं नत्वनुकरणात्, अन्यथा एवमसौब्राह्मणंहंतीतिकदलीस्तंभंछिन्दन्, प्रत्यवेयात्, एवमसौसुरांपिबतीतिपयःपिबन्नपि प्रत्यवेयात् इति सुरापानाद्यनुकर्तुः दोषित्वमाशंक्य समाहितंमहाभाष्ये 'यस्तुखल्वेवमसौ ब्राह्मणंहन्ति, एवमसौ सुरांपिबतीति तस्याऽनुकूर्वन् ब्राह्मणंहन्यात् सुरांपिबेदिति तस्य अनुकुर्वन् ब्राह्मणंहन्यात्, सुरांपिबेदिति सोपिमन्ये पतितः स्यात्, विषमोयमुपन्यासः, यश्चैवंहन्ति, यश्चाऽनुहन्ति, उभौतौ हतः, यश्चपिबतियश्चाऽनुपिबति उभौतौपिबतः, यस्तुखल्वेवमसौब्राह्मणंहन्ति, एव मसौसुरांपिबति इति तस्य अनुकुर्वन् स्नाताऽनुलिप्तो माल्यगुणकण्ठःकदलीस्तभांछिंद्यात् पयोवापिबेत् न स मन्ये पतितःस्या' दिति।

**श्रुत्यधिकरणसंगतीइति॥** दर्शयन्निविशेषः। ननु 'योवेदे' ति वाक्येन आनन्दमयस्य गुहानिहतत्वमुक्तमित्ययुक्तम्, अस्यवाक्यस्य 'ब्रह्मविदाप्नोति पर' (तै.उ.२-१).मितिप्रकरणस्थत्वेनानंदमयप्रकरणगतत्वाभावादित्यत आह– **मांत्रवर्णिकस्यैवेति॥ ज्योतिषः प्रतीयत इति॥** अनेनाऽऽनंदमयाधिकरणप्रतिपाद्यैतदधिकरणप्रतिपाद्ययोर्गुहानिहतत्वेन प्रतीयमानत्वं संगतिरित्युक्तमिति बोध्यम्। **एतच्चेति॥** यदीदंज्योतिःविष्णोरन्यत्स्यात् तर्हि प्रागुक्तमानन्दमयत्वं तस्यैवेतिबुद्धिः प्रसज्यत इति एतद्ज्योतिर्निर्णेयं भवतीत्यर्थः। ननु– ज्योतिषोऽन्यत्वे प्रागुक्तमानंदमयत्वमन्यस्यैवप्रसज्यत इत्ययुक्तं हेत्वभावात्, नहि यथा ज्योतिषोऽग्नित्वे प्रकरणंरूढिश्च साधकमस्ति, तथा— आनन्दमयस्याग्नित्वेसाधकमस्ति येन ज्योतिषोऽग्नित्वे आनंदमयस्यान्यत्वबुद्धिः स्यात्। प्रत्युत आनंदमयस्यैव विष्णुत्व एव साधकमुपलभ्यते, ततश्च— आनन्दमयस्य विष्णोरन्यत्वबुद्धिः प्रसज्यतइत्युक्तमयुक्तमिति चेत्, उक्तम्— किमुक्तम्, यएवानंदमयाधिकरणे अधिकारी सएवनात्राधिकारी, अधिकरणानामनेकवेदवाक्यविचाररूपत्वादवान्तरविद्यात्वेन पृथगधिकारिकत्वात् इति, तथाच योधिकारी आनन्दमयाधिकरणप्रमेयंनिश्चित्य-

ज्योतिर्वाक्यविचारेप्रवर्तने, माभूत् तस्य ज्योतिषोविष्ण्वन्यत्वबुद्धौ आनन्दमयस्यापि अन्यत्वबुद्धिः,यस्तु प्रथमतएव ज्योतिर्वाक्यविचारेप्रवर्तते तस्य ज्योतिषोविष्ण्वन्यत्वबुद्धौ आनन्दमयवाक्यदर्शने आनंदमयोप्यन्यएवेतिबुद्धिः भवेदेव उभयत्रापि गुहानिनिहितत्वदर्शनात्, बाधकाभावेन तादात्म्यबुद्धेरनिवारणात् इति। तदिदमुक्तं प्रसज्यत इति। एवमुत्तरत्रापिद्रष्टव्यम्। ज्योतिःश्रुतेरिति॥ यद्यपि पूर्वपक्षिणा गुहानिहितत्वस्य विष्णुधर्मत्वानङ्गीकारात् नेदंविष्णुलिङ्गत्वमेवेतिवक्तुंशक्यम्, तथाप्यंगीकारपक्षे नेदंसमाधानमुक्तमिति बोध्यम्। अनभिमतव्यावर्तक एवशब्दः। ततश्च — अग्नावेवरूढत्वादित्यर्थः। एतेन— ज्योतिः शब्दस्य अग्निसूर्यादितेजोमात्ररूढत्वात् अग्नावेवरूढत्वादित्ययुक्तमिति परास्तम्। ननु ज्योतिः शब्दस्य सामान्यधर्मावच्छिन्नवाचकस्य अग्नौशक्तिसद्भावेपि नाग्नित्वेनरूपेण तदुपस्थापकत्वं, किंतु — ज्योतिष्ट्वेनरूपेणाग्न्युपस्थापकत्वं वाच्यम् — अग्नित्वेनतदुपस्थापकत्वे लक्षणाप्रसंगेन अग्नौरूढत्वादिति उक्तयोगापानादितिचेत्, न—ज्योतिःश्रुत्याऽग्नित्वेनोपस्थित्यनंगीकारात्, किन्तु प्रकरणबलेन अग्नित्वेनोपस्थितिरंगीक्रियते। अयमत्रक्रमः —ज्योतिष्ट्वेनैव ज्योतिः शब्देनाऽभ्युपस्थितौ, अयंज्योतिःशब्दार्थः अग्निर्भवेत्, अग्निसूक्तान्तर्गतज्योतिःशब्दार्थत्वादित्यनुमानेन अग्नित्वेन उपस्थितेः। अत एव—अस्यसूक्तस्याऽग्निसूक्तत्वादित्युक्तम्। अन्यथा प्रसिद्धेरग्निर्भवेदित्येवाऽवक्ष्यत्। ननु — प्रकरणेनैव पूर्वपक्षसम्भवात् श्रुत्युपन्यासोव्यर्थ इति चेत्, न — प्रकरणस्यदुर्बलत्वात्। गुहानिहितत्वलिङ्गबाधेन तावन्मात्रस्य पूर्वपक्षहेतुत्वायोगात्। श्रुतिलक्षणसहकारिसंपत्तौ च तद्योग इति युक्तः श्रुत्युपन्यासइति। जाठर इति॥ लिंगस्यापीत्यंगीकारवादः। तथाचेत्युत्तरग्रन्थोंऽगीकारवादेन प्रवृत्त इति बोध्यम्। एतेन — तस्यगुहानिहितत्वमानंदमयत्वंचेतिवदतः लिङ्गस्यमावकाशत्वेनदौर्बल्यकथनमयुक्तमिति परास्तम्।

पूर्वपक्षस्तु — अग्निरेवेदंज्योतिः तस्यसूक्तस्य अग्निसूक्तत्वात्, नच लिङ्गात्प्रकरणस्य दुर्बलत्वेन गुहानिहितत्वलिङ्गात्प्रकरणबाधः, ज्योतिः श्रुतेरग्नौनिरूढत्वात्, विष्णोस्तदभावात्। नच लिङ्गस्य निरवकाशत्वेन श्रुतिप्रकरणबाधकत्वमिति वाच्यम् — लिङ्गस्यापि जाठरजातवेदसि सावकाशत्वात्। अस्तु वा लिङ्ग-

स्यनिरवकाशत्वं, तथापि लिङ्गस्यनिरवकाशत्वरूपमेकविधमेव प्राबल्यम्, श्रुतिप्रकरणयोस्त्वनेकत्वप्रयुक्तम् । श्रुतेस्स्वभावत्वप्रयुक्तमपीति श्रुतिप्रकरणाभ्यामेव लिंगबाधोयुक्तः । एवंच — अस्यज्योतिषः अग्नित्वात् प्रागुक्तगुहानिहितत्वमानन्दमयत्वंच तस्यैवेति ॥

**सिद्धांतस्तु**— विष्णुरेवज्योतिः कर्णादिविदूरत्वस्यविष्णुलिङ्गत्वात्, बहुत्वस्वभावबलवत्त्वरूपोभयविधप्राबल्यादपि निरवाकशत्वप्राबल्यस्य बलवत्त्वेन लिङ्गेन श्रुतिप्रकरणबाधोपपत्तेः महायोगविद्वद्रूढिसद्भावेन श्रुतेर्विष्णवावेव मुख्यत्वाच्च । तस्माद्विष्णुरेवेदंज्योतिः तस्यैव गुहानिहितत्वमानन्दमयत्वंचेतिसिद्धम् (अ. १०)

---

( ११ - अधिकरणम् )

## ॐ छन्दोभिधानान्नेतिचेन्न तथाचेतोर्पणनिगदात् तथाहि दर्शनम् ॐ ( सू०. २६ )

अत्रद्वेदर्शने — ' अथयदतः परोदिवोज्योतिर्दीप्यत ' ( छा०. ३-१३ ७) इति छान्दोग्यस्थंजोतिर्वाक्यं विषयः । अत्रोक्ते ज्योतिषि संदेहः, किं ब्रह्म, उताऽन्यदिति । उपक्रमे गायत्रीशब्दश्रवणात् अन्यदितिप्राप्ते विष्णुरितिसिद्धान्तः । पूर्वाधिकरणेऽग्निसूक्तोक्तज्योतिर्निर्णयः इहतु — छान्दोग्योक्तज्योतिषः विस्पष्टविष्णुलिङ्गदर्शनेन गायत्रीश्रुत्याच अभ्यधिकाशङ्काप्राप्तौ निर्णय इति एकंदर्शनम् । छंदोगाः पठन्ति ' गायत्री वा इदंसर्वंभूत ' (छा०.उ०.३-१२-१) मिति तत्र — संशयः - किं गायत्री ब्रह्म, उतवर्णमालारूपोमन्त्र इति । गायत्रीशब्दस्य छंदोविशेषेप्रसिद्धेः छंद इति प्राप्ते, विष्णुरितिसिद्धान्त इत्यपरंदर्शनम् । तत्राद्यं सुधाभिमतम् । तत्र सूत्रयोजनातु — ' उपक्रमे गायत्रीरूपच्छदोऽभिधानात्, ज्योतिर्नविष्णुः, किन्तुछन्द एवेति चेत्, न— गायत्रीशब्दार्थत्वेन चेतोर्पणार्थोहि तथानिगद्यते, तथाहिदर्शनं, ' गायतित्रायतिचे ' त्यादौ ' ति । द्वितीयन्तु — सुधाटीकयोरभिप्रेतम् । द्वितीयेभाष्ये — ज्योतिर्वाक्योपादानं पूर्वाधिकरणार्थाऽऽक्षेपप्रदर्शनार्थम् । सूत्रयोजनातु — ' गायत्रीशब्दस्य छंदसिरूढत्वेन तेनछंदसो-

ऽभिधानात् प्रागुक्तंज्योतिः आनन्दमयश्च छंद एव न विष्णुरिति चेत्, न — 'गायत्रीशब्दार्थरूपोसा' विति विष्णोः चेतोर्पणं कार्यम्, इत्याशयेन गायत्रीशब्देन विष्णोर्निगदात् विष्णुरेवप्रागुक्तंज्योतिरानन्दमयश्च । भवेदेतत् — यदीयं गायत्री विष्णुः स्यात् तदेवकुतइत्यत उक्तं तथाहि दर्शनमिति;दर्शनं श्रुतिः एतद्गायत्र्याःगानत्राणकर्तृत्वलिङ्गश्रवणात्,तस्यच लिङ्गस्यछंदस्यसंभवात् विष्णौसंभवात्, विष्णुरेवगायत्रीति । नन्विदंसूत्रंनाधिकरणान्तरं संगत्यादिष्वन्यतमस्यभाष्यकृताऽनिरूपणादित्यत आह — **श्रुत्यादीति** ॥ यद्यपि – श्रुत्यादि संगत्यादिकं कण्ठतो भाष्यकृतानोक्तं, तथापि श्रुत्यादिसंगत्यादेः सूचनात् अधिकरणान्तरमिति-भावः । एतेन — अस्य गायत्रीशब्दसमन्वयपरत्वमुक्तम्, तथासति 'छंद इति चेन्न — तथाचेतोर्पणनिगदा' दित्येवसूत्रंस्यात् नतु 'छंदोभिधानान्नेति चेन्न' ति गायत्र्याविष्णुत्वस्याऽप्रतिज्ञातत्वेनाऽप्रसक्तनिषेधप्रसंगादिति परास्तम् । पूर्वपक्ष-फलस्य पूर्वाधिकरणाऽऽक्षेपस्यदर्शनाय 'छंदोभिधानान्नेतिचे' दिति सूत्रकृतोक्तमित्यङ्गीकारात् । अत्रभाष्ये 'ज्योतिषोगायत्र्याः समारंभः कृत' इत्यनेन पूर्वाधिकरणश्रुत्यर्थस्य एतदधिकरणार्थस्य च ज्योतिः शब्दविषयत्वं संगतिरिति सूचितम् । 'गायत्री वा इदं सर्वं' मित्यनेन ज्योतिर्वाक्यस्योपक्रमस्थगायत्रीवाक्यं विषयवाक्यमिति सूचितम् । 'गायत्र्याः समारंभःकृत' इत्यनेन गायत्री विषयः, तद्बुद्धिविषयछंदोविशेष एव गायत्रीति पूर्वपक्षश्च, सूचितः । अस्मिन्विषयवाक्ये छंदसि निरूढगायत्रीशब्दं विष्णुपरत्वेनोक्तज्योतिःशब्दं च दर्शयता गायत्रीछंदोविशेषः, उत विष्णुरितिसंशयः सूचितः, तस्मान्नविष्णुरिति पूर्वाधिकरणाक्षेपः पूर्वपक्षफलमिति सूचितमिति बोध्यम् । भाष्यकारसूचितं श्रुत्यादिसंगत्यादिकं स्वयमाह — **हृदयनिहितमित्यादिना** ॥ अत्र यद्यपि — 'हृदयनिहितंज्योतिर्विष्णुरित्यभिहित' मित्यनन्तरम् । 'एतच्चगायत्रीत्वेनपठ्यते' इत्येववक्तव्यम्, तथापि 'तज्ज्योति र्न गायत्रीत्वेनपठ्यते, अपितु तस्माद्भिन्नंज्योतिः गायत्रीत्वेन पठ्यत' इति शंकापरिहाराय 'तज्ज्योतिः छंदोगश्रुतौ श्रूयत' इत्यारभ्य 'पुरुषेज्योति' रित्यन्तं वाक्यं प्रवृत्तं । पूर्वसूत्रे अग्निसूक्तवाक्ययोदाहरणमात्रत्वात्, चरणाभिधानादितिहेतोरप्युदाहरणमात्रत्वात्, यावज्ज्योतिर्वाक्यसमन्वयः तदैव

निगदित इति अग्निसूक्तगतमेवञ्चोतिः छंदोगश्रुतौश्रूयते तदेव गायत्रीत्वेन पठ्यत इति बोध्यम् । गायत्रीनिर्णयस्याऽऽवश्यकत्वमाह – **इदंचेति॥ अवश्यापेक्षित इति ॥** वशं गतोवश्यः 'वशं गत' (पा०. सू०. ४ - ४ - ८६ ) इति सूत्रेण यत्प्रत्ययः । न वश्यः अवश्यः, अवश्य इति हेतोरपेक्षित इत्यर्थः । यदि पूर्वाधिकरणन्यायेन गायत्रीनिर्णयोवशंगतःस्यात् तर्हि गायत्रीनिर्णयः सूत्रकृता न वक्तव्यः स्यात्, नचैवम् इति अभ्यधिकाशंकासद्भावात्, अतः सूत्रकृता गायत्रीनिर्णयोऽवश्यंकर्तव्य इति भावः । एतेन कृत्यप्रत्ययांतेपरतः विहितस्य मलोपस्य निष्ठाप्रत्ययान्तेपरतो ऽयोगात् अवश्यापेक्षित इति प्रयोगो ऽनुपपन्न इति कस्यचिद्भ्रमो निरस्तः । **गानत्राणकर्तृत्वंलिङ्गश्रवणादिति** ॥ अनेन 'गैशब्द' इत्यस्मात् 'श्याद्व्यधे' (पा०. सू०. ३-१-१४१) ति सूत्रेण आकारान्तत्वात् णः 'आतोयुक्चिण्कृतो' ( पा०.सू०. ७ - ३ - ३३) रित्यनेन युकि अजाद्यतष्टा ( पा०. ४ - १ -४) बितिटापि गायेतिरूपं, 'त्रैङ्पालन' इत्यस्माद्धातोः औणादिककिप्रत्यये 'कृदिकारादक्तिन' ( गणसूत्रम् ) इति ङीषि त्रीतिरूपं,एवं च गायाचसा त्रीचेतिविग्रहे पुंवद्भावेच गायत्रीतिरूपं सूचितम्. ननु– 'गैशब्द' इत्यस्माद्धातोः 'गस्थकन् ,ण्युट्चे'(पा०.सू०. ३-१-१४६,१४७) ति विशेषविहिताभ्यां थकन् ण्युङ्भ्यां भवितव्यं, नतु णप्रत्ययेन, मैवं 'वासरूपोऽस्त्रियां' (पा०. सू०. ३ - १ -९२) मिति अपवादस्यविकल्पेन उत्सर्गाबाधकत्वाभिधानात् । स्मृतौ सर्वदेवाभिधोह्यसावित्यत्रत्येन वासुदेवशब्देनेव 'सर्वदेव' इत्यनेनशब्देन तथा सर्वलोक इत्यनेनशब्देन परमात्मा प्रतिपाद्यत इत्युच्यत इत्यन्यथाप्रतीति निरासाय स्मृतिं व्याचष्टे । **अत्रदेवलोकेति** ॥ ( २७ - **सू०.**) **विष्णुत्वं समर्थयदिति** ॥ यद्यपि अर्थधातोरनुदात्तेत्वात् आत्मनेपदेन भाव्यम्, तथापि– चक्षिङः अनुदात्तेत्त्वादेवाऽऽत्मनेपदे सिद्धे आत्मनेपदत्वाय ङित्करणेनाऽनुदात्तेत्त्वप्रयुक्तस्यात्मनेपदस्य अनित्यताया ज्ञापितत्वात् समर्थयदिति शत्रन्तप्रयोग उपपन्नः । अत्रगुणसूत्रम्, 'भूतादिपादव्यपदेशोपपत्तेश्चैव' मिति । अत्र-भूतादिपादेतिहेतुद्वयकथनं भूतपादत्वममृतपादत्वंचेति । तेन भूतपादत्वमात्रस्य व्यभिचाराभावादादिपदं व्यर्थमिति परास्तम् । व्यपदेशादित्यसिद्धिवारणाय । अत्र-

योजकत्वशंकानिरासाय उपपत्तिपदम् । पूर्वसूत्रे साध्यनिर्देशाभावात् तन्निर्देशाय एवमिति । ततश्चैवं सूत्रयोजना — यथा चरणाभिधानात् ज्योतिर्विष्णुः, एवं भूतपादत्वादमृतपादत्वाच्च गायत्री विष्णुरिति । अत्र गुणसूत्रम् 'उपदेशभेदान्नेति-चेन्नोभयस्मिन्नप्यविरोधा' दिति । अयं योगः शक्योऽवक्तुम्, आक्षेपस्यैवायोगेन तत्परिहारस्य व्यर्थत्वात् । तथाहि — नोपदेशभेदो वस्तुभेदसाधकः 'एतमस्या-मेतंदिव्येतंवायावेत' (छा०. ३ - १३ - ) मित्यादौ उपदेशभेदेऽपि वस्तुभे-दादर्शनात् । कालभेदेन एकस्यैव देवदत्तस्य पाटलिपुत्रस्थत्वतद्बहिस्थत्ववत्, एक-स्यैव वस्तुनः द्युस्थत्व, दिवःपरत्वसंभवाच्च । एककालावच्छेदेनापि आकाशस्य द्युस्थत्वदिवःपरत्ववत् ज्योतिषोऽपि तत्संभवाच्च । किंच अत्र स्थानभेदोऽपि न श्रूयते, तथाहि — 'त्रिपादस्यामृतंदिवी' (छा०. ३ - १३ - ) तिद्युस्थत्वेनो-क्तज्योतिषः दिवः परत्वमुच्यते, नतु दिवःपराधिकरणवृत्तित्वम्, येन स्थानभेदः स्यात् । द्युस्थस्य दिवःपरत्वं नाम न द्युलोकात्परलोकस्थत्वम्, किंनाम द्युस्थजन-विलक्षणत्वं द्युशब्दस्य द्युस्थजनवाचित्वात् । एवंच—द्युस्थं ज्योतिः तत्स्थजनेभ्यः परो विलक्षणमित्यर्थः । परशब्दस्य पुल्लिंङ्गत्वं छांदसम् । तदुक्तं महाभाष्ये—'ग्राम-शब्दोऽयं बह्वर्थः, अस्तिशालासमुदायेवर्तते, तद्यथा ग्रामो दग्ध इति, अस्ति वा-टपरिक्षेपेवर्तते, तद्यथाग्रामंप्रविष्ट इति, अस्तिजनेषुवर्तते, तद्यथा ग्रामोगतः ग्राम आगत इति, अस्तिसारण्यकेसस्थंडिलकेसर्सीमकेवर्तते, तद्यथा — ग्रामो-लब्ध इति' इतिचेत्, न — स्थानभेदस्य भेदमंतराऽयोगेन भेदसाधकत्वात् । स साध्यमानोभेदः न स्थानद्वयनिष्ठतयोच्यमाननिष्ठ एवेति नियमः, किन्तूत्सर्गः । प्रत्यभिज्ञादिना तन्निष्ठत्वबाधे कालनिष्ठः, तस्यापिबाधे ऽवच्छेदकनिष्ठः, तस्यापि-बाधे संबन्धनिष्ठ इत्यादि विज्ञेयम् । एवंच — गायत्रीज्योतिषोर्भिन्नस्थानगतत्वेना-ऽभेदेप्रमाणाभावेन बाधकाभावात् तयोरेवभेदः सिध्यति । 'एतमस्यामेत' मि-त्यादौ एतमितिप्रत्यभिज्ञानात् भिन्नस्थानगत्वं रूपभेदमेवज्ञापयति । तथा देवदत्तस्य-पाटालिपुत्रतद्बाह्यगतत्वप्रत्यभिज्ञानबाधितत्वेन देवदत्तभेदमपहाय कालभेदं गमयति एवमाकाशस्य द्युस्थत्वदिवःपरत्वे तद्व्यासिग्राहकंप्रमाणबाधेन आकाशभेदमपहायां ऽशभेदंगमयत इति नकश्चिद्दोषः । यद्वोक्तं 'किं चात्रस्थानभेदोनश्रूयत' इत्या-

श्रुत्युक्तसर्वात्तृत्वोपपत्तेरित्यर्थः । ननु — अस्तु द्विवचनश्रुतिबलात् द्वयोरेतच्छ्रुतिप्रतिपाद्यत्वम् तथापि एकोजीवः अपरस्तु ईश्वर इति कुतोऽभ्युपगन्तव्यम् , द्वावप्यचेतनौ किं न स्यातां पिबन्ताविात्यस्य सिंहो माणवक इत्यादिवत् उपचारेण नेतुं शक्यत्वादित्याशयेन पृच्छति — **तथापीति ॥ पातृत्वान्यथानुपपत्त्येति ॥** एकस्य जीवत्वमङ्गीकृत्य पिबन्तावित्यस्य तत्र स्वार्थसमर्पकत्वोपपत्तौ सर्वथा अर्थसमर्पणतात्पर्यवैधुर्यस्याऽन्याय्यत्वादिति भावः । ननु — उभावपि एतच्छ्रुत्युक्तौ जीवावेव 'पिबन्ता' वित्यत्र छत्रिन्यायस्याऽननुसर्तव्यत्वादित्याशङ्क्य निषेधति — **न च द्वावपीति ॥ एकस्मिन्नेव शरीर इति ॥** 'सुकृतस्यलोक' इत्युक्तेर्ब्रह्मशरीरे भोक्तृजीवद्वयाऽयोगादिर्थः । द्वात्रिंशल्लक्षणोपेते देहे जीवोत्तमहिरण्यगर्भाऽतिरिक्तस्य भोक्तृत्वमयुक्तमिति भावः । एतेन — रावणादिशरीरे द्वयोः, द्रौपतीशरीरे पंचानां, भोक्तृत्वदर्शनेन भोक्तृजीवद्वयायोग इति परास्तम् । वरशापादिनिमित्तान्तेरण तत्र तथासंभवेपि ब्रह्मशरीरे जीवद्वयायोग इत्यर्थस्य युक्तत्वात् । उपसंहरति— **अत इति ॥** जीवेश्वरयो द्वयोरपि प्रतिपादनाय प्रवृत्तः पिबन्ताविति शब्दः, उपचारः छत्रिन्यायेन प्रवृत्त इति हेतोः पातृत्वंजीवस्यैव नेश्वरस्य ततश्च एकदेशापगमात् लक्षणत्वेनाभिमत सर्वात्तृत्वं ईश्वरस्यैव लक्ष्यस्यैव नास्तीति लक्षणमयुक्तं असंभवीत्यर्थः । एतेन — पातृत्वंजीवस्यैवेति जीवस्यपातृत्वमभिधाय द्वयोरप्युपचारइत्यभिधानमयुक्तमिति परास्तम् । **तस्येदाहुरिति ॥** यः परमात्मा, अग्रे = अग्र्यः, तस्येत् , इच्छब्द एवार्थे, तस्यैव, स्वादु पिप्पलं, आहुः = ज्ञानिन इति शेषः । यस्तु जीवः उत् = उत्कृष्टं परमात्मानं न वेद तस्य जीवस्य, तन्न = स्वादुफलं न । अत एव — नशत् = नाशवान् इति वाक्यशेषार्थः । ननु — गुहानिहितत्वलिङ्गस्य न विष्णुत्वनिश्चायकत्वं जीवनिष्ठत्वादित्याशङ्का 'योवेदनिहितं गुहाया' मित्यादिना भाष्येण न परिहृतेत्याशङ्कापरिहाराय आदौ तद्भावमाह — **लिङ्गस्येति ॥** सत्यमस्ति गुहानिहितत्वं जीवेपि तथापि — सूत्रकृता ईश्वरनिष्ठस्य गुहानिहितत्वस्य लिङ्गत्वेनोपादानात् तेनविष्णुत्वनिश्चयो युज्यते । नच — सूत्रकृता विष्णुनिष्ठमेव गुहानिहितत्वं हेतुत्वेनोपात्तम् न जीवनिष्ठमिति कुतो निश्चय इति वाच्यम् — 'अजस्यनाभा' विति श्रौता प्रसिद्धत्वा

न्नाम्यर्पितप्रसिद्धपद्मस्यैव ग्रहणमिति निर्णयवत्सूत्रकृतापि प्रसिद्धमेव लिङ्गत्वेन विवक्षितमिति ग्राह्यत्वादिति भावः । ननु – गुहाप्रविष्टत्वलिङ्गस्य कण्ठत एवोक्तत्वेन पुनः 'हिशब्देन दर्शयती' ति हिशब्दस्य तत्प्रदर्शकत्वाभिधानमयुक्तम्, पौनरुक्त्यापातादित्यत आह — **इत्यदिनाप्रसिद्धमिति** ॥ हिशब्दः लिङ्गनिष्ठप्रसिद्धत्वरूपधर्मस्यैव प्रदर्शकः, नतु लिङ्गस्यैवेति न पौनरुक्त्यमिति भावः । ननु – विष्णो र्न लिङ्गेन पातृत्वनिर्णयो युज्यते संभावितस्यैव साधनार्हत्वादित्यत आह – ( १२ सू० ) **भोक्तृत्वसंभवाच्चेति** ॥ अचिन्त्यैश्वर्यबलेन असंभावनाया निरस्तत्वादिति भावः । **निरवकाशश्रुत्यापीति** ॥ ब्रह्मशब्दरूपनिरवकाशश्रुत्यापीत्यर्थः । भाष्ये — **यः सेतुरीजानानामिति** ॥ ईजानानां विष्णुयाजिनां, यः सेतुरिव सेतु राश्रय इत्यर्थः । 'मर्यादाविष्णुयाजिनां, संसारस्य चपारस्थः स विष्णुर्द्विस्वरूपक' इति वचनात् । **अपव्याख्यानमिति** ॥ यद्यपि – पूर्वपक्षनिराकरणेनैवा ऽपव्याख्या निराकृता, तथापि — जीवेश्वरावेव पातृत्वेनोच्येते इति सूत्रकृतैव निर्णीतत्वात् ईश्वरस्य पातृत्वाऽभिधानमयुक्तमितिशङ्कानिरासाया ऽपव्याख्यानिराकरणमर्थवदिति भावः । **समन्वयसिद्धिरितीति**॥ पिबतोः जीवेश्वरत्वप्रतिपादनस्य फलमिति शेषः ॥

**पूर्वपक्षस्तु**— 'ऋतं पिबन्ता' ( का० १ - ३ - १ ) विति वाक्योक्तौ जीवपरावेव नत्वेकः परमेश्वरः द्विवचनश्रुतेः एकस्मिन् द्वियचनाऽयोगात् । एवंच हरिवत् जीवस्यापि स्वातन्त्र्येण पातृत्वात्तद्वदेव सर्वाऽत्तृत्वमपि । स्वतन्त्रस्य तदनङ्गीकारे कारणाभावात् । ततश्चा ऽतिव्याप्तिरित्येकः । अथवा — जीवपरौ 'ऋतं पिबन्ता' विति वाक्योक्तौ द्विवचनश्रुतेः । एवमपि जीव एव पाता न विष्णुः । कर्मबन्धविधुरस्य कर्मफलाऽत्तृत्वायोगात् । न च – 'सर्वं वा अत्ती' (बृ० ३-२-५) ति सर्वाऽत्तृत्वोक्तिविरोधः । 'अनश्नन्न्य' (आ० ३-१-१) इति श्रुतिविरोधेन संकोचसंभवात् । कथं तर्हि पिबन्ताविति द्वयोः पातृत्वोक्तिरिति चेत्, न — छत्रिन्यायेन पातृत्वोपचाराऽङ्गीकारात् । तथापि— जीवेशपरत्वे को हेतुरिति चेत् न — एकस्यपातृत्वाऽन्यथानुपपत्त्या जीवत्वे सिद्धे द्वितीयस्य सजातीयस्यैव ग्राह्यत्वात् । न च द्वावपि जीवौ युक्तौ, एकस्मिन्शरीरे भोक्तृजीव-

द्वयायोगात् तस्माज्जीवेशावेव ग्राह्यौ। तथाच — जीवस्यैव पातृत्वेन न तस्य लक्षणत्वाभिमतं सर्वाऽत्तृत्वमित्यसम्भव इत्यपरः। अथवा — पुनरस्तुद्वावपिजीवौ न चैकस्मिन् शरीरे भोक्तृजीवद्वयायोगः, ब्रीह्यादिशरीरे उत्पत्स्यमानजीवस्य प्रमाणान्तरासिद्धत्वात्। ननु — न तस्य भोक्तृत्वमिति चेत्, न — तच्छरीरावच्छेदेन पातृत्वाऽभावेपि वस्तुतः पातृत्वसद्भावात्। एवं चेश्वरस्य कर्मफलाऽत्तृत्वाभावेनाऽऽसम्भव एवेति।

**सिद्धान्तस्तु** — अस्मिन्वाक्ये यौ पिबन्तौ प्रतीतौ तौ विष्णुरूपे एव गुहाप्रविष्टत्वालिङ्गात्। न चैतल्लिङ्गं जीवेप्यस्तीति न विष्णुत्वनिर्णायकमितिवाच्यम्—"यो वेद निहितं गुहाया"(तै० उ०-२-१) मिति गुहानिहितत्वस्येश्वरे प्रसिद्धत्वेन प्रसिद्धस्यैव ग्राह्यत्वात्। न च द्विवचनश्रुतिविरोधः—रूपद्वयाभिप्रायेण सावकाशत्वात्। न च — एकेनैव रूपेण शरीरे प्रवेशेन रूपद्वयाभावः — "वर्मासमन्ता"(ऋ० स०८-६-१६)दिति प्रमाणेनैकस्मिन्नपि शरीरे रूपद्वयस्यैव सिद्धत्वात्। न च—विष्णोः पातृत्वाङ्गीकारे 'अनश्नन्नन्य' इत्यादिश्रुतिविरोधः—'शुभं पिबन्यसा' विति प्रमाणेन विष्णोः पातृत्वस्य सिद्धत्वेन तस्या अशुभभोगाभावविषयत्वात्। न च-पूर्णस्य कर्मबन्धविधुरत्वेन कर्मफलभोगानुपपत्तिः-नियोगतः भोगासम्भवेपि स्वेच्छया तत्संभवात्। (१२ सू) न केवलं गुहाप्रविष्टत्वलिङ्गबलादेव पिबन्तौ विष्णुरूपे, किंतु 'यः सेतुरीजानाना' मितिश्रुतौ ब्रह्मशब्देन विशेषणादपि। एवं च विष्णोरेव पातृत्वात्सर्वात्तृत्वलक्षणस्य नासम्भवो नाप्यतिव्याप्तिरिति सिद्धम् (अ० ३.)

( ४ अधिकरणम् )

### ॐ अन्तर उपपत्तेः ॐ (सू०. १३)

किमुदाहरणम्। किं चक्षुरन्तस्थत्वम्, आहोस्वित् रमणकर्तृत्वमपि। किं चातः, यद्याऽऽद्यः तर्हि श्रुत्यनुसारित्वाय अन्तरुपपत्तेरित्येवं सूत्रं स्यात्। लघुचैवं सति सूत्रं भवति 'अंतः स्थित्वा रमणकृ दन्तरः समुदाहृत' इत्यनुव्याख्यानविरोधश्च। अत्र अन्तस्थत्वमिव रमणकर्तृत्वस्याप्युदाहरणत्वोक्तेः। अथ द्वितीयः—तर्हि अन्तर इत्यस्य द्रलोपे पूर्वस्य दीर्घोणः (पा.सू.६-३-१११) इति

दीर्घः प्राप्नोति रमणकर्तृत्वस्य श्रुतानुपलम्भश्च दोषो भवति । 'य एषोऽन्तराक्षिणी' (छ. १-४-१५) ति विषयवाक्ये अन्तस्थत्वरूपभावस्यैवा ऽभिधानेन रमणकर्तृत्वानभिधानादिति चेत् – अत्र द्वे दर्शने — अत्राधिकरणे अन्तस्थत्वरूपभावसमन्वयो ऽभिधीयत इत्येकम् , अन्तस्थित्वा रमणकर्तृत्वं समन्वीयत इत्यपरम् । आद्यं भाष्याभिमतम् 'चक्षुरन्तरथो विष्णुरेवे ' त्यभिधानात् । यद्यपि–'य एषोऽन्तराक्षिणि पुरुषो दृश्यत' इति श्रुतौ अन्तः शब्द एवास्ति नत्वन्तर शब्दः, तथापि अन्तःशब्दमात्रस्याऽसमन्वेतव्यत्वात् 'य एषोऽन्तराक्षिणि पुरुषो दृश्यत' इति समुदायलभ्यस्याऽन्तस्थत्वलिङ्गस्य वाचकः अन्तरशब्दः सूत्रे निर्दिष्टः। अन्तःशब्दोपपदादस्तेः क्विपि निर्वचनत्वाद्धातुसकारलोपे अन्तर इति रूपम् । द्वितीयंतु — अनुव्याख्यानाभिमतम् ।

'अन्तःस्थित्वा रमणकृदन्तरः समुदाहृतः'

इत्यभिधानात् । अत्र च यद्यपि-श्रुतौ रमणकर्तृत्वं स्पष्टं न प्रतिभाति, तथापि—आत्मशब्देन तदुक्तमिति न श्रुतावनुपलम्भदोष । तदुक्तम् —

' रमणं चाऽऽत्मशब्देनाऽऽदेयं मातेति चोच्यत '

इति । आङ् पूर्वाद्ददाते, र्मन्यतेश्च क्विप् । द्वयोः क्विपोः सर्वापहारिलोपः । तत्र ददातेराकारलोपः दकारस्य तकारो निर्वचनत्वात् । एवं च आत् आदेयंसुखं, सुखसाधनं च मन्यते अनुभवतीत्यात्मेति रमणकर्तृत्वमात्मशब्दार्थ इति द्रष्टव्यम् । सौत्रत्वान्निर्देशस्य 'अन्तर उपपत्ते' रित्यत्र द्रलोप इति दीर्घाभावः । **अर्थादिति॥** आदित्यस्याक्षिस्थत्वात् आदित्यस्थत्वोक्तौ अक्षिस्थत्वमप्युक्तं भवति । यथा 'मंजूषायां मणिमाले' त्युक्त्या गृहस्थत्वमुक्तं भवतीतिभावः । अनेन आनन्दमयाधिकरण (१-१-६) प्रतिपाद्यैतदधिकरणप्रतिपाद्ययोः अक्षिस्थत्वेन प्रतीयमानत्वं अस्याधिकरणस्य पूर्वाधिकाणतच्छ्रुतिभ्यां सङ्गतिरित्युक्तंभवति । **तच्च यद्यन्यस्य स्यादिति ॥** यदि—छान्दोग्योक्तं अक्षिस्थत्वमन्यस्य स्या त्तदा तैत्तिरीयश्रुत्युक्तमादित्यस्थत्वम् , आनन्दमयत्वं चाऽन्यस्यैव प्रसज्यत इति बुद्धिः स्यादित्यर्थः । ननु भाष्ये 'य एष आदित्ये पुरुष' (छा० ४–११)इति श्रुत्युक्ताऽऽदित्यस्थस्याग्नित्वेन पूर्वपक्षाभिधानमयुक्तम् । अक्षिस्थस्य विषयत्वेना,आदित्यस्थस्य विषयत्वाभावादित्यत

आह —**य एषोऽन्तरक्षिणीति** ॥ कुतस्तर्हि भाष्ये ' य एष आदित्ये पुरुषः' इति अग्नीना मादित्यस्थत्वाभिधानमित्यत आह — **यत इति** ॥

अक्षिस्थस्य अग्नित्वसिद्धौ आदित्यस्थत्वं हेतुरितिभावेन ' य एष ' इतिवाक्ये अग्नेरादित्यस्थत्वेन प्रतिपाद्यत्वकथनमितिभावः । नन्वेवंतर्हि भाष्ये अग्नेरादित्यस्थत्वादित्युक्त्या भवितव्यम् । लिङ्गस्य पञ्चम्यन्तशब्देनैव प्रतिपादनीयत्वादित्यतउक्तम् — **यतोऽतएवेति । इदमुक्तंभवति** — भाष्ये — अतः शब्दः श्रूयते, तेन यतइतिलभ्यते, अग्नीनामादित्यस्थत्वमित्यस्य हेतुत्वंलभ्यतइति हेतुत्वद्योतकपञ्चमीप्रयोगाभावो न दोषाय ' यतोधूमस्ततोवन्हि ' रित्युक्तं पञ्चम्यन्तयत्तच्छब्दसमभिव्याहारबलेन धूमादितिपञ्चमीप्रयोगफलदर्शनादितिभाव इति । **अप्रयोजकत्वभाशङ्क्यनिषेधति — नच — वाच्यमिति । आदित्यश्चक्षुर्भूत्वेति** ॥ अत्रटीकायां ' अक्ष्यादित्ययोरेकविधत्वा ' दिति न पाठः, अपितु — एकत्व दितिपाठः । अवश्यं चैतदेवं विज्ञेयम् — ' आदित्यश्चक्षुर्भूत्वे ' (ऐ.आ०२.४) तिगोलकान्तर्गताक्षिशब्दवाच्यदेवतातादात्म्ये प्रमाणस्योदाहृतत्वात् ; अन्यथा—अक्ष्यादित्ययोरेकविधत्वे किञ्चित्प्रमाणमुदाहरेत् । ततश्चैवं योजना — 'आदित्यश्चक्षुर्भूत्वा अक्षिणीप्राविश' दितिप्रमाणबलेन आदित्यस्य अक्ष्यन्तर्गतचक्षुषा तादात्म्यादादित्यस्थितत्वेन लिङ्गेन अग्नीनामक्षिस्थितत्वं सिध्यति । अत्रायंप्रयोगोद्रष्टव्यः— अग्नयः अक्ष्यन्तर्गताः, अक्ष्यन्तर्गतचक्षुःशब्दाभिधेयाऽऽदित्यान्तर्गतत्वात् , यो यदन्तर्गतान्तर्गतः स तदन्तर्गतः यथागृहान्तर्गतमंजूषान्तर्गतोमणिः गृहान्तर्गत इति । एतेन— अक्ष्यादित्ययोरैक्यादितिभाष्योक्तेः, ' अक्षीन्द्रियप्रेरकादित्ययोः ऐक्या ' दिति तत्वप्रदीपोक्तेश्च, ' अक्ष्यादित्ययोरैक्यस्यानेकश्रुतिसिद्धत्वा ' दिति सत्तर्कदीपावळ्युक्तेश्च, विरुद्धत्वात् अक्ष्यादित्ययोरेकविधत्वाभिधानमयुक्तमिति परास्तम् । ' एकविधत्वा ' दितिपाठस्य लेखकप्रमादप्रयुक्तत्वेन टीकाकृता एकविधत्वानभिमानात् , अतएवाक्ष्यादित्ययो रेकविधत्वेपि अक्षिस्थस्याग्न्यन्यत्वसम्भवात्, अग्नेरादित्यस्थत्वमप्रयोजकमितिपरास्तम् । ननु — भवेदग्नेरादित्यस्थत्वेन अक्षिस्थत्वसिद्धिः, यदि — ' यएष आदित्येपुरुष ' इत्यत्राग्निरादित्यस्थत्वेनोच्यतइतिस्यात्, तदेवकुतइत्यतआह — **एतस्मिन्प्रकरणइति** ॥ अत्र सद्भावाव'ति च-

शब्दः प्रक्षिप्तः, सद्भावादित्यनन्तरम् 'अग्नेरादित्यस्थत्वेनोच्यत' इतिशेषः। ततश्च – 'यएषआदित्येपुरुष' इत्येतस्मिन्प्रकरणे 'अथाग्नयःसमूदिरे गार्हपत्यो-ऽनुशशास पृथिव्यन्नमादित्य (छा. ४–११) इति बह्वग्निश्रुतिसद्भावादग्नेरादि-त्यस्थइत्यर्थः। यद्यपि – अग्नीनामादित्यान्तर्गतत्वेनाऽऽत्मोपदेशा दुपदेशकपरा-णाम प्यग्निश्रुतीना मादित्यान्तर्गतस्याग्नित्वनिर्णायकत्वमिति तदुपन्यासः कृतः। अवश्यं चैतदेवं विज्ञेयम् – अक्षिस्थप्रकरणे 'अथाग्नयः समूदिर' इति वाक्या-भावेन अग्नेरक्षिस्थत्वसिद्धये बह्वग्निश्रुतिसद्भावस्य हेत्वन्तरत्वाभिधानायोगात्। **न च वक्तव्यमिति॥** अत्र 'औपचारिकं किं नस्या' दिति प्रक्षिप्तम्। कथन-मित्यनन्तरं अयुक्तमिति ग्राह्यम्। ततश्चैवं टीकावाक्यपाठः — 'न च वक्तव्यम्, अग्नेरादित्यस्थत्वकथनमयुक्तं 'यश्चासावादित्य' इति श्रुतिविरोधादिति' ति। अस्यार्थः – 'य एव आदित्येपुरुष' इति वाक्ये अग्निरेवोच्यत इत्ययुक्तं 'यश्चा-सावादित्य' इति समाख्याबलेन विष्णोरेवादित्यस्थतया ग्राह्यत्वात्। अन्यथा— समाख्याविरोधः स्यादिति। अवश्यं चैतदेवं विज्ञेयम् — समाख्याश्रुतेः एतद्वा-क्यस्य विष्णुपरत्वनिर्णायकत्वेनाऽग्निपरत्वाङ्गीकारविरोधित्वात्, नह्यग्नेरौपचा-रिकधर्मप्रतिपादकत्वपक्षे अस्य वाक्यस्याऽग्निपरत्वं विहन्यते, येन विष्णुपरत्व-निर्णायकसमाख्याविरोधो न स्यादिति। **सोऽहमस्मीति॥** अग्निपराहंशब्दस्या-दित्यान्तर्गते ऽग्न्यासादित्यर्थः। **न च विष्णुग्रहण इति॥** दूरेण दिवा धूम-स्तावत् दृश्यते नाग्निः, एवं रात्रौ अग्निरेव दृश्यते न धूम इत्यविवादम् तद-न्यथानुपपत्त्या 'आदित्यः 'सायमग्निं प्रविशति, अग्निस्तु उद्यन्तमादित्यं दिवा-प्रविशती' ति सिद्धमिति अग्निपक्षे अपूर्वत्वाभावः। विष्णुपक्षे विष्णोरादि-त्यस्थत्वस्य प्रमाणान्तरेणासिद्धत्वादपूर्वत्वमिति भावः। **अत इति॥** उक्तहेतुभ्य आदित्यस्थोऽग्निः तस्मादक्षिस्थोऽग्निः ततश्च – स एवानन्दमय इत्यर्थः। अत्र टीकायां — 'तदन्यथानुपपत्त्यैवोपपत्तेरित्यर्थ' इत्यनन्तरम् 'अत्रादित्यस्थत्व-लिङ्गस्यापि विष्णौ समन्वयसिध्यर्थं वक्रसङ्गत्या ऽधिकरणारम्भ' इति ज्ञातव्यम्, 'अग्नीनामिति बहुवचनम्, आदिपदद्वयं च, बह्वग्निश्रुतिसूचनाय प्रयुक्तमिति ज्ञातव्य' मिति वाक्यद्वयं प्रक्षिप्तम्। अवश्यं चैतदेवं विज्ञेयम् — आद्यं वाक्यं

ात्प्रक्षिप्तम् , आदित्ये विष्णुरित्युक्तमिति भाष्योक्तसङ्गतौ वक्रत्वाभावेन वक्रसङ्ग-
ऽधिकरणारम्भाभावात् , 'यश्चासावादित्य' इति श्रुतौ विष्णोरादित्यस्थत्वमुक्त-
, ततश्चार्थादक्षिस्थत्वमुक्तमित्यस्य ऋजुत्वेन वक्रत्वाभावात् , आदित्यस्थत्वलि-
य विष्णौ समन्वयसिध्यर्थं सूत्रकृतैव प्रयतितव्यत्वेन भाष्यकृता ऽप्रयतितव्य-
त् न हि भाष्यकारः समन्वयार्थं प्रवृत्तः किंतु -- समन्वयाद्यर्थसूत्रव्याख्या-
ोव प्रवृत्तः न्यायसाम्यस्यैव समन्वयसाधकत्वेन लिङ्गसमन्वयस्य वक्रसङ्गत्या-
ेकरणारम्भफलत्वाभावाच्च यस्यतु छान्दोग्योक्तादित्यस्थत्वलिङ्गस्यविष्णौ समन्व-
ाभिलाषितः तस्य सङ्गतावप्रवेशात् । यस्यतु आनन्दमयप्रकरणस्थस्यादित्यस्थ-
ङ्गस्य सङ्गतौ प्रवेशः तत्समन्वयस्यानभिलषितत्वाच्च । द्वितीयमपिवाक्यंप्रक्षिप्तम्--
ोऽहमस्मि स एवाहमस्मि' इत्यादाविति प्रथमादिशब्दस्य ' य एव चन्द्रमसि
ोदृश्यते य एवविद्युति पुरुषो दृश्यते ' इति वाक्यग्राहकत्वेन बह्निश्रुतिसू-
त्वाभावात् । एवं ' आदित्यादिस्थत्वमुच्यत ' इति द्वितीयादिपदस्यापि चन्द्र-
ुप्रकरणत्वेन बह्निश्रुतिसूचकत्वाभावात् । एव मग्नीनामिति बहुवचनस्यापि
ेपत्यान्वाहार्यपचनाहवनीयसंज्ञकानां त्रयाणामग्नीनाम् , आदित्यचन्द्रविद्युदन्त-
त्वप्रतिपादनार्थत्वेन बह्निश्रुतिसूचकत्वाभावात् । एकेनैव सूचनसम्भवेत्रया-
मुपादानवैयर्थ्याच्च । तदादित्यस्थोऽपि सएवस्यादिति ।। तदा तर्हि ' स
देवं विद्वानुपास्ते अपहते पापकृत्यां लोकीभवती ' ति विष्णुलिङ्गश्रवणादि-
भावः । तर्हीति ।। तथासतीत्यर्थः । ननु -- ' चक्षुषी ' ति सप्तम्यन्तत्वाद-
ात्रिति वक्तव्यम् , इदमिति प्रथमानिर्देशः कथमित्यत आह -- ( १४ - सू )
ंचक्षुषीतिसमस्तपदमिति ।। ननु -- सूत्रे सुखविशिष्टाभिधानादित्याभिधा-
त् ,भाष्ये ' कं ब्रह्म त्येवोदाहर्तव्यं नतु खं ब्रह्मेति प्रयोजनाभावादित्यत आह--
त्रोपक्रमइति ।। सौत्रैवकारार्थकैमुत्यप्रदर्शनाय तदुदाहरणमिति भावः । ननु
वेज्ञानमानन्दं ब्रह्मेति श्रुत्युदाहरणमयुक्तं तत्र पूर्णज्ञानादिवाचकपदाभावेन तथा
ाज्ञानादेर्विष्णुलक्षणत्वासिद्धेरित्यत आह--श्रौतमपीति ।। पूर्णत्ववाचकविशेष-
ाहित्येन श्रौतमपि विज्ञानादिपदं पूर्णानन्दवाचि, निरुपपदविज्ञानादिपदस्य पूर्ण-
नादिवाचकत्वस्वाभाव्यादित्यर्थः । तेषांकिंनस्यादिति ।। अग्न्यादीनामिव मु-

खं 'कं ब्रह्म खं ब्रह्मे' त्युपक्रमे प्रतिपाद्यत इतिं किं न स्यादित्यर्थः। **मुख्य-इति** ॥ मुख्यस्य प्रतिपाद्यत्वे सम्भवति नामुख्यं प्रतिपाद्यं युज्यत इति भावः। शङ्कते (१६-५०) **नैवमुपक्रमेपीति** ॥ 'कं ब्रह्म खं ब्रह्मे' त्युपक्रमेपि अक्षिस्थप्रकरणस्य वैष्णवत्वं न सिध्यतीति भावः। **आग्निविद्यायाइति**॥ अस्मद्विद्यात्मविद्येत्युक्तावेऽपि यथासम्भव मात्मादिविद्यात्वस्य ग्राह्यत्वादिति भावः। ननु—अस्मदित्युक्तिबलेन द्वितीयविद्याया। अग्निपरत्वसंभवेपि अक्षिस्थविद्याया वैष्णवत्वं किं न स्यादित्यत आह—**अक्षिस्थविद्यायाश्चेति**॥ **'ह्वयाम्यग्नि' मित्यादाविवेति** ॥ यथा—'ह्वयाम्यग्निं प्रथमं स्वस्तये '(ऋ.म.१ ३.६)इत्यग्नेरुपक्रमेपि 'सवितारमूतये। हिरण्ययेन सवितारथेने' त्यादिसवितृश्रुतिलिङ्गादिना तत्प्रकरणम्, 'तथात्रापि ब्रह्मणउपक्रमेऽपि अस्मद्विद्येति अग्निविद्यात्वस्योक्तत्वादग्नीनामेवेदं प्रकरणमित्यर्थः। **अथ यदुचैवेति** ॥ अस्मिन् — ज्ञानिनि मृते अतः अनन्तरं **यदु**चेति निपातसमुदायो यद्यर्थे यद्येव शव्यं शवसम्बन्धि कर्म दाहादिकं कुर्वन्ति ज्ञातयः यदुच यदि न कुर्वन्ति तथापि ज्ञानिनः अर्चिष = अग्निलोकम्, अभिसंविशन्ति = प्रविशन्ति अर्चिषः अहर्लोकं प्रविशन्ति, अह्नः आपूर्यमाणपक्षं शुक्लपक्षाभिमानिलोकं प्रविशन्ति, तस्मात् मासान् षण्मासान् आदित्यः उदगेति उत्तरादिशं गच्छन्ति तान्मासान्प्रविशन्ति उत्तरायणाभिमानिदेवतालोकं प्रविशन्तीति यावत्, मासेभ्यः संवत्सरलोकं, तस्मादादित्यलोकं तस्माच्चन्द्रलोकं, चन्द्रलोकाद्विद्युतं भारतीलोकं प्रविशन्ति, 'तस्माद्वायुलोकं, प्रविशन्ती' ति ग्राह्यम्। तत्पुरुषः = विद्युत्पतिः, स मानवो वायुः, एनान् = ज्ञानिनः, ब्रह्म गमयतीति श्रुत्यर्थः। **श्रुतपदमिति** ॥ ब्रह्मप्राप्तेः श्रवणमात्रफलत्वाभावादिति भावः। **अथवेति** ॥ अभिधानादित्यस्य 'एतद्विद्याया विष्णुविषयत्वमेवे' ति पूर्वेणसम्बन्ध इति भावः। **अन्यथेति** ॥ गतिकथनस्य एतद्विद्याफलत्वाभावे अत्र तत्कथनमसङ्गतं स्यादिति भावः। ननु— 'सोऽहमस्मी' त्यग्निपराहं शब्दविरोध इत्यत आह — **श्रुतेरपीति** ॥ अग्निपराहंशब्दादपि निरवकाशब्रह्मप्राप्तिरूपोपपत्तेः प्राबल्यादित्यर्थः। ननु—यदि इयमात्मविद्या कथं तर्हि 'कं ब्रह्म खं ब्रह्मे' ति उपक्रमे ब्रह्मशब्द इत्यत आह — **तस्यैवेति** ॥ 'ब्रह्मशब्देनोपक्रमो

नानुपपत्र ' इति शेषः । (१७ - सू०.) **एवमुपपत्त्यादियुक्तिभिरिति ॥** 'उपपत्ते' रित्युपपत्तिशब्दोक्ताऽमृतत्वादिलिङ्गानां तस्मिन्नेवोपपन्नत्वादियुक्तिभिरित्यर्थः । **अभ्युपगम्य चेदमुक्तमिति॥** अग्नेः जीवप्रेरकत्वसम्भावितत्वमभ्युपगम्य चक्षुरन्तस्थत्वनिराकरणाय अनवस्थितेरिति दूषणमुक्तम् । वस्तुतस्तु— अग्नेः प्रेरकत्वस्याऽसम्भावितत्वादेव चक्षुरन्तस्थत्वनिरासो भवतीति भावः ! एतेन— अभ्युपगम्य चेदमुक्तमित्युक्तम् , अभ्युपगमविषयाऽदर्शनात् । न च — जीवप्रेरकत्वमभ्युपगम्य अनवस्थोक्तिरिति युक्तम् – अभ्युपगम्य तन्निराकरणायोगेन अनवस्थित्यभिधानायोगप्रसङ्गादिति निरस्तम् । सम्भावितत्वमभ्युपगम्य दूषणमुक्तमित्यङ्गीकारात् । **दिव्यदृष्टिगोचर इति ॥** परमेश्वरस्य दिव्यदृष्टिगोचरत्वात् 'य एषोऽन्तरक्षिणि पुरुषो दृश्यत ' इति दृश्यत्वोक्तिर्नबाधिकेति भावः ।

**पूर्वपक्षस्तु**—' य एषोऽन्तरक्षिणी'ति वाक्योक्तोऽग्निरेवाक्षिस्थो भवेत् , 'य एषआदित्ये पुरुषः सोऽहमस्मि स एवाहमस्मी ' त्यग्ने रेवादित्यस्थत्वाभिधानात् । न च वाच्यमग्नेरादित्यस्थत्वेपि कुतोऽक्षिस्थत्वमिति — आदित्यश्चक्षुर्भुत्वाऽक्षिणी प्राविश ' दिति श्रुतेः, अक्ष्यादित्ययो रेकत्वादादित्यस्थितत्वेनाऽग्नेरक्षिस्थत्वसिद्धेः । ननु—' सोऽहमस्मी ' त्युपदेष्टा अग्निः कुतः येनाग्नेरादित्यस्थत्वं प्रतीयेत इति चेत्, न — अस्मिन् उपदेशके ' अथाग्नयः समूदिरे, गार्हपत्योऽनुशशासे ' (छा०४–१०, ११) त्यादिवह्निग्निश्रुतिसद्भावात् । न च—' यश्चासावादित्य ' इति समाख्याबलात् । विष्णुरेवादित्यस्थो नत्वग्निरिति वाच्यम् – सोऽहमस्मी' त्यभ्यासात् , अभ्यासस्य च समाख्यातो बलवत्वात् । न च विष्णुग्रहणेऽपूर्वतयाऽभ्यासस्यापि बाधः – स च ' य एवंविद्वानुपास्ते अपहते पापकृत्यां लोकीभवति सर्वमायुरेती ' त्यर्थवादात् । अर्थवादस्याऽपूर्वतायाः प्राबल्यात् ।अत आदित्यस्थोऽग्निः ततः अक्षिस्थः आनन्दमयोऽपि स एवेति तज्ज्ञानादेव मोक्षइति ॥

**सिद्धान्तस्तु**–विष्णुरेव चक्षुरन्तरः ' एतदमृतमभय ' छा. ४-१५) मिति अमृतत्वाभयत्वादिलिङ्गात् । किंच—' सर्पिर्वा उदकंवासिञ्चति वर्त्मनी एव गच्छति स वामनिः स भामनि ' (छा०४—१५ ) रिति स्थानशक्तिः स्वरूप-

शक्तिश्चोच्यते । तयोश्चान्यत्रासम्भवात् · किं चोपक्रमे ' कं ब्रह्म खं ब्रह्म ' (छा०. ४–१०) ति श्रवणेन प्रकरणस्य वैष्णवत्वात् प्रकरणबलेन विष्णुरेव चक्षुरन्तस्थो युक्तः । किंच ' श्रुतोपनिषदः कगतिरुच्यते तेनास्य प्रकरणस्य वैष्णवत्वं ज्ञायते । अन्यविद्यया अन्यप्राप्त्ययोगात् । ननु — सोऽहमस्मीत्याद्युपदेशानां अन्तर्यामिविषयत्वकल्पनया किं विष्णोरक्षिस्थत्वाऽऽग्रहेण उपदेशबलेन अग्नेरपि जीवत्वेन नियामकत्वासम्भवेन चक्षुर्गतत्वसम्भावनाविरहात् । अस्तुवा कथंचित् सम्भावना तथापि — नासौ चक्षुरन्तरोऽभ्युपगन्तव्यः, अनवस्थितेः अग्नेरपि जीवत्वेन तत्प्रेरणाय जीवान्तरस्य भाव्यत्वात् , तस्याप्येवं तस्याप्येवमित्यनवस्थितेः । तस्माद्विष्णुरेवाक्ष्यादित्यस्थोऽदित्यदृष्टिगोचरः । अतः स एवानन्दमयः, तज्ज्ञानादेव मोक्ष इति सिद्धम् (अ०. ४)

---

[ ५ · अधिकरणम् ]

## ॐ अन्तर्याम्याधिदैवादिषु तद्धर्मव्यपदेशात् ॐ (सू०.१८)

**भाष्ये — यः पृथिव्यांतिष्ठन्निति॥** यः पृथिव्यां गरुडेतिष्ठन्, ' पृथुं नारायणं वाति तमाद्यैव पक्षिराट् । अतः स पृथिवीत्युक्त ' इति स्मृतेः । पृथिव्याः गरुडात् , अन्तरो = विलक्षणः, यं च पृथिवी न वेद यस्य पृथिवी शरीरं शरीरवत् , यः पृथिवी अन्तरः सन् प्रेरयति एषः परमात्मा ते त्वया पृष्टो ऽन्तर्यामी अमृतो नाशरहित इति सिद्धान्तरीत्या श्रुत्यर्थः । पूर्वपक्षिमतेतु — पृथिवीशब्दः प्रसिद्धपृथिवीपरः । अन्यत्समानम् । **अन्तर्यामिणः कस्यचिदुच्यत इति ॥** एतदधिकरणप्रतिपाद्यस्यामृतत्वेनोक्तत्वं पूर्वाधिकरणतच्छ्रुतिभ्यां सङ्गतिः, तत्प्रतिपाद्यस्यापि अमृतत्वेनोक्तत्वादिति भावः । **उपचारेणनेतव्यमिति ॥** कार्यस्य कारणाधीनत्वादिति भावः । **तस्येति ॥** शरीरशब्दो हि स्वरूपे शरीरेच वर्तते । पृथिवीच नेश्वरस्वरूपम् । **नापि तच्छरीरमिति ॥** पृथिवीशरीरशब्दो न तस्मिन् घटत इति भावः । ननु – प्रकृतिर्नान्तर्यामी — अन्तर्यामिणि 'श्रुतस्य ऽमृतत्वलिङ्गस्य तत्रानवकाशादित्यत आह । **अमृतत्वस्य चेति॥** कथंचिदमृतत्वस्य श्रुत्युक्तगौणामृतत्वस्य प्रकृत्यादौ सावकाशत्वादित्यर्थः ।

इदमुक्तं भवति — भवेदमृतत्वस्य प्रकृत्यादावनवकाशः, यदि श्रुतावन्तर्यामिणो मुख्यामृतत्व मुच्यत इति स्यात्, नचैवम् – पीयूषस्यैव मुख्यामृतत्वात्, तदन्यस्य नाशराहित्यरूपस्य गौणामृतत्वात्। न च पीयूषत्वं अन्तर्यामिणः सम्भवतीति नाशराहित्यरूपं गौणामृतत्वमेव श्रुत्योच्यत इति अभ्युपेयम्, तच्च — विष्णोरिव प्रकृत्यादावस्तीति। एतेन — प्रकृत्यादौ कथञ्चिदमृतत्वसद्भावेऽपि मुख्यामृतत्वाभावादन्यधर्मेण मुख्यामृतत्वेन अक्षिस्थस्य विष्णुत्वसाधनसम्भवात, नाऽमृतत्वमक्षिस्थस्य विष्णुत्वसाधकमित्युपसंहारो न युक्त इति परास्तम्। पूर्वपक्षिणा विष्णुवदेव प्रकृत्यादीनाममृतत्वाङ्गीकारात्। **अन्तर्यामी विष्णुरेवेति** ॥ अनेन अधिदैवादिषु अधिदैवादिप्रतिपादकेषु 'यः पृथिव्यां तिष्ठ' न्नित्यादिवाक्येषु उच्यमानोऽन्तर्यामी विष्णुरेव पृथिव्याद्यविदितत्वान्तरत्वाद्यधर्मव्यपदेशादिति सूत्रयोजनोक्ताभवति। ननु -- सूत्रे अन्तर्यामी तद्धर्मव्यपदेशादित्येवास्तु, अधिदैवादिष्विति व्यर्थमित्याशङ्कां परिहर्तुं तदुपोद्घातमाह — **न च वाच्यमित्यादिना** ॥ यदर्थमुपोद्घातः तदाह — **पृथिव्यादीनामिति** ॥ पृथिव्यादीनां चेतनत्वसूचनाय सूत्रे तत्पदमिति भावः। अत्र गुणसूत्रम् — 'न च स्मार्तमतद्धर्माभिलापा' दिति। कथमिदं विज्ञायते। तद्धर्माभिलापाभावादिति आहोस्वित् तद्विरुद्धधर्माभिलापादिति। किं चातः। यदि विज्ञायते तद्धर्माभिलापाभावादिति तर्ह्यसिद्धिः प्राप्नोति। पृथिवीशरीरमित्यादिना पृथिव्याद्यात्मकत्वरूपतद्धर्माभिलापात्। यदि विज्ञायते तद्विरुद्धधर्माभिलापादिति तर्हि पूर्वसूत्रेण गतार्थता प्राप्नोति। तत्रैव विरुद्धधर्माभिलापस्योक्तत्वादिति चेत्, उच्यते—एतदेवं विज्ञायते तद्धर्माभिलापाभावादिति। ननु चोक्तमसिद्धिः प्राप्नोतीति। नैषदोषः---पृथिव्यादिशरीरत्वादीनां सावकाशत्वेना ऽतद्धर्मत्वात्, तदुपदेशेऽपि असाधारणधर्माभिलापाभावेना सिद्धेरभावात् तदुक्तं — भाष्यकृता — 'त्रिगुणत्वादिप्रधानधर्मानुक्ते' रिति। **च शब्दो विष्णुरेवेति** ॥ 'न च स्मार्तमतद्धर्माभिलापा' दिति सूत्रगतश्चशब्दः 'विष्णुरेवान्तर्यामी न तु प्रधान' मिति अभियुक्तप्रयोगान्तर्गततुशब्दार्थाभिधायक इत्यर्थः। यथा तत्र तुशब्दः सम्भावितत्वरूपविशेषवाचकः तथात्रापीति भावः। एवं च स्मार्तं तु सम्भावितं प्रधानं

नान्तर्यामि तद्धर्माभिलापाभावादिति योजनेत्का भवतीति द्रष्टव्यम्। एतेन – तु शब्दस्य विष्णुरेवान्तर्यामी न तु प्रधानमित्येतावदर्थानभिधायकत्वात् विष्णुरेवन्तर्यामीत्यस्य पूर्वसूत्रार्थत्वात्। न प्रधानमित्यस्य न स्मार्तमिति पदलभ्यत्वात्। सर्वस्यैतस्य तुशब्दार्थत्वमभिप्रायतदर्थाभिधायित्वकथनमयुक्तमिति परास्तम्।

**पूर्वपक्षस्तु** — प्रकृतिरेवान्तर्यामी — 'यस्य पृथिवीशरीर' (बृ. ५-७-३) मित्यादिना पृथिव्यादिशरीरत्वव्यपदेशात्। शरीरशब्दस्य स्वरूपेपि प्रयोगदर्शनेन तस्यतत्रोपपत्तेः। न च 'यः पृथिव्यां तिष्ठ' (बृ. ५-७-३) न्नित्यादिपृथिव्यादिस्थत्वोक्तिविरोधः -- व्याप्तं कार्येषु कारण' मिति तस्य तत्रोपपत्तेः। न च प्रकृतेरचेतनत्वेन पृथिव्यादिनियामकत्वायोगः — कार्यस्य कारणाधीनत्वेन अचेतनप्रकृतेरपि नियामकत्वोपचारोपपत्तेः। न चामृतत्वविरोधः तस्य विष्णाविव अत्रापि योगेनोपपत्तेः। नत्तज्जीवानां वा एतदन्तर्यामित्वं पृथिव्यादिशरीरत्वादेः नेष्वतिसुघटत्वात्। ततश्च प्रकृत्यादेरेवान्तर्यामित्वेन तत्श्रुतममृतत्वं नाक्षिस्थस्य विष्णुत्वसाधकमिति।

**सिद्धान्तस्तु** — विष्णुरवन्तर्यामी तस्य पृथिव्यादिदेवताऽविदितत्वान्तरत्वाद्यधर्मव्यपदेशात्, न प्रकृतिजीवौ। विष्णवसाधारणपृथिव्या अविदितत्वादिधर्मोपदेशवत् प्रकृतिजीवासाधारणत्रिगुणत्वसांसारिकत्वादिधर्मानभिलापात्। काण्वमाध्यन्दिनाभ्यां 'आत्मनोऽन्तरइति, विज्ञानादन्तर' (बृ. ५-७) इति च जीवस्यभेदेन व्यपदेशाच्च। अतोऽन्तर्यामी विष्णुरेवेति न एवामृतोऽक्षिस्थश्चेति सिद्धम्॥ (अ०. ५)

—:o:—

( ६ अधिकरणम् )

## ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ (सू०. २१)

गुणग्रहणं किमर्थं गुणग्रहणमदृश्यत्वादीनां गुणत्वप्रतिपत्त्यर्थम्। अक्रियमाणेगुणग्रहणे ऽदृश्यत्वादीनामभावरूपत्वेन गुणत्वप्रतिपत्तिर्न स्यात्। नन्वादिग्रहणं व्यर्थम्, आनन्दमयाद्यधिकरणेषु आनन्दमयादिशब्दाना मुदाहरणत्वेना न्नमयादिशब्दग्रहणव दिहापि अदृश्यत्वशब्दस्याप्युदाहरणत्वेना ऽग्राह्यत्वादीनां

ग्रहणसम्भवादिति चेत्, सत्यम्—अदृश्यत्वग्रहणस्योदाहरणतया अग्राह्यत्वादीनां ग्रहणं भवतीति, तथाप्यादिशब्देन तेषां ग्रहणं युज्यते, अग्राह्यत्वादीनां गुणत्वज्ञापनाख्यप्रयोजनसद्भावात्। अन्यथा — दृश्यत्वान्योऽदृश्यः तस्य भावः अदृश्यत्वमिति अदृश्यत्वशब्देन अन्योन्याभावाभिधानेन अन्योन्याभावस्य धर्मिस्वरूपत्वेन भावत्वाद्गुणत्वान्वयबुद्धिः स्यात्, — नतुअगोत्रत्वादेः न विद्यतेगोत्रं यस्येति अगोत्रपदेनात्यन्ताभावरूपधर्मवत्त्वाभिधानात् अत्यन्ताभावस्य भावरूपत्वाभावेन न गुणत्वान्वयधीःस्यात्। आदिग्रहणेपुनः क्रियमाणे न दोषोभवति, साक्षादेव तेषां गुणत्वाभिधानात्॥

नन्वेतद्व्याख्यानं सुधाविरूद्धम् — गोत्रादिसंसर्गाभावो ब्रह्मधर्म इत्यर्थस्य सुधानभिमतत्वात्। यथा हि दण्डो देवदत्तस्य विशेषणं तथा गोत्राद्यभावोपि ब्रह्मणो विशेषणम्, न च — श्रुतिविरोधः — दण्डित्ववदभाववत्त्वस्य धर्मत्वेन विवक्षितत्वादित्यादिना गोत्राद्यभाववत्तया एव गुणत्वाभिधानादिति चेत्, उच्यते **सुधायाः** — गोत्राद्यभावो न ब्रह्मगुणः किंतु — गोत्राद्यभाववत्त्वमेवेति नाभिप्रायः। किंतर्हि 'एवंधर्मान्पृथक् पश्य (का० २-४-१४) न्निति ब्रह्मधर्माणाममेदमभिधात्र्याः श्रुतेः द्वित्वादिवद्गोत्राद्यभावो न विषयः, किंतु — गोत्राद्यभाववत्त्वमेव विषय इति अभिप्रायः। अवश्यं चैतदेवं विज्ञेयम् — यथाहि दण्डो देवदत्तस्य विशेषणं तथा गोत्राद्यभावोऽपि ब्रह्मणो विशेषणमिति स्वयमेव धर्मत्वाभिधानात्। यस्तु सुधायाः गोत्राद्यभावो न ब्रह्मधर्म इत्याशय इति मन्यते स प्रष्टव्यः — गोत्राद्यभावः ब्रह्मगतो न वा। नेतिपक्षे कथं गोत्राद्यभाववत्त्वमपि ब्रह्मधर्मः स्यात्। आद्ये गोत्राद्यभावः कथं न ब्रह्मधर्मः। न हि प्रतियोगिना विशेषेण घटमानो धर्मधर्मिभावो, न भेदेनेति साम्प्रतम्। इयांस्तु विशेषः — अभिन्ना धर्मा विष्णोः स्वलक्षणानि, भिन्ना धर्मास्तु तटस्थलक्षणानि। इममेवाभिप्रायं मनसि निधाय भागवते जगज्जन्मादिकारणत्वस्य गोत्राभावादिवत्तटस्थलक्षणत्वव्यावृत्तये 'स्वलक्षणैर्लक्षितभावलक्षणं'( )मिति स्वलक्षणत्वमुक्तम्। सम्मतं चैतद्भाष्यकृतः, तन्त्रसारे तटस्थानामपि चक्रादीनां केशवादिलक्षणत्वाभिधानात्।

**कस्यचिदक्षरस्योच्यत इति॥** एतदधिकरणप्रतिपाद्यधर्मस्य आनन्दमयधर्मत्वेन

प्रतीयमानत्वम्, आनन्दमयाधिकरणतच्छ्रुतिभ्यां सङ्गतिरिति भावः । **नानन्दमयोऽपीति भाव इति ॥** अदृश्यत्वादिगुणकस्याक्षरस्य विष्णवन्यत्वाददृश्यत्वगुणकतया अक्षराभिन्नत्वेन प्रत्यभिज्ञायमानः तैत्तिरीयश्रुत्युक्तानन्दमयोऽपि न विष्णुरिति भावः । एतेन अदृश्यत्वस्यान्यत्वेपि सर्वोत्तमत्वेनाभिमतस्य विष्णो रानन्दपूर्णत्वापलापे कारणाभावात् न विष्णुरानन्दमयोपीत्ययुक्तमिति परास्तम् । विष्णोरानन्दपूर्णत्वमङ्गीकृत्य विष्णुभिन्नतया निश्चितादक्षराददृश्यत्वधर्मवशेनाभिन्नतया प्रत्यभिज्ञायमानः तैत्तिरीयश्रुत्युक्तानन्दमयो न विष्णुरित्यभिधानात् । **पृथिव्यादिदृष्टान्तेनेति ॥** ननु – ऊर्णनाभिदृष्टान्तस्य प्राथमिकत्वादूर्णनाभ्यादिदृष्टान्तेनेति वक्तव्यम् । यदि ऊर्णनाभेश्चेतनत्वेना ऽनुपादानत्वात् तद्विहाय पृथिव्यादिग्रहणम्, हन्त तर्हि पृथिव्यादिग्रहणमपि न कर्तव्यत् । किं कारणम्, अनुपादानत्वात् । कथमनुपादानत्वम् 'पृथिव्यामोषधय (मु०. १ · ७) इत्यत्र पृथिव्यामिति सप्तम्या अधिकरणत्वप्रतीतेः, तयोर्विशेषदर्शनाच्च । एवं पुरुषोऽपि न केशलोम्नामुपादानम्, किं तर्हि अपादानम् । पुरुषादिति पञ्चम्या अपादानत्वश्रवणात् । अस्तु वा पृथिवीपुरुषयोरुपादानत्वम्, एवमपि सन्देहः प्राप्नोति, किमूर्णनाभिदृष्टान्तबलेनाक्षरस्य निमित्तत्वं ग्राह्यम्, आहोस्वित् पृथिव्यादिदृष्टान्तेनोपादानत्वमिति । ततश्च साधकाभावेन न जडप्रकृतेरक्षरत्वमिति पूर्वपक्षो युक्त इति चेत्, न – पृथिवीशब्दः पृथिव्यंशौषध्युपादानबीजपरः । एवं पुरुषशब्दोपि केशलोमाद्युपादानभूतदेहांशमांसपरः । उपादाने चेयं पञ्चमी, ततश्च – पृथिव्यां बीजे समवेताः सन्तः ओषधयो भवन्तीति यथा पृथिव्यामिति वाक्येनोच्यते, यथा 'सतः पुरुषा' दिति वाक्येनापि उपादानभूता देहभागा एव केशलोमानिभवन्तीत्युच्यत इति पूर्वपक्षी मन्यत इत्यङ्गीकारात् । यदपि ऊर्णनाभिदृष्टान्तदर्शनेन सन्देहो भवतीति तन्न – तदाच्छादनेन पूर्वपक्षस्य प्रवृत्तत्वात् । **नचायं कारणत्वमात्रइति ॥** दृष्टांतइत्यनंतरं 'विष्णुरेवादृश्यत्वादिगुण' इति शेषः । अस्तु कारणत्वमात्रे दृष्टांतः, एवमपि – नाक्षरस्येश्वरत्वं संभवति उत्तरवाक्ये अक्षरात् परतः पराभिधानात् । न च–तद्विष्णावत्रकाशमर्हति इत्याशयेन समाधत्ते – **इत्यतोवाक्यादिति ॥ तस्मात्परत इति ॥** परमात्मनः

स्वनास्ति कुतः परतः परस्मादिति भावः । ननु – परतः पराभिधानं यथा-
णुपक्षे बाधकम् ,एवं — प्रकृतिपक्षेऽपि बाधकमित्यत आह – **तच्चेति** ॥ त-
ां प्रकृतौ तत्परतः पराभिधानं 'परतः अक्षरा' दिति सामानाधिकरण्येन
ञनायामुमपन्नं भवतीत्यर्थः । **सब्रह्मविद्यामित्यादीति** ॥ अक्षरविद्यायां
ग्रविद्यापदप्रयोगात् अक्षरे ब्रह्मशब्दो लब्ध इति भावः एतेनाक्षरविषयकेण ब्रह्म-
देन अक्षरस्य ब्रह्मत्वसाधनमयुक्तमिति परास्तम् । **परविद्याविषयत्वोक्ते-
ति** ॥ यद्यप्यत्र परविद्याविषयत्वं नश्रूयते, तथापि—अक्षरप्रतिपादकविद्यायाः
त्वोक्तौ अक्षरस्य परविद्याविषयत्वमर्थाल्लभ्यत इति भावः । ननु – किंपरवि-
विषयत्वस्य श्रुतिस्मृतिबलेन विष्णुधर्मत्वं प्रसाध्य तेना ऽदृश्यत्वादिगुणकस्य
ष्णुत्वसाधनप्रयासेन ब्रह्मशब्देनैव विष्णुत्वसाधनसंभवात् । सूत्रंचैवंसति
ुस्यात् 'अदृश्यत्वादिगुणकः शब्दा' दिति । यदि परतः पराभिधानात् न
शब्दो विष्णुत्वसाधकः हंत तर्हि तत एव परविद्याविषयत्वमपि न तथा
ात् इति चेत् , सत्यमेव — तथापि — ब्रह्मशब्दस्यापि यौगिकत्वेन
वचनत्वज्ञापनाय धर्मोक्तिरित्युक्तम् । भाष्यकृतातु ब्रह्मशब्दोक्तगुणपूर्ण-
धर्मोक्तिः सूत्रार्थतया शिष्यैरेव ज्ञातुं शक्येत्यभिप्रेत्य परविद्याविषयत्वरूपधर्म
निगदितः । **तमेवेतिश्रुताविति** ॥ नन्वत्र विद्याशब्देन ज्ञानसाधनत्वं
वाक्षितं 'अथपरा यया तदक्षरमधिगम्यत' (आ० १-५- ) इति
नात । एवंचास्यां श्रुतौ तमेवं विद्वानमृतो भवती त्यनेन मोक्षसाधनीभूत
नविषयत्वलाभेऽपि विद्याविषयत्वस्यालाभात् नैतच्छ्रुत्युदाहरणमुचितमिति चेत् ,
– 'एवं विद्वा' नित्यत्र एवंशब्दस्य विद्योक्तप्रकारेणेत्यर्थकत्वेन विद्याविषयत्व
स्पष्टं प्रतिभासनात् । **यदा वेदाद्यन्यविषयतयेति** ॥ ननु – यदा वेदा-
न्यविषयतया योज्यते तदा अपरविद्यात्वमित्युक्तं योजनामात्रेण परविद्याया अ-
विद्यात्वायोगादिति चेत् , न — नात्र परविद्यात्व मपरविद्यात्व मखंडं किं
र्हि परविषयकप्रबोधजनकत्वमेव परविद्यात्वम् , एवं तदन्यप्रबोधजनकत्वमपर-
द्यात्वम् , तदुभयं च तत्र योजनारूपसहकारिभेदया एकस्या एव विद्यायाः
पपद्यते । एकस्यैव चतुरस्य देवदत्तस्य सहकारिभेदेन विचित्रकार्यजनकत्वदर्श-

नात् । **यदाविष्णोर्नवाचकाइति** ॥ यदा विष्णुवाचकत्वेनाननुसंहिताः अन्यवाचकत्वेनानुसंहिताः तदाऽन्यबोधजनकत्वात् अपरविद्याः, यदा भगवद्वाचकत्वेनानुसंहिताः तदा परप्रबोधजनकत्वात् परविद्या इत्यर्थः । एतेन—वाचकत्वस्य स्वाभाविकत्वेन सदातनत्वात् 'यदा वाचकाः, यदा न वाचका' इत्युक्तिरयुक्तेति परास्तम् । ( २२ · सू० ) **उक्तार्थेहेतुतयेति** ॥ 'यस्यज्ञानमयं तप' इत्यनेनोक्ते तपसो ज्ञानरूपत्वरूपे ऽर्थे हेतुतया अदृश्यत्वादिगुणकस्य 'यः सर्वज्ञः सर्ववि' दिति पूर्वभागेन सार्वज्ञरूपविशेषणोक्तिः ना ऽचेतनप्रकृते रदृश्यत्वादिकमित्यर्थः । 'यः सर्वज्ञः सर्ववि' ( आ० १ ·९ ) दित्यनयोरर्थभेद माह— **ज्ञानवेदनयोरिति** ॥ **विद्लृलाभ इति**॥ 'यः सर्वज्ञ' इत्यनेन सार्वज्ञमुक्तं, 'सर्ववि' दित्यनेन सर्वलाभत्वं वा, सर्वोत्पादकत्वं वा, उच्यत इति नानयोरेकार्थत्वमिति भावः। ( २३ · सू० ) भाष्ये – **एकोनारायणआसीदिति** ॥ प्रलयकाले एकः नारायणः आसीत् , न ब्रह्मा न च शंकरः, उपलक्षणमेतत् , अन्येऽपि देवाद्या नाऽभवन् । सः = नारायणः, मुनिः मौनीभूत्वा, सृष्ट्यर्थं समचिन्तयत् । ततः = चिन्तामात्रात् , विश्वो = वायुः, हिरण्यगर्भः = ब्रह्मा अग्निः, यमः, वरुणरुद्रेंद्राश्च, बहुवचनमाद्यर्थे, ब्रह्मरुद्रेंद्राद्या व्यजायंत । तस्य हैतस्य नारायणस्य शुक्लं रक्तं रौग्मं कृष्णमिति चत्वारि रूपाणि । ननु – ब्रह्मादीनामपि शुक्लादिरूपसद्भावात् चत्वारिरूपाणि नारायणस्येति असाधारण्योक्तिः कथमित्यत उक्तम् — **स एतानीति** ॥ सः = परमात्मा, एतानि = शुक्लादीनि, चत्वारि रूपाणि, एतेभ्यः = प्रागुत्पन्नेभ्यो देवेभ्यः, विमिश्राणि = रूपांतरेणामिश्राणि, अभ्यचीक्लृपत् = कल्पयामास, ननु स्वकीयशुक्लादीनि रूपाणीव शुद्धशुक्लादिरूपाणि दत्तवान । मानुषादौ यानि रूपाणि दत्तवान् , तानि देवरूपेभ्यः 'विशेषेणव्यमिश्रयत् रूपांतरेणे' ति शेषः ॥

यद्वा — एतानि = देवेभ्यो दीयमानानि रूपाणि, आदौ परस्परं व्यमिश्रयत् , मिश्राणिकृत्वा, पश्चादेतेभ्यो देवेभ्योऽभ्यचीक्लृपत् 'अस्येदंरूपं अस्येदं रूप' मिति विभज्य दत्तवान् अतः — देवादिरूपाणां शुद्धशुक्लत्वाभावात् एतादृक् = शुद्धं शुक्लादि एतद्रूपं = विष्णोरेवरूपमिति श्रुत्यर्थः ॥

**पूर्वपक्षस्तु** — 'यत्तदद्रेश्य' ( आ०. १ - ६ - ) मित्युक्तादृश्यत्वादिगुणको न विष्णुः, किंतु — जडप्रकृतिः, अक्षरशब्दश्रवणात्, न च — अक्षरशब्दो विष्णावपि सावकाश इति वाच्यम् — 'तत्परतः पराभिधानात् । न च — विष्णोः परोस्ति — पृथिव्यादि दृष्टांतेनोपादानतया जगत्कारणत्वाभिधानाच्च । चित्प्रकृतेर्वे तददृश्यत्वादिकम् , तस्यामक्षरशब्दस्य स्मृतिसिद्धत्वात् । विकारित्वेन जगत्कारणत्ववचनं विकाराभिमानित्वात्युज्यते । 'अक्षरात्परत' इत्येतदपि 'परतोऽक्षरा 'दिति सामानाधिकरण्येनोपपद्यते । हिरण्यगर्भस्य वा एतददृश्यत्वादिकम, 'स ब्रह्मविद्या' ( आ०. १-१- ) मित्यादि ब्रह्मशब्दात् । रुद्रस्य वा एतददृश्यत्वादिकम् . 'कर्तारमीश' ( आ०. ३ — १ — २) मिति ईशशब्दश्रवणादिति ।

**सिध्दांतस्तु** — अदृश्यत्वादिगुणको विष्णुरेव, 'अथ परा यया तदक्षरमधिगम्यत' ( आ०. १ - ५) इति अदृश्यत्वादिगुणकस्य परविद्याविषयत्वाभिधानात् । न च — विष्णुप्रापकपरविद्याविषयत्ववत् जडाजडप्रकृतिविरिंचरुद्रप्रापकाणामपि भावात् , त एव अदृश्यत्वादिगुणकाः किं न स्युरिति वाच्यम्— जडाऽजडप्रकृतित्वविरोधिसार्वज्ञविशेषणस्य 'तस्मादे तद्ब्रह्मनामरूपमन्नंच जायत' इति विरिंचत्वविरोधिभेदव्यपदेशस्यच, 'जुष्टं यदापश्यत्यन्यमीश' ( आ०.३-१-२ ) मिति रुद्रत्वविरोधि भेदव्यपदेशस्यच भावेनासंभवात्, नच — परतः पराभिधानात्नविष्णुरिति वाच्यम् — व्यक्षराभिधानेन परतो मध्यमाक्षरात् परत्वसंभवेनाऽविरोधात् । 'यदापश्यः पश्यते रुग्मवर्णं ( आ०. ३ - १ - ३) मित्यादिना विष्ण्वसाधारणरुग्मवर्णादिरूपोपन्यासाच्चाऽदृश्यत्वादिगुणको विष्णुरेव सएवानंदमय इति सिद्धम् ( अ०. ६ )

—:०:—

( ७ अधिकरणम् )

## ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ( सू०. २४ )

साधारणग्रहणं किमर्थं साधारणग्रहणं वैश्वानरशब्दस्योभयत्रप्रसिद्धत्वज्ञापनार्थं नचैवंसति अस्याधिकरणस्य तृतीयपादप्रवेशापत्तिः लोकतो ऽन्यत्रप्रसिद्ध-

त्वात् । लोकतोऽन्यत्रप्रसिद्धस्योभयत्रप्रसिद्धत्वं विरुद्धमिति चेत्, उक्तम्, किमुक्तम् — अन्यत्रप्रसिद्धत्वेन प्रतिपन्नत्वमन्यत्रप्रसिद्धत्वम्, उभयत्रप्रसिद्धत्वेन प्रतिपन्नत्व मुभयत्रप्रसिद्धत्वम्, तदुभयमपि एकस्यैव शब्दस्याऽधिकारिभेदेनोपपन्नमित्युक्तम् अतएवेदमधिकरणं पादद्वयसंधौ निवेशितम् अतएवाऽनुव्याख्याने वैश्वानराधिकरणस्य प्रथमद्वितीयतृतीयपादशेषत्वज्ञापनाय एतदधिकरणारंभात्प्रागेव ।

'बहुलिङ्गसमायुक्तै र्बहुभीरूढनामभिः ।
प्रसिध्दैरन्यगत्वेन वाच्यः साक्षाज्जनार्दन'

इत्यनेन ! पादद्वयार्थोपसंहारः कृतः । एवंचसति द्वितीयपादार्थोपसंहारानंतरम् एतदधिकरणव्याख्यनात् तृतीयपादशेषत्वंज्ञायते, तृतीयपादनिरूपणात्प्राग्व्याख्यानात् द्वितीयपादशेषत्वं ज्ञायते ' द्वितीयपादार्थोपसंहारे कर्तव्ये प्रथमपादार्थोपसंहारात् अस्याधिकरणस्य प्रथमपादशेषत्वमपि भाष्यकाराभिमतमिति ज्ञायते । **शास्त्रादिसं गतिरिति** ॥ अस्याधिकरणस्य शास्त्राध्यायाभ्यां निरूपिता अतंर्भावलक्षणा संगतिः पादे, ननु औपोद्घातिकी संगतिरितिविवेकः । एतेन — वैश्वानराधिकरणव्यावृत्त्यर्थं प्राधान्येनेत्युक्तत्वात् पुनरस्याऽधिकरणस्य पादांतर्भावांगीकारे तद्विरोध इति परास्तम्। **वैश्वानरस्योक्तमिति**॥ अदृश्यत्वाधिकरणप्रतिपाद्यस्य एतदधिकरणप्रतिपाद्यस्य च सर्वगतत्वेन प्रतीयमानत्वं पूर्वाधिकरण तच्छ्रुतिभ्यां संगतिरितिभावः । **नायंवैश्वानरइति** ॥ साधकशून्यत्वादितिशेषः । ननु — किं वाक्यं तर्हि निरर्थकमेवेति पृच्छति — **किंत्विति** ॥ न निरर्थकं वाक्यं वैश्वानरशब्दस्य अग्नौ, तेजोभूतेच, प्रसिध्दिसद्भावात् अग्निर्वा, तेजोभूतंवा स्यात् किं तद्विचारेणेत्याह — **अग्निदेवतेति** ॥ एतेन — पूर्वपक्षिणा अग्निदेवतैव, तेजोभूतमेवेति वा, अवधारणीयत्वेन ' अग्निदेवता, तेजो भूतं वा स्या ' दिति अनास्थयाऽभिधानमयुक्तमिति परास्तम् । पूर्वपक्षिणः विष्णुर्नेत्याग्रहण अग्निदेवतादिपक्षपरिग्रहे आग्रहाभावात् ॥ साधकशून्यत्वरूपहेतौ रासिध्दिमाशङ्क्य परिहरति — **नचेति** ॥ श्रुतेः प्रसिध्दितो निरवकाशत्वं दर्शयति — **श्रुतेरिति** ॥ भवेच्छ्रुतेः सावकाशत्वं यद्यग्न्यादिविषयकत्वप्रसिध्देः काचन गतिः स्यात् नचैवं किंतु वैश्वानरश्रुतेः विष्णुविषयत्वे

अग्न्यादिविषयतया लोकप्रसिद्धेः भ्रममूलकत्वलक्षणो बाध एव प्राप्नोतीति निरवकाशत्वमेवाऽभ्युपेयमितिभावः । हेत्वंतरेण श्रुते निरवकाशत्वमाह–**वैदिकेति** ॥ वैदिकविद्याव्यवहारस्य भ्रममूलकत्वलक्षण विरोधप्रसंगाच्च श्रुतेर्निरवकाशत्वमितिभावः। **गत्यंतरमस्तीति**॥ भ्रममूलकत्व कल्पनैवगति नान्या गतिरस्तीति भावः **अतइति** ॥ अतइत्यस्यविवरणं – **प्रसिध्दिलिङ्गयोरुभयोरपि निरवकाशत्वेनेति** ॥ वैश्वानरश्रुतेः अग्नाविष्ण्वोः ज्ञापकशून्यत्वेन साधारण्यमेव स्यादित्यर्थः । त्वयोपन्यस्तं सर्वगतत्वलिंगं वैश्वानरशब्दस्य अग्निपरत्वानिर्णायकश्रुतेः निर्णयप्रतिबंधायैवोपयुज्यते नतु विष्णुपरत्वनिर्णयायालमितिभावः । **अतइति** ॥ साधकशून्यत्वलिंगस्याऽसिद्धे रभावादित्यर्थः । नात्मशब्दो वैश्वानरशब्दस्य विष्णुत्वनिर्णायकः वैश्वानरश्रुते रुभयत्रप्रसिद्धत्वेन प्रसिद्धिबललब्धाऽग्निपरत्व निवारकत्वाभावात्, ततश्चाऽनिर्णय इत्याशंक्य निषेधति – **नचोक्तरीत्येति**॥ साधारण वैश्वानरश्रुतिसद्भावात्। वैश्वानरश्रुतेः अग्नाविष्ण्वोः साधारण्यसद्भावात्, उभयत्रप्रसिध्दत्वादितियावत् आत्मशब्दरूपसाधकोपन्यासेऽपि उक्तरीत्या साधकाभावात् 'नायं वैश्वानरो विष्णु' रिति पूर्वपक्ष्युक्तरीत्या अग्निपरत्वे बाधकाभावात् तदनिर्णय इति वक्तुं शक्यत्वा दनिर्णय एवेति न वाच्यमित्यर्थ । **साधारणस्यापीति** ॥ वैश्वानरशब्दस्य अग्निपरत्वनिरासाय साधकांतरंमृग्यं, विष्णुपरत्वनिर्णयायोपन्यस्तस्य आत्मशब्दसामानाधिकरण्यस्यैव तत्र-बाधकत्वादिति भावः । नन्वेवंवैश्वानरशब्दस्योभयत्र प्रसिध्द्यंगीकारेण पूर्वत्र पूर्वपक्षनिरासेपि न प्रथमपूर्वपक्षनिरासः, तदुक्तान्यत्वप्रसिध्द्यादे र्निरवकाशत्वादित्यत आह – **प्रसिध्देरिति** ॥ ननु – 'प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्त' ( छा०५-१८-१ ) इति विषयवाक्यस्थ वैश्वानरशब्दस्य विष्णुपरत्वनिर्णयविघटनाय तस्मिन् वैश्वानरे अग्न्यादि शब्दाः प्रदर्शनीयाः, बृहदारण्यकाद्युक्त वैश्वानरशब्दस्याऽग्निशब्दादि सामानाधिकरण्यप्रदर्शनमयुक्तं, तस्य वैश्वानरशब्दस्याग्नि शब्दादिसामानाधिकरण्येपि अस्य वैश्वानरशब्दस्य आत्मशब्दसमानाधिकरणस्य विष्णुपरत्वनिश्चयसंभवादित्यत आह — ( २६·सू० ) **अत्रसर्वेति** ॥ सर्वस्यापि वैश्वानरशब्दस्य विचार्यत्वात् तद्वाक्ये अग्निशब्दादिप्रदर्शनं युक्तमिति

भवः । **समाख्यारूपेणवेति** ।। समाख्यारूप तद्वाक्योदाहरणं तत्रच अग्निपरत्व-संदेहव्युदासायाऽग्निशब्दादिप्रदर्शनमितिभवः 'मूर्धानं दिवो अरतिं पृथिव्या वैश्वानर मृत आजातमग्निम् । कविं संम्राज मतिथिं जनाना मासन्नापात्रं जनयन्त देवा ' (ऋ० स० ६-८-१ ) इति ऋचं व्याचष्टे – **दिवइति** ।। दिवः कारणीभूतमूर्धानं = मूर्धात्मकं, पादं = पादात्मकं, ऋते इत्यस्य अर्थः – **सम्यग्ज्ञानायेति** ।। आजातमित्यस्यार्थः **अभिव्यक्तमिति** ।। अतिथिमित्य-स्यार्थः — **अत्यन्नमिति** ।। पात्रमित्यस्यार्थः — **पातारमिति** ।। आसन्नेत्य-स्यार्थः — **स्वास्यतयेति** ।। ननु — अरतिशब्दस्य कथं पादार्थकत्वमित्यत आह–**गतिसाधनत्वादिति**।। ऋगतावित्यस्माद्धातो.'वहिवस्यर्तिभ्यश्चि'(५००) दित्यनेन औणादिकेऽतिप्रत्यये गुणकृते अरतिरिति सिध्यति । ' ऋतआजात ' मित्यस्य ज्ञानायाऽभिव्यक्तमित्यर्थं घटयति – **अग्निरिति** ।। ' इतिचे ' त्यनंतरं ' यस्मादरतिशब्दोक्तनिर्वचनं मतस्याः तादर्थ्ये समाख्यानं, चशब्दस्य अन्वा-चित्वश्रुतिः, अग्न्यंतर्गतस्य अग्निशब्दवाच्यस्य विष्णोः, देवास्यत्वे समाख्यानं, चास्ति; अतः उक्तव्याख्यानमुपपन्न ' मितिवाक्यशेषः । दृष्टांतासिद्धेश्च अग्निलिं-गाना मसत्त्वं नवाच्यमित्याह — **वाक्यांतरस्येति** ।। ननु—' अग्निस्तु प्रमदा नाम घृतकुंभसमः पुमान् । सुतामपि रहो जह्यादन्यदा यावदर्थकृत् ' इति भागवतानुसारेण योऽर्थः स्थाप्यते, ' योषितमग्निंध्यायीत ' ( ) इति वाक्यस्य तदर्थत्वात् दृष्टांतोऽसिध्दइतिभावः । ननु — चशब्द-स्य समुच्चयाभिधानोपक्षीणत्वात् उक्तसूचकत्वकथनमयुक्तमित्यत आह — **अपि-पदेनैवेति** ।। अपिपदेनैव पूर्वोक्तहेतुभ्यां सह ' अधीयत ' इत्यनेन समुच्चयसि-ध्देः, नान्यत्रोपक्षीण श्चशब्दइत्यर्थः । अत्रगुणसूत्रम् 'अतएव न देवता भूतंचे' ति पूर्वपक्षिणा वैश्वानरशब्दस्य देवताभूतपरत्वानंगीकारात् , ' विष्णु र्न वैश्वान-रो ज्ञापकाभावा ' दित्यंगीकारात् , पूर्वग्रन्थेन विष्णुपरत्वाभावनिरासेन विष्णुपर-इति सिध्दांतो ऽभिहितः । अधुना ' अग्नि देवता, तेजोभूतं वा, वैश्वान-रशब्दोक्तमिति पूर्वपक्षांतरनिरासायेदं सूत्रमिति द्रष्टव्यम् । (२८·सू०) **नाग्न्या-दिवाचका इति** ।। परममुख्यवृत्त्येति शेषः । **अनन्ययोगेनेति**।। अनन्याधीन-

योगेन ब्रह्ममात्रवाचकै स्तैःशब्दैः हानादिव्यवहारसिध्यर्थं पराधीनप्रवृत्तिनिमित्त-योगेन अग्न्यादौ अग्न्यादिशब्दान् व्यवहरंति । अज्ञानिनस्तु — परममुख्यवृत्ति-ज्ञानाभावात् मुख्यवृत्तिविषये अग्न्यादिशब्दान् अग्न्यादिषु व्यवहरंति व्यवहार-निमित्ताच प्रसिद्धिः । ततश्च — तदन्यथानुपपत्त्या नाऽग्न्यादिषु परममुख्यवृत्ति-सिद्धिरिति जैमिनिराचार्यो वक्तीति भावः । ( १८ - सू०. ) **नन्विति** ॥ जैमि-न्यादिमतस्य भगवन्मतविरोधित्वे जैमिन्यादिग्रहणवैयर्थ्यात् विरुद्धत्वं वाच्यम्, कथं विरुद्धराद्धांतेन परिहार इत्यर्थः । **तन्मतैकदेशेति** ॥ व्यासमतैकदेशो जैमि-न्यादिभिः स्वीकृत इति ज्ञापनाय जैमिन्यादिग्रहणमिति भावः । ( १९ - सू०. ) **वाच्यत्वंस्यादिति**॥ परममुख्यवृत्त्येति शेषः।वैदिकप्रसिद्धिमूलव्यवहारस्याऽज्ञाना-दिमूलत्वेनैवोपपत्तेः, न व्यवहारमूलप्रसिध्यन्यथानुपपत्त्या अग्न्यादीनां परममुख्यया वृत्त्या वाच्यत्वसिद्धिरित्यत आह — **तत्रेति**॥ यद्यपि — अज्ञानादिमूलकत्वकल्पना-योगादिति वक्तव्यं, तथापि अग्न्यादिशब्दानां भगवन्निवृत्त्यज्ञानमात्रं नाग्न्यादौ व्यवहारे मूलम् , किंतु अग्न्यादिनिप्रवृत्तिज्ञानसहितमेव व्यवहारे मूलमिति द्योतनाय अज्ञानादीत्यादिशब्दः । ‘अभिव्यक्तेरित्याश्मरथ्य’ इति सूत्रे, ‘तत्र तत्रे’ति भाष्ये च, साध्यानुक्ते र्न्यूनतापरिहाराय वाक्यशेष माह — **न वैदिकेति** ॥ भाष्यं व्याचष्टे—**तत्रतत्रेति** ॥ ‘प्रसिद्धावपी’ त्यपिशब्दस्य अपि प्रसिद्धाविति क्रमव्यत्ययमभिप्रेत्य ‘अपिशब्दार्थ माह — **अग्न्यादिसूक्तादिभिरिति** ॥ उपास्तावित्यंतं प्रसिद्धावित्यस्य व्याख्यानं द्रष्टव्यम् । अनेन – ‘ तत्रतत्रे ’ ति **भाष्यस्य** ‘तत्र = सूक्तादौ, अपि = यद्यपि, अग्न्यादीनामप्रतिपाद्यत्वम् ; तथापि – प्रसिद्धौ = विद्योक्तप्रकारेण ब्रह्मोपास्तौ, स्वेच्छया अग्न्यादिषु ब्रह्मणो ऽभिव्यक्तेः, अग्न्यादिसूक्तनियमः उपपन्नः । ततश्च — तदन्यथानुपपत्त्या ना-ग्न्यादीनां सूक्तप्रतिपाद्यत्वं मंतव्यम् इत्याश्मरथ्याचार्यो मन्यत इति योजनोक्ता-भवति । ननु — किमग्न्यादीनामग्न्यादिशब्दवाच्यत्वमभ्युपगम्य, विष्णौ परममु-ख्यवृत्त्युपपादनप्रयासेन विष्णोरेव वाच्यत्वमंगीकृत्य, लोके शब्दानामुपचार एव किं नांगीक्रियते इत्यत आह — ( सू०. २१ ) **अत्र व्यवहारस्येति** ॥ लो-के व्यवहारमत्र उपचरितत्वांगीकारे प्रागुक्तैवाऽनुपपत्तिः । विष्णोरशब्दत्वांगी-

कारे 'ईक्षतेर्नाशब्द' मित्यत्र यानुपपत्तिरुक्ता सैवेत्यर्थः । ( सू०. ३२ ) **चशब्दः शंकाव्यावर्तक इति** ।। 'आमनंतिचे' ति चशब्दः न केवलं 'योऽग्नौतिष्ठ' न्नित्यादिना अग्न्यादावेनमामनंति, अपितु — अग्नौ विष्णुसान्निधानाभावे स्वकार्यादौ प्रवृत्त्यनुपपत्तेः, तदन्यथानुपपत्तिरूपं प्रमाणांतरंचाऽस्तीति सूचयन् प्रागुक्तशंकाव्यावर्तकः, प्रमाणसंप्लवस्य शंकानिवर्तकत्वात् चशब्दसूचित प्रमाणेन सह सूत्रोपात्तवचनं शंकांनिवर्तयतीति भावः ।

**पूर्वपक्षस्तु** – नायंवैश्वानरो विष्णुः साधकशून्यत्वात्, नच – सर्वगतत्वलिंगात् वैश्वानरो विष्णुरिति वाच्यम् — अन्यत्रप्रसिद्ध वैश्वानरश्रुत्या बाधितत्वात् । नच — लिंगस्य निरवकाशत्वात् लिंगेन श्रुतिबाधः – श्रुतेरपि निरवकाशत्वात् । एवंच – वैश्वानरश्रुतेः निर्बाधसाधकशून्यत्वेन अग्न्याविष्णोः साधारण्यात्, वैश्वानरोऽग्निरित्यनिश्चयात् विष्णुरित्यनिश्चय एवेति अतो न वैश्वानरो विष्णुरिति न सर्वगतत्वं तस्येति ।

**सिध्दांतस्तु** – अयं वैश्वानरो विष्णुरेव 'आत्मानं वैश्वानर' मिति आत्मशब्दात्, 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित' ( गी० १५ ) इति स्मृतिसमाख्यानाच्च । ननु – नायं वैश्वानरो विष्णुरिति निश्चयो घटते विष्णुनिश्चायकवत् अग्निनिश्चायकसद्भावात्, 'वैश्वानर आजातमग्नि' मित्यग्निशब्दस्य 'वैश्वानरे तद्भुतं भवति, हृदयं गार्हपत्यो, मनो ऽन्वाहार्यपचन, आस्यमावहनीय' इत्यग्निलिंगस्य 'येनेदमन्नं पच्यते' इत्यादिना पाचकत्वेनांतःप्रतिष्ठानस्य च श्रवणात्, एतेषां विष्णावनवकाशादिति चेत्, न – 'सर्वनामसर्वकर्मे' त्यादिना महोपनिषदि तत्तन्नामलिंगवत्त्वेन दृष्ट्युपदेशात्, 'कोनआत्मा किं ब्रह्मे' ( छा०. ५ - ) ति विष्णोरेवाऽऽरंभात्, 'चंद्रमामनसो जात' ( पुरुष. सू. ) इत्यादिना यः पुरुषाख्यो विष्णुरभिहितः 'मूर्धैवसुतेजा' ( छा८, ५ - इत्यादिना वैश्वानरस्य तद्विधत्वाभिधानाच्च । नच — अग्न्यादिश्रुति लिंगसद्भावात् अग्निदेवता, तेजोभूतं वा किं नस्यादिति वाच्यम् — निरवाकाशा ऽऽत्मशब्दश्रवणात् । ननु -- अग्न्यादिशब्दानां ब्रह्मवदग्न्याद्यवाच्यत्वेऽपि अग्न्यादिज्ञानार्थमभिज्ञैरन्यत्र व्यवहारात्, अनभिज्ञैस्तु — परममुख्यार्थभगवदज्ञानादेव

मुख्यार्थ अग्न्यादावेव प्रयोगेण प्रसिध्युपपत्तेः । नन्वत्रापि अग्निसूक्तमित्यादि वैदिकप्रसिध्यन्यथानुपपत्त्या अग्न्यादीनां वाच्यत्वं वाच्यमिति चेत्, न— अग्न्यादिसूक्तैरुपासकानां अग्न्यादौ च भगवदभिव्यक्त्या सूक्तानियमसंभवात्। अथवा— अग्न्यादिसूक्ते रुपासकानामग्न्यादौ विष्णोः स्मर्तव्यत्वात्, सूक्तनियमः। यद्वा— तत्तसूक्तोपासकानाम् अग्न्यंर्गतभगवत्प्राप्त्या सूक्तनियमो ऽभ्युपगंतव्यः। अतो ऽयंवैश्वानरो विष्णुरेवेति तस्यैव सर्वगतत्वं सिद्धम् (अ० ७.)

इति श्रीमत्सत्यनिधितीर्थ श्रीमच्चरणचरणाराधक
श्रीमत्सत्यनाथयतिविरचितायां
तत्वप्रकाशिकाव्याख्याभिनवचंद्रिकायां
प्रथमाध्यायस्य द्वितीयः पादः।



॥ श्रीः ॥

श्रीरामचंद्रायनमः

## अथ प्रथमस्य तृतीयः पादः

[ १ - अधिकरणम् ]

### ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ ( सू. १ )

**एतत्पाद प्रतिपाद्यं दर्शयतीति ॥** 'अध्यायस्यैकार्थत्वात्पादभेदः किं निबंधन इत्यतः समन्वयेप्यवांतरभेदेनेति भावेने' ति वर्तते, तस्य 'एतत्पादप्रतिपाद्यं दर्शयती' त्यनेन संबंधः । **सर्वेवा इति ॥** प्राणा = इंद्रियाणि, प्राणिनः = देहिनः, देवाः = प्रसिद्धाः, दिव्यानि = दिविभवानि कल्पतरुप्रभृतीनि, लोका = भूरादयः, तदभिमानिनो = लोकिनः, आलोका = प्रसिद्धालोकविलक्षणा वैकुंठादय; आलोकिनो = मुक्ताः, एते विष्णौ ओताश्च प्रोताश्चेति श्रुत्यर्थः । **उभयत्रप्रसिद्धेति ॥** विष्णौ, तदन्येषु, रुद्रजीववायुाकाशशब्दाभिधेयप्रकृतिषु प्रसिद्धद्युभ्वाद्यायतनत्वलिंगस्येत्यर्थः । **अदृश्यत्वादिगुणकेति ॥** परविद्याविषयत्वं अदृश्यत्वाधिकरणविषयवाक्ये विष्णोरुक्तमिति ज्ञापनाय अदृश्यत्वादिगुणकाऽक्षरस्येति विष्णोर्विशेषणम् । अनेन — अदृश्यत्वाधिकरण तद्विषयवाक्याभ्यामस्याधिकरणस्य परविद्याविषयत्वेन प्रतीयमानार्थप्रतिपादकत्वमेव संगतिरित्युक्तं भवति ! ननु — अदृश्यत्वाधिकरणप्रतिपाद्यस्य परविद्याविषयत्वाप्रतीतेः कथं पूर्वाधिकरणेन संगतिरित्यत आह—**तत्परविद्याविषयत्वमिति ॥** अनेन — भाष्ये तत्रेत्येतत्तदिति व्याख्यातं 'तमेवैकं जानथ आत्मान' मित्यतः परं 'आथर्वणे द्युभ्वाद्याश्रयस्योच्यत' इति शेष इति द्रष्टव्यम् । ततश्चैवं भाष्यवाक्ययोजना — विष्णोः परविद्याविषयत्वमुक्तं तच्च 'यस्मिन् द्यौः पृथिवीचांतरिक्षमोतं मनः सहप्राणैश्च सर्वैः तमेवैकं जानथ आत्मान' मिति आथर्वणेद्युभ्वाद्याश्रयस्योच्यत इति । नन्वस्याधिकरणस्याथर्वण वाक्यमेव विषयवाक्यम् , उत इदमुदाहरणमात्रतयोदाहृतम् 'रुद्रोवावलोकाधार' इत्यादिसर्वमपि विषयवाक्यम् ! नाद्यः — 'रुद्रोवावलोकाधार' इत्यादिवाक्यानां समन्वयाप्रसिद्धिप्रसंगात् । न-

द्वितीयः तेषामपिवाक्यानां संदिग्धत्वेन द्युम्वाद्यायतनत्वस्याऽन्यत्र प्रसिध्यभवेनोभयत्रप्रसिद्धत्वाभावापातात् । किंच — तेषामपि वाक्यानां संदिग्धत्वेन एतस्य लिंगस्य श्रुत्यादिना तत्रचान्यत्रच प्रसिद्धत्वं स्यात् किं तर्हि तत्रप्रसिद्धिरेव श्रुत्या, अन्यत्र प्रसिद्धिस्तु आपातत इति स्यात् । एवंचापातत प्रतीत्यपेक्षया श्रौतप्रसिद्धेः प्रामाणिकत्वेन बलवत्त्वात् संशयादयो नस्युरिति चेत् , उच्यते — आथर्वणवाक्यमेव विषयवाक्यं, नचैवं सति 'रुद्रोवावलोकाधार 'इत्यादीनां समन्वयासिद्धिप्रसंग इति वाच्यम् — अनेनाधिकरणेन द्युम्वाद्यायतनत्वस्य भगवल्लिंगत्वेप्रसिद्धे 'अंतस्तद्धर्मोपदेशा' ( ब्र. सू. १ - १ - २० ) दित्यादिना इंद्रादिनाम समन्वयसिद्धिवत् 'रुद्रोवावलोकाधार' इत्यादिवाक्यगत रुद्रादिशब्दस्यापि समन्वयसिद्धिसंभवात् । नन्वथापि नेदं विषयवाक्यंघटते अस्मिन्वाक्ये हेतुतयोक्तस्वशब्दाभावात् । नच —सूत्रकारस्य स्वशब्दोहेतुत्वेन न विवक्षितः, किंतु — स्वशब्दपर्याय आत्मशब्दो हेतुत्वेन विवक्षित इति वाच्यम् – तथासति – 'द्युम्वाद्यायतनमात्मशब्दा ' दित्येव सूत्रं विदध्यादिति चेत् – नात्रसूत्रकारस्य आत्मशब्दोपेतमिदमेकमेव वाक्यं विषयवाक्यमित्यभिमतम् , किंतु — एवं जातीयकानि बहूनि । नच सर्वत्राप्यात्मशब्दो विद्यते येन द्युम्वाद्यायतनमात्मशब्दादिति ब्रूयात् किंतु तत्र प्रसिद्धाः ब्रह्मात्मदायः शब्दाः सर्वेषां संग्रहाय स्वशब्दादित्युक्तं स्वशब्दादित्यभिधानेहि एवं विज्ञायते नात्रविषयवाख्ये स्वशब्दः श्रूयते । अतः स्वशब्दः सूत्रकारस्य हेतुत्वेनानभिमतः किंतु स्वशब्दपर्यायाः शब्दाः विवक्षिता इति । आत्मशब्दादित्यभिधानेतु अयमेक एवात्मशब्दः हेतुत्वेन विवक्षित इति विज्ञायेत ततश्च भागासिद्धिशंकास्या त् सा माभूदिति स्वशब्दादित्युक्तं अनेनेवाभिप्रायेण 'आनंदमयोभ्यासा ' ( ब्र०. सू०. १-१-१२ ) दित्यादौ सामान्येन प्रयोगः । नन्वथापि 'शब्दादेवप्रमित ' ( ब्र०. सू०. १ - ३ ) इत्यादाविव 'द्युम्वाद्यायतनं शब्दा ' दित्येव वक्तव्यं किं स्वशब्दग्रहणेनेति चेत् , न – व्याप्तिसूचनार्थत्वात् । स्वशब्दो हि विष्णुमात्रवाचकत्वात् विष्णुत्वव्याप्त इति सुप्रसिद्धः, नैवमात्मादयः शब्दाः, तेषामन्यत्रापि प्रयोगदर्शनात् तेषां स्वशब्दपर्यायत्वोक्तौतु व्याप्तिः प्रसिद्धाभवति । अनयैवदिशा ' शब्दादेवप्रमित ' इत्यादौ व्याप्तिरनुसंधेया ।

**पूर्वः पक्ष इति** ।। अत्र बुध्याविवेकेन रुद्रस्यद्युम्वाद्यायतनत्वमित्यादिरूपेण प्रतिज्ञावाक्यचतुष्टयमूह्यम् । भाष्ये — अत्र '**प्राणानां ग्रंथिरसीति**।। अत्र विषयवाक्ये, तयोरुद्रजीवयोः प्राप्तिरिति संबंधः। प्राणानां ग्रंथिरसीत्यादिप्रतीतेरित्यंतं रुद्रप्रापकम्। तत्रापि 'प्राणनां ग्रंथिरासि रुद्रो माविशांतक' इत्यंतं रुद्रस्य प्राणाधारत्वसिद्धये समाख्यारूपेण तैत्तिरीय श्रुत्युदाहरणम्। 'प्राणेश्वर' इति प्राणेश्वरशब्दघटित शाखांतरस्थश्रुतेः प्रतीकेनोदाहरणम्, 'कृत्तिवासा' इति तच्छब्दघटित रुद्रोबावलोकाधार इति श्रुतेः प्रतीकेनोदाहरणम् । 'पिनाकी' ति तच्छब्दघटित 'रुद्रे वैमन ओतंचप्रोतंचे' ति श्रुतेः प्रतीकेनोदाहरणम् । 'सएषोऽतश्वरत' इत्यादि जीवलिंगप्रदर्शनायेति विवेकः । भाष्ये 'प्राणानां ग्रंथिरसि प्राणेश्वर' इत्यादिना रुद्रस्य प्राणाधारत्वप्रतीतेरिति संबंधमभिप्रेत्याह टीकायाम् — **अत्रोक्तपाणाधारत्वस्येति**।। 'कृत्तिवासा' इति प्रतीकेनोपात्तश्रुतेः साध्यं पूरयन् तमुदाहरति—**मनआयतनत्वंचेति** ।। एतद्वाक्योपक्रमे यत इति ग्राह्यम्, प्रतीयत इत्यतः परंतस्मादिति ग्राह्यम्, तस्यच 'द्युभ्वाद्यायतनत्वं रुद्रस्येति पूर्वपक्ष'इति बुध्याविविक्तेन पूर्ववाक्येन संबंधः । **नैतच्छ्रुतीनामितिः** 'प्राणानां ग्रंथिरसि, रुद्रोबावलोकाधारः, रुद्रेवैमनओतंचप्रोतंचे' ति श्रुतीनामित्यर्थः । 'अंतक' इति आद्यश्रुतौ अन्तकत्वलिङ्गस्य, द्वितीयश्रुतौ कृत्तिवासस्त्वलिंगस्य, तृतीयश्रुतौ पिनाकित्वलिंगस्य, सद्भावात् न श्रुतीनां विष्णुपरत्वमिति भावः । यद्यपि 'रुद्रोत्रावलोकाधारः, रुद्रेवैमनओतंचप्रोतंचे' ति श्रुत्योः शाखांतरगतत्वात् तत्र कृत्तिवासस्त्व, पिनाकित्व, लिंगसद्भावविर्णयो दुर्घटः, तथापि — भाष्यकारवचनप्रामाण्यात् तन्निश्चय इति द्रष्टव्यम् । **प्रमाण्यानुमानेनचेति** ।। वाक्यप्रामाण्यानुमानेन वाक्यप्रामाण्येसिद्धे तेनसर्वाश्रयत्वासिद्धिरिति भावः । **अराइवेति** ।। नाभ्याश्रयत्व बहुधाजायमानत्वलिंगश्रवणेऽपि न जीवस्यद्युभ्वाद्यायतनत्वमंगीकार्यम्, असंभावितत्वात्, संभावितस्यैव साधनीयत्वादित्यत उक्तम् — **तद्युक्तमिति** ।। तत् = द्युभ्वाद्याश्रयत्वं संभावितमिति भावः । कथं संभावितमित्यत आह—**तस्येति**।। संभावितस्य पूर्वोक्तसाधनसमुच्चये चशब्दः। साधकसद्भावात्, संभावकसद्भावाच्च जीवस्यैव द्युभ्वाद्याश्रयत्वमिति द्युभ्वाद्येकदेशप्राणाश्रयत्वदर्शनात् द्युभ्वाद्याश्रयत्वं संभावितमिति

भावः । एतेनैकदेशाश्रयत्वस्य समग्राश्रयत्वेन व्याप्त्यभावात् तेनतत्साधनमयुक्त-मिति परास्तम् श्रुतिबलेन वायोर्द्युभ्वाद्याश्रयत्वं प्रसाध्य प्रसिध्देःप्राणाधारत्वं सिध्द-मित्याह **तस्येति** ॥

**बहुधाजन्मबाधादिति**॥ ननु-पूर्वपक्षविषयत्वेनांगीकृतेषु रुद्रप्रधानजीववायुषु-बहुधाजन्मास्ति, नवा। आद्ये-न तेषां द्युभ्वादिसर्वाश्रयत्वम्, एतेषामुत्पत्तेः पूर्वम्एता-न्विना द्युभ्वादीनां स्थितिवत्, उत्तरत्रापि स्थितिसंभवात् । नेति पक्षे विष्णो-रिव बहुधाजन्मबाधेन द्युभ्वाद्यायतनत्वाभावप्रसंग इतिचेत्, उच्यते – अस्ति तावत् रुद्रवायुजीवानां बहुधाजन्म, प्रमाणसिध्दत्वात् । नच — तदभावदशायां द्युभ्वादिस्थितिवत् अन्यदापि स्थितिसंभवेन न तेषां द्युभ्वाद्यायतनत्वंस्यादित्यु-क्तमितिबाध्यम् — तेषां देहलाभस्यैवोपासित्वात् । स्वरूपसदातनत्वेन तदभाव-दशाभावात् । प्रधानस्य कार्यात्मना परिणामांगीकारेण बहुधाजन्मबाधाभावात् । ननु – परविद्याविषयत्व बाधेऽपि यथा – बहुधाजन्मरूप साधकबलात् जीवस्य द्युभ्वाद्यायतनत्वमंगीक्रियते, तथा – परविद्याविषयत्वलिंग बलेन बहुधाजन्मबा-धेऽपि विष्णो र्द्युभ्वाद्यायतनत्वमंगीक्रियतामितिशंकते – **परविद्येति** ॥ न मया परविद्याविषयत्वलिंगबाधेऽपि साधकमात्रेण जीवस्य द्युभ्वाद्याश्रयत्वमभ्युपगम्यते, अपितु — परविद्याविषयत्वं जीवेऽप्युत्पाद्य लिंगबाध निरस्य साधकबलात् जीवस्य द्युभ्वाद्याश्रयत्वमभ्युपगम्यत इत्याह — **जीवेशाभेदेनेति** ॥ ब्रह्मगतस्य परवि-द्याविषयत्वलिंगस्य जीवे लिंगव्यपदेशसंभवादित्यर्थः । एतेन — जीवस्य परवि-द्यासुप्रतिपाद्यत्वाऽदर्शनेन परविद्याप्रतिपाद्यत्वाऽभिधानमयुक्तमिति परास्तम्। अस्मा-कमपि परविद्याविषयत्व व्यपदेशस्यैवाभिलषितत्वेन परविद्याविषयत्वस्यानभिलषित-त्वात् । **नच तथाबहुधाजन्मेति** ॥ तथा – बहुधा जन्मव्यपरेश ईशे नसं भवतीत्यर्थः । कुतोनेत्यतआह – **कारणगतस्यैवेति** ॥ कारणगतस्य धर्मस्यैव कार्येव्यपदेशो दृष्टचरः नतु कार्यगतस्य धर्मस्य कारण इति भावः । **अतः परवि-द्याविषय इति** ॥ परविद्याविषयत्वेनोक्तः द्युभ्वाद्याश्रयः विष्णोरितरत्वेन भवद-ङ्गीकृतो जीवादिरित्यर्थः । एतेन—जीवेशाभेदस्य पूर्वपक्षिणानभिधानात् विष्णो-रितर एवेति पुनः विष्णोरितरत्वाभिधानमयुक्तमिति परास्तम्। (सू-३)**प्रागुक्तरी-**

**त्येति** ॥ प्रापक बाहुल्येन मुक्तोपसृप्यत्वलिंगबाधसंभवात् रुद्रप्रकृत्योर्द्युभ्वाद्याय-तनत्वमिति शंकोदय इतिभावः । भाष्ये — **भस्मधरोग्रत्वादि तच्छब्दाभावादिति** ॥ ननु — उग्रशब्दस्यैवतच्छब्दत्वेन उग्रत्वशब्दस्य तच्छब्दत्वाभावात् भस्मधरोग्रादि तच्छब्दाभावादिति वक्तव्यम् , नतु उग्रत्वादि तच्छब्दाभावादिति वक्तव्यमितिचेत् , सत्यम् — उग्रशब्द एव तच्छब्दः, तथापि — स्वार्थिकोयं त्वप्रत्ययः । ततश्च — उग्रइत्यनेन यावदुक्तं भवति तावदेवोग्रत्वं भवतीत्यनेनोक्तं भवतीत्यदोषः । अतएवशाबर भाष्ये — ' इतरेषुतथात्व ' ( जै० सू० ) मितिसूत्रगततथात्वशब्दस्य ' तथे ' तियावत् तावत्तथात्व' मितितथाशब्दपर्यायत्व-मुक्तम् । समाख्याबलात् द्युभ्वाद्यायतनत्वंरुद्रस्येतिशङ्कते - **नन्वत्रेति**॥ ननु—अस्तु-रुद्रादिशब्दानामुभयत्ररूढिः, तथापि न समाख्याश्रुतेः विष्णुपरत्वनिश्चयाऽयोगः, विष्णुलिङ्गादिना विष्णुपरत्वनिश्चयसंभवादित्यतआह – **नहीति** ॥ श्रुत्यन्तरे = समाख्याश्रुतौ । विशिष्टाभेदवादीशङ्कते — **नन्विति** ॥ एतेन — चैतन्याऽभेद-वादिना ईशस्य जीवरूपाद्विशिष्टात् भेदस्याऽङ्गीकृतत्वेन तस्य शुद्धचैतन्यैक्याऽवि-रोधात् 'भेदव्यपदेशा ' दितिसूत्रे भेदव्यपदेशेन भेदंप्रसाध्य, ऐक्यनिराकरणमयुक्त-मितिपरास्तम् । अस्यसूत्रस्य विशिष्टैक्यशङ्कानिरासार्थत्वात्।(सू-५)**जीवस्यैवेति**॥ जीवस्यैव द्युभ्वाद्यायतनत्वेपि भवदभिमतस्याविष्णोर्द्युभ्वाद्यायतनत्वस्य लाभसंभवात्। नह्यभिन्नयोरेकस्य द्युभ्वाद्यायतनत्वप्राप्तौ अपरस्यनेतिवक्तुं शक्यमितिभवः । अत्र-गुणसूत्रम् — ' **स्थित्यदनाभ्यांचे** ' ति । अस्य नचैक्यंवाच्यमितिपूर्वभाष्ये-णान्वयः । नन्वत्र स्थितिग्रहणंकिमर्थम् , ' अदनेने ' त्येव किं नोच्यते, जीवो नेशाऽभिन्न ' अदना ' दितिप्रयोक्तुंशक्यत्वात् । किंच – स्थितिशब्दस्या-श्रौतत्वेन तद्ग्रहणं नोपपद्यते । नहि ' द्वासुपर्णे ' ( आ० ३-१-१ ) तिश्रुतौ स्थितिशब्दमीक्षामहे । अपिच — स्थितिर्नभेदसाधिका उभयगतत्वात् । नच – स्थितिमात्रं नहेतुत्वेन विवक्षितं किन्तु– अनशनेनस्थितिः, तस्याश्च ईशमात्रग-तत्वेन भेदसाधकत्वमुपपन्नमितिवाच्यम् — तथासति ' अदनाऽनशनाभ्यांचे ' त्येव सूत्रं स्यात् श्रुत्यनुसारित्वा दावश्यकत्वाच्च । किंच – द्वासुपर्णे ( आ० ३-१-१ ) तिश्रुतावन्यपदस्य साक्षादेव भेदाभिधानात् लिङ्गेन साधनायोगइति-

चेत् , उच्यते – स्यादेतत् – यदिजीवेशभेद एकएव स्यात् , तदा अदनेनैव-सिद्धत्वात् स्थितिग्रहणंव्यर्थंस्यात् । नचैवं, किंनाम, द्वौ भेदौ जीवप्रतियोगिक ईशे, ईशप्रतियोगिको जीवे, तत्रोभयत्रापि प्रमाणंवक्तुमुभयग्रहणमिति। नच अदनेनैव जीवप्रतियोगिकईशप्रतियोगिकोभेदःसिध्यति, येनस्थितिग्रहणं व्यर्थं स्यात्। यदत्रोक्तम् – अश्रौतत्वेन स्थितिग्रहणं न कर्तव्यम् , किन्तु – ' अदनाऽनशनाभ्या ' मित्येवसूत्रंकर्तव्य ' मिति । तन्न – स्थितिपदेनानशनस्यैवोक्तत्वात् । श्रौतानशनपदं विहाय किं स्थितिग्रहणेनेतिचेत्, 'अदनाऽनशनाभ्यांचे' त्युक्ते ऽसिद्धिशङ्का स्यात् ' ऋतंपिबन्तौसुकृतस्यलोके ' (का० १-३-१ ) इतिश्रुतौ हरेरपि कर्मफलात्तृत्वाभिधानात् । सा मा भूदिति स्थितिग्रहणम् । स्थितिग्रहणेनापि कथमसिद्धिशङ्का परिहृतेतिचेत् , इत्थम् – यदिजीववदीश्वरस्यकर्मफलात्तृत्वं स्यात्, तर्हि तद्वदेव जननमरणे स्याताम् , तयोरपि कर्मफलत्वात् । नच ते भवतः किंतु – केवलास्थितिरेव । ततश्च – जीववददनमपिनेति असिद्धिशङ्का परास्ता भवति तदिदमुक्तम्— (७ सू.) **नतुस्वास्थित्यैतदपेक्षतइति** ॥ यदपि — ' श्रुतौ अन्यपदाभ्यां साक्षादेव भेदाभिधानात् लिङ्गेन साधनायोग ' इत्यादि । तन्न — अन्यशब्दोऽयंबह्वर्थः भिन्नइत्यर्थेवर्तते, तद्यथा अन्योदेवदत्ताद्यज्ञदत्तइति, तथा संख्यावाचीवर्तते, तद्यथा — एकोऽत्रवटोस्तिइत्याह अन्यस्तु नेति, तद्यः संख्यावाची तस्येदंग्रहणम् ' तयोरन्यः पिप्पलंस्वाद्वत्ति, अनश्नन्नन्योऽभिचाकशीती ' ( आ० ३-१-१ ) तिवाक्यात् तयोर्मध्य एकोऽत्ति एकोनात्तीत्यर्थप्रतीतेः । यद्यपि — द्वित्वसंख्ययापि भेदःसाधयितुंशक्यः, तथापि — भेदशून्येपि हरौविशेषेणापि द्वित्वसंख्यादर्शनात् तत्परित्यागः, ननु – श्रुतिप्रतिपाद्यस्यभेदस्य मिथ्यात्वाङ्गीकारे तत्त्वाऽवेदकत्वलक्षणप्रामाण्याऽभावस्याऽऽपादयितुंशक्यत्वेपि व्यावहारिकावेदकत्वलक्षणप्रामाण्याऽभावो ना ऽऽपादयितुंशक्यः, श्रुति प्रतिपाद्यस्य व्याहारिकत्वे श्रुतेर्व्यावहारिकावेदकत्वस्यावर्जनीयत्वात् । एवंच — वेदे यादृशं प्रामाण्यं न तदभाव आपादायितुंशक्यः, यदभाव आपादयितुंशक्यः नास्त्येव तत्प्रामाण्यं वेद इति अप्रामाण्यापादनमयुक्तमित्याशयेन शङ्कते – **तत्त्वावेदकत्वेति** ॥ तत्त्वावेदकत्वल-

क्षणप्रामाण्याभावा ऽऽपादनं नायुक्तं व्यापकनिवृत्त्या व्याप्यस्य व्यावहारिकावेदकत्वलक्षणप्रामाण्यस्यापि निवृत्तिसूचनोपयुक्तत्वादिति परः परिहर्तुमुत्सहेतापि तत्परिहाराय अनयोः प्रामाण्ययोः र्व्याप्यव्यापकभावोनास्तीति ज्ञापनाय तत्वावेदकत्वलक्षणप्रामाण्याभावेपि व्यावहारिकं तदस्तीत्युक्तम् । एतेन — तत्वावेदकत्वलक्षणंप्रामाण्यं नास्ति व्यावहारिकं तदस्तीत्येव वक्तव्यम् , अपिशब्दो व्यर्थ इति परास्तम् । **तत्वमसीत्यादीति** ।। यद्यपीदंवाक्यं न निषेधः, तथापि — भेद प्रतियोगि प्रतिपादकत्वान्निषेधोपचारः कृतः । **तदनुवादेनेति** ।। 'तत्वम' स्यादिवाक्येन तदनुवादेन ऐक्यानुवादेन प्राप्तेन निमित्तेन अयं भेदप्रतिपादकत्वेनाऽभिमतो वाक्यविशेषो निषेधः निषेधकार्यकारी किं न स्यादित्यर्थः । एतेन — 'द्वासुपर्णे' त्यादिवाक्येषु निषेधाभावात् निषेधः किं न स्यादिति परास्तम् — **तदैक्यस्यैव मिथ्यात्वसाधकत्वेनेति** ।। औष्ण्यं मिथ्या प्रतीतत्वात् शुक्तिरजतवदित्यनुमानस्येति भावः । एतेन — अग्निरनुष्णः पदार्थत्वात् इत्यस्य मिथ्यात्वाविषयकत्वात् वैषम्यमिति परास्तम् ।

**पूर्वपक्षस्तु**—रुद्रस्यैवेदंद्युभ्वाद्यायतनत्वं भवेत् अत्रोक्तप्राणाधारत्वस्य 'प्राणानांग्रन्थिरसि, प्राणेश्वर' इत्यादिना रुद्रेप्रतीतेः, तथा — द्युभ्वाद्यन्तरिक्षायतनत्वस्य च 'रुद्रोवावलोकाधार' इति तस्मिन्नुक्तत्वात् , मन आयतनत्वस्यापि तस्मिन् 'रुद्रे वै मन ओतंचप्रोतंचे' ति श्रुतेः, 'अन्तकः, कृत्तिवासाः, पिनाकी' त्यादिरुद्रालिङ्गेन एतच्छ्रुतीनां विष्णुपरत्वस्य कथमप्ययोगात् । दृष्टफलविधायकरुद्रवाक्यदृष्टान्तेन तत्सर्वाश्रयत्व प्रतिपादकवाक्यप्रामाण्यानुमानेन तस्य सर्वाश्रयत्वसिद्धेः । अथवा — प्रकृतेर्द्युभ्वाद्यायतनत्वं द्युभ्वादीनां प्रकृतिकार्यत्वेन प्रकृतेरेव तदाश्रयत्वस्योचितत्वात्, 'यद्भूतं च, भवच्च, भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतंचे' ति श्रुतेश्च दृष्टफलविधायक, कपिलवाक्यदृष्टान्तेन प्रकृतेः सर्वाश्रयत्वाभिधायककपिलागमप्रामाण्यानुमानाच्च । जीवस्यवा एतत्द्युभ्वाद्यायतनत्वम् 'अराइव रथनाभौ संहता यत्र नद्यः सएषोऽन्तश्चरते बहुधाजायमान' इति जीवलिंगात् , तस्य जीवत्वादेव तस्य प्राणित्वप्रसिद्धेर्द्युभ्वाद्यायतनत्वस्य संभावितत्वात् । वायोर्वा एतत्द्युभ्वाद्यायतनत्वं विषयीभूतलोकाधारत्वस्य 'वायुनावै-

गौतमम्त्रेणे ' ति वायौ श्रुतिसिद्धत्वात्, तस्य प्राणाधारत्वप्रसिद्धेश्च, विष्णोर्द्युभ्वाद्यायतनत्वप्रसिद्धावपि नासावत्रोच्यते बहुधाजन्मबाधात्. ननु — बहुधाजायमानत्वरूपजीवलिंगबाधात् नासौविष्णुः तर्हि – परविद्याविषयत्वाद्यविष्णुलिंगबाधात् न जीवादयोपि इति चेत्, न—जीवेशाऽभेदेन विष्णुलिंगस्य जीवे व्यपदेशसंभवात् । अतः – परविद्याविषयो द्युभ्वाद्याश्रयो विष्णोरितरत्वेन भवद्भिरंगीकृतौ जीवादिरेवेति तस्यैव अदृश्यत्वादिगुणत्वमिति ।

**सिद्धान्तस्तु** — विष्णोरेवेदंद्युभ्वाद्यायतनत्वं ' तमेवैकंजानथात्मान ' (आ०. २-२-५) मिति आत्मशब्दात्, ' अमृतस्यैषसेतु ' रिति मुक्तोपसृप्यत्वव्यपदेशाच्च । ननु – विष्णुप्रापकवत् रुद्रप्रकृत्योरपि प्रापकसद्भावात् तयोर्द्युभ्वाद्यायतनत्वं किं न स्यादिति चेत्, न – रुद्रादिशब्दानां सावकाशत्वेन ' प्राणानांग्रन्थिरसी ' (नारा. उ. ३५ - ) त्यादि वाक्यस्य रुद्रपरत्वाऽनिर्णयेनाऽसाधकत्वात्, निरवकाशानांच भस्मधरोग्रादिशब्दानामभावात्, प्रागुक्तसावकाशसाधकसद्भावेपि निरवकाशात्मशब्दाभावादेव न जीवो वायुश्च तत्प्रापकत्वेनाभिमतस्य बहुधाजन्मादेः ' अजायमानो बहुधाविजायत ' ( तै. आ. १२ ) इति श्रुते र्विष्णावेव संभवात् । ननु – किं जीवलिंगस्य विष्णुपरत्वप्रतिपादनाऽऽयासेन जीवस्यैव द्युभ्वाद्यायतनत्वे विष्णोस्तल्लाभसंभवात् । नच – उक्तहेतुविरोधः – जीवेशाऽभेदाभिप्रायेण जीवेप्यात्मशब्दोक्तिसंभवादिति चेत्, न — ' जुष्टं यदापश्यत्यन्यमीशमस्यमहिमान ' (आ.३ १ २) मिति भेदव्यपदेशात्, ' द्वासुपर्णासयुजासखाये '(आ) ति कर्मफलात्तृत्व तदभावरूपविरुद्धधर्मव्यपदेशाच्च । ननु – जीवस्य कस्माच्चिदीशादन्यत्वमुच्यते न परमात्मनः, अतोनतयोर्भेद इति चेत्, न– ' द्वेविद्येवेदितव्ये ' ( आ०. १ १ ४ ) इत्यस्य विष्णुप्रकरणत्वात् । तस्मात् विष्णुरेव द्युभ्वाद्याश्रयः परविद्याविषयश्चेति सिद्धम् ( अ० १. )

---

( २ - अधिकरणम् )

ॐ भूमा संप्रसादादध्युपदेशात ॐ ( सू० ८ )

**अत्रप्राणेति** ।। ' उपक्रमेणे ' ति स्वरूपकथनार्थम् । साधारण्यव्युत्पा-

दनस्य श्रुतिद्वयोपन्यासमात्रसाध्यत्वात् । **तच्छंदोगश्रुताविति ॥** अनेनैतदधिकरण प्रतिपाद्यस्याऽऽनंदमयाधिकरणप्रतिपाद्यस्य च पूर्णानंदत्वेन प्रतीयमानत्वम् , आनंदमयाधिकरणतच्छ्रुतिभ्यां , अस्याधिकरणस्य संगतिरित्युक्तामितिबोध्यम । **अत्रनामेति ॥** अत्र यद्यपि प्राणमभिधाय तदुत्तममनुक्त्वा भूम्नआम्नातत्वात् मुख्यप्राणो भूमेत्येव वक्तव्यम् मुख्यप्राणो भूमेति पूर्वपक्षंप्रति एतन्मात्रस्यैवोपयुक्तत्वात् , तथापि — यत्प्राणोक्त्यनन्तरं भूमाऽऽम्नत : सप्रणो मुख्यएव कुतः, विष्णुरेव किं न स्यादित्याशंकानिरासाय सरस्वतीपतित्वरूपप्राणलिंगप्रदर्शनाय प्राणस्य आशायाभूयानिति आशोत्तमत्वंचाऽभिधायेत्युक्तम् । आशाशब्देन सरस्वती विवक्षितेति कुतोविज्ञेयं श्रीरेवविवक्षिता किं न स्यात् इत्याशंकापरिहाराय नामवागादितारतम्यम् आशावसानमुक्त्येत्युक्तम् । **समासंव्यतिषंददहेदिति ॥** समासमितिक्रियाविशेषणम् । विअतिसंमित्युपसर्गत्रयम् । ततश्च समासं यथा भवति तथा संकुच्येतियावत् । पित्रादीन्दहेत् , तदा, एनं=दाहकं पितृहावै त्वमसीत्यादिकं नब्रूयुरित्यर्थः । व्यतिषमित्यस्य व्यत्यस्येत्यर्थइत्यप्याहुः । **पूर्णसुखत्वाभिधानादिति ॥** नन्विदमत्रायुक्तंवर्तते, किमत्रायुक्तंवर्तते, पूर्णसुखरूपत्वाभिधानात् विष्णुरेवायंभूमेति अन्योन्याश्रयात् । तथाहि — प्राक्भूम्नोविष्णोरितरत्वे आनंदमयत्वंच विष्णोरितरस्यैवेति आनंदमयत्वस्याऽऽक्षिप्तत्वेनानन्दमयत्वसिध्यर्थमेव भूमत्वस्य साध्यमानत्वात् भूमत्वसिद्धौ पूर्णसुखत्वसिद्धिः पूर्णसुखत्वसिद्धौ भूमत्वसिद्धिरिति इतिचेत्

संस्तुत्य चरणौ सत्यनिधेः सम्यग्जगद्गुरोः ।
दुर्घटस्यापि चोद्यस्य वक्ष्येऽभिनवमुत्तरम् ॥

तथाहि ॥ भूम्नः विष्णोरितरत्वे प्रागुक्तानंदमयत्वस्यैवाक्षिप्तत्वेन पूर्णसुखरूपानंदमयत्वस्य विष्णुलिंगत्वाऽनपायात् , निरवकाशेन पूर्णसुखत्वेन भूम्नो विष्णुत्वं प्रसाध्यते नानंदमयाधिकरणोक्तानंदमयत्वंविष्णोरेव नान्यस्येति साधने बाधकाभावात् । नचास्यनिरवकाशत्वमसिद्धमिति वाच्यम् — अव्यक्तादितृणांतास्तु विप्रुडानन्दभागिन ' इति अन्येषां पूर्णसुखत्वनिषेधात् । **नामादीनां सर्वेषामिति ॥** नन्वसिद्धोहेतुः ' प्राणोवा आशा-

याभूया ' ( छा०. ७ - २३ ) नितिप्राणस्याशोत्तमत्वाभिधायकवाक्यवत् ! भूम्नो नामादिसर्वोत्तमत्वाभिधायक ' भूमावानामादिभ्यः सर्वेभ्योभूया ' नितिवाक्यस्यादर्शनादितिचेत्, सत्यम् – इहभूमावानामादिभ्यः सर्वेभ्योभूया ' नितिवाक्यंनास्ति, तथापि प्राणवादिनोऽतिवादित्वमुक्त्वा, एषतुवाअतिवदति यः सत्येनाऽतिवदति ' इति तुशब्देन प्राणवादिनः सकाशात् सत्याख्यभगवद्वादिनो विशेषाभिधानेन तस्य नामादिसर्वोत्तमस्यैवासिद्धेः । परमश्चसौ अर्थश्चेतिविग्रहमभिप्रेत्य ' विश्वतः परमा ' मित्येयतदनूद्य्व्याचष्टे—**विश्वतः परमामिति ॥ अस्तुवेति ॥** ' अस्तुवे ' त्ययं निपातसमुदायः अथवेत्यर्थेवर्तते । एतेन अस्तुवे ' त्यस्यांगीकारवादत्वेनाऽपसिद्धांतत्वात् ' नचैतदर्थद्वयंविरूद्ध ' मितिविरोधमाशंक्यपरिहाराभिधानमयुक्तमितिपरास्तम् । **एषतुवेति** ॥ ' एषतुवाअतिवदती ' त्यादिना लिंगेन गम्यमानेन प्रश्नाद्यध्याहारेणेत्यर्थः । **नचैतदर्थद्वयंविरूद्धमिति** ॥ ' प्राणशब्देनविष्णोरुक्तत्वा ' दितिप्राणपदव्याख्यानंच विरुद्धमित्यर्थः । तथाहि — विष्णोर्निरवधिकसर्वोत्तमत्वेन प्रश्नाद्यध्याहाराऽसहिष्णुत्वात् प्राणस्यतु निरवधिकसर्वोत्तमत्वाभावेन तदुत्तमत्वसद्भावात्, प्रश्नाद्यध्याहारसहिष्णुत्वादिति, सत्यं – निरवधिकोत्तमत्वात्, तदपेक्षया उत्तमोनास्तीति तथापि — प्रश्नाद्यध्याहारो नयुज्यत ' इति गूढाभिसंधिरुत्तरं माह – **अन्तर्यामिविवक्षयेति ॥** स्वाभिसंधिमुद्घाटयितुं दृष्टांतमाह—**आत्मन आकाशः संभूत इत्यादिवदिति ॥** भूताकाशवत् अन्तर्नियामकस्यहरेः उत्पत्तिविधुरत्वेपि प्रादुर्भावमात्रविवक्षया ' आत्मन आकशःसंभूत ' इत्यादौ संभूतत्वव्यपदेशवत् इहापिप्राणवद्धरेरुत्तमाभावेपिप्राणान्तर्यमिरूपापेक्षया मूलरूपस्यस्वेच्छैयैवाऽनुग्रहकर्तृत्वरूपविशेषसद्भावेन तदभिप्रायेण प्रश्नाद्यध्याहारेणोत्तमाभिधानं युज्यतइतिभावः । एतेन विष्णोः प्राणपदवाच्यत्वेन विष्णुग्रहणसंभवात् अन्तर्यामिविवक्षयेतिव्यर्थमितिपरास्तम् ।

**पूर्वपक्षस्तु**–अयंभूमामुख्यप्राणो भवेत्, प्राणस्योत्तमत्वमुक्त्वा ' तदुत्तममनुक्त्वा भूम्न आम्नातत्वात् ' शूलेन समासंव्यतिपंदहे ' दितिउत्क्रमणश्रवणाच्च । नचेदंलिंगंविष्णाववकाशमर्हति सर्वगतत्वात् । ततश्च आनंदमयोपिसएवेति ।

सिद्धान्तस्तु — विष्णुरेवायंभूमा, पूर्णसुखत्वात्, तस्यचान्यत्रनिरवकाशत्वात्,

किंच — अस्यभूम्नः सर्वेषामुपर्युपदेशः श्रूयते; नचासावन्यत्रावकाशंलभते। नचोपक्रमे प्राणशब्दश्रवणात्कथमसौ विष्णुरितिवाच्यम् प्राणशब्देनापि विष्णोरुक्तत्वात्। नचोपक्रमणलिंगविरोधः 'तमुत्क्रांतंप्रणोनुक्रामती' (बृ.) तिश्रुतिसिद्धत्वेन तस्य विष्णावेव मुख्यत्वात्। अथवा — अयंप्राणो वायुरेव, तथापि — नतस्य भूमप्राप्तिः, एषतुवाअतिवदती' त्यादिनासूचितेन प्रश्नाद्यध्याहारेण प्राणाद्विष्णोर्भूयस्त्वमुक्ताभूम्नआम्नानात्। ननु — प्राणशब्दस्य विष्णुरूपार्थद्वयंविरुद्धस्वभावम्। वायो 'असिभगवः प्राणाद्भूय' इति, भूमावाव प्राणोभूयानिति, प्रश्नप्रतिवचनसहिष्णुत्वात्। विष्णोः सर्वोत्तमत्वेन तदसहिष्णुत्वादितिचेत्, न—प्राणपदेन वायुंतर्गतस्य विष्णोरभिधानात्। एवंच — 'आत्मनआकाशः सम्भूत' इत्यत्र संभूतपदेन भूतस्य, तदभिमानिदेहस्यच, स्वरूपोत्पत्त्यभिधानेपि, तदभिमानिनोहरेश्च, देहसंबंधप्रादुर्भावयोश्चाऽभिधानवत् 'भूमावाव प्राणोभूया' (छा.)नित्यनेनस्वरूपोत्तमत्वस्य भूम्नः अभिधानेपि वायुंतर्गतप्रसादोन्मुखत्वस्वरूपोत्तमत्वविशिष्टभूमाभिधानसंभवेन प्रश्नप्रतिवचनसहिष्णुत्वात्। किंच — 'सएवाऽधस्तात्सउपरिष्टा' दित्यादिना भूम्निसर्वगतत्वादयो धर्माःश्रूयंते नैते ऽन्यत्रावकाशंलभंते। एवंच — निरवकाशेभ्यः सर्वगतत्वादिभ्यो भूमाविष्णुरेवेतितस्यैवाऽऽनंदमयत्वमिति सिद्धम् (अ० २)

---

( ३ - अधिकरणम् )

## ॐ अक्षरमंबरान्तधृतेः ॐ (सू० १०)

**अक्षरस्योक्ता इति** ॥ अदृश्यत्वाधिकरणैतदधिकरणप्रतिपाद्ययोः अदृश्यत्वेनप्रतीयमानत्वं संगतिरितिभावः। पूर्वपक्षहेतुंवक्तुं संभावकं तावदाह— **तत्राऽक्षरशब्दस्येति**॥ एतेनाऽक्षरशब्दस्य प्रसिद्धेः अक्षरत्रयेपि सद्भावात् तस्य न मध्यमत्वसाधकत्वमितिपरास्तम्। अक्षरशब्दस्यप्रसिद्धं मध्यमाक्षरत्वसंभावनार्थमनुपन्यासात्। **प्रतीतेश्चेति** ॥ संभावकापेक्षया समुच्चयः। **अदृश्यत्वादिलिंगानामिति**। चंद्राद्याधारत्वमादिशब्दार्थः। **अत्रेति** ॥ अत्ताचराचरेतिसूत्रे सर्वात्तृत्वस्योक्तत्वादित्यर्थः। ननु — आ हनसमित्यस्य यच्चत्वभिधूयमाणमित्यर्थकथनमयु-

क्तम् , चंद्रस्याऽभिव्वणायोगादित्यतआह — लताभिमानित्वेनेति ॥ यदूर्ध्वमिति ॥ हेगार्गि दिवो यदूर्ध्वं पृथिव्या यदर्वाक् यच्चद्यावापृथिव्योरन्तरा मध्ये येचेमेद्यावापृथिवी, यच्चभूतम् = अतीतम् , यच्चभवत् = वर्त्तमानम् , यच्चभविष्यत् , तत्सर्वमाकाशे = श्रीतत्वे मध्यमाक्षरे, ओतम् = आश्रितं , प्रोतं = विशेषेणाश्रितम् , इत्याचक्षतइत्यर्थः । 'यउत्रिधा' त्विति श्रुतेः अन्यत्रव्याख्यानात् भर्त्तासन्निति श्रुतिंव्याचष्टे— एकोदेवइति ॥ सचेति ॥ अनेन स परमात्मा, स्वगतंभारं , निधाय अवतार्य, परास्येतियावत् । तंभारंभर्त्तुं नेच्छति तदा असौभारः नश्यतीतिश्रुतेर्योजनोक्ताभवतीति । इतः परं टीकायां श्रूयमाणम् 'एवञ्च तद्बैवंप्राण 'इत्युक्तप्राणस्योच्यत' इतिवाक्यं प्रक्षिप्तम् । अवश्यंचैतदेवंविज्ञेयम् , अनाकांक्षितत्वात् , अन्वयाभावाच्च । 'भर्त्तास' न्नितिवाक्ये विष्णुवाचकपदाभावात् नेदंवाक्यंविष्णुपरमितिशंकानिरासाय प्राणस्योच्यतइतिवाक्यं श्रुतिव्याख्यानावसर एव ह्यीक्ष्यते लक्ष्मीश्च पत्न्याविति श्रीलक्ष्मीपतित्वेनोक्तः स देव इति तच्छब्दव्याख्यानेनैव तच्छंकानिरासस्योचितत्वात् । 'यस्मिन्निदं सं च विचैधिसर्व' मिति विष्णुपरत्वशंकानिरासाय तदेव ब्रह्मेत्यर्थ इति श्रुतिव्याख्यानस्य कृतत्वात् , प्राणस्योच्यतइत्युक्त्या विष्णुपरत्वशंकानिरासायोगाच्च । अत्रोक्तप्राणो न विष्णुः ततश्च नेदंवाक्यं विष्णुपरमितिवदंतंप्रति प्राणस्योच्यतइत्युक्तेरयोगाच्च । प्राणस्यविष्णुत्व सिध्यर्थमुक्तलिङ्गस्य अवश्यमनुसरणीयत्वाच्च । ननु—सर्वाधारत्वस्यविष्णुलिंगत्वात् तेनैव विष्णुत्वसाधनसंभवात् आज्ञामात्रेण सर्वाधारत्वरूपगुरुतरलिंगाश्रयणं व्यर्थमित्यत आह — यदेति ॥ कैमुत्यार्थं तदाश्रयणमिति भावः । 'अस्थूलमन' ण्विति भाष्यस्य अनन्वयशंकापरिहाराय योग्यपदाध्याहारेणाऽन्वय माह — ( सू० १२ ) सकलवस्त्विति ॥ व्यावृत्तेश्चेत्यस्य व्याख्यानं व्यावृत्तिकथनादिति । ततश्चेयं भाष्ययोजना— अस्थूलमनण्वित्यादिना वाक्येन अन्यवस्तुस्वभावानां स्थूलाण्वादीनां व्यावृत्तेः कथनाच्च ब्रह्मैवाऽक्षरमिति । ननु —अस्थूलमनण्वित्यादिश्रौतपदानां लौकिकस्थौल्याद्यभावपरतया व्याख्यानमयुक्तम् , अतमोवाय्वित्यनयोरपि लौकिकतमोवायुनिवृत्त्यर्थकत्वप्राप्त्या परमेश्वरस्याऽलौकिकतमोवायुच्छायाकाशप्रसंगादित्यत आह — तमोवाय्वादीनामिति ॥ आदिशब्देन छायाकाशयोर्ग्र-

हणम् । अस्थूलमित्यादिप्रायपाठेपि अच्छायमित्यादेः सर्वात्मना च्छायादि निषेध एवार्थोग्राह्यः । अलौकिकच्छायादेरप्रामाणिकत्वेन प्रायपाठस्य त्याज्यत्वात् । अन्यथा ' अदुःखमसुख ' मित्यादौ प्रायपाठानुसरणाय अदुःखमित्यस्य प्राकृतदुःखराहित्यमर्थः स्यादिति भावः । यद्यपि — इदंवाक्यमत्र न श्रूयते, अपितु — उत्तरमूलव्याख्यानावसरेश्रूयते, तथापि — तद्वाक्यमत्रैवद्रष्टव्यम् , अस्थूलादिपदव्याख्यानानंतरं प्रायपाठादच्छायमित्यादेरपि प्राकृतच्छायादिराहित्यमर्थः स्यात् ततश्चायुक्तमिदं व्याख्यानमिति शंकापरिहारात्मकस्यास्यवाक्यस्याऽत्रैवोचितत्वात् अथवा—पुनरुक्तमिदंवाक्यं तत्रैव सिंहावलोकनन्यायेन व्यवहित शंकापरिहारस्य बहुलमुपलंभात् ! ननु — अस्थूलमनणित्यादि श्रुत्युदाहरणेन कृतत्वात् ' अस्थूलोऽनणुरूप ' इति स्मृत्युदाहरणं व्यर्थमित्यतः तद्वाक्यमवतारयति — **अलौकिकेति** ॥ ननु — अन्यभावव्यावृत्त्या नाक्षरस्यविष्णुत्वं साधयितुं शक्यम् अन्यभावव्यावृत्तेः मध्यमाक्षरेपि सत्त्वादित्यत आह — **मध्यमाक्षरस्येति** ॥ ' भगवदपेक्षयेत्यतः परं ' तत्श्च न लिंगत्यसावकाशत्व ' मिति शेषः । अनन्याधीनस्थौल्यादिराहित्यस्य हेतुत्वेन विवक्षितत्वात् तस्यच विष्णुमात्रनिष्ठत्वेन न सावकाशत्वमिति भावः ; ननु — नैतच्छ्रुतिबलेन विष्णोरक्षरत्वं प्रतिपादयितुं शक्यं ' न तदश्नाति किंचने त्युक्तस्याऽनशनस्य विष्णौकथमप्ययोगादित्यत आह — **अनेनैवेति** ॥ अनेनैव 'ऐश्वर्यात्पुरुषोत्तम' इतिभाष्ये ऐश्वर्यवचनेनेत्यर्थः । प्रायपाठबलादपि **अयमेवार्थः** प्रतिपत्तव्य इत्याह — **अस्थूलत्वादिति** ॥ अक्षरस्य विष्णुत्वे हेत्वंतरंचाह — **अक्षरश्रुत्यादीनामिति** ॥ यतोक्षरश्रुतीनां विष्णावेव मुख्यता अतो विष्णुरेवाऽक्षरमिति भावः ।

**पूर्वपक्षस्तु** — एतदक्षरं मध्यमं श्रीतत्वमेव, अक्षरश्रुतेः । ' अहं सोम ' मित्यादिना तद्धर्मत्वेनाऽवगत चंद्रसूर्याद्याधारत्वबलात् यद्यक्षरं श्रीतत्वमुच्यते, तर्हि विष्णुलिंगतया प्रसिद्धाऽदृश्यत्वादिबलात् विष्णुरेवाऽक्षरं किंनस्यादिति वाच्यम् , अदृश्यत्वादीनां ' यत्वक्षरमनिर्देश्य ' मित्यादिना सावकाशत्वात् ! नचाऽक्षरश्रुतेरदृश्यत्वादि लिंगानांच मध्यमोत्तमाक्षरयोः साम्ये ऽत्रमध्यममेवोच्यत इति

निर्बंधे को हेतुरिति वाच्यम् — 'नतदश्नाति किंचने' ति अक्षरस्यानशनो-क्तेः । 'तच्च विष्णोर्विरुद्धम्, 'अत्ताचराचरग्रहणा' (ब्र० सू० १-२-१०) दित्युक्तत्वात् । नच मध्यमाक्षरस्यानशनांगीकारे विरोधोऽस्ति, अतो मध्यमाक्षरस्यैव एतदक्षरं तस्यैवाऽदृश्यत्वादिगुणकत्वमिति ।

**सिद्धान्तस्तु**—ब्रह्मैवाक्षरं, 'यदूर्ध्वंगार्गि दिवोयदर्वाक् पृथिव्या यदंतरा द्यावापृथिवी इमे यद्भूतंच भवच्च भविष्यच्चेत्याक्षते आकाश एव तदोतंच प्रोतंचे' (बृ०.५-८-७) त्याकाशाख्यप्रकृतेः सर्वाधारत्वमुक्त्वा 'एतस्मिन् खल्वक्षरेगार्ग्या-काशओतश्चप्रोतश्चे' (बृ०. ५-८-११) ति अक्षरस्य तदाधारत्वश्रवणात् । "एतस्य वा अक्षरस्यप्रशासन' (बृ०. ५-८-९) इत्यादिना आज्ञामात्रेण सर्वाधारत्वश्रवणाच्च, 'अस्थूलमन' (बृ०. ५-८-८) णित्यादिना अन्यवस्तुस्वभावानां स्थौल्यादीनां व्यावृत्त्यभिधानाच्च । तस्मादक्षरं विष्णुरेवेति तस्यैवाऽदृश्यत्वादि सिद्धम् (अ०. ३.)

---

( ४ अधिकरणम् )

## ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ (सू० १३)

ईक्षतिरितिधातुनिर्देशः । तेन तदर्थोलक्ष्यते । ततश्च ईक्षित्याख्यव्यापारश्रवणा-त्, सः पुंस्त्ववान् विष्णुः सच्छब्दार्थइतिसूत्रार्थः । ननु – सइति तच्छब्दग्रह-णं शक्यमकर्तुम्, 'अक्षरमंबरांतधृते' (ब्र० सू० १-३-१०) रित्यादाविव 'तत्तुसमन्वया' (१-१-४) दित्यतोऽनुवृत्तनच्छब्दान्वयसंभवात् । अस्तुवा-तच्छब्दग्रहणं कथंचित्सार्थकं, तथापि — 'ईक्षतिकर्मव्यपदेशात्त' दितिवक्तव्यम् ब्रह्मेतिनपुंसकशब्देन ब्रह्मणः प्रकृतत्वात् । नपुंसकशब्देन प्रकृतस्य पुल्लिंगेन परा-मर्शे कारणाभावादितिचेत्, उच्यते — तदित्यनुवर्त्तमानतच्छब्देनोक्तब्रह्मणि पुंस्त्वं सूचयितुं स इति पुल्लिंगपदम्, पुंस्त्वसूचनंच माभून् ईक्षतिकर्मव्यपदेशात् जडप्रकृतेः जगत्कारणत्वेनसन्नामार्थत्वं, चित्प्रकृतेस्तुस्यात् 'तदैक्षते' त्यु-क्तेक्षणस्य तत्रसंभवादितिशंकापरिहाराय । पुंस्त्वोक्त्या कथंशंकापरिहार इति चेत्,

इत्थम् – ईक्षणव्यपदेशात् अत्रोक्तं जगत्कारणत्वं नोपादानत्वं किंतु – जगन्निमित्तत्वमेव, तच्च न केवलायाः चित्प्रकृतेः संभवति । केवलाभ्यःस्त्रीभ्यः पुत्रजन्मानुपलब्धेः । नचेश्वरपक्षेऽप्ययंदोषः केवलेभ्यो भरद्वाजादिभ्योद्रोणद्रुपदाद्युत्पत्तिदर्शनादिति । **छन्दोगश्रुतौ सतःप्रतीयतइति** ॥ जन्माधिकरणैतदधिकरणप्रतिपाद्ययोः जगत्कारणत्वेन प्रतीयमानत्वमेव संगतिरितिभावः । **बहुभावाख्येति** ॥ ननु—नेदंविकारित्वश्रवणम्, अपितु– बहुस्यामितिबहुभावालोचनश्रवणम्, 'नहि तदैक्षत अहंगच्छेय' मितिश्रवणं गमनश्रवणम्, येनेदंबहुभावश्रवणंस्यात् । ततश्चाऽसिद्धोहेतुरितिचेत्, सत्यम्—बहुस्यामित्याकारकमीक्षणं श्रूयते, तथापि बहुस्यामित्याकारकज्ञानस्य प्रमात्वेन तद्विषयीभूतं विकारित्वमपि सिध्यत्येवेतिभावेन विकारित्वश्रवणादित्युक्तम् । **तस्मिन्निति** ॥ विष्णौविकारित्वासंभवात्, प्रधानेच तत्संभवात्, प्रधानमेव सच्छब्दवाच्यमित्यर्थः । ननु – यथाविष्णौ विकारित्वमसंभवि तथेक्षणं प्रधाने ऽसंभवि इतिचेत्, न–सर्वोपादानस्य प्रधानस्य ईक्षणं प्रत्युपादानत्वेनोपादानस्योपादेयाश्रितत्वसंभवेन तत्रेक्षणस्य सुलभत्वात् । शिष्यः शंकते – **नन्विति** ॥ **भवेदेतदि** ॥ यद्यस्मिन्प्रकरणे कारणत्वमेवोच्येत तदा प्रधानपरत्वे बाधकाभावात् तन्निरासकैतदधिकरणवैयर्थ्यंस्यात् नचैतदस्ति अपितु ब्रह्मधर्माःश्रूयंते ततश्च अस्यस्थानस्य ब्रह्मपरत्वसमर्थनाभावे ब्रह्मधर्माणामन्यगामित्वबुद्धिः स्यादिति तन्निरासायेदमधिकरणंसार्थकमितिभावः । ननु— अनेकब्रह्मधर्मश्रवणात् पूर्वपक्षानुदयइतिचेत्, न – तज्ज्ञानविधुरस्येहपूर्वपक्षित्वात् ननु – ईक्षतिकर्मव्यपदेशात् विष्णुत्वसाधनमयुक्तं प्रधानस्य आदौ 'बहुस्या' मिति ईक्षणात्मना परिणामः, तदनंतरं तेजः प्रभृतिकार्यात्मना परिणाम' इति पूर्वपक्षिणांऽगीकृतत्वेनेक्षणाऽनुपपत्तेरभावात् इत्यतः सूत्रभाष्ययोः 'ईक्षितिव्यपदेशा' दिति वक्तव्ये ईक्षतिकर्मव्यपदेशादित्युक्तम् तदभिप्रायमाह– **ईक्षित्याख्यव्यापारश्रवणादिति** ॥ **इदमुक्तं भवति** ॥ यदीक्षणं तेजः प्रभृतिकार्यमिव कार्यतया उच्यते नचैवं किंनाम कार्यजनने व्यापारतया उच्यते ततश्च — प्रेक्षापूर्वकारित्वमनेनोक्तं भवति तस्य च जडेप्रधाने ऽसंभवाद्विष्णुत्वसिद्धिरिति ।

ननु – नात्रेक्षणं कर्तृव्यापारतयोच्यते येनानेन विष्णुत्वंसिद्धंस्यात् किं

नाम कार्यतयोच्यते ! अन्यथा — निरवकाशविकारित्व लिंगविरोध इत्याशंकते — **नन्विति ॥**

**पूर्वपक्षस्तु** — एतत्सत् प्रधानमेव भवेत्, नतु विष्णुः यतो बहुभावादि विकारित्वश्रवणात्। नच — परमात्मनो विकारित्वं संभवति, 'अविकारः सदाशुद्ध' इत्यादिना तस्याऽविकारित्वात्। ततश्च — प्रधानमेव सदिति तस्यैव जगत्कर्तृत्वमिति।

**सिद्धान्तस्तु** — 'तदैक्षत' (छा०. ६-२-३) ति ईक्षित्याख्यव्यापारश्रवणात्। तेनप्रेक्षापूर्वकारित्वलाभात् विष्णुरेव सत्, अचेतने प्रधाने ईक्षणस्य कथमप्ययोगात्। माभूत्तर्हि अचेतनाप्रकृतिः चेतनाप्रकृतिः किंनस्यादिति चेत् स्त्रीत्वेन स्वातंत्र्येण सर्जकत्वायोगात्। नच — बहुभावाख्यप्रधानलिंगश्रवणात् स न विष्णुरिति वाच्यम् — 'अजायमनोबहुधाविजायत' (तै०. आ०. १४-) इत्यविकारस्यापि बहुभावश्रवणेन तस्यसावकाशत्वात्। विष्णुरेवतत्स्थानोक्तं सदिति तस्यैव स्त्रष्टृत्वमिति सिद्धम् (अ०. ४.)

---

[५-अधिकरणम्]

ॐ दहरउत्तरेभ्यः ॐ (सू० १४)

**हृत्पद्मस्थत्वलिंगस्येति ॥** यद्यप्यत्रविषयवाक्ये हृत्पद्मस्थत्वरूपधर्माभिधायकलिंगात्मकः शब्दो न श्रूयते, तथाप्येतद्वाक्यसमन्वयाभिधाने हृत्पद्मस्थत्वरूपधर्मसिद्धिर्भवतीति अभिप्रेत्य तथोक्तम्। **एतस्मिन्निति ॥** ब्रह्मपुरे = देहे, दहरम्=अल्पं पुंडरीकं, पुंडरीकात्मकं वेश्म, विद्यते; अस्मिन् आकाशे, यदंतः विद्यते, तदन्वेष्टव्यं, तद्वावविजिज्ञासितव्य' मिति। तं = गुरुंप्रति, शिष्याः, चेच्छब्दोयद्यर्थे। यदिब्रूयुः, किंतदत्रविद्यते, यदन्वेष्टव्यं यद्वावविजिज्ञासितव्यमिति। स = गुरुः, शिष्यान्प्रतिब्रूयात्; यावान्वा अयमाकाशः = आकाशनामाविष्णुः, व्याप्त्यायावान्वर्तते, तावानेव आकाशः = आकाशनामाविष्णुः, अंतः हृदये हृत्पद्मांतर्गतदहराकाशे वर्तते, अस्मिन् = आकाशनाम्नि विष्णौ, उभेद्यावापृथिवी, वर्त्तेते इति सिद्धांतरीत्या श्रुत्यर्थः। अनेनैतदधिकरणप्रति-

. पाद्यस्य अक्षराधिकरणप्रतिपाद्यस्य च चंद्रसूर्याद्याधारत्वेन प्रतीयमानत्वं पूर्वाधिकरणतच्छ्रुतिभ्यामस्याऽधिकरणस्य संगतिरित्युक्तं भवति । **सर्वाधारतयेति** ॥ ' हृत्पद्मस्थत्वं आकाशस्ये त्येतावन्मात्रोक्तौ न सिद्धांतविरोधोभवति, सिद्धान्तिनास्याकाशस्य हृत्पद्मस्थत्वांगीकारात् । तदर्थंसर्वाधारतयेतिविशेषणम् । **नात्रोक्ताकाशो विष्णुरिति** ॥ ' किंतु—प्रसिद्धाकाशएवे ' तिशेषः । कुतोयं प्रसिद्धाकाशइत्यतआह — **तस्यांतइति** ॥ सचाकाशो न विष्णुरितिप्रतिज्ञाय ' तस्यांते सुषिर ' ( तै० महाना० ) मितिशाखांतरस्थ श्रुत्युदाहरणमयुक्तमित्यतः तदभिप्रायमाह — **तत्समाख्यानादिति** ॥ अस्त्वाकाशस्य हृत्पद्मस्थत्वं, तथापि न तस्य सर्वाधारत्वमत्रोच्यते, किंत्वाकाशांतर्गतस्य विष्णोरेव, ततश्च सर्वाधारत्वमाकाशस्ये ' तियत्प्रागुक्तं तदयुक्तमित्याशंक्यनिषेधति — **नचवाच्यमिति ॥ तथासतीति** ॥ ' तस्मिन्यदंत ' रितिवाक्यस्य अस्मिन्आकाशेयदंतः विष्ण्वाख्यंब्रह्म विद्यते तदन्वेष्टव्यमित्यर्थकत्वे ' किंतदत्रविद्यते यावान्वाअयमाकाश ' इतिप्रश्नपरिहारयो रसंगतत्वापत्तेरित्यर्थः । ननु— न प्रश्नपरिहारयोरसंगतिः, तावानेषोंतर्हृदय आकाश ' इत्यनन्तरं 'तत्रब्रह्मविद्यत ' इत्यध्याहारेण योजनायां संगतिसंभवादित्यत आह — **तस्मिन्नित्यत्रेति** ॥ सत्यमध्याहारेण प्रश्नपरिहारयोः संगतिर्भवति, तथापि — अध्याहारंविना आकाशपक्षे प्रश्नपरिहारयोः संगतिवत् विष्णुपक्षे अध्याहारंविना संगत्यभावात् विष्णोरेवसर्वाधारत्वमिति न श्रुत्यभिप्रायः । ' यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम् । वाक्यंवेति सतांनीतिः सावकाशे न तद्भवेत् ' इतिप्रमाणेन अध्याहारंविना योजनासंभवे अध्याहारस्य निषिद्धत्वादितिभावः । अतएव — टीकायां ब्रह्मविद्यत इतिपरिहारं विना ' यावान्वा ' इत्यादेरभिप्रायासंगति ' रित्युक्तम् , अन्यथा — इतिप्रश्नस्य 'यावान्वा ' इत्यादेरभिप्रायासंगति ' रित्यवक्ष्यत् । एतेन — यथा ' किंतदत्रविद्यत ' इतिप्रश्नस्य । ' यावान्वा' इत्यादिपरिहारः आकाशांतर्गतार्थानिरूपकत्वात् सिद्धान्तिपक्षे असंगतः, तथा पूर्वपक्षिमते प्रागुक्ताकाशमेवाविशिष्टं वक्तुं ' यावान्वे ' त्यादिवाक्यं संगतं, तथा सिद्धान्तिमतेपि संगतंभवेत्, ' ब्रह्मविद्यत इतिपरिहारंवक्तुं ' यावान्वाअयमाकाश ' इति विशिष्योक्तिसंभवादितिपरास्तम् ॥

सिद्धान्तिमते अध्याहारंविना नसंगतिरितिदूषणेतात्पर्यात्। नन्वकाशपक्षे प्रश्नार्थ-निरूपकत्वेन 'उभेअस्मि' न्नित्यादेः संगतिसंभवेपि 'यावान्वे' ति वाक्यस्यासं गतिः, प्रश्नोत्तरत्वाभावादित्यतआह – **आकाशपक्षइति** ॥ **हृदयेति** ॥ हृदयाकाशस्थमुपास्यमित्युक्ते किं तत्रस्थं यन्मयोपास्यमिति प्रश्नो भवति, तस्मिंश्चप्रश्ने सति द्यावापृथिव्यादिकं तत्रस्थमितिवक्तुं हृदयाकाशस्य द्यावापृथिव्याद्याधारत्वं-नसंभावितम्, अल्पत्वादित्याशंकापरिहाराय 'यावन्वाअयमाकाश' इति प्रागुक्ताकाशं विशिष्य 'उभेअस्मि' न्नितिपरिहारप्रवृत्तेः, आकाशपक्षे अस्यस्यवाक्यस्यान्वयइतिभावः। ननु — न सिद्धान्तपक्षेप्यध्याहारः, 'यावान्वाअयमाकाश' इतिवाक्यस्य विष्णुपरत्वेन 'किंतदत्रवियत इति प्रश्नोत्तरत्व मित्याशंक्य निषेधति— **नचेति** ॥ समाख्याविरोधादितिभावेनाह — **तस्मिन्निति** ॥ **उत्तरत्रेति** ॥ उत्तरत्रउत्तरखंडे जीवस्य 'एषआत्मे' तिवाक्येन हृत्पद्मस्थात्मत्वाभिधानादितियावत्। जीवस्याप्रकृतत्वात्, 'एष आत्मे' ति वाक्येन तस्य हृत्पद्मस्थत्वमुच्यतइत्ययुक्तमित्यतउक्तं – **परंज्योतिरूपसंपद्येति** ॥ **इदमुक्तंभवति** – 'अथयदेतस्मिन्ब्रह्मपुर' इत्येतस्मिन्वाक्ये हृत्पद्मस्थत्वमुक्तम्, अनंतरं 'एष आत्माअपहतपाप्मे' ति आत्मनो हृत्पद्मस्थत्वमुक्तम्, अनंतरं 'परंज्योतिरुपसंपद्य, स्वेनरूपेणअभिनिष्पद्यत' इति जीवउक्तः, सएव 'एषआत्मे' ति वाक्येन हृत्पद्मस्थात्मतयोक्तः। ततश्च जीवस्यैव हृत्पद्मस्थत्वमिति।

**विष्णुपक्षेपि साम्यादिति** ॥ नन्विदमयुक्तं, विष्णुपक्षे दोषोद्भावनमात्रेण स्वपक्षदोषाऽपरिहारात्। नहि परांगंदग्धमिति स्वांगदाहदुःखं निवर्ततेइति चेत्, मैवं — न ब्रूमो वयमन्वयाभावदोषः सिद्धान्तिनइव ममाप्यस्तीति, येनोक्तदोषः स्यात्; किंतर्हि यथा सिद्धान्तिना ऽन्वयाभावदोषपरिहाराय वाक्ययोजना क्रियते, तथैवा ऽहमपि करिष्यामीति। तथाहि – 'ब्रह्मपुर' मित्यनेनैवं जीवस्थितिसिद्धेः कीदृशं तदितिभावेन 'किंनदत्रवियत' इतिप्रश्ने तत्स्वरूपनिरूपणपरतया 'यावान्वाअयमाकाश' इत्यादिवाक्यान्वयः संभवतीति।

अत्रगुणसूत्रम् — 'गतिशब्दाभ्यां तथाहि दृष्टं लिंगंचे' ति। नन्वयंयोगः शक्योऽवक्तुम्, अत्रोक्तस्य 'अहरहर्गच्छन्त्यएत' मितिसुप्तप्राप्यत्वस्य, ब्रह्म-

शब्दस्यच, ' अरश्चहवैण्यश्चार्णवौब्रह्मलोक ' इति अरण्याख्यसुधासमुद्रा श्रयलोकत्व-रूपलिंगस्यच पूर्वसूत्रोक्तोत्तरेभ्यइत्यनेनैव ग्रहणंनंभवात् इतिचेत्, सत्यम्, उत्तरेभ्य इत्यनेनैव सर्वेषां लाभइति, तथापि कुरुपांडवन्यायेन पृथुग्रहणम्। तथाहि–सर्वेषां साधकानांनिर्दोषत्वेपिअपहतपाप्मत्वादीनांमुक्तेष्वपिसद्भावात् व्यभिचारइत्याशंकाऽऽस्कंदितत्वेन दौर्बल्यम्, सुप्तप्राप्यत्वादीनामन्यत्राऽसंभावितत्वेनतादृशशंकाऽनुदयात्प्राबल्यमिति। एवमुत्तरत्रापि द्रष्टव्यम्; ननु– 'ब्रह्मशब्दस्योच्यत ' इति भाष्यमनुपपन्नम्, 'अहरहर्गच्छन्त्य ' इति वाक्ये हृत्पद्मस्यब्रह्मलोकत्वश्रवणेपि हृत्पद्मस्थेब्रह्मशब्दाश्रवणादित्यत आह – ( १५ - सू० ) **हृत्पद्मस्येति** ॥ यद्यपि हृत्पद्मस्थे साक्षाद्ब्रह्मशब्दो न श्रुतः, तथापि हृत्पद्मस्य ब्रह्मलोकत्वोक्तया हृत्पद्मस्थं ब्रह्मशब्दोक्तं भवतीत्यर्थः। **ब्रह्मेवेति** ॥ वा शब्दात्पूर्वम्, 'इति तदंतर्गते ब्रह्मशब्दश्रवणा द्विष्णुरेवाय ' मिति वाक्यं ग्राह्यम्। वा शब्दात्परम्, अर्थशब्दो ग्राह्यः। ततश्चैवं टीकावाक्यपाठः – ' ब्रह्मैवसर्वाऽश्रयत्वादिना लोकपदोक्तमिति तदंतर्गते ब्रह्मशब्दश्रवणात् विष्णुरेवायमिति वार्थ ' इति। एतेनेदं वाक्यमनन्वितमिति परास्तम्। **कुतोसाविति** ॥ ' इति चे ' दित्यतः परं नेति शेषोबोध्यः। **अनेनेति** ॥ हिशब्दसूचितश्रुत्युदाहरणपूर्वकं विष्णुलिंगत्वकथनेनेत्यर्थः। नन्वेतद्वाक्यस्य विष्णुलोकपरत्वं कुत इत्यत आह — **क्षीराब्धिमध्य-इति** ॥ विष्णुलोकपरत्वमिति शेषः। लिंगच 'तथाहिदृष्ट' मिति भाष्ये लिंगशब्दस्य तथाशब्दान्वयाभिधानप्रयोजन माह – **अरण्याश्रयेति** ॥ 'लिंगं तथा' इत्युक्तया कथमुक्तशंकापरिहार इत्यतः तदभिप्रायमाह – **यथा अहरहरिति** ॥ ' अहरहर्गच्छंत्य एत ' मिति सुप्तप्राप्यत्वं तावत् हृत्पद्मस्थस्योच्यतइत्यविवादम्। स्वापस्य हृदयस्थानत्वात्। तस्मादरण्याश्रयलोकवत्त्वमपि हृत्पद्मस्थस्योच्यत इत्यभ्युपेयम्। तदुभयाभिधायकवाक्ययोः ब्रह्मलोकशब्दश्रवणेन सदृशत्वादिति भावः।

अत्रगुणसूत्रम् — ' धृतेश्चमहिम्नोऽस्याऽस्मिन्नुपलब्धे ' रिति। ' य आत्मा ससेतुर्विधृति ' रिति सर्वाधारत्वश्रवणात्, वाजसनेयसमाख्यानाच्च विष्णुरेवासौ। समाख्याश्रुत्युक्तेपि कुतो विष्णुरित्यत उक्तम् – **अस्येति** ॥

अस्य विष्णोर्महिम्नः समाख्याश्रुत्युक्ते हृत्पद्मस्थे उपलब्धेः स विष्णुरिति सूत्रार्थः। (सू०. १६) **सर्वाधारत्वश्रवणाच्चेति** ॥ ननु — हृत्पद्मस्थे सर्वाधारत्वस्यान्यगतत्ववारणाय हृत्पद्मस्थस्य विष्णुत्वं समर्थ्यते, एवंच हृत्पद्मस्थस्य विष्णुत्वसिद्धौ सर्वाधारत्वस्य अन्यगतत्वनिरासः, तस्याऽन्यगतत्वनिरासेच तेन हृत्पद्मस्थस्य विष्णुत्वसिद्धिरित्यन्योन्याश्रय इति चेत्, उच्यते — नाऽत्र निरुपचरित सर्वाधारत्वाक्षेपः पूर्वपक्षफलं, किंतु — चंद्रादित्याद्याधारत्वरूपसंकुचित सर्वाधारत्वम्। तदुक्तम् — 'विष्णोश्चन्द्रादित्याद्याधारत्वमुक्त' मिति। हेतूक्तं सर्वाधारत्वंचासंकुचितम्। एवंच — यस्यानतिप्रसंगायेदमधिकरणम्, नासौ हेतुत्वेन विवक्षितः, यश्च हेतुत्वेन विवक्षितः न तस्यानतिप्रसंगायेदमधिकरणमिति नाऽन्योन्याश्रय इति। भाष्ये– 'एषसेतु' रिति शाखान्तरस्थवाक्योदाहरणप्रयोजनमाह — **अत्रेति॥ यदुक्तमिति** ॥ यदुक्तं सर्वाधारत्वश्रवणात् विष्णुरेवासाविति तत्रैषा शंका प्राप्नोति–सर्वाधारत्वं विष्णुत्वनिश्चायकमिति कुतोऽङ्गीकर्तव्यम्, येन तेन विष्णुत्वनिश्चयः स्यादिति तत्परिहाराय सर्वाधारत्वस्य विष्णुलिंगत्वे श्रुतिमाह'ऽऽचार्यो भाष्यकार इत्यर्थः (सू०.१७) **युक्त्यंतरेणेति** ॥ समाख्यांतरेणेत्यर्थः। दहराकाशो विष्णुरिति सिद्धान्तिना उच्यत इति मन्यमानस्य शंकाप्यनेनैव निरस्तेत्याह — **दहर इति** ॥ पुंडरीके गगनं, गगने ब्रह्मेत्यत्र मूलभूतं श्रुतिद्वयं स्वयमुदाहरति — **दिव्य इति** ॥ **अन्वयाभावस्तर्हीति** ॥ आकाशस्य विष्णुत्वानंगीकारे 'किंतदत्रविद्यत' इतिप्रश्नस्य 'यावान्वा अयमाकाश' इति परिहारस्याऽनन्वयात् प्रश्नोत्तरभावो न स्यादितिभावः। ननु—तस्मिन्यदंतरिति वाक्यश्रवणानन्तरं किंविद्यतइतिधर्मिप्रश्नएवकर्तव्यः, नतु– 'कीदृश' मितिधर्मप्रश्नः धर्मिनिर्धारणस्य प्राथमिकत्वादित्यतआह—**ब्रह्मपुरप देनैवेति** ॥ उपोद्घातमुक्त्वा वाक्यान्वयमाह—**तथाचेति** ॥ 'यावान्वे' तिवाक्येन कीदृशंब्रह्मेतिप्रश्नस्य कथंपरिहारोभवतीत्यतो 'यावान्वाअयमाकाश' इत्यादेरर्थमाह — **यद्ब्रह्मेति** ॥ 'तस्मिन् यदंत' रितिवाक्ये यद्ब्रह्म अन्वेष्टव्यतयोक्तं तस्य ब्रह्मणः अंतर्हृदये यावान्वा अयमाकाशः बाह्याकाशः, तावान् सर्वोपि, एव आकाशो विद्यते तदाधारतया पृथिव्यादिकंच समाहितमित्यर्थः। अनेन 'यावा' निितिवाक्येन कीदृशंब्रह्मेतिप्रश्नस्या-

ऽऽकाशपृथिव्याद्याश्रयो ब्रह्मेत्युत्तरमुक्तमितिबोध्यम् । कीदृशंब्रह्मेतिप्रश्नस्य 'नवधेनास्यहन्यत' इतिवाक्येनाप्युत्तरमुक्तमितिभावेन तद्वाक्यं व्याचष्टे— **नष्टेपिदेहे ननश्यतीति** ।। अनेन — कीदृशं ब्रह्मेतिप्रश्नस्यनाशरहितं ब्रह्मेत्युत्तरमुक्तमितिबोध्यम् । कीदृशंब्रह्मेतिप्रश्नस्य 'यआत्माअपहतपाप्मे' त्यादिवाक्येनाप्युत्तरमुक्तमितिभावेनाह — **अपहतेति** ।। अनेन अपहतपाप्मत्वादिगुणकं ब्रह्मेत्युत्तरमुक्तमितिबोध्यम्। यावान्वे' ति वाक्यस्य प्रश्नवाक्येन सह—प्रकारांतरेणान्वयमाह— **अथवेति** ।। ननु — हृत्पद्मस्थात्मा विष्णुरित्ययुक्तम् , तस्मिन् आत्मनि 'एतत्सत्यंब्रह्मपुर' मितिवाक्ये ब्रह्मपुरत्वेनोक्तस्य ब्रह्मत्वायोगादित्याशंक्य निषेधति— **नचेति ।। एतच्छब्देनेति** ।। एतच्छब्देन शरीरस्य प्रकृतत्वात् ब्रह्मणः अप्रकृतत्वात् ब्रह्मैव पूर्णत्वात् पुरमितिव्याख्यानमनुपपन्नमितिचेत् इत्यर्थः । **शरीरनाशइति** ।। 'न वधेनास्यहन्यत' इति — अव्यवहितपूर्ववाक्येन शरीरनाशेप्यविनष्टतया ब्रह्मणः प्रकृतत्वात् 'एतत्सत्यंब्रह्मपुर' मितिवाक्येनापि— ब्रह्मोक्तिसंभवादित्यर्थः । **तेषांचजीवेऽसंभवादिति** ।। इतःपरं टीकायां श्रूयमाणं 'नचवाच्यं मुक्तजीवे तत्संभवात् , जीवएवभाविभावेनोच्यतइति, मुक्तस्यापि स्वातंत्र्येण तत्संभवा' दितिवाक्यद्वयं प्रक्षिप्तम् । अवश्यं चैतदेवंविज्ञेयम् , उत्तरसूत्रव्याख्यानावसरे टीकायां 'नचवक्तव्य' मित्यादिना जीवस्य भाविभावेनाऽपहतपाप्मत्वादिकमुच्यतइत्याशंक्य मुक्तस्यापि परमेश्वरप्रसादादेव तद्गुणाविर्भावेन स्वतोऽपहतपाप्मत्वाद्यसंभवादितिभाव' इतिपरिहारस्याऽभिहितत्वात् उत्तरसूत्राभिप्रायस्य पूर्वसूत्राऽभिप्रायकथनावसरे निरूपणायोगात् । अन्यथापौनरुक्त्यंस्यादिति । ( सू० २१ ) **तस्यांऽशतोपिसर्वगतत्वादिति** ।। ननु — सर्वगतस्याल्पस्थानस्थितिरनुपपन्नेत्ययुक्तम् , व्याहतेः । नहि सर्वगतमेकदेशे नास्तीतिशक्यतेवक्तुम् । सर्वगतत्वाभावप्रसंगात् । नचाल्पएव स्थितिरनुपपन्नेत्युच्यते । नचैवंसति व्याहतिरितिवाच्यम् — अस्माभिरपि अल्पस्थितिमात्रस्याऽभिधानेन अल्पएवस्थितेरनभिधानात् । नच — साकल्येनाल्पस्थानस्थितिरनुपपन्नेत्युच्यतइतिवाच्यम् — एवंसति सर्वगतस्यापि व्योम्नः साकल्येनाऽल्पस्थानास्थितत्वमङ्गीकृत्य परमात्मनः तदाक्षेपानुपपत्तेः । तथाहि — व्योमांशानां

किं व्योमैक्यं , उत भेदः । आद्ये तदंशस्यापि सर्वगतत्वेन साकल्येनाऽल्पस्थानस्थित्यंगीकारानुपपत्तिः । द्वितीयेऽपि व्योमांशानामेवाऽल्पस्थानस्थितत्वेन व्योम्नः तदभावेन तदंगीकाराऽनुपपत्तिरेवेतिचेत् उच्यते— अभिन्न एव व्योम्नो व्योमांशः, तथापि घटाभिन्नस्यापि रूपस्य त्वचा घटग्रहेपि अग्रहवत् विशेषबलेन व्योम्नो व्याप्तत्वेऽपि तदंशानां मूर्तत्वात् साकल्येनाऽल्पस्थानस्थिति र्युज्यते । ततश्च – तदभिन्नत्वादाकाशस्यापि अल्पस्थानस्थितिर्युज्यते । नचैवं विष्णवयवानां संभवति, तद्वत्तेषामपि सर्वगततया प्रमाणासिद्धत्वात् । ततश्चाऽऽकाशस्याल्पस्थानस्थितत्वमंगीकृत्य विष्णौ स्तदाक्षेपो युज्यतएवेति ॥

**पूर्वपक्षस्तु** – आकाशएवाऽयं हृत्पद्मस्थः 'दहरोऽस्मिन्नंतराकाश' (छां. ८-१-१) इति हृत्पद्मे दहराकाशस्थिति श्रवणात् । 'तस्यान्तेसुषिर ( महाना. ११ मिति समाख्यानाच्च । नच — अस्त्वाकाशशब्देन सुषिरमेव, 'तस्मिन्यदन्त' रिति हृत्पद्मस्थाकाशगतः सर्वाधारतयोच्यत इति, तथासति वाक्यान्वयाऽनुपपत्तेः। तथाहि—' तस्मि ' न्नित्यत्र विष्णुत्वाऽभिप्राये 'किं तदत्रविद्यत' ( छा. ८-१-२ ) इति प्रश्नस्य 'ब्रह्माविद्यत इति परिहारंविना ' यावान्वा' (छा.८-१-३) इत्यादेरभिप्रायाऽसंगतिः । अकाशपक्षेतु – अस्त्यस्यान्वयः, हृदयाकाशस्थमुपास्यमित्युक्ते 'किं तत्रस्थित' मिति प्रश्ने 'यावान्वा अयमाकाश' इति प्रागुक्ताकाशमेव विशिष्योभे अस्मिन्नित्यादिपरिहारसंश्लेषात् । नच यावानित्यादिना आकाशस्यो विष्णुः सर्वाधारतया परिहारे कथ्यते इत्यन्वयोपपत्तिरिति वाच्यम् – 'तस्मिन्सर्वं प्रतिष्ठित' मिति साक्षात्सुषिरस्यैव सर्वाधारत्वोक्तिविरोधात् । तस्मादाकाशस्यैव सर्वाधारतया हृत्पद्मस्थत्वम् , जीवस्यैव वा तद्भवेत् । उत्तरत्र 'परंज्योतिरुपसंपद्य स्वेन रूपेणाऽभिनिष्पद्यत एष त आत्मेतिहोवाचे '( छा. ८-३-३ ) ति जीवस्याऽपहतपाप्मेत्यत्र हृत्पद्मस्थात्मतया परामर्शात् , दहरस्थत्वलिङ्गाच्च । न चान्वयानुपपत्तिः विष्णुपक्षे वाक्ययोजनावत् जीवपक्षेऽपि योजयितुं शक्यत्वात् । अतो भगवदितरदेव चन्द्रादित्याधाराक्षरमिति ॥

**सिद्धान्तस्तु** – दहरपद्मस्थो विष्णुरेवभवेत् , ' अपहतपाप्मे ' (छा.८-४-२) त्यादिनोत्तरवाक्ये हृत्पद्मस्थस्याऽपहतपाप्मत्वादिगुणश्रवणात् , ' अहरह-

गच्छंन्त्य एत ' (छा. ८ - ३ - २) मिति सुतप्राप्यत्वाभिधानाच्च हृत्पद्मस्य ब्रह्मलोकत्वोक्तेः तदन्तर्गते ब्रह्मशब्दश्रवणाच्च, ' अथ य आत्मा ससेतु ' (छा०. ८-४-१) रिति सर्वाधारत्वश्रवणाच्च, वाजसनेयके ' य एषोंत हृदय आकाशः तस्मिन्शेते सर्वस्यवशी ' त्याद्युक्त्वा 'एषसर्वेश्वर एष भूताधिपतिः, एष भूतपाल एष सेतुर्विधरण एषांलोकानामसंभेदाये ' (बृ. ६-४-२२) त्यादिना हृदये विष्णोरुक्तत्वेन तत्समाख्यानाच्च, ' दहरं विपापं पुरवेश्मभूतं यत्पुंडरीकं पुरमध्यसंस्थम्, तत्रापि दहर ' (महाना) मिति विष्णोर्हृत्पद्मस्थत्वप्रसिद्धेश्च, नच – प्रश्नोत्तरयोरसंगतिः – ब्रह्मपुरशब्देनैव हृत्पद्मस्थस्य ब्रह्मत्वेसिद्धे स्वरूपमात्रे प्रश्नायोगात् । कीदृशं तदिति भावेन किं तदितिप्रश्ने ब्रह्मस्वरूपनिरूपणाय 'यावा' नित्यादि परिहारश्लेषात् । ' परंज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यत एष आत्मेति होवाचे ' ति जीवपरामर्शात् स इति चेत्, न – तस्यापहतपाप्मत्वाद्यसंभवात् । ' एष संप्रसादोऽस्माच्छरीरात्समुत्थाये ' (छा०. ८-३-४) त्युक्तजीवस्य ' सतत्रपर्येती ' (छा०. ८-१२-३) त्यादिना सत्यकामत्वप्रतीतेः । तत एव विशोकत्वादिसिद्धेरुक्तगुणासंभवाभावात् स एव हृत्पद्मस्थ इति चेत्, न – ' परंज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यत एष आत्मेतिहोवाचे ' ति वाक्ये मुक्तजीवस्योच्यमानत्वेन हृत्पद्मस्थस्य देहान्तर्वर्तितया मुक्तत्वायोगात् । नचवक्तव्यमेतद्वाक्यस्य मुक्तविषयत्वेऽपि मुक्तस्यापि जीवत्वेनाऽस्यैव जीवे अपहतपाप्मत्वादि संभवः अतो जीव एवाऽपहतपाप्मत्वादिगुणो हृत्पद्मगततया भाविभावेनोच्यत इति । मुक्तस्यापि परमेश्वरप्रसादादेव तद्गुणाविर्भावेन स्वतोऽपहतपाप्मत्वाद्यसंभवात् । अमुख्यापहतपाप्मत्वादिगुणोऽपि ' परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यत एष आत्मेतिहोवाच' ति परामर्शबलेन जीव एव हृत्पद्मस्थात्मा किं न स्यादिति चेत्, भवेदेतत् — यदि एप इति जीवं परामृश्य तस्य हृत्पद्मस्थाऽऽत्मत्वं विधीयेत, नैतदस्ति, यं परंज्योतिराख्यं भगवन्तमभिसंपद्य जीवः स्वेनरूपेणाभिनिष्पद्यते एष आत्मेति परमात्मानमेव एष इति परामृश्य तस्यात्मत्वोक्तेः ; ननु — यथाजीवे ऽसंभाव्यमानापहतपाप्मत्वादिगुणश्रवणात् न जीवः, तथा परमात्मन्यसंभाव्यमाल्प जीवलिङ्गस्याल्पस्थानस्थितत्वस्य श्रवणात् न परमात्मापीति चेत्, न – निचाय्यत्वादेवंव्योमवच्चे ' (ब्र०. सू०. १-२) त्यत्र सर्वगतस्यापि विष्णो र्व्योमव-

दहरप्रधानस्थितेरुक्तत्वात्। 'एष आत्मांतर्हृदयेज्याया' (छा.३-१४-३) निति सर्वगततया श्रुत्युक्तत्वाच्च, अतो विष्णुरेव हृत्पद्मस्थः सर्वाधारश्चेति सिद्धम् (अ०. ५)

(६-अधिकरणम्)

ॐ अनुकृतेस्तस्य च ॐ (सू० २२)

**अत्रानुकूल्येनेति॥** आनुकूल्येन गृह्यमाणसुखं 'अनुकूलवेद्यंसुखं, प्रतिकूलवेद्यं दुःख' मिति प्रसिद्धेः, अनुकूलवेद्येतस्मिन् 'अनिर्देश्यंपरमं सुख' (का.५-१३-१४) मिति सुखशब्दवृत्तेश्च, सुखशब्दश्च 'योवै भूमा तत्सुख'(छा.७-१३) मितिश्रुत्या भगवति,लोक व्यवहाराच्च ज्ञानिसुखे प्रसिद्ध इति सुखशब्दविषयमात्रनिष्ठम् आनुकूल्येन गृह्यमाणत्वालिंगम्, उभयत्र प्रसिद्धप्रायमित्यर्थः। एतेन—सुखशब्दस्योभयत्र प्रसिध्द्या प्रकृतलिंगस्योभयत्र प्रसिद्धत्वकथनमयुक्तमिति परास्तम्। नच – पादान्तर्भावाभावः, साक्षादुपचारेण वा साधारणशब्दानामिह समन्वयस्य विवक्षितत्वात्। **अदृश्यत्वाज्ञेयत्वे इति॥** नन्वत्र काठके अज्ञेयत्वमेवोच्यते नत्वदृश्यत्वम्, 'अनिर्देश्य' मित्यस्य निर्देष्टुमशक्यमित्यर्थकत्वेनाऽदृश्यार्थकत्वाभावाद्विति चेत्, सत्यम् अनिर्देश्यमित्येतत् स्वभावात् निर्देष्टुमशक्यस्यैव प्रतिपादकम्, तथापि महावराहपुराणे —

'सम्यग्भाति नभाती' ति जानीयां तत्कथं न्वहम्।
तत्प्रसादमृते दिव्य मनिर्देश्यं परं सुखम्' ॥

इति अनिर्देश्यमितिपदेन दृश्यत्वस्याऽभिहितत्वेन तत्समानाद्यानादिहापि तदेव ग्राह्यमिति भावेन अदृश्यत्वाज्ञेयत्वे कस्यचिदानुकूल्येन गृह्यमाणस्य काठके कथ्यते इत्युक्तम्। पुराणवाक्ये 'अनिर्देश्य' मित्यनेनाऽदृश्यत्वमेवोक्तमित्यभ्युपेयम्। तथाहि— 'जानीयांतत्कथंन्वह मित्यपरोक्षज्ञानप्रार्थनमुक्त्वा तत्प्रसादमृते ऽनिर्देश्यमित्युक्ते तत्प्रसादमृते द्रष्टुमशक्यत्वस्यैव लाभात्। भगवत्प्रसादमृते भगवान् नैव द्रष्टुंशक्यः, ममतु भगवत्प्रसादाभावात् कथं जानीयामिति योजनासंभवात्। अन्यथा भगवत्प्रसादंविना निर्देष्टुमशक्यत्वे निर्देश एव न स्यात्, दर्शनन्तु भवेदेवेति 'कथंनु तद्विजानीया' (का. ५-१४) मिति प्रार्थनानुपपन्ना स्यात्। इक्षुक्षीर-

गुडादीनां माधुर्यस्य पार्थक्येन निर्देष्टुमशक्यत्वेपि अनुभवस्यानुभवसिद्धत्वात् । अनेनास्याऽधिकरणस्याऽदृश्यत्वाधिकरणेन तदधिकरणप्रतिपाद्यनिष्ठाऽदृश्यत्वाद्ज्ञेयत्ववत्प्रमेयप्रतिपादकत्वमेव संगतिरित्युक्तं भवति । **तदेतदितीति** ।। तदेतत् **पूर्वोक्तं** भगवद्रूपम्, अनिर्देश्यं, परमंसुखं = परमसुखात्मकमिति ज्ञानिनो मन्यन्ते । तत्सुखात्मकं भगवद्रूपं कथंन्वहं जानीयाम् । भगवद्रूपं दर्शनायोग्यं किमिति पृच्छति – **किम्विति** ।। उत्तरमाह — **भाति नभातिचेति** ।। भगवदनुग्रहे भाति, अन्यथा न भातीत्यर्थः । **तस्येति** ।। नपुंसकशब्देनाऽप्रकृतस्य तदिति परामर्शायोगादित्यर्थः, सुखपदंतु कोसौ नपुंसकशब्द इति शंकापरिहारायेति बोध्यम । **यदनिर्देश्यमिति** ।। अस्मिन्नेवमन्त्रे ' परमंसुख ' मिति यन्मन्यन्ते इति नपुंसकसुखशब्देन परमात्मानम्, आदौ निर्दिश्य, पश्चात्तदेतदिति तच्छब्देन परामर्शांगीकारात् नपुंसकसुखशब्देनाऽप्रकृतपरामर्शो नेतिभावः । अस्तु वा 'एकोवशी ' (का. ५-१२) ति वाक्योक्तदूरस्थपरामर्शः, तथापि न तत्परामर्शे कारणाभावाख्यो दोष इत्याह — **नच वक्तव्यमिति**।। ज्ञानिसुखस्यैव तच्छब्देन परामर्शांगीकारोयुक्तः, नतु दूरस्थस्य परमात्मनः नपुंसकशब्देन परामर्शसिद्धये-पूर्वोक्तयोजनांगीकारोयुक्तः । स्वरसत एव नपुंसकसुखशब्देन प्रकृतं ज्ञानिसुखमपहाय, दूरस्थपरमात्मग्रहणे कारणाभावादिति न वक्तव्यमिति भावः । एतेन — पूर्वोक्तयोजनापक्षे ज्ञानिसुखापेक्षया अतिसमीपस्थपरामर्शलाभात् दूरस्थपरामर्शे कारणाभाव इत्ययुक्तमिति परास्तम् । नहीतिवाक्यगतसर्वशब्दार्थमाह — **सर्वसूर्यादिजगदिति** ।। ' नच तद्भासे ' ति वाक्ये शेष माह — **भातीतिशेष इति तथापि कुत इति** ।। ज्ञानिसुख इव तदुभयमपि अत्रानुपपन्नमिति भावः । अत्रगुणसूत्रम् – ' अपिस्मर्यते ' इति । नन्वत्राऽपिशब्दस्य समुच्चयार्थकत्वात् स्मर्यतेपीतिवक्तव्यम्, लघुचैवं सति सूत्रंस्यादिति **चेत्**, सत्यम् — अपिशब्दः समुच्चयार्थक इति अन्तेप्रयोक्तव्य इति । तथापि अन्त एव समुच्चयशब्दः प्रयोक्तव्य इति न नियमः, आदावपि प्रयोगो युक्त इति द्योतनायैवमुक्तम् । अत एव 'अपिचकिंचे ' ति आदौ समुच्चयमुक्त्वा दूषणाद्यभिधानं दृश्यते । (२३-सू.) **मामकं मदधीनं मदीयंचेति** ।। यत्तेजः जगद्भासयते, तत्सूर्यादिगतमेव न,

किंतु सूर्यादितेजोनियामकं मत्तेजसा विशिष्टमिति योजनोक्ता भवति । तेन — इदं वचनं सूर्यादितेजोनियामकत्वे, भगवत्तेजसो जगत्प्रकाशकत्वेच मानमित्युक्तं भवति । तदुक्तं तत्वप्रदीपे — 'भाभकं मदधीनं मत्तेज एवाऽऽदित्यादिस्थितं तत्तेजः प्रेरकत्वेनाऽखिलं भासयतीत्यर्थ ' इति ।

ननु 'अपिस्मर्यते' इति सूत्रस्य भाष्यकारीयं 'यदादित्यगतंतेज' इत्यादि स्मृत्युदाहरणमयुक्तम्, एतस्य सूत्रकारवचनत्वात्, नहि सूत्रकारः विप्रतिपन्नं प्रति स्ववचनमेव प्रमाणत्वेनोपादत्त इति संभवति । नच स्ववचनत्वेऽपि परोक्तानुवादरूपत्वेन प्रमाणत्वात् तदुदाहरणं युक्तमिति वाच्यम् -- अनुवादत्वादेव विप्रतिपन्नार्थप्रामाण्याभावात्। तस्मादन्यदेव मन्वादिस्मृतिवाक्यमुदाहर्त्तव्यमिति चेत्, उच्यते — भवेदेतत् मन्वादिवाक्यस्योदाहर्त्तव्यत्वम्, यदि सूत्रकृतो मन्वादिवाक्यमिह विवक्षितं स्यात्, नचैवम्, तत्कुत इति चेत्, यत्रान्यमतोदाहरणमभिमतं तत्र तन्नामग्रहणं करोत्याचार्यः 'आर्त्विज्यमित्यौडुलोमि' रित्यादिना । नच तथास्ति प्रकृते नामग्रहणं, तेन मन्यामहे आचार्यस्य नान्यवाक्यमिहोदाहणत्वेन विवक्षितमिति । कथं तर्हि अनवधृतप्रामाण्यस्य स्ववचनस्योदाहरणमिति चेत्, न — पुराणस्यापि अपौरुषेयत्वात् । अन्यथा वेदवाक्योदाहरणमपि न स्यात्, वेदवाक्यस्यापि स्वेनैवोद्धृतत्वात्, वेदवाक्यंतु सर्वदा एकप्रकारं, पुराणवाक्यं तु परिणामीत्येतत्तु वैषम्यमात्रम् । सौत्रापिशब्दस्यानुक्तश्रुतिसमुच्चायकत्वापेक्षया सूत्रोक्तानुक्तिरूपयुक्तिसमुच्चायकत्वमेव वरमित्यभिप्रेत्यार्थान्तरमाह — **किंचेति** ॥

**पूर्वपक्षस्तु** – ज्ञानिसुखस्यैवाऽऽनुकूल्येन गृह्यमाणत्वं भवेत्, 'परमं सुख' मिति सुखश्रुतेः, नच — सुखश्रुतिः विष्णावपि सावकाशेति तद्ग्रहः — 'तेषांसुखं शाश्वतंनेतरेषा'मिति ज्ञानिसुखस्यैव प्रकृतत्वात् । तस्यैव तच्छब्देन परामर्शस्य युक्तत्वात् ॥ नच वाच्यं—भगवतोऽपि प्रकृतत्वात् तत्परामर्शोयमस्त्विति—तस्य नपुंसकशब्देनाऽप्रकृतस्य तदित्यादिपरामर्शायोगात्, संभवत्समीपपरामर्शं विहाय-दूरस्थपरामर्शग्रहणे कारणाभावाच्च । अतो ज्ञानिसुखस्यैवाऽऽनुकूल्येन गृह्यमाणत्वात् तस्यैवानिर्देश्यत्वादीति ।

**सिद्धान्तस्तु** — विष्णुरेवाऽयमानुकूल्येन गृह्यमाणो भवेत्, 'तमेव-भांतमनुभाति सर्वमिति सूर्या' दितेजसां तदधीनत्वश्रवणात्, 'तस्यभासा सर्व-मिदं विभाती' (का०. ५ - १५) ति सर्वजगत्प्रकाशकत्वोक्तेश्च । न चैत-ल्लिङ्गद्वयं न विष्णोरिति वाच्यम् — 'अहंतत्तेजोरश्मी' दिति श्रुत्या 'यदादित्यगतं तेज' (गी०. १५-१२) इत्यादिस्मृत्याच विष्णुलिंगत्वावगतेः, 'न तत्र सूर्योभाति न चन्द्रतारक' (का०. ५ - १५) मिति श्रुत्या सूर्या-द्यप्रकाश्यत्वश्रवणाच्च आनुकूल्येन गृह्यमाणो विष्णुः । न चेदं न विष्णुलिंगम्— 'न तद्भासयत' इत्यादिस्मृत्या तल्लिंगत्वनिश्चयात् । नच — सुखश्रुतिवि-रोधः—'परमंसुख' मिति सुखश्रुतेरपि तत्परत्वात् । ननु—तेषां सुख' मिति ज्ञानि-सुखस्यैव प्रकृतत्वात् तस्यैव 'तदेत' दिति परामर्श इति चेत्, न — 'चेतनश्चे तनाना' (का. ५-१३) मिति परमात्मनोऽपि प्रकृतत्वात् । नच परमात्मनो न पुंसकसुखशब्देनाप्राकृतत्वात् तदितिपरामर्शायोग इति वाच्यम् — यदनिर्देश्यं परमंसुखं कथं न तद्विजानीयमित्यानुकूल्येन गृह्णन्ति, तदनिर्देश्यं सुखमित्ये-तत्प्रकृतपरमात्मनो रूप, मिति मन्यन्त इति, वाक्ययोजनोपपत्तेः । नच — वक्तव्यं समीपस्थपरामर्शं विहाय कथंचिदेव दूरस्थग्रहणे कारणाभाव इति—सूर्या-दिप्रकाशानियामकत्वादीनां लिङ्गानां अन्यत्रानवकाशेन दूरस्थपरामर्शस्यैव न्याय्य-त्वात् । ततश्चाऽऽनुकूल्येन गृह्यमाणो हरिरेवेति तस्यैवाऽनिर्देश्यत्वादीनि सि-द्धम् (अ०. ६.)

(७ - अधिकरणम्)

## ॐ शब्दादेव प्रमितः ॐ (सू० २४)

**तज्जिज्ञास्यत्वमीशानस्येति** ॥ अनेन जिज्ञासाधिकरणेनदधिकरण-योः जिज्ञास्यत्वेन प्रतीयमानवस्तुप्रतिपादकत्वमेव संगतिरित्युक्तमिति बोध्यम् । ननु—ईशानस्य जिज्ञास्यत्वं, काठके प्रतीयत इत्ययुक्तम् । तत्रोपासनाया एवोक्त-त्वादित्यत आह — **जिज्ञासोपासानयोरिति** ॥ **तदाजिज्ञास्यत्वमन्यस्यैव-प्रसज्जत इति** ॥ उपलक्षणमेतत् । ईशानशब्दोक्तगुणोऽप्यन्यस्यैव स्यात् ततश्च

गुणपूर्णत्वं न सिध्यतीति । ननु — ईशानस्य विष्णुत्वेऽपि न जिज्ञास्यत्वस्य विष्ण्वैकनिष्ठत्वं सिद्ध्यति, ' कुविदंगे ' ( ऋ०. स०. ५ ६-१३ ) ति श्रुत्या सर्वदेवोपास्यत्वरूपजिज्ञास्यत्वस्य वायुधर्मत्वावगमात्, नच — ' ईशानो भूतभव्यस्ये ' ( का०. ४ · १३ ) ति वाक्यवत्कुविदंगेत्यस्यापि इह समन्वयः सिध्यतीति वाच्यम् — तर्हि सर्वदेवोपास्यत्वस्य वायुधर्मत्वोपपादनाय पूर्वपक्षिणः तद्वाक्योदाहरणमयुक्तं स्यात् । वायुपरतया संदिग्धेन ' कुविदंगे ' त्यनेन वाक्येन वायुधर्मत्वनिश्चयायोगात् । एवंचेदमधिकरणमनारंभणीयं व्यर्थत्वादिति चेत्

' आलम्ब्य चरणौ सत्यनिधे स्तस्य कृपावलात् ।
अशक्तोपि समाधातुं वक्ष्येऽभिनवमुत्तरम् ' ।

तथाहि — न त्रमोवयम्, उपास्यत्वप्रतिपादकं सर्ववाक्यं युगपदेव विषयीकृत्य सकृदेवाधिकरणं प्रवर्त्तत इति । किं तर्हि विषयवाक्यसंख्यया बहुवारं प्रवर्तते । एवंचसति यदा काठकवाक्यं विषयीकृत्य प्रवर्तते तदा ' कुविं ' दंगेति वाक्येन देवोपास्यत्वस्य वायुधर्मत्वं पूर्वपक्षी प्रतिपादयति । यदाच— ' कुविदंगे ' ति वाक्यं विषयीकृत्य प्रवर्तते, तदा वाक्यान्तरेण देवोपास्यत्वादीना मन्यधर्मत्वं प्रतिपादयेदिति न कश्चिद्दोष इति । **सर्वदेवोपस्यत्वश्रवणादिति** ॥ ननु — इदं पूर्वग्रन्थविरुद्धम्, पूर्वं ' स च यदि विष्णोरन्यः स्यात् तदा जिज्ञास्यत्वंचान्यस्यैव प्रसज्जत ' इति ईशानस्य विष्ण्वन्यत्वसिद्धौ जिज्ञास्यत्वस्य विष्ण्वन्यधर्मत्वसिद्धिः स्यादित्युक्तम्, इदानींतु सर्वदेवोपस्यत्वरूपजिज्ञास्यत्वस्यान्यधर्मत्वात् ईशनो विष्ण्वन्य इत्युच्यत इति चेत्, सत्यम्— तथापि सर्वदेवोपास्यत्वेन ईशानस्य विष्ण्वन्यत्वसाधनं युज्यते, अधिकारिभेदेन कस्यचिद्विष्ण्वन्यत्वसिध्या जिज्ञास्यत्वसिद्धिः, अन्यस्यतु जिज्ञास्यत्वस्य विष्ण्वन्यधर्मत्वसिध्या ईशानस्य तदन्यत्वसिद्धिरित्यंगीकारत् । अत एव—' प्राणव्यवस्थापकत्वा ' दि हेतुत्रयोपन्यासः । **प्राणव्यवस्थापकत्वस्य वायुलिंगत्वश्रवणादिति** ॥ ननु — यथा सम्राडिति वाक्ये प्राणव्यवस्थापकत्वस्य वायुनिष्ठत्वमात्रश्रवणेपि न तल्लिंगत्वं श्रूयत इति चेत्, न—' यथा सम्रा ' ( ब.प्र ) डिति दृष्टांतोक्तिबलेन तल्लिंगत्वलाभात् । अधिकृतव्यवस्थापकत्वस्य तल्लिंगत्वात्, अन्यथा दृष्टांतोपादानमयुक्तं स्यात् । मध्य-

**मत्वस्यच तद्धर्मत्वोक्तेरिति** ॥ ननु — हेतुकृतं मध्यमत्वंश....प्राणापानयोर्मध्ये स्थितत्वमात्रम्। इहतु 'योयं मध्यमप्राण' इति उच्यमानत्वमन्यदेव 'अक्षरत्वयमीरित' मित्यत्र श्रीतत्वस्यमध्यमाक्षरत्ववत् इहापि प्राणपदवाच्येषु त्रिषु मध्यमस्यैव विवक्षितत्वात्, 'अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत्। अतो मध्यमता माङ्गस्तस्य वेदेषु वेदिन' इति वचनात्।, ततश्चैतच्छ्रुत्युदाहरणमयुक्तमिति चेत्, न — ऊर्ध्वं प्राणमुन्नयती 'ति श्रुतौ प्राणव्यवस्थापकत्ववत् मध्यमत्वमपि ईशानस्यविशेषणमुच्यते। नच — मध्यमदेशस्थितत्वमात्रं विशेषणं भवितुमर्हति। साधारणत्वात्। प्राणव्यवस्थापकत्वरूपमुख्यप्राणलिंगसहपाठात् मध्यमत्वमपि अवान्तरेश्वरत्वरूपमिति मन्वानस्येह पूर्वपक्षित्वेन अवान्तरेश्वरत्वमपि कुतो मुख्यप्राणलिंगमिति शंकापनोदायैतच्छ्रुत्युदाहरणस्योचितत्वादिति। **अयंमन्त्रार्थ इति** ॥ 'कुविदंग मनसा ये वृधासः पुरा देवा अनवद्यास आसन्। ते वायवे मनवे बाधिताय आवासयन्नुषसं सूर्येणे'ति मन्त्रार्थ इत्यर्थः। **अनेनेति** ॥ सूत्रे वामनश्रुतेः प्रमितपदेन निरवकाशत्वप्रयुक्तं प्राबल्यमुक्तम्, एवकारेणतु श्रुतिमात्रस्य लिंगमात्रात्स्वभावप्रयुक्तं प्राबल्यमुक्तमिति भावः। **नाममात्रेणेति** ॥ नामशब्दोऽत्ररूढिपर्यायः, रूढ्या अर्थप्रतिपादकशब्दः श्रुतिरित्यर्थः, योगरूढानां शब्दानां यल्लोकासिद्धश्रुतित्वं तद्रूढिप्रयुक्तमेव, न योगस्य तद्घटकत्वमिति द्योतनाय मात्रशब्दः। **असाधारण इति** ॥ असाधारणधर्मप्रतिपादकशब्दो लिंगमित्यर्थः। समाख्याया वाक्यप्रकरणाभ्यां दुर्बलत्वेन 'पूर्वं पूर्वं बलीयः स्या' दित्युक्तबलीयस्त्वोपपत्तये समाख्यापदम्। अन्ते ग्राह्यमिति भावेन वाक्यं व्याचष्टे—**निराकांक्षेति** ॥ **लिंगस्येति** ॥ लिंगात्मकशब्दस्य स्वार्थबोधजननद्वारा अर्थानुमिति हेतुत्वात्तदानन्तर्यमित्यर्थः। **आत्माप्रकरणादित्यत्रेति** ॥ निरवकाशत्वं विनापि प्रकरणेन समाख्याया बाधदर्शनादिति भावः। ननु — लिंगात्मकः शब्दः स्वार्थप्रतिपादनद्वारा अर्थानुमापकः, वाक्यमपि तथेति तयोरैक्यमित्यत आह—**लिंगवाक्ययोरिति** ॥ **गोत्रभिदमिति** ॥ लिंगात्। गोत्रभिच्छब्दः पर्वतभेत्तारमिन्द्रं साक्षात् प्रतिपादयति। 'प्रवक्षणा अभिनत्पर्वताना' मित्येतद्वाक्यंतु अनेकार्थप्रतिपादनद्वारा अर्थं प्रतिपादयतीत्यर्थः। 'तच्चालिङ्गंविष्णोरेवे' तिमूले एकत्र-

चनं जात्यभिप्रायेणेति भावेन तन्मूलमवतारयति — **तथापीति** ॥ अत्र टीकायां 'न बाहुल्येपि लिंगानां श्रुतिसाम्येनाऽनिर्णयः श्रुतेर्निरवकाशत्वात्, लिंगानां विष्णाववकाशात्, सावकाशादपि निरवकाशस्यैकस्य प्राबल्यादिति भाव' इति वाक्यानि न टीकावाक्यानि । अपितु भाष्ये — 'तच्चलिङ्गंविष्णोरेवे' त्यभिधानात् न्यायविवरणेच 'लिंगानां परमात्मनि अवकाशो विद्यत एवे' त्यभिधानात् तयोर्वैरूप्यमसहमानेन विदुषा तयोरेकरूपसंपत्तये प्रक्षिप्तानि वाक्यानि । कुत स्तर्हि टीकाकृता वैरूप्यं न परिहृतमिति चेत् वैरूप्यस्य वास्तवत्वादिति ब्रूमः । नहि प्रस्थानभेदेनोच्यमानं सर्वमेकविधमेवेति नियमोस्ति । प्रस्थानभेदेनोक्तेः वैयर्थ्यप्रसङ्गात् । अयमत्रविवेकः — भाष्यकृता तानिलिंगानि विष्णोरेवमुख्यानीति वस्तुस्थितिमवलम्ब्य 'तच्चलिंगं विष्णोरेवे' त्याद्युक्तम् । न्यायविवरणकृतातु किं लिंगानां विष्णौ मुख्यत्वसाधनप्रयासेन लिंगानांसावकाशत्वोक्तिमात्रेणाप्यभिमतसिद्धिसंभवादिति भावेन तथोक्तमिति । अवश्यंचैतदेवं विज्ञेयम्, भाष्ये — विष्णोरेव तस्यैवेत्यवधारणद्वयप्रयोगेण लिंगानां सावकाशत्वाभिप्रायवर्णनायोगात् । तर्हि — सावकाशप्रतिपादनायाऽवधारणद्वयकृत्यमस्ति, येन लिंगानां सावकाशत्वाभिप्रायं भाष्यस्य प्रतीमः । नापि प्रक्षिप्तवाक्यस्य टीकान्तर्गतत्वांगीकारे श्रुत्यन्तरेणेत्युत्तरवाक्यं संगच्छते, लिंगानां प्राणनिष्ठतया श्रुत्यन्तरोक्तावपि विष्णाववकाशसंभवात् । नहि यत् श्रुत्या यस्योच्यते तत्तदन्यत्रानवकाशमिति नियमोऽस्ति, येन लिंगानां विष्णावनवकाशं प्रतीमः । नन्वस्तु विष्णोरेव प्राणत्वयोक्तत्वात् 'प्राणव्यवस्थापकत्वं मध्यमन्वेचे' ति लिंगद्वयं, नतु 'कुविदंगे' ति श्रुत्युक्तं सर्वदेवोपास्यत्वं, तस्य वायुनिष्ठत्वेनोक्तत्वादित्यत आह — **वायुत्वमिति** ॥ तस्यैव प्राणत्वोक्तेः वायुत्वोक्तेः, तल्लिंगमपि विष्णोरेवेति भावः । (२५ - सू०) **अङ्गुष्ठमात्रत्वोक्तेरिति**॥ 'प्रमाणेद्वयस' (पा. सू. ५ - २ - ३७) जिति परिमाणे मात्रचो विधानात् अङ्गुष्ठपरिमाणत्वोक्तेरित्यर्थः । एतेन — अङ्गुष्ठमात्र इत्यनेन परिमाणान्तरस्य निषेधात् 'नच वक्तव्य' मिति परिहारमाशंक्य निषेधानुपपत्तिः, परममहत्परिमाणस्याऽणुत्वसमर्थनेऽपि परिमाणान्तरव्यवच्छेदासमर्थनादिति परास्तम् । **नचेति** ॥ विष्णोरङ्गुष्ठमात्रत्वाभिधानं न युक्तमित्यर्थः । उत्तर-

पदस्यैवाकर्षणेऽस्मिन्सूत्रे नञोऽप्रयोक्तव्यत्वेन सूत्रस्याल्पाक्षरत्वसंभवेन बुध्या विवेकेन विरोधपदाकर्षणवैयर्थ्यात् । अपिच—भाष्यकारस्य नाऽपिपदेन विरोध-पदाकर्षणमभिमतं, किन्तु—अध्याहारः, बहुसंख्योपसंग्रहेपि न विरोध इत्यपिशब्द प्रयोगात् । अन्यथा-बहुसंख्योपसंग्रहे न विरोध इत्यवक्ष्यत् इतिचेत् , उच्यते — यदि नञः प्रयोगमकृत्वा अपिपदेन विरोधपदाकर्षणमभिप्रेत्य सूत्रकारः 'संख्योप-संग्रहादपि नानाभावादतिरेकाच्चे' त्येवं सूत्रं विदध्यात् , तर्हि इदंसूत्रं पूर्वाधिकरण-शेषतया कर्मक्रमादिविरोधपरिहाराय हेत्वन्तराभिधानपरमिति विज्ञायेत, तन्माविज्ञा-यि, किन्तु — पञ्चजनादिशब्दे रीश्वरग्रहणे संख्योपसंग्रहादिविरोधपरिहारपरमिति ज्ञायतामित्याशयेन सूत्राल्पाक्षरत्वमप्यपहाय अपिपदेन विरोधपदमात्रमाकृष्य सूत्रे नञः प्रयोगं कृतवान् । अतएव—रज्ज्वा, अयसावा, यावदेव काष्ठादिकं बद्धं तावदेव यथानुकृष्यते, तद्वत् अपिपदेन संबद्धतया यावद्विवक्षितं तावदेवाऽनुवर्त्तत इति सूचनाय अपिपदप्रयोगः कृतः । यदत्रोक्तं भाष्यकारस्य नाऽपिपदेन विरोध पदाकर्षणमभिमतमिति, तन्न—भाष्यकारः अपिशब्दस्य समुच्चयार्थकत्वभ्रमनिरा-साय 'संग्रहादपी'ति यथात्रस्थितानुवादमपहाय 'संख्योपसंग्रहेपी' त्यनूद्य नञन्वय पूर्वकमपिपदं 'न विरोध' इति व्याचख्यावित्यंगीकारात् । **अतिरिक्तस्य शरी-रनियामकरूपस्येति** ॥ नन्वतिरिक्तत्ववचनंव्यर्थं 'स भगवः कस्मिन् प्रतिष्ठित इति, स्वे महिम्नि' ति प्रमाणेन स्वाधारत्वस्य सिद्धत्वादिति चेत् , सत्यम् — अस्त्येव स्वाधारत्वमीश्वरस्य, तथापि इह आधारत्वेनोक्तरूपं वस्तुतोरूपविशेषएव, किं स्वाधारत्वोपपादनाय प्रमाणगवेषणप्रयासेनेतिभावेन सूत्रकृता 'अतिरेकाच्चे' त्युक्तम् । अतएव टीकाकृता तथैवोक्तमिति द्रष्टव्यम् (सू०. १३) **श्रुत्यन्तरा-णामिति**॥ 'सर्वे वेदा यत्पदमामनन्ति' (का. उ.) त्यादि श्रुत्यन्तराणां सर्वशब्दसा-धारण्येन पंचजनस्वरूपस्य निरूपितत्वात् 'वाक्यशेषा' दिति व्यर्थमिति परास्तम्। ननु — 'ज्योतिषैकेषामसत्यन्न' इति ज्योतिषा पंचत्ववचनमनुपपन्नं, काण्वमा-ध्यंदिनश्रुत्यो विरोधापातादित्यत आह — (१४ · सू) **अत्र ज्योतिरन्नशब्द-योरेकार्थत्वमिति**॥ अत्र ज्योतिरन्नशब्दयोरेकार्थत्वमिति ज्योतिषा पंचत्ववचन-मनुपपन्नम्। अथवा— माध्यंदिनश्रुयुक्तात्पंचकादन्यदेव पंचकं काण्वशाखायां विव-क्षितमिति ज्योतिषा पंचत्ववचनमुपपन्नमिति योजना द्रष्टव्या ।

**पूर्वपक्षस्तु** – पंचजनादिशब्दवाच्यो न विष्णुः किन्त्वन्ये तस्य बहुत्व-संख्याविशिष्टवस्तुवाचित्वात्, ईश्वरे चाऽसाधारणधर्मतया बहुत्वायोगात्। नच स्वस्य बहुत्वाभावेपि अन्यगतबहुत्वनियामकत्वात् बहुत्ववाचकशब्दवृत्तिः, तेन चेश्वरस्य बहुत्वनियामकत्वरूपाऽसाधरणधर्मलाभ इति वाच्यम् – वशीकृतबहु-जनेऽपि राजनि बहुत्ववाचित्वशब्दादर्शनात्। न चादर्शनेऽपि अवरादिशब्दव-वृत्तिः किं न स्यादिति वाच्यम् 'सोवरः सोनित्य' इत्यादि श्रुतिबलेनाऽवरशब्द-वाच्यत्वे सिद्धे अवरत्वनियामकत्वस्य निमित्तमात्रत्वाभ्युपगमात्, नच प्रकृते तथा-विधं नियामकमस्ति। 'सर्वे वेदा यत्पदमामनन्ती' (का०. २ - १५) त्यस्य संकोचसंभवेनाऽनियामकत्वात्। प्रतिशरीरमात्मान्तरात्मरूपरूपद्वयस्य प्रामाणि-कत्वेन 'ऋतंपिबन्ता' (का०. ३ - १) वित्यादिद्वित्वसंभवेऽपि प्रतिशरीरं रूपबहुत्वे मानाभावेन बहुत्वायोगात्। यस्मिन्निति सप्तम्या निर्दिष्टस्य वाक्यशेषब लेन आत्मत्वेन तदाधेयानां पञ्चजनाकाशानां न परमात्मत्वम् – एकस्यैवाधाराधेय-भावाभावात्। अतःपञ्चजनादि वाच्यताऽसंभवात् न युक्तं समन्वयसूत्रमिति।

**सिद्धान्तस्तु** – पञ्चजनादिशब्दवाच्यो भगवानेव, बाधकाभावात्। नच–बहुत्वानुपपत्तिर्बाधिका, प्राणादिपञ्चजननियमनाय बहुरूपत्वेन बहुत्वोपपत्तेः। नच—आधाराधेयभावानुपपत्तिः, 'स भगवःकस्मिन्प्रतिष्ठित' इति स्वे महिम्नी' ति स्वाधारत्वस्य प्रमाणसिद्धत्वात् अस्तुवा स्वाधारत्वमनुपपन्नम्, यस्मिन्नित्याधा-रत्वेन विवक्षितरूपस्याऽन्यत्वेन तद्गतप्राणादिषु भगवतः स्थितिमात्रेणाऽऽधाराधे-यभावोपपत्तिः। नन्वस्तु बहुत्वादिकमुपपन्नम्, तथापि पञ्चजनस्य विष्णुत्वे को विशेषहेतुरिति चेत्, न — एतेषु पञ्चजनेषु वाक्यशेषे प्राणादीनां प्राण (त्वादि) प्रदत्वोक्तेः, 'यच्छ्रोत्रस्य श्रोत्र' (तल०. १ - २) मित्यादिना तस्यच विष्णुलिंगत्वात्। ननु–वाक्यशेषोक्तानां भगवल्लिंगेन विष्णुत्वेऽपि न पंचजनानां विष्णुत्वं वाक्यशेषे चतुर्णामेवोक्तत्वेन भिन्नविषयत्वादिति चेत्, न–अस्मिन्वाक्य-शेषे 'अन्नस्यान्न' मिति रूपेऽ कथिते सत्यपि 'तद्देवाज्योतिषां ज्योति' (बृ० ६–४–१६) रिति क्वचिद्दूरोक्तेन पंचत्वसंभवेन भिन्नविषयत्वाभावात्। अतो बहुत्वसंख्याविशिष्टवाचिशब्दवाच्योपि हरिरेवेति युक्तं समन्वयसूत्रमिति

सिद्धम् ॥ (अ. ३.)

---

( ४ - अधिकरणम् )

## ॐ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॐ (सू०१५)

अत्र द्वे दर्शने – 'कारणत्वेन चाकाशा' दिति एकंसूत्रमेकमधिकरणम् । 'समाकर्षा' दित्यारभ्याऽष्टसूत्री अधिकरणान्तरमित्येकम् । कारणत्वेने' त्यारभ्य नवसूत्री एकमधिकरणमित्यपरम् ' तत्राद्यं सत्तर्कदीपावलीकृतो दर्शनम् । 'अथैवं प्रायः पारंगते महासमन्वये तिस्रः सर्वाधिकरणसाधारणाः शंकाः नैकाधिकरणे विशेषतः संगताः ताः निराकरोत्यष्टभिः सूत्रै' रिति सत्तर्कदीपावल्युक्तेः तत्र 'परमात्मनः सर्वशब्दवाच्यत्वं संभवति, तेष्वेव केषांचिन् अर्थान्तरेष्वेव व्यवहाराऽन्यथाऽनुपपत्त्या तत्तच्छब्दवाच्यत्वावगते' रित्येका शंका, 'परमात्मनो मुख्यतः सर्वशब्दवाच्यत्वांगीकारे तत्रैव प्रसिद्धिः स्यात् जगति प्रसिद्धिर्नस्या' दित्यपरा, ननु भवतु यदधीनं सर्वं तत्रैव शब्दजातं मुख्यं तथापि मुख्यतः शब्दवाच्यो न विष्णुरेव अपितु पृथिव्याद्यभिमानिजीवा, मुख्यप्राणश्च 'अस्य यदेकां शाखां जीवो जहाति अथ सा शुष्यति वायुनाहि सर्वे लोका नेनीयन्त '(छा०.६-११-२) इत्यादिश्रुते रित्यन्या इति शंकात्रयं द्रष्टव्यम् । अष्टसूत्र्याः पृथगधिकरणत्वेतु 'सर्वशब्दानां परमात्मवाचकत्वे कथमन्यत्र व्यवहार इत्यतोऽब्रवी' दिति भाष्यं लिंगम् । अन्यथा आकाशशब्दस्याऽन्यत्राचित्वे कथमाकाशशब्दस्याऽन्यत्र व्यवहार इत्यतोब्रवी' दित्येवाऽवक्ष्यत् ।

अधिकरणशरीरन्तु– विष्णोः सर्वशब्दवाच्यत्वे प्राप्तानुपपत्तित्रयपरिहारेण दृढीकरणादस्ति शास्त्रादिसंगतिः, मुख्यतः सर्वशब्दवाच्यत्वं परमात्मन एवेत्युक्तं, तद्युक्तमयुक्तं वेति संदेहः, प्राचीनाधिकरणैरुपपादनं, अनुपपत्तिदर्शनं च, संदेहबीजम्, न युक्तमिति **पूर्वः पक्षः**, परमात्मनः सर्वशब्दवाच्यत्वे केषांचिच्छब्दानामन्यत्र व्यवहारविलोपप्रसंगात् । जगति प्रसिद्धिश्च न स्यात्, परमात्मन इव पृथिव्याद्यभिमानिजीवानां मुख्यप्राणस्यच तत्तन्नियामकत्वेन तत्तच्छब्दमुख्यवाच्यत्वादिति । युक्तमेव सर्वशब्दवाच्यत्वमिति **सिद्धान्तः**, शब्दानांभगवद्वाचकत्वेऽपि

समाकर्षेणान्यत्र व्यवहारसंभवात् । लोकानामन्यत्रैव व्युत्पन्नत्वेन भगवद्वाचकानामपि शब्दानां जगति प्रसिद्ध्युपपत्तेः । वाय्वादिगततत्तन्नियामकत्वस्य तदन्तर्गतभगवदधीनत्वाच्च न वाय्वादीनां तत्तच्छब्दवाच्यता, किंतु विष्णोरेवेति ।

द्वितीयन्तु टीकाकृतोदर्शनम् , अत्रानुव्याख्याने –

' विरोधिसर्वबाहुल्यकारणर्त्तानिषेधिनाम् ।
पृथक्समन्वयार्थानि स्थानान्येतानि सर्वशः '

इति षडधिकरणोपात्युक्तिर्लिङ्गम् । अणुभाष्येच –

' अवान्तरं कारणंच प्रकृतिः शून्यमेव च ' त्यनेन

पूर्वोत्तराधिकरणप्रतिपाद्यमुक्त्वा एतदधिकरणप्रतिपाद्यानुक्तिश्च लिंगम् –

' इदं मतद्वयं सूत्रभाष्यकारविचिन्तितम् ।
एकैकं मंदबोधाय स्वीकृत्यैवाहतुर्मुनी ' ॥

अतो विरोधगंधोऽपि नैव शंक्यो मनीषिभिः ।

**आकाशादिशब्दनामिति** ॥ अत्र यद्यपि आकाशशब्दसमन्वयप्रतिपादनादित्येवोक्ते वाय्वादिशब्दानामपि समन्वयः शक्यो विज्ञातुम् , आकाशग्रहणस्योदाहरणार्थत्वात् । तथापि आकाशशब्दस्याधिभूतवाचकत्वेन अधिभूतवाय्वादिशब्दानामेव ग्रहणं विज्ञायेत, तन्मा विज्ञायि किंतु ओषध्यादिशब्दानामपि ग्रहणमिति ज्ञापनाय आदिशब्दप्रयोगः । अनेनैवाभिप्रायेण सूत्रे आदिशब्दः प्रयुक्तो द्रष्टव्यः । **तैत्तरीयकादिश्रुताविति**॥ अनेनसमन्वयाऽधिकरणप्रतिपाद्यशब्दराश्यन्तर्गताकाशादि शब्दनिर्णायकत्वं तेनाधिकरणेन अस्याधिकरणस्य संगतिरित्युक्तं भवतीति बोध्यम् । **लोकेप्यसंभावितइति** ॥ ननु लोके संभावितःकार्यकारण भावोऽन्यः, 'आत्मन आकाशःसंभूत' इत्यत्र श्रूयमाणकार्यकारणभावोऽन्य इति विषमोयमुपन्यासः। तथाहि लोके तावद्यस्य येन रूपेण कारणत्वं तस्य तेन रूपेण तत्कार्यत्वं विरुद्धं नतु स्वस्य स्वकारणत्वम् । इंद्रादिभ्यो ऽर्जुनादीनामुत्पत्तिदर्शनात्, प्रकृते आत्मरूपादाकाशाद्यरूपस्योत्पत्तिः श्रूयते, नतु आत्मरूपादात्मरूपस्य येन विरुद्धः स्यादिति चेत्, उच्यते—लोके तावद्भिन्नयोरेव कार्यकारण-

भाव उपलब्धः, इन्द्रार्जुनदेहयोः कार्यकारणयोर्भिन्नत्वात्, पित्राद्यचेतनमेव पुत्रा द्यचेतनं प्रति कारणमित्येव सुप्रसिद्धम् । अतः स्वस्यैव कार्यकारणाभावो लोकेऽप्यसंभावित इति। **वाक्ययोजनाऽनुपपत्तेश्चेति** ।। आत्मादेः स्वस्मादाकाशादि रूपः स्वयं अन्यगतसंभवनियामक इत्यर्थ उक्तःस्यात् । तत्र चाकाशगतरूपस्यान्यगतसंभवनियामकत्वे आत्मरूपस्याऽनुपयोगात् । 'आत्मन' इत्यादेरन्वयानुपपत्त्या वाक्ययोजनानुपपत्तेरित्यर्थः । भाष्यकृता विषयपूर्वपक्षाणामप्रदर्शितत्वात्, इदं सूत्रं नाधिकरणान्तरं किंतु पूर्वाधिकरणशेष इति भ्रमनिरासायाह — **एतत्पूर्वपक्षनिरासायेति** ।। **न च कार्यकारणभावविरोधइति** ।। आकाश शब्देन भगवाद्विवक्षायां वाय्वादि शब्देन स एव विवक्षणीय इति कार्यकारणभावविरोधः । तथाहि — असतः सत्तासंबन्धो हि कार्यत्वम्, परमात्मरूपाणामनादि नित्यत्वेन कार्यत्वाभावात् । आकाशांतर्गतस्य रूपस्य आत्मकार्यत्वविरोधः । तथा कारणत्वस्य कार्यसापेक्षत्वात् वाय्वंतर्गतरूपस्य कार्यत्वाभावेन आकाशरूपस्य तत्कारणविरोधश्चेति न वाच्यमित्यर्थः, उत्पत्स्यमानेषु आकाशादिषु अभिव्यक्तेः कार्यत्वं रूपांतराभिव्यक्तिहेतुत्वात् कारणत्वं चोपपन्नमिति गूढाभिसंधिः उत्तरमाह— **आकाशादिष्विति** ।। आकाशादिषु स्थितत्वोक्त्या कथं कार्यकारणभावनिर्वाह इत्यतः स्वाभिसंधिमुद्घाटयति— **तथाचेति** ।। (१६ - सू०.) **सर्वशब्दसमन्वयासंभवमाशंक्येति** ।। पाद चतुष्टयात्मकस्मृत्यनवकाशदोषप्रसंग इत्यधिकरणस्य द्वितीयस्यप्रथमपादे निवेशवत् समन्वयाध्यायगतसर्वाधिकरणसाधारणानुपपत्तिपरिहारकाणामप्येतेषां सूत्राणां क्वचिदन्तर्भावस्यावश्यकत्वात् अत्रांतर्भाव इति भावः । **लोके लक्षणेतरवृत्त्यभावापत्तेरिति** ।। लोकगतवृत्तीनां लक्षणात्वं स्यात्, तथाच — सर्वशब्दावाच्यस्य लक्षणायुक्तेः लक्षणापि न स्यादिति भावः । अस्त्वेवं निरूढशब्दानां गतिः, अन्यत्र यौगिकानान्तु का गतिरित्यत आह — **अल्पेति** ।। **अन्योन्यनिरपेक्षतयेति** ।। यथा — लौकिकनिरपेक्षतया शब्दानां भगवति वृत्तिः, एवं—भगवन्निरपेक्षतया लोके शब्दवृत्तिः किं न स्यादित्यर्थः । अप्रतीतेःलोकवेदानुसारत इतिपदं प्रतीकतयोपादाय व्याचष्टे-**लोकवेदेति**।। 'अनुसारत' इत्यनन्तरम्, 'इत्यर्थ' इति शेषः । ततश्चैवं भाष्ययोजना—परस्य

वाचकाः शब्दाः लौकिकवैदिकव्यवहारासिध्यनुसारतः, इतरेषु समाकृष्य परमात्मना व्यवह्रियन्त उपदिश्यन्त ' इति । **नच प्राचीनसूत्रविरोधइति** ॥ 'साक्षादप्यविरोध' (ब्र. सू० १-२-२८) मितिसूत्रे भगवद्वाचकैः शब्दैः अन्यत्र व्यवहारस्याङ्गीकृतत्वेन रूढयादेरनभिमतत्वात् इहरूढयाद्यङ्गीकारे तद्विरोधः, शरीर-'रूपकविन्यस्तगृहीतेर्दर्शयतिचे' (ब्र. सू. १-४-१) त्यत्र भगवत्संबन्धेना ऽन्यत्र शब्दवृत्त्यंगीकारेण लक्षणाया अभिमतत्वात्तद्विरोधः, 'कल्पनोपदेशा' (ब्र. सू. १-४-११) दित्यत्र अक्षादिशब्दवदुभयत्रापि वृत्त्योः साम्यांगीकारेण इहपुनस्तारतम्यंगीकारे तद्विरोध इति न च वाच्यमित्यर्थः । (१७ - सू. ) **लोकस्य जगत्येवेति** ॥ अनेन लोकस्य बहिर्मुखत्वेन जगद्वाचित्वात् जगद्व्यवहर्तृत्वात् तत्र प्रसिद्धिः, नतु विष्णौ, तत्र व्यवहाराभावादिति सूत्रयोजनोक्ता भवति । **माणवके अग्निशब्दव्युत्पत्तिसंभवादिति** ॥ इयांस्तु विशेषः—माणवकाग्निशब्दयोर्वाच्यवाचकसंबंधाभावात्तज्ज्ञानं भ्रमः, अत्रतु तद्भावात्तज्ज्ञानं प्रमेति । ( १८ - सू. ) **नच वक्तव्यमिति** ॥ तद्यथा धूमसाधनाय न वह्निमात्रानुसरणम्, अपितु आर्द्रेन्धनसंयोगविशिष्टवन्ह्यनुसरणमेव । इहापि प्रयोगेसत्येव वाच्यत्वसाधनाय निमित्तानुसरणं नतु निमित्तमात्रेण वाच्यत्वकल्पनं युक्तमिति न वक्तव्यमित्यर्थः । **मुख्यत एवान्यवाच्यत्वमिति** ॥ परमात्मनो मुख्यतः शब्दवाच्यत्वमेवाङ्गीकर्तव्यम्, नतु समाकर्षेण कर्मादीनां मुख्यवाच्यत्वमभ्युपेत्य भगवतः परममुख्यवाच्यत्वं न वाच्यमिति भावः । एतेन — कर्मादिप्रतिपादने प्रयोजनाभावात् वेदस्य काम्यफलार्थमप्रवृत्तेः समाकर्षानंगीकारवत् अन्येषां वाच्यत्वमपि नांगीकार्यमिति परास्तम् । 'अन्यार्थ' मितिसूत्रे 'प्रश्नव्याख्यानाभ्या' मित्यत्र प्रश्नं व्याख्यानं चेति न द्वन्द्वः किंतर्हि प्रश्नस्य व्याख्यानं प्रश्नव्याख्यानं, प्रश्नव्याख्यानंच प्रश्नव्याख्यानंच प्रश्नव्याख्यानाभ्यामिति विवक्षितमिति भावेन भाष्ये व्याख्यानद्वयमुदाहृतं तद्व्यञ्जयन्व्याचष्टे – (१९ सू.) **सर्वमिदं कर्मादिकमित्यादिना** ॥ एतेन — व्याख्यानस्यैव समाकर्षसाधकत्वात् प्रश्नस्याऽसाधकत्वात्, 'प्रश्नव्याख्यानाभ्या' मिति द्विवचनमनुपपन्नमिति परास्तम् । व्याख्यानाभिप्रायेणैव द्विवचनप्रयोगांगीकारात् । अतएव — टीकाकृता प्रश्नस्य साधकत्वभ्रमनिरासाय 'शौनकप्रश्ने, श्वेत

केतुप्रश्न' इति सप्तमीप्रयोगं कृत्वा 'अंगिरसो व्याख्यानात्, उद्दालव्याख्याना' दिति पंचम्यंतप्रयोगः कृतः। किमर्थं तर्हि सूत्रे प्रश्नग्रहणं 'व्याख्यानाभ्या' मित्येव किंनोक्तमिति चेत्, उच्यते – श्रोतुरादरयोग्यतादिज्ञापनाय प्रश्नग्रहणम्। तेन नेदं व्याख्यानं व्यामोहाय **प्रवृत्तम्**, येनासाधकं स्यात्, किंतु आदरादि विशिष्टेन प्रश्नेकृते प्रवृत्तत्वात् तत्वज्ञानसाधनमिदं भवत्येवार्थसाधकमिति सूचना त्सार्थकं प्रश्नग्रहणमिति। **यथैकेनेति** ॥ घटादिकारणज्ञानार्थिनः यथा घटशरावादिकार्यज्ञानं कारणानुमितिजनकत्वेन सफलं, तथा – भगवज्ज्ञानार्थिनो जगज्ज्ञानं कारणभूतभगवज्ज्ञानेन सफलमित्यर्थः। **विशेषज्ञानादिति** ॥ मृत्पिण्डे घटादिकारणस्वरूपविशेषज्ञानादित्यर्थः।

'ऋचो अक्षरेपरमेव्योमन् यस्मिन्देवा अधिविश्वेनिषेदुः।
यस्तन्न वेद किमृचाकरिष्यति य इत्तद्विदुस्तइमे समासत' ऋ.सं.२-३-२१

इतिऋचं व्याचष्टे– **तदक्षरं यो नवेदेति** ॥ **न तत्रसमाकर्षइति** ॥ ज्योतिष्टोमादिशब्दानां कर्मादौ न समाकर्ष इत्यर्थः। **नच फलोक्तिविरोध इति** ॥ ज्योतिष्टोमादेर्ज्ञानफलकत्वे प्रधानफलं ज्ञानमपहाय, अप्रधानस्वर्गाद्युक्तौ कारणाभावात्, स्वर्गादिफलकत्वोक्तिविरोध इत्यर्थः। एतेन – ज्योतिष्टोमादीनां स्वर्गफलमित्येवोच्यते नतु ब्रह्मज्ञानं फलं नेत्युच्यते, अतः कथं विरोधः, उभयफलकत्वसंभवादिति निरस्तम्। (२२.सू.) **रुचिमात्रार्थत्वादिति**॥ रुच्युत्पादन रूपकारणसद्भावेन तदुक्तिसंभवादिति भावः। (२३ - सू.) **विरुद्धानांत्विति**॥ प्रतिज्ञासिध्यर्थं कर्मादिप्रतिपादकत्वम्, अन्तःकरणशुद्ध्यर्थं तत्, तथा ध्येयस्वरूपनिरूपणार्थं तदिति मतानां परस्परं विरोधः, एकस्य वास्तवत्वे अन्ययोस्तदयोगादितिभावः। **अनेकाधिकारीति** ॥ यस्य ज्ञानमिवाऽन्यदपि मोक्षसाधन मिति भ्रमः तं प्रत्याद्यं समाधानम्, यस्यतु ज्ञानतुल्यतया तन्मोक्षसाधनमिति भ्रमः, तं प्रति द्वितीयम्; यस्यतु न भगवज्ज्ञानं मोक्षसाधनं दैत्यानां तद्भावेपि मोक्षादर्शनादिति भ्रमः, तं प्रति तृतीयम्। तथाच अधिकारिभेदेन त्रिविधस्यापि प्रयोजनस्य सिद्धये वेदानां प्रवृत्तत्वेन, प्रयोजनत्रयस्यापि वास्तवत्वान्न मतानां विरोध इति भावः।

**पूर्वपक्षस्तु** – आकाशादिशब्दवाच्यो न विष्णुः आकाशादीनामात्मादि कार्यत्वश्रवणात् । न च—परमात्मनः तत्संभवति, 'न जायतेम्रियते' (का. २-१८) इत्यादिश्रुतेः । किंच – लोके तावद्भिन्नयोरेव कार्यकारणभाव उपलब्धः, न त्वभिन्नयोरिति आत्माकाशयोरभिन्नत्वात् कार्यकारणभावो विरुद्धः । न चाकाशादिसंभवस्य तदधीनत्वेन संभूतशब्दोपपत्तिरिति वाच्यम् – सुतोत्पत्तौ जनके जातशब्दप्रयोगादर्शनात् । अपिच–आकाशादिगतरूपस्य अन्यगतसंभव-नियामकत्वे आत्मरूपस्याऽनुपयोगात् आत्मन इत्यस्यानन्वयः स्यात् । तस्मादात्म-शब्दोदितस्यैव मुख्यकारणस्य विष्णुत्वं न त्ववान्तरकारणानामाकाशादीनामिति न समन्वयसूत्रं युक्तमिति ।

**सिद्धांतस्तु**–कार्यत्वेसति कारणत्वाभिप्रायका 'ऽऽकाशस्संभूत'इत्यादि श्रुतिभागगताकाशादिशब्दोदितो हरिरेव 'नामानि सर्वाणि यमाविशन्ती' ति श्रुतेः । नच – कार्यकारणभाव विरोधः – आकाशाद्युत्पत्तावाकाशान्तर्गतत्वेन भगवतोऽभिव्यक्त्या कार्यत्वस्य वाय्वादिरूपाभिव्यक्तिहेतुत्वेन कारणत्वस्य चोपपत्तेः। नन्वथापि परमात्मनः सर्वशब्दवाच्यत्वं न सम्भवति, तथात्वे लोकव्यवहारा भावापातादितिचेत्, न – मुख्यतःपरमात्मवाचकानां शब्दानाम्, अन्यत्र व्यव-हारार्थं समाकृष्य परमेश्वरेण सङ्केतितत्वेन व्यवहारोपपत्तेः । ननु— यदि परमा-त्मनि शब्दाःमुख्याः अन्यत्रामुख्याः तर्हि परमात्मन्येव प्रसिध्या भाव्यम् कथमन्य-त्रप्रसिद्धिरितिचेत्, न–लोकस्य बहिर्मुखत्वेन जगत्येव व्यवहारात् । तच्छ्रोतॄणां तत्रव्युत्पत्त्या प्रसिद्धिः । परमात्मनितु व्युत्पत्त्यभावेन प्रसिध्यभावोपपत्तेः । ननु–अस्तु प्रवृत्तिनिमित्तस्वामित्वात्परमात्मनः मुख्यतः शब्दवाच्यत्वं, तथापि न तस्यैव, किन्तु – जीवमुख्यप्राणयोरपि तयोःसर्वस्वामित्वस्य 'अस्य यदैकांशाखां जीवो जहाति, (छा. ६–११–२) वायुनावै (हि) सर्वेलोका नेनीयन्ते' इत्यादि श्रुति-सिद्धत्वादिति चेत्, न—श्रुतीनां तदन्तर्गतभगवद्विषयतया 'उपासात्रैविध्या'दिति व्याख्यानात् । ननु— यत्तावदुक्तं समाकर्षेण वाच्यत्वादेकस्य मुख्यवाच्यत्वम्, अन्यस्यतुस्वतोवाच्यत्वात् परममुख्यवाच्यत्वमिति, तदयुक्तम् वेदस्य काम्यफलार्थ-मप्रवृत्तत्वेन समाकर्षप्रयोजनाभावात्, एकस्य वाच्यत्वमेव नेति अन्यस्य विष्णोः-

मुख्यत एव वाच्यत्वं नतु परममुख्यतो वाच्यत्वमितिचेत्, न—युक्तमेव समाकर्षेण वेदःकर्मादिकं वदतीति, कर्मादिज्ञानस्य भगवज्ज्ञानरूपप्रयोजनसद्भावादिति जैमिनिराचार्यो मन्यते, कुतः कर्मादिज्ञानस्य भगवज्ज्ञानार्थमिति चेत्, सर्वमिदं कर्मादिकं 'कस्मिंन्विज्ञाते विज्ञातं भवति, इति विज्ञातस्याप्यस्य फलं कस्मिंश्चिज्ज्ञाते भवति, तज्ज्ञानमात्रस्याफलत्वादिति शौनकप्रश्ने सर्वमपरविद्यया विज्ञातं भवति, विज्ञातंच परविद्याविषयपरमात्मज्ञानेन सफलं भवतीत्यङ्गीरसो व्याख्यानात् । तथा ' कथंनु भगवःस आदेशो भवती' (छा.६-१)ति श्वेतकेतुप्रश्ने ' यथासोम्यैकेन ' त्युद्दालकव्याख्यानात् । न केवलमर्थतएव कर्मादिज्ञानस्य भगवज्ज्ञानार्थत्वं गम्यते, अपिच एवमेके शाखिनः पठान्ति—'यस्तं न वेद किमृचा करिष्यती '(ऋ.सं.)ति । ननु परमात्मज्ञानाय कर्मादिप्रतिपादनस्यावश्यकत्वात्समाकर्ष इत्ययुक्तम्, अन्दावचनेऽपि परमात्मप्रतिपादनमात्रेण तज्ज्ञानसंभवादितिचेत्, उच्यते— न केवलं परमात्मनि श्रुतेः पदसमन्वयो विवक्षितः, किन्तर्हि वाक्यसमन्वयोऽपि । नचासावन्यत्र समाकर्षाभावे सिध्यतीति समाकर्षो वक्तव्य इति । ननु—परमात्मज्ञानार्थं कर्मादिकमुच्यत इति उक्तं तत्केन प्रकारेणेति चेत्, इत्थम्— ' नान्यःपन्था अयनाये' ( तै० ३-१३ ) ति ब्रह्मज्ञानेन मोक्षःप्रतिज्ञातः तत्सिध्यर्थं कर्मादिकं सपरिकरं निरूप्य तस्यानित्य दुःखशिरस्कफलकत्वमुच्यते, यत एवं कर्मादिकमनित्यफलकम्, अतः ' नान्यःपन्था अयनायविद्यत ' इति सिद्धमित्येवंरूपेण कर्मवचनस्योपयोगइति आश्मरथ्याचार्यो मन्यते । उत्क्रमिष्यतो मुमुक्षोः ज्ञानसाधनतया कर्मादिकं भाव्यमिति कर्मादिवचनमावश्यकमित्यौडुलोमिराचार्यो मन्यते, सर्वं परमात्मन्यवस्थितमिति वक्तुं तद्वचनमिति काशकृष्णाचार्यो मन्यते, अतो भगवज्ज्ञानार्थं वैदिकशब्दानामन्यत्र समाकर्षेण व्यवहारोपपत्तेर्युक्तं हरेःसकलशब्दपरममुख्यार्थत्वमिति सिद्धम् । ( अ० ४. )

(५-अधिकरणम्)

ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ (सू० २४)

**स्त्रीशब्दानामिति** ॥ यद्यप्यत्र प्रकृत्यादिशब्दानामिति वक्तव्यं तथापि

स्त्रीवाचकशब्दत्वमधिकरणोपाधिरिति द्योतनाय भाष्ये 'स्त्रीशब्दा' इत्युक्तमिति अत्रापि स्त्रीशब्दानामित्युक्तम्। **प्रकृत्यादिशब्दाः श्रूयन्तइति ॥** अनेन समन्वय सूत्रप्रतिपाद्यशब्दराश्यंतर्गतप्रकृत्यादि शब्दनिर्णायकत्व मस्याधिकरणस्य तेन सङ्गतिरित्युक्तं भवति। **प्रकृत्यादिशब्दानां स्त्रीलिंगत्वादिति ॥** तेषां च उत्सर्गतः स्त्रीत्वाधिकरणवाचित्वादिति भावः । **नियामकविशेषाभावेति ॥** 'तदेव ब्रह्म परमं कवीना' ( नारा. उ. ) मिति नपुंसकशब्दवाच्यत्वे नियामकविशेषवत् अत्र नियामकविशेषाभावादित्यर्थः । **न चास्त्रीभूतस्यापीति ॥** अप्रकृत्यादि रूपस्येत्यर्थः । **उक्तन्यायविरोधेनेति ॥** परमात्मा 'एषाह्येव प्रकृति' रित्यादि-श्रुतिगतप्रकृत्यादिशब्दवाच्यो न स्त्रीलिंगशब्दवाच्यताव्यापकस्त्रीत्वशून्यत्वादित्युक्त-न्यायविरोधेनेत्यर्थः। **प्रकृतिपदमन्योपलक्षकमिति ॥** उपलक्षकमिवोपलक्षकम्, यथोपलक्षकं काकपदं दध्युपघातकानामुपस्थापकं, तथा प्रकृतिपदमुदाहरणत्वा-न्न्यायविषयशब्दान्तरस्मारकमिति भावः। एतेन—प्रकृतिपदस्य शब्दान्तरोपलक्ष-कत्वे प्रकृतिः परमात्मेत्युक्ते स्त्रीवाचकःशब्दः परमात्मेति वाक्यार्थःस्यादिति परा-स्तम्। ( २५ - सू. ) **महामायेति स्मृताविति ॥** स्मृतिसमाख्याना दत्रापि स एवार्थो ग्राह्य इतिभावः। ( २६ - सू. ) **इतिश्रुताविति ॥** इच्छाद्वारमन्त-रापीत्यतः परम, 'अर्था' दिति शेषः। यद्यप्यत्र सूत्रे 'साक्षादाम्नानाच्चे' ति वक्तव्यम्। तावतैवेष्टसिद्धेः। तथाप्युभयग्रहणं यद्याम्नातं स्त्रीत्वं नांगीक्रियते, ततश्च प्रकृत्यादिशब्दवाच्यत्वं नेत्युच्यते, तर्हि तत्रैवाम्नातं पुरुषत्वं तच्छब्दवाच्यत्वं नस्यादित्यनिष्टसूचनार्थम्। ( २७ - सू. ) **संकेतमात्रमिति॥** रूढिमात्रमित्यर्थः। **प्रकृष्टाकृतिर्यस्येति ॥** स्वरूपमिति शेषः। एतेन – प्रकृतिशब्दस्यस्त्रीलिंगत्वेन यस्येतिपुल्लिंगेन विग्रहप्रदर्शनमयुक्तमिति परास्तम्। प्रकृष्टाकृतिरित्येव विवक्षि-तत्वात्। यस्य स्वरूपमित्युक्तिस्तु कृतित्वाभावात् प्रकृष्टाकृतिरिति योगो न युक्त-इति शंकानिरासार्थम्। **सम्यग्व्याख्यातत्वादिति ॥** एकेन मृत्पिंडेन ज्ञातेन ज्ञातमपि घटादिकं ज्ञातफलं भवति विशेषज्ञानात्। एवं परमात्मनि ज्ञाते सर्वं ज्ञातफलं भवतीति व्याख्यानत्वादित्यर्थः। इदमेव व्याख्यानं सम्यक्, न परव्याख्या-नम्, एकमृत्पिंडोपादानकत्वाभावात्सर्वस्येति भावः। ( २८ - सू० ) **तथापि न**

**प्रकृतिशब्दवाच्यत्वमिति** ।। तथापि परमात्मनः स्त्रीत्वेऽपि प्रकृतिशब्दवाच्यत्वे स्पष्टप्रमाणसद्भावेऽपि प्रकृष्टं करोतीति योगसद्भावेऽपि न प्रकृतिशब्दवाच्यत्वं युज्यते, स्त्रीलिंगस्य शब्दस्याऽव्यवधानेन सूतिकर्तृवाचकत्वनियमात्, परमात्मनश्च तदभावादित्यर्थः । कथंतर्हि कुमार्यादौ खट्वादौ स्त्रीलिंगशब्दप्रयोग इति चेत्, वृषलभार्यायां पत्नीशब्दवदुपमानादिति गृहाण । **निषेधस्त्वज्ञेयतामात्रार्थ इति** ।। केवलस्त्रीत्वेनाऽज्ञेयत्वसूचनार्थं निषेधः, नतु अभावाभिप्रायेणेत्यर्थः । 'वदन्वदति कश्चने 'ति स्त्रीपुंसभावाभिधानात्, स्त्रीरूपश्चैव पुंरूपो भगवान्न-पुंसक' इत्यादिवचनाच्च । एतेन — स्त्रीरूपस्य सर्वथाऽज्ञेयत्वे स्त्रीरूपाभिधायकागमवैयर्थ्यं, तस्य ज्ञानार्थत्वादिति परास्तम् ।

**पूर्वपक्षस्तु** — न प्रकृत्यादिशब्दवाच्यो हरिः, स्त्रीलिङ्गशब्दवाच्यताव्यापकस्त्रीत्वाभावात् ; 'नैनं वाचा स्त्रियंब्रुव' न्निति स्त्रीत्वनिषेधात् । नच — नपुंसकशब्दवृत्तिवत् स्त्रीशब्दवृत्तिः किं न स्यादिति वाच्यम् — निरवकाशनियामकाभावेन तत्कल्पनायोगात् । अथ अस्त्रीभूतस्यापि स्त्रीनियामकत्वात् तच्छब्दवाच्यतेतिचेत्, न — वशीकृतभार्ये भर्तरि तच्छब्दवाच्यत्वप्रसंगात् । अतः प्रकृत्यादिशब्दानां परमात्मवाचित्वाभावात् न समन्वयसूत्रमुपपन्नमिति ।

**सिद्धान्तस्तु** — हरिरेव प्रकृत्यादिशब्दवाच्यः 'हन्तैतमेव पुरुष 'मिति श्रुतौ विष्णौ सर्वशब्दवाच्यत्वं प्रतिज्ञाय, तत्रैव नदीसमुद्रदृष्टान्ताभिधानात् । अन्यथा — प्रतिज्ञादृष्टान्तोपरोधःस्यात् । भगवदभिन्नेच्छायाः 'मायान्तु प्रकृतिं विद्या '(श्वे०उ० ४-१०)दिति श्रुतौ 'प्रकृतिर्वासनेत्येवम् ' इति स्मृतौच प्रकृति शब्दवाच्यत्वाभिधानाच्च । नन्वथापि विष्णोरिच्छाद्वारा प्रकृतिशब्दवाच्यत्वेपि न साक्षात्तच्छब्दवाच्यत्वम् प्रमाणाभावात्, 'नामानी'तिश्रुतेः संकोचसंभवादितिचेत्, मैवम् — 'एषस्त्री एषपुरुष एषप्रकृति ' रिति श्रुतौ परमात्मनः प्रकृतिपुरुषत्वाभिधानेन एतच्छ्रुत्यैव, अर्थादिच्छाद्वारमन्तरापि प्रकृतिशब्दवाच्यत्वलाभात् । अन्यथा पुरुषशब्दवाच्यत्वमपि न स्यादविशेषात् । ननु — यद्यपि परमात्मनः प्रकृतिशब्दवाच्यत्वं श्रुत्यादावुक्तम्, तथापि — न तद्युक्तं निमित्ताभावादिति चेत्, न — प्रकृष्टाकृतिरिति योगसम्भवेन निमित्ताभावासिद्धेः । कथमीश्वरकृतिः

प्रकृत्येतिचेत्, प्रकृतेः स्वतःपरिणामसामर्थ्याभावात्, तत्र स्थित्वा तां परिणाम्य महदादिनियामकत्वेन आत्मनो बहुधाकरणात्। ननु — परमात्मनः स्त्रीत्वेपि प्रकृतिशब्दवाच्यताभिधायकप्रमाणसद्भावेऽपि न स्त्रीशब्दवाच्यत्वं युज्यते, तस्या-व्यवधानेन सूतिकर्तृत्वाचित्वनियमात्, नच–परमात्मनः तदस्ति, व्यापकाभावेच ऽव्याप्यायोगात्। प्रकृतिशब्दवाच्यताभिधायकवाक्यं 'मृदन्नवी' दित्यादिवाक्य वत्कथंचिन्नेयमितिचेत्, न–'यद्भूतयोनिं परिपश्यन्ति धीराः' (मु. १ १-६) इति योनित्वस्यापि श्रुतिसिद्धत्वेन व्यापकाभावासिद्धेः। तस्माद्विष्णुरेवाशेषस्त्रीशब्द-वाच्य इति उपपन्नं समन्वयसूत्रमिति सिद्धम्। (अ० ५.)

---

( ६ - अधिकरणम् )

## ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ (सू० २९)

**निषेधमुखवेद्यत्वादिनेति॥** संज्ञैषा पूर्वाचार्यस्य 'प्रथमप्रतीतौ नास्तीति प्रतीतिविषयत्वस्य निषेधमुखवेद्यत्व' मिति। तथाचाऽसदभावादिशब्दानामन्यत्र प्रसिद्धौ निषेधमुखवेद्यत्वं निमित्तम्। शून्यतुच्छादिशब्दानामन्यत्रैव प्रसिद्धौ निः-स्वरूपत्वमपि निमित्तमिति द्योतनाय आदिशब्दः। एतेन – निषेधघटितशब्द-वेद्यत्वरूपनिषेधमुखवेद्यत्वस्य असदादावित्र 'अदोषपरमेश्वर' इत्यादि प्रयोगबलेन परमेश्वरेप्यवगमात्, न तस्यान्यत्रैव प्रसिद्धिहेतुत्वमिति परास्तम्। **श्रुतिषु श्रूयन्तइति॥** एतेनाऽस्याधिकरणस्य समन्वयाधिकरणप्रतिपाद्यत्वशब्दराश्यंतर्ग-ताऽसदादि शब्दनिर्णायकत्वं, तेनाधिकरणेन संगतिरित्युक्तमिति बोध्यम्। एवमुत्त-रत्रापि यथासंभवं संगतिग्रन्थार्थो बोध्यः। **वस्तुवाचित्वादिति॥** यद्यपि न शून्यादिशब्दानां वस्तुवाचित्वं तथापि समन्वेतव्यशब्देषु केषांचिदभावादिशब्दा-नां वस्तुवाचित्वाच्छत्रिन्यायेन सर्वेषां वस्तुवाचित्वमुक्तम्। एतेन – वस्तुत्वांगी-कारे 'स्वरूपशून्यस्य नियम्यताभावेने' त्युक्त टीकाविरोधः, स्वरूपशून्यस्य वस्तु-त्वायोगात् इति परास्तम्। **स्वरूपशून्यस्येति॥** यद्यपि – अभावादिशब्द-वाच्यस्य न स्वरूपशून्यता, तथापि – शून्यादिशब्दवाच्यस्य स्वरूपशून्यत्वात्

छत्रिन्यायेन तथोक्तम् । **अन्यसुखमल्पंकरोतीति ।।** 'शमून' मित्यत्र 'पृषोदरा '(पा०सू० ६-३-१०९) दित्वेन शकारनकारगताकारलोपे शमूनं यापयतीति व्युत्पत्तौ 'आतोऽनुपसर्गे क' (पा० सू० ३ - २ - ३) इति कप्रत्यये आतोलोप इटिचे ' ( पा० सू० ६-४-६४ ) त्याकारलोपे शून्यमिति रूपसिद्धिरिति भावः । **छन्नत्वादिति ।।** 'छदिःआच्छादने' इत्यस्मात् उप्रत्यये टिलोपेच सति 'छ' इतिरूपम् । ततश्च तुत्चासौ छश्चेति तुच्छ इति बोध्यम्। **उभयत्र संबध्यत इति ।।** 'शमूनं कुरुत' इत्यादिपूर्वत्र 'तत्तच्छब्दाभिधेयते' त्युत्तरत्रच संबध्यत इत्यर्थः । नन्वीश्वरस्य गुणवाचकशब्दाभिधेयत्वेन गुणवत् , दोषवाचकशब्दाभिधेयत्वेन दोषोपि स्यादित्यत आह – **ईश्वरस्येति ।।** बाधकाभावाद्गुणवाचकेन शब्देन गुणसिद्धिः, दोषवाचकशब्देन न दोषसिद्धिः, बाधकसद्भावादिति भावः। **विनिर्णयग्रन्थइति ।।** यथाल्पाक्षरत्वादिकं सूत्रलक्षणं तथा अध्यायान्तेनिर्णयार्थं द्विरुक्तिरपि विनिर्णयग्रन्थलक्षणमिति भावः । एतेनाध्यायान्ते यदि निर्णयार्थं द्विरुक्तिः, तर्हि पादान्तेऽपि तदर्थमेव द्विरुक्तिःस्यात्, यदि अध्यायान्ते तद्विरुक्त्यैव पादार्थावधारणस्यापि जातत्वात् पादान्ते द्विरुक्त्यभावः । तर्हि शास्त्रान्तएव द्विरुक्तिरस्तु तयैव सर्वावधारणसंभवादिति परास्तम् ।

**पूर्वपक्षस्तु** – न विष्णुरसदादिशब्दवाच्यः केषांचिदभाववाचित्वात्, केषांचिन्निःस्वरूपवाचित्वात् । नच परमात्मनोऽभावत्वादिकं युज्यते, भावरूपत्वात् । नच – स्वस्य निःस्वरूपत्वाभावेपि असतः तदधीनत्वेन तच्छब्दवृत्तिरिति वाच्यम् – नियम्यस्वरूपशून्यस्य नियम्यत्वायोगात् अतोऽसदादिशब्दानां परमात्मवाचित्वाभावात्, न युक्तं समन्वयसूत्रमिति ।

**सिद्धांतस्तु** – परमात्मैव असदादिशब्दवाच्यः, तदधीनत्वादियुक्तिसमुदायात् । नच – निषेधमुखवेद्यत्वाद्यभावात्तदभावः, निषेधमुखवेद्यत्वाभावेपि दुर्जनाऽव्यक्तत्वादिना 'शमूनं कुरुत' इत्यादियोगेनच शून्यादिशब्दवाच्यत्वोपपत्तेः । नच — नियम्यस्वरूपविधुरत्वात् तदधीनत्वमयुक्तमिति वाच्यम् । स्वरूपवैधुर्येऽपि निषेधमुखवेद्यत्वादिधर्माणां तदधीनत्वात् । अतः असदादि

शब्दवाच्यत्वस्य हरेरुपपन्नत्वात् युक्तमशेषस्वरवर्णपदवाक्यात्मकशास्त्रयोनित्वम् , ततो जगज्जन्मादिकर्तृत्वं, मुख्यानन्तगुणवत्त्वंच सिद्धम् । (अ०६.)

(१)　हृदम्बरे सत्यनाथ यतेर्व्यक्तस्य संगता ।
तत्वप्रकाशिकाध्याये रामचन्द्रस्य चन्द्रिका ॥　　॥ १ ॥

तत्प्रमादाऽभिलब्धव्या लोके माऽभिनवा मता ।
तया प्रीतो गुरोरस्तु सर्वदा भगवान्हरिः ॥　　॥ २ ॥

इति श्रीमत्सत्यनिधितीर्थ श्रीचरणाराधक
श्रीमत्सत्यनाथयतिविरचितायां
तत्वप्रकाशिकाभिनवचन्द्रिकायां
प्रथमाध्यायस्य
चतुर्थःपादः

**प्रथमाध्यायः समाप्तः**

---

(१)　व्यक्तस्य रामचन्द्रस्य सत्यनाथहृदम्बरे ।
संगता प्रथमाध्याये शुद्धाऽभिनवचन्द्रिका ॥　　॥ १ ॥



श्रीवेदव्यासाय नमः

श्रीगुरुभ्यो नमः

# अथ द्वितीयोऽध्यायः

## प्रथमः पादः

सीतया सहितं मूल राममिक्ष्वाकुपूजितम् ।
आनन्दतीर्थमुनिपं नमामि ज्ञानसिद्धये ॥ १ ॥

यदनुग्रहमात्रेण सद्भिरिष्टमवाप्यते ।
भक्त्या नमामि तं सत्यनिधिं लोकगुरुं मुदे ॥ २ ॥

( १ - अधिकरणम् )

**पूर्वाध्यायेति** ।। 'ब्रह्मस्वरूपनिरूपणे ऽनवशेषात् किमध्यायशेषेणेत्यत' इति वर्तते । ततश्चैवं योजना – प्रथमाध्यायेन ब्रह्मस्वरूपस्य निरूपितत्वेन ब्रह्मस्वरूपनिरूपणेऽनवशेषात् अध्यायसंज्ञकेन किमनेन शास्त्रशेषेणेत्यतः पूर्वाध्यायसङ्गतत्वेन एतदध्यायप्रतिपाद्यं तावद्दर्शयतीति । **विरोधाभावं दर्शयत्यनेनेति**।। युक्त्यादिबाधितत्वतत्प्रतिरुद्धत्वाभावं दर्शयतीत्यर्थः । एतेन प्रमाणाप्रमाणयोःसर्वदा विरोधस्य सत्त्वेन तदभावप्रदर्शने सूत्रकारस्य प्रतारकत्वं स्यादिति निरस्तम् । **एतत्पादप्रतिपाद्यं दर्शयतीति** ।। 'तर्ह्यध्यायस्यैकार्थत्वात् पादभेदःकिंनिबन्धन इत्यत' इति वर्तते । 'अविरोधेऽप्यवान्तरभेदेन पादभेद उपपन्न इति भावेने'ति ग्राह्यम् । तस्यैतत्पादप्रतिपाद्यं दर्शयतीत्यनेन सम्बन्धः । **उक्तेऽर्थे विरोधश्चतुर्विधः स्फुरतीति** ।। ननु युक्तिसमयविरोध एव उक्तेऽर्थे विरोधः न तु श्रुतिविरोधःन्यायोपेत श्रुतिविरोधश्च । तयोश्चाधिभूतादिविषयत्वात्, इतिचेत्,

नारायणं नरसखं ध्यात्वा नत्वा पुनःपुनः ।
असमर्थः समाधातुं वक्ष्येऽहं तदनुग्रहात् ॥

तथाहि — न ब्रूमो वयमुक्तेऽर्थे साक्षाद्विरोध इति, येनोक्तदोषःस्यात्। किं नाम युक्तिसमयाभ्यां विरोधौ साक्षाद्विरोधौ श्रुतिन्यायोपेतश्रुतिविरोधौ तु श्रुत्यप्रामाण्यप्रसञ्जनद्वारा श्रुत्यवष्टम्भेनोक्तस्य जगत्कारणत्वाद्यर्थस्याऽऽक्षेपहेतू इति परम्परया विरोधौ । अत एव टीकाकारः तेषुतेष्वधिकरणेषु तथैव वक्ष्यतीति । **सर्वविरोधानां युक्तिमूलत्वेनेति।।** विरोधोऽत्रबाधः, प्रतिरोधोवा । तज्ज्ञानंच प्रबलत्वसमबलत्वज्ञानाभ्यां । प्रबलत्वसमबलत्वज्ञानेच न युक्तिं विना भवत इति सर्वविरोधस्य युक्तिमूलत्वमुपचारेणोक्तमिति द्रष्टव्यम्। एतेन श्रुतेः स्वतः प्रबलत्वेन तद्विरोधस्य युक्त्यनुपजीवित्वात् प्रत्यक्षश्रुतिमूलकसमयाभ्यां विरोधस्य प्रत्यक्षश्रुतिमूलत्वेन युक्त्यनुपजीवित्वात् सर्वविरोधानां न युक्तिमूलत्वमिति परास्तम्। 'प्रथमतः स्मृत्यविरोधं दर्शयती'ति भाष्यस्य प्रथमतः प्रथमभागे कतिपयाधिकरणेषु स्मृत्यविरोधं दर्शयतीत्यर्थ इति भ्रमं निराकर्तुमाह — **आद्याधिकरणार्थमिति ।। यद्यपीति ।।** यद्यप्ययं पादः युक्तिविरोधमेव परिहर्तुं प्रवृत्त इति नास्याधिकरणस्य प्रथमं निवेशो युक्त इति भावः । **तथापीति ।।** स्मृतीनां युक्तिसमयादिरूपत्वेन तद्विरोधपरिहारस्य समस्ताध्यायार्थभूतस्य प्राथम्योपपत्तेः प्रथमाधिकरणे पाशुपतादिस्मृतिविरोधाभावं दर्शयतीति सम्बन्धः । द्वितीयाधिकरणमारभ्यैव पादारम्भः समस्ताध्यायार्थप्रतिपादकस्यास्याधिकरणस्य निष्कृष्य पादेष्वन्तर्भावासम्भवात् आदौवा अन्ते वा निवेशे प्राप्ते प्रथमातिक्रमे कारणाभावात् प्रथमतो निवेशः कृत इति भावः । मूलस्य निष्कृष्य पादान्तर्भावासम्भवेपि कथञ्चिदन्तर्भावसद्भावात् प्रथमतः स्मृत्यविरोधं दर्शयतीति योजनान्तरं मनसिकृत्वाआह — **पादार्थस्येति ।।** पादार्थस्याप्यत्र सद्भावात् पादानन्तर्भावलक्षणदोषोऽपि नेति भावः । अस्मिंस्तु व्याख्याने आद्याधिकरणमारभ्यैव पादारम्भ इति द्रष्टव्यम्।

**ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नाऽन्यस्मृत्यनवकाशदोषप्रसङ्गात् ॐ (सू. १)**

**अस्यार्थः**— न श्रुते विष्णोर्जगत्कारणत्वे तात्पर्यं। तथात्वे श्रुतेः सर्वज्ञप्रणीतत्वेन प्रबलया विस्पष्टत्वेन निरवकाशया स्मृत्या विरुद्धत्वेनाऽप्रामाण्यप्रसङ्गः अतो न तत्र तात्पर्यमिति चेत्, न — विष्णुकारणत्वे तात्पर्यं परित्यज्य शिवादिकारणत्वे

तात्पर्याङ्गीकारे विष्ण्वादिभिः प्रणीतया व्याख्यानरूपया अन्यस्मृत्या अतिसर्वज्ञप्रणीतत्वेन पाशुपतादिस्मृतितोऽप्यनवकाशया विरुद्धत्वेन श्रुत्यप्रामाण्यप्रसङ्गःस्यात् । तथाच श्रुत्यैव पाशुपतादिस्मृतिबाधोयुक्तः, श्रुतेर्व्याख्येयत्वेन दुर्बलत्वेऽपि विष्ण्वादिप्रणीतस्मृतिसाहित्येन प्राबल्यादिति । विष्णुपरत्वे विरोधः शिवादिपरत्वेचाऽविरोधः कथमित्यत आह – **पाशुपतादिस्मृतीनामिति ॥ वस्तुविकल्पप्रसंगादिति ॥** विरुद्धद्विरूपत्वप्रसंगादित्यर्थः । **विरोधे त्विति॥** 'श्रुतिस्मृत्योर्विरोधेऽसति स्मृतिरनुमानं स्वमूलभूतश्रुत्यनुमापिका तयोर्विरोधे तु पौरुषेयतया मूलानपेक्षं श्रुतिवचनमेवमानंस्यात्' इति जैमिनिसूत्रार्थः । **पिपीलिकालिपिनिभत्वादिति॥** अस्पष्टत्वमात्रेऽयंदृष्टांतः, नतु अर्थविवक्षाभावइतिबोध्यम् । एतेन 'अन्यार्थतोपपत्ते' रित्यर्थ विवक्षाप्रतिपादकपूर्वग्रंथविरोधइति निरस्तम् । **क्वचिदिति ॥** सर्ववेष्टनविषये । 'औदुंबरी सर्वा वेष्टयितव्ये' तिस्मृतेः, 'औदुंबरीं स्पृष्ट्वोद्गाये' दिति श्रुतिबाधेनार्थांतरकल्पनामित्यर्थः । **प्रबलत्वेननिरवकाशत्वादिति ॥** श्रुत्याबाधावकाशराहित्यादित्यर्थः । 'अन्यस्मृत्यनवकाशदोषप्रसंगा' दिति सूत्रखंडस्यफलितमाह । **श्रुतिविरोधइति ॥ श्रुतौसंवाददर्शनादिति ॥** ननु श्रुतेःप्राबल्यसिद्धौ पाशुपतादि स्मृतिबाधाभावेन जगत्करणत्वादौ प्रामाण्यं, तस्मिंश्च सिद्धे प्रमाणसंवादिस्मृतिकर्तृत्वेन विष्ण्वादीनां नितरां सार्वज्ञ्यं, तत्सिद्धौ च अतिसर्वज्ञप्रणीतस्मृतिसाहित्येन श्रुतेः प्राबल्यसिद्धिरित्यन्योन्याश्रय इति चेत्, न ब्रूमो वयं विष्ण्वाद्युक्ते विष्णोर्जगत्कारणत्वांशे श्रुतिसंवादेन तेषामाप्ततमत्वं सिध्यतीति, किंनाम निर्णेतव्यप्रमेयातिरिक्तप्रमेय (याति)मात्रे श्रुतिसंवादेन विष्ण्वादीनामाप्ततमत्वेन सिद्धिरिति, न चैवंसत्यन्योन्याश्रयो भवति । **नसूत्रकृतेति॥** ययास्वीकृतया सर्वात्मनाऽनुपलब्ध्या प्रत्यक्षविरोधो भवति । यत्स्वीकारे प्रत्यक्षविरोधो भवतीति यावत् सा सर्वात्मनाऽनुपलब्धिः सूत्रकृता नाभ्युपगतेत्यर्थः। अत्रगुणसूत्रम्– 'एतेन योगः प्रत्युक्त' ( ३ ) इति । नन्विदंसूत्रमधिकरणांतरं न पूर्वशेषः, योगशास्त्रोपलब्धानां स्वेदगात्रभंजनादीनां नियमेनोपलंभरूपाभ्यधिकाशंकासद्भावात्, 'एतेने 'त्यतिदेशाच्चेति चेत्, मैवम् – भवेदिदमधिकरणान्तरं यदि 'अन्यस्मृत्यनवकाशदोषप्रसंगा'दिति उक्ताप्रामाण्यप्रसंगसाम्यस्य परिहारोऽभ्यधिकाशंका-

याभवेत् । न चासौ भवति तस्मान्नेदमधिकरणान्तरं, नापि 'इतरेषांचानुपलब्धे' (२-१-२) रितिवत्पूर्वाधिकरणशेषः, अभ्यधिकाशंकासद्भावात् । तस्मादिदमंतर्भेदाधिकरणमभ्युपेयमिति ।

**पूर्वपक्षस्तु** – नविष्णोर्जगत्कारणत्वं युक्तं, प्रमाणाभावात् । नच 'यतोवे' त्यादि श्रुतिःप्रमाणामितिवाच्यम्, अस्याःश्रुतेः यदि विष्णुकारणत्वे तात्पर्यं स्यात् तर्हि सर्वज्ञप्रणीतशैवाद्यागमविरोधेनाऽप्रामाण्यं स्यादिति तर्कविरोधेन विष्णुकारणत्वे तात्पर्याऽयोगात् । तथाच – न विष्णोर्जगत्कारणत्वमिति ।

**सिद्धान्तस्तु** – युक्तं विष्णोर्जगत्कारणत्वं 'यतोवे' त्यादिश्रुतेः । नचाऽप्रामाण्यप्रसंगेन न श्रुतेस्तत्र तात्पर्यमिति वाच्यम्–विष्णौ तात्पर्यमपहाय,शिवे तात्पर्यांगीकारेपि नितरामाप्तैः विष्ण्वादिभिः प्रणीतस्मृतिविरोधेन श्रुत्यप्रामाण्यापात्तिसंभवात् । नन्वेवं स्मृतिद्वयप्रामाण्येनाऽनिर्णय एवेतिचेत्, न – श्रुतिविरुद्धायाःपाशुपतादिस्मृतेरप्रमाणत्वात् । न चाविस्पष्टत्वादित्वेन श्रुतेर्दौर्बल्यमिति वाच्यम् – वैष्णवस्मृतियुक्तत्वेन प्राबल्योपपत्तेः । कुतो विष्ण्वादीनां रुद्रादिभ्योप्याप्तत्वमितिचेत्, तदुक्तस्य संवाददर्शनात् । नन्वाप्तप्रणीतत्वेन पाशुपतादिस्मृतीनामप्रामाण्य मयुक्तमितिचेत्, न—शैवागमोक्तस्योपलब्धियोग्यस्य फलस्य तदुक्तानुष्ठाने कदाचिदुपलंभेपि नियमेनाऽनुपलंभेनाप्तत्वाऽनिश्चयात् । ननु — अथापि न सर्वस्मृतीनामप्राण्यंयुक्तम् – योगस्मृत्युक्तस्वेदगात्रभंजनादीनां नियमेनोपलम्भादितिचेत् न– प्रथमंस्वेदनं द्वितीयं गात्रभंजनमित्याद्युक्ताभ्यासावस्थोत्कर्षसंपत्तिकालएव स्वेदादीनामदृष्टेः आप्तोक्तत्वानिश्चयात् । अतोऽवैदिकस्मृतीनामप्रमाणत्वात् न विष्णोः श्रुत्युक्तजगत्कारणत्वस्य तद्विरोधइति सिद्धम् । (अ० १)

---

( २ - अधिकरणम् )

## ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॐ (सू० ४)

नन्विदं अधिकरणम् 'एतेन योगःप्रत्युक्त 'इति पूर्वसूत्रेण सहैकाधिकरणम् । तथाहि – वेदप्रामाण्यमाक्षिपति— एतेनयोगः प्रत्युक्तइति ॥ एतेन = पाशुपतादिस्मृत्यप्रामाण्याय भवदुपन्यस्तेन उक्तफलानुपलम्भेन, योगः = श्रुतिप्रामाण्ययोगः,

प्रत्युक्तः=निराकृतो वेदितव्यः। एवं प्राप्तं पूर्वपक्षं प्रतिक्षिपति—'न विलक्षणत्वादस्य-तथात्वंचशब्दात् 'इति । उक्तफलानुपलम्भेपि पाशुपतादिस्मृतिवदप्रामाण्यं न मन्तव्यम् , नित्यत्वेन ततो विलक्षणत्वात्। न हि नित्ये दोषाःकल्प्याः, अस्य तथात्वंच 'वाचा विरूपनित्यये 'ति शब्दात् । फलानुपलम्भोऽसिद्ध इत्याह — दृश्यतेतु, अधिकारिणां फलम् । अतस्तदनुपलम्भो वैगुण्यनिमित्त इति । अवश्यंच एतदेवं विज्ञेयम् ,न विलक्षणत्वादिति निषेधसौकर्यात्। पूर्वपक्षमनूद्य निषेधेहि सौकर्यं भवति। अन्यथा नेत्युक्ते कस्य पुनर्निषेधो विज्ञायेतेति.। तस्मादिदमधिकरणं प्राचीनसूत्रैणैकाधिकरणमिति चेत् , सत्यम् एवंयोजनायां सौलभ्यं भवतीति, तथापि नैकाधिकरणत्वं सूत्रकृद्विवक्षितम् , यदयं योगविभागं करोति तज्ज्ञापयत्याचार्यः' एतेन-योगःप्रत्युक्त ' इतिसूत्रं योगशास्त्राभ्यधिकाशंकानिरासाय पूर्वाधिकरणशेषः, पाशुपताद्यागमाप्रामाण्याभिधानेन तन्न्यायसाम्यात् बुद्धौ परिवर्त्तमानाया वेदाप्रामाण्य शंकाया निरासाय ' नविलक्षणत्वा ' दित्यादिपृथगधिकरण' मिति । अन्यथा — ' विकारशब्दान्नेतिचे (ब्र० सू० १-१-१३) दित्यादिवत् एकं सूत्रं विदध्यात् , योगशास्त्राभ्यधिकाशंकानिरासश्च न कृतःस्यादिति । हेतोरप्रयोजकतामाशंक्य-प्रतिहरति—**अविद्यमानाभिधात्रीणामिति ॥ नित्यत्वाख्यवैलक्षण्यादिति॥** यत्फलविसंवादि तदप्रमाणमित्युत्सर्गः। वेदे नित्यत्वेन, स्मृतौ तदनुसारित्वेन, निर्दोषत्वावगमात् अप्राण्याभावःसिद्ध इति पाशुपतादिस्मृतिवत् फलविसंवादेन नाप्रामाण्यमिति कल्प्यम् । उत्सर्गस्य बाधकैकापवाद्यत्वादितिभावः । एतेन फलविसंवादस्य श्रुतौ व्यभिचारात् न तेन पाशुपतादि स्मृत्यप्रामाण्यसाधनं युक्तमिति परास्तम्। **फलव्यभिचारेपीति**॥अंगीकारवादोऽयमिति बोध्यम्। एतेन फलादर्शनस्य कर्तृवैगुण्यादिसहकारिविरहप्रयुक्तत्वस्य वक्ष्यमाणत्वात् सहकारि विरहप्रयुक्तफलादर्शनस्य चाव्यभिचारात् ' फलव्यभिचारे'पीत्युक्तमयुक्तमिति परास्तम्। **प्रकारान्तरेणव्याचष्टइति** ॥ पूर्वं नित्यत्वेन वैलक्षण्यादिति व्याख्यातम् , अधुनातु संवादनिरपेक्षप्रामाण्यकत्वादिति व्याख्यायते तात्पर्यन्तु पूर्ववदिति बोध्यम् । एतेन अधुनापि पूर्ववदेव ' वेदादिप्रामाण्यस्य संवादनिरपेक्षतज्ज्ञानादेव सिध्यंगीकारा ' दित्यादिना प्रामाण्यसिद्धिरूपबाधकसद्भावात् न फलविसंवादेनाऽप्रामाण्यसिद्धिरिति

वक्ष्यमाणत्वात् नेदं व्याख्यानांतरमिति परास्तम् । तात्पर्यस्यैकत्वेपि वैलक्षण्य प्रयोजकधर्मनिरूपणमात्रे व्याख्यानान्तरमित्यंगीकारात् । **प्रामाण्यमिति** ॥ करणप्रामाण्यमात्रमित्यर्थः । ननु – करणप्रामाण्यस्य संवादाधीनज्ञानत्वांगीकारे ऽनवस्थाऽभिधानमयुक्तम् । संवादस्योपलब्धिरूपत्वेन तत्प्रामाण्यस्य स्वतस्त्वा-दित्यतः संवादकप्रामाण्यमपि संवादकात् गृह्यते, उत स्वतइति विकल्प्य द्वितीय-दूषणं शिष्यैरेवोह्यमिति भावेन प्रथमपक्षे भाष्यकृताऽनवस्थोक्तेति न किंचिदनुप-पन्नमित्याशयेनाह– **यदीत्यादिना** ॥ **स्वत एवेति** ॥ संवादाभावेपि साक्ष्यादि प्रमाणांतरेणेत्यर्थः । आद्यकल्पे ' अन्यथाऽनवस्थिते 'रिति मूलमुपतिष्ठत इत्याह– **आद्ये तदप्येवमिति** ॥ **आद्यप्रामाण्यस्यैवेति** ॥ संवादातिरिक्तनिर्दोषत्वादि-लिंगवेद्यत्वोपपत्तेरित्यर्थः। उपलब्धिरूपसंवादकप्रामाण्यस्यापि संवादवेद्यत्वमङ्गीकृत्या ऽनवस्थां परिहारति — **कथंचिदिति** ॥ **प्रामाण्याध्यवसायं विनेति** ॥ संवादकप्रामाण्याध्यवसायं विना वेदप्रामाण्यनिश्चयायोगेन प्रवृत्त्यसंभवात् प्रवृत्त्यर्थं संवादकप्रामाण्यजिज्ञासाध्रौव्यादित्यर्थः । **यावच्छंकमिति** ॥ यद्यपि—संवादका-नुभवप्रामाण्यनिश्चये संवादकान्तरापेक्षा, तथापि नाऽनवस्था यावच्छङ्कमेव संवादापेक्षांगीकारादित्यर्थः। **द्वितीयोऽपिनिरस्तप्रायइति** ॥ ' प्रामाण्याध्यवसायं विना प्रवृत्त्यनुपपत्त्ये 'ति पूर्वोक्तदिशा निरस्तप्राय इत्यर्थः । ' शङ्का सर्वत्र नाऽ नुवर्तत ' इति द्वितीयपक्षे विकल्पमुखेन दूषणान्तरमाह — **अपिचेति**॥ **आद्ये प्रामाण्यस्येति**॥ पुरुषेण गोक्षुरकाद्यपसरणे कृते गतिसमर्थो गजो यथा स्वयमेव गच्छति,तथा—संवादेनाऽप्रामाण्यशङ्कानिवृत्तौ निर्दोषत्वादिना स्वरूपग्रहे प्रामाण्य-निश्चये न किंचिदपेक्षितमिति भावः । **संवादकमुभयत्रपीति** ॥ अप्रामाण्य-शङ्का सर्वत्र नानुवर्तते, यत्राऽप्रामाण्यसङ्का, तत्र संवादकमप्रामाण्यशङ्कां निवर्त्त-यित्वा प्रामाण्यं ज्ञापयति। एवं च प्रामाण्यज्ञानेपि संवादकप्रवृत्त्यंगीकारान्तरस्त्वापत्तिः। अप्रामाण्यशंकाभावस्थले प्रामाण्यग्रहस्यैवाऽभावात् शंकाभावेपि संवादकापेक्षा स्यादिति दोषोऽपि नेति भावः । कल्पकं शंकते — **बाधकवदिति** ॥ अप्रा-माण्यशंकानिवृत्तिप्रामाण्यज्ञानयो रेतदन्वयव्यतिरेकाऽनुविधानमेव कल्पकमिति-भावः । प्रामाण्यग्रहस्य संवादान्वयव्यतिरेकानुविधायित्वमेव नास्तीत्याह— **अप्रा-**

**माण्यशंकेति** ॥ संवादकानुभव प्रामाण्यस्य परतस्त्वसाधकमनुमानमनूद्यदूषयति– **यदपीत्यादिना** ॥ ननु—अनुकूलतर्कशून्यं चेत्ययुक्तं यदि प्रामाण्यं स्वतोगृह्येत तर्हि संशयो न स्यादित्यनुकूलतर्कसद्भावादित्यत आह — **संशयस्येति** ॥ एव-शब्देन संशयस्य प्रामाण्याग्रहणप्रयुक्तत्वं नेत्याचष्ट। कुतः संशयस्य प्रामाण्याग्रहणप्रयुक्तत्वं नेत्यतआह – **स्वतस्त्वेनेति** ॥ वक्ष्यमाणसमुच्चये चशब्दः। प्रामाण्यग्रहणेपि संशयदर्शनात् प्रामाण्यग्रहणस्य संशयं प्रति व्यतिरेकव्यभिचार इति भावः। अन्वयव्यभिचारमप्याह — **अनभ्यासदशायामपीति**॥ अनभ्यासदशायामपीत्यनेन प्रामाण्यग्रहणं सूचयति। ततश्च प्रामाण्यग्रहणेपि कदाचित्संशयाभावस्यापि दर्शनादन्वयव्यभिचारइति भावः। एतेन ' संशयाभावस्यापि दर्शनाच्चे 'ति वाक्यस्याऽनन्वय इति परास्तम्। **उभयतःसंबोध्यइति** ॥ अनेन तथात्वमित्यस्याऽप्रामाण्यमिति पूर्वं व्याख्याय नित्यत्वं चेति पुनर्व्याख्यानेन तथात्वमित्यस्य न तथात्वमिति नञा ' तथात्वंचशब्दा 'दिति शब्दपदेनापि संबंध इत्युक्तंभवतीत्यर्थः। 'तस्मै नूनमभिद्यवे वाचा विरूप नित्यया। वृष्णे चोदस्व सुष्टुति 'मिति (ऋ.स. ६-५-२५) ऋचं व्याचष्टे – **तस्मै सर्वतइति** ॥ **स्वात्मानं प्रतीति** ॥ विरूपेति संबोधनमिति वक्तव्ये स्वात्मानं प्रतीति वचनं विरूपस्य यमावतारत्वद्योतनार्थम्। एतेन– विष्णुतत्वनिर्णयटीकायां पद्मनाभतीर्थैः ' धर्मेण विरूपऋषिप्रत्युच्यत ' इति उक्तत्वात् ' स्वात्मानं प्रती ' तिवचनं विरुद्धमिति परास्तम्। **न च वाच्यमिति** ॥ वेदस्य पाशुपतागमवैलक्षण्यसिद्धौ प्रामाण्यसिद्धिः, तत्सिद्धौ तत्सिद्धिरिति अन्योन्याश्रयात् कथं श्रुत्युपादनमिति न वाच्यमित्यर्थः। अत्र टीकायां 'श्रुत्युपादानं युक्त मित्यतः परं ' युक्तेरुपन्यस्तत्वादित्यतः पूर्वं ' परेणापि फलव्यभिचारेणाप्रामाण्ये वेदस्यापि तत्प्रसंग इत्यापादनमात्रस्य क्रियमाणत्वा 'दिति वाक्यं प्रक्षिप्तम्। अवश्यं चैतदेवं विज्ञेयम् – वेदाप्रामाण्यस्यापादनमात्रमेव नतु साधनमित्यस्याऽर्थस्य ' वेदादिप्रामाण्यस्य युक्तिविरोधपरिहारा ' दिति पूर्ववाक्येन 'प्रमाणं न वेति संदेह ' इति वाक्येन, ' श्रुत्यादिकं न प्रमाण' मिति पूर्वपक्षवाक्येन, ' एवं च वेदाद्येकदेशस्याप्रामाण्ये अन्यदेशप्रमाणताया मानाश्वासा 'दिति वाक्येन च, विरुद्धत्वात्। पूर्वपक्षे वेदप्रामाण्याक्षेपाभावेन

सिद्धान्ते तत्साधनवैयर्थ्याच्चेति । **युक्तेरुपन्यस्तत्वादिति** ॥ देवताधिकरणे (ब्र०सू० १ ३-७) वेदप्रामाण्ये युक्तेरुपन्यस्तत्वादित्यर्थः। देवताधिकरणोक्तयुक्त्या सिद्धेन नित्यत्वेन वेदप्रामाण्यस्येह साधितत्वात् अभ्युच्चयेन श्रुत्युपन्यासो नानुपपन्न इति भावः ।

**पूर्वपक्षस्तु** — वेदः, वैष्णवस्मृतिश्च न प्रमाणं तदुक्तानुष्ठानेपि फलानुपलम्भात् । यदि फलानुपलम्भे प्रामाण्यं तर्हि पाशुपतादिस्मृतीनामपि तत्प्रसंगः। नहि फलानुपलम्भसाम्येपि वेदादेरेव प्रामाण्यं न पाशुपतादिस्मृतीनामिति विभागे हेतुरस्ति । एवं च फलानुपलम्भेन वेदाद्येकदेशस्याप्रामाण्ये तदेकदेशांतरप्रामाण्ये ऽनाश्वासात् न विष्णो जगत्कारणत्वसिद्धिरिति ।

**सिद्धांतस्तु**— प्रमाणमेव वेदादि अपौरुषेयत्वतदनुसारित्वाभ्याम् । न च— अपौरुषेयत्वमेव कुत इति वाच्यम् — प्रागेव सामान्यसिद्धिपरिशेषाभ्यां तस्य साधितत्वात् । 'वाचा विरूप नित्यये' त्यादि श्रुतेश्च । न च फलविसंवादादप्रामाण्यम्—अधिकारिणां फलोपलम्भेन फलाऽनुपलम्भस्य कर्तृवैगुण्यादिनोपपत्तेः। अतो वेदप्रामाण्यस्य युक्तिविरोधाभावात् तेन जगत्कारणत्वं हरेर्युक्तमिति सिद्धम् । (अ० २)

---

( ३ - अधिकरणम् )

## ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॐ (सू० ६)

**पूर्वोक्तमेवात्रसंशयबीजमिति**॥ वेदे तावदुभयविधवाक्यदर्शनात्संदेहो भवति प्रमाणं न वेति, तन्निरासस्तु द्वाभ्यामधिकरणाभ्यां भवति, कस्यचिदधिकारिणः पूर्वाधिकरणेन निरासः। अन्यस्य तु अनेन अधिकरणेन निरासो भवतीति भावः । एतेन — पूर्वाधिकरणे वेदस्य निर्दोषतायाः उक्तत्वेन पुनस्तेनैव बीजेन शंकानुत्पाद इति निरस्तम् । तदधिकरणप्रवृत्तेः प्रागेवोत्पन्नसंशयस्याऽनेनाधिकरणेन निरास इत्यंगीकारात् । न चाधिकरणवैयर्थ्यम् । पूर्वाधिकरणाऽनिरस्यपूर्वपक्षनिरासार्थत्वात् । **अन्यस्याप्रामाण्यमिति** ॥ वाक्यप्रामाण्यं द्वेधा सिध्य-

तीति भवतोच्यते कस्यचित् आप्तोक्तत्वेन, कस्यचिदपौरुषेयत्वेनेति । तत्र न तावदाप्तोक्तत्वेन वेदस्य प्रामाण्यमिति शक्यते वक्तुं अनंगीकारात् । नाप्यपौरुषेयत्वेन, मृदब्रवीदित्यादि वाक्ये व्यभिचारादिति भावः । एतेन—असदर्थकत्वेन 'मृदब्रवीदित्यादिवाक्यस्याऽप्रामाण्येपि नेतरवेदाप्रामाण्यं कारणाभावादितिनिरस्तम् । **मुख्यार्थलाभादिति** ॥ ननु -- मृदादीनां वक्तृत्वादेः प्रबलयुक्तिविरुद्धत्वादेव श्रुत्यर्थप्रच्यावनमिति वक्तव्यं, नतु — मुख्यार्थलाभादिति । अन्यथायुक्तिविरोधेन पूर्वपक्षकरणमयुक्तं स्यात् । मुख्यार्थलाभायैव श्रुतेरन्यपरत्वस्याऽभिधानेन विरोधपरिहारायानभिधानात् इति चेत्, सत्यम् — वक्तृत्वादेर्युक्तिविरुद्धत्वादेव श्रुत्यर्थप्रच्यावनमिति वक्तव्यमिति अभिप्रेतं च टीकाकृतः, अन्यार्थकल्पनेमुख्यार्थलाभादित्यनेन वेदस्य सावकाशत्वाभिधानात् । **अयं भावः**—भवेच्छ्रुतिविरोधेन युक्तेरप्रामाण्यम् , यदि श्रुतिः सावकाशा न स्यात् । न चैवं प्रकृते । श्रुतेरन्यार्थकल्पने यथाप्रतीतार्थादपि मुख्यार्थलाभात् । कथंचिदर्थांतरयोजनासंभवे हि सावकाशत्वं वदन्ति, किमु अर्थान्तरकल्पनया मुख्यार्थलाभे । ततश्च युक्तेः स्वभावतो दुर्बलत्वेपि निरवकाशतया प्राबल्यात् युक्त्यैव सावकाशश्रुतिबाधो युक्तः, ननु श्रुत्या युक्तिबाध इति । 'तासां च 'ति मूलमवतारयति — **नाभिमानदेवता इति** ॥ इति व्यपंगीकर्तुं शक्यत इति शेषः । एतेन— 'किं ता अभिमन्यमानव्यापिन्यः, उत तदेकदेशवर्तिन्य ' इत्यादिना तत्तदंगीकारं विकल्प्य, अंगीकार एव दूष्यते उत अभिमन्यमानव्यापित्वाद्यर्थो दूष्यते । नाद्यः – विग्रहवत्त्वाद्यर्थांगीकारसंभवेपि प्रतिज्ञाताभिमानिदेवताभावाऽसिद्धेः, नहि कस्यचिदंगीकारो न संभवतीत्येतावता अर्थो नास्तीति शक्यते वक्तुम् , जीवब्रह्मभेदस्य मायावादिनांऽगीकर्तुमशक्यत्वेन तदभावप्रसंगात् । न द्वितीयः व्याहतेः । 'नाद्य ' इत्यनेन विग्रहवत्त्वपक्षनिराकरणेन विग्रहशून्यत्वमंगीकृत्य ' नद्वितीय 'इति पुनस्तन्निषेधादिति परास्तम् ।

ननु – 'दृश्यतेचे 'ति सूत्रं नैकवचनांतं विग्रहे ज्ञापकम्, तस्य सामर्थ्यं दृश्यत इत्यर्थकत्वादित्यत आह– **दृश्यते मुनिभिरिति** ॥ अस्य सूत्रस्य सामर्थ्यं दृश्यत इत्येव नार्थः, अपितु – स्मृत्यानुकूल्यात् देवतासामर्थ्यं च दृश्यत इत्यर्थ इति भावः । **परबुद्धेरिति** ॥ परबुद्धेः मुनिबुद्धेः अप्रत्यक्षत्वात् बोधनीयपुरुष-

वुद्धित्वाभावात् । एतत् देवताप्रामाणिकत्वशंकानिवर्तनं कुतः कथं स्यात् , देवदत्त निश्चयेन यज्ञदत्तशङ्कानिवृत्त्यदर्शनात् इत्यत: मुनिबुद्धेर्बोधनीयस्याप्रत्यक्षत्वेन तदीयशंकानिवर्तकत्वाभावेपि लिंगविधया तदस्तीति पुराणवचनेन तद्दर्शनस्य असिद्धि परिहरन् ' दृश्यतेचे 'ति सूत्रस्य ' तासामनुगतिर्दृश्यत ' इत्यर्थांतरमाह आचार्यो भाष्यकार इति भावः ' भविष्यत्पुराणेचे 'ति भाष्यस्य ' दृश्यते च 'तिं सूत्रेणाऽन्वयः । एतेन– महद्दर्शनस्य असिद्धिं शङ्कमानेन प्रमाणमात्राभावस्य वक्तव्यत्वेन अप्रत्यक्षत्वाभिधानमयुक्तं प्रमाणाविशेषाभावेन प्रमेयाभावसाधनायोगात् । महद्दर्शन साधनस्य ' दृश्यन्तेमुनिभिश्वता ' इत्यनेनैव पूर्णत्वात् उत्तरार्धोदाहरणं व्यर्थम् । ' भविष्यत्पुराणेचे 'ति चशब्दानुपपत्तिः, भविष्यत्पुराणे चेति साकांक्षत्वादपूर्णेचेति परास्तम् ।

**पूर्वपक्षस्तु**– न वेदः प्रमाणम्'मृदब्रवीत्,(श.ब्रा.६ १-३)ता आप ऐक्षंते'(छा. ६-२-४ ) त्यादिनाऽभिहितमृदादिवक्तृत्वादेः ' मृन्नवदति जडत्वा ' दित्यादियुक्तिविरुद्धत्वेन साधकाभावात् । ततश्च न विष्णोस्तेन जगत्कारणत्वसिद्धिरिति ।

**सिद्धान्तस्तु** – वेदो नाऽप्रमाणम्, अपितु प्रमाणमेव 'मृदब्रवी' दित्यादिवेदस्य अभिमानिदेवतापरत्वेन युक्तिविरोधाभावात् । ननु श्रुतियुक्त्योः श्रुतेरेव प्राबल्यात् तद्विरुद्धयुक्तेरेवाऽप्रामाण्यं वाच्यम् , किं युक्तिविरोधपरिहारेच्छ श्रुतेरन्यार्थकल्पनयेति चेत् , न– भवेच्छ्रुतिविरोधेन युक्तेरप्रामाण्यम् , यदिश्रुतिः सावकाशा न स्यात् । न चैवं प्रकृते श्रुतेरन्यार्थकल्पने प्रतीतार्थादपि मुख्यार्थलाभेन सावकाशत्वात् । तस्मात् युक्त्या श्रुतिबाधो युक्तः । ननु – श्रुत्या युक्तिबाधः । ननु— भवेदिदमभिमानिदेवतापरत्वेन श्रुतिप्रामाण्यम्, यदिअभिमानिदेवता एव स्युः नच ताःसन्ति, अभिमानिदेवताः सन्तीति वदन् प्रष्टव्यः, किं ता अभिमन्यमानव्यापिन्यः, उत तदैकदेशवर्तिन्य इति । आद्येपि किं ता विग्रहवत्यः, उत नेति । नाद्यः — उपलम्भप्रसंगात् । न द्वितीयः – वचनायय्के गात् । नान्त्यः – तद्रहितदेशवत् देशान्तरोपपत्तौ तद्वैयर्थ्यप्रसंगात् । किंच नापि देवतासद्भावे प्रमाणमीक्षामहे । श्रुतेरविश्वसनीयत्वात् , अन्यस्याभावादिति चेत् यत्प्रागुक्तं किं ता अभिमन्यमानव्यापिन्यः,उत तदेकदेशवर्तिन्य' इति, तत्र अभि-

मन्यमान व्यापिन्यो विग्रहवत्यश्चेति ब्रूमः । तथात्वे उपलम्भप्रसंग इति चेत्, न – किं महतामुपलब्धिप्रसङ्ग आपाद्यते, आहोस्विदज्ञानाम् । आद्ये त्विष्टापत्तिः, यतो 'दृश्यन्तेमुनिभिश्च ता' इति तद्दर्शनं प्रमाणसिद्धम् । न द्वितीयः — अज्ञदृष्टययोग्यत्वात् । प्रमाणसिद्धंहि अज्ञदृष्टययोग्यत्वलक्षणसामर्थ्यं तासाम् । यदत्रोक्तं देवतासद्भावे प्रमाणाभावात् नाभिमानिदेवताः सन्तीति, तन्न — महतां प्रत्यक्षस्यैव प्रमाणत्वात् । ननु — वस्त्वंतरमधिष्ठाय स्थितानां तासां वचनादिकं न युज्यत इति चेत्, न — सामर्थ्यविशेषसद्भावेन तदुपपत्तेः । नच – सामर्थ्यविशेषे प्रमाणाभावः, महद्भिस्तस्य दृश्यमानत्वात् । अतो वेदप्रामाण्ये युक्तिविरोधाभावात् युक्तं तेन भगवतो जगत्कारणत्वसाधनमिति सिद्धम् । (अ० ३)

( ४ - अधिकरणम् )

## ॐ असदितिचेन्न प्रतिषेधमात्रत्वात् ॐ (सू० ७)

अत्र द्वे दर्शने — श्रुतिप्राप्तं शून्यस्य जगत्कारणत्वमत्र निषिध्यत इत्येकम् । अपरन्तु प्रागभावस्य जगत्कारणत्वं निराक्रियत इति । तत्राद्यंटीकाकृतो दर्शनम् । अत्र 'तथाश्रुतिप्राप्तमसन्मतमत्र निराक्रियते समयस्योपरि निषेधा'दिति भाष्यं लिङ्गम् । अन्यथा 'नासतो दृष्टत्वा' दित्यनेनैकार्थत्वप्रसक्त्यभावात् प्रापकभेदेन भेदाभिधानं न स्यात् । द्वितीयं सुधाकृतो दर्शनम् । अत्रानुव्याख्याने 'इतिचेन्न,निषेधैकस्वरूपस्य न कर्तृते'ति निषेधस्वरूपाभिधानं लिङ्गम् । निषेधस्वरूपत्वस्याभावलक्षणत्वात्, तस्य च वर्णकान्तरत्वेन न परस्परंविरोधोऽपीति ध्येयम् । असिद्धिमाशङ्क्य निषेधति—**नच यतोवेति** ।। 'यतोवा' इत्यादिवाक्यस्य श्रुतिमूलकयुक्तिविरोधं वक्तुं श्रुतिं तावदाह — **असदेव इदमग्र इत्यादिना** ।। शून्यस्य सिद्धे श्रुतिवेद्यत्वे युक्तेरपि भावेन शून्यस्य जगत्कारणत्वं न ब्रह्मण इति गूढाभिसंधिराह — **अतोऽसदेवेति** ।। आशयमविद्वाञ्छंकते — **स्यादेतदिति**।। एतदित्येतत् विवृणोति—**श्रुतिद्वयेनेति**।। ततश्च संदेह एव स्यात् न अन्यतरपक्षावधारणमित्येतद्दूषणं स्यादिति योजना । स्वाशयमुद्घाटयति —

**पूर्वपक्षइति॥** ननु—प्रतिषेधमात्रत्वादित्ययुक्तं शून्यस्य अभाव विलक्षणत्वांगीकारेण प्रतिषेधमात्रत्वासिद्धेरित्यत:सौत्रं हेतुं व्याचष्टे — **तस्य अभावधर्मात्मतामन्तरेणेति ॥** शून्यं न जगत्कारणं, नेदं जगत्कारणमिति तत्प्रतिषेधबुद्धिविषयत्वात् , यो यत्प्रतिषेधबुद्धिविषयः नासौ तद्वान् शशविषाणवदिति प्रयोगोऽत्र विवक्षितः । न च— असिद्धो हेतुः शून्यं न जगत्कारणमिति सार्वजनीनानुभवसिद्धत्वात् संयोगेन घटवदित्यपि समवायेन घटनिषेधात् प्रतिषेधबुद्धिविषयत्वं व्यभिचारीत्यत उक्तम्—**अभावधर्मात्मतामन्तरेणेति॥** अभावशब्दोऽत्र अविद्यमानपरः, तदात्मत्वं तदवच्छिन्नत्वम् , अविद्यमानधर्मावच्छेदमन्तरेण स्वरूपतयैव यो यत्प्रतिषेधबुद्धिविषयः, नासौ तद्वानिति व्याप्तिर्विवक्षिता, संयोगेन घटवतो भूतलस्य न स्वरूपेण घटप्रतिषेधबुद्धिगोचरता, किंतु व्यधिकरणसम्बन्धेन तत्प्रतिषेधबुद्धिगोचरतेति न तत्र व्यभिचार इति भावः । एतेन—सूत्रभाष्ययोः प्रतिषेधमात्रत्वस्य हेतूकृतत्वेन धीपर्यन्तधावन मनुपपन्नमिति परास्तम् । शून्यस्य प्रतिषेधात्मकत्वाभावेन धीपर्यन्तधावनस्य उचितत्वात् । **प्रलयस्थितत्वाभिधायकश्रुत्याविरुद्धमिति ।।** अत्र यद्यपि विष्णो र्जगत्कारणत्वस्य असतः प्रलये स्थितिमात्रेण न विरोधः, तथापि 'असदेवेदमग्र असी'दिति श्रुतेः सावधारणत्वात् तयाच विष्णोः प्रलये स्थित्यभावापत्त्या विरोध इति द्रष्टव्यम् । **अत्र भाष्ये सर्वशब्दानामिति ।।** सर्वशब्दानां ब्रह्मणि समन्वये विद्यमानेपि जगति व्यवहार विलोपप्रसंगभिया 'तदधीनत्वादर्थवत्' (ब्र. सू. १-४-१) दित्यादिना अन्यस्यापि मुख्यतया वाच्यत्वस्य सूत्रकृतैव अंगीकृतत्वात् । शून्यस्य जगत्कारणत्व साधकप्रबलयुक्त्यनुसरणाय 'असदेवेदमग्रआसी' दित्यादिश्रुतीना मसन्मात्रप्रतिपादकत्वमभ्युपेत्य प्रमाणसंवादार्थानंगीकारानौचित्यादिति मन्यमानस्य असयेव असतः प्राप्तिरित्यर्थः । एतेन— 'असदेवेदमग्र आसी' दित्यत्र सिद्धान्तिना असच्छब्दस्य अमुख्यवृत्त्यापि असत्परत्वानंगीकारात् अमुख्यत्वेन अन्यस्यापि वाचकत्वेन अंगीकारादित्युक्तमयुक्तमिति परास्तम् **अमुख्यतयेत्यर्थइति ॥** श्रुत्यर्थाऽपरिज्ञानेनेत्यर्थः । विमर्शतःप्राप्तं मुख्यतः श्रुतिप्राप्तम् , आपाततस्तु प्राप्तं न मुख्यतः श्रुतिप्राप्तमिति भावेना ऽमुख्यतयेत्युक्तं । एतेन—श्रुतिमुख्यार्थस्यैव

तदमुख्यार्थस्यापि ग्राह्यत्वात् तन्निराकरणानुपपत्तिरिति परास्तम् । **किं नामकारणमिति** ॥ असत्त्वं तावत् अविद्यमानशून्ययोरनुगतं तत्र नेदमविद्यामानम्, 'असदेवेदमग्र आसी' दिति प्रलयकाले सत्त्वेन प्रमाणासिद्धत्वादिति अविद्यामानत्वे दूषिते शून्यत्वमेव सिध्यतीति भावः । एतेन—किं शून्यत्वंसाध्यते, उत तदानीतनाभावप्रतियोगित्वम् । आद्ये दृष्टान्तः साध्यविकलः । द्वितीये त्वर्थान्तरता । कारणस्य प्रलयकालीनाऽभावप्रतियोगित्वसिद्धावपि असतः कारणत्वासिद्धेः प्रलयकालीनाभावानां वस्तुत्वेपि तदानीन्तनाऽभावप्रतियोगित्वाभावात् व्यभिचारश्चेति परास्तम् । शून्यस्य तदानीन्तनाऽभावप्रतियोग्यनुगतस्याऽसत्त्वसामान्यस्य साधनात् । वस्तुत्वादित्यनेना ऽभावविलक्षणत्वस्यैव विवक्षितत्वात् । **युक्तिविरुद्धस्यापीति** ॥ युक्तिप्रतिरुद्धस्यापीत्यर्थः । एतेन — बाधाभावादित्ययुक्तम् युक्तिविरुद्धस्यापीत्यनेन युक्तिबाधस्यांगीकृतत्वादिति परास्तम् । **नचेति**॥ 'असदेवेदमि' ति असच्छब्दघटितायाः श्रुतेः शशविषाणादीनामपि कारणत्वं न वाच्यमित्यर्थः । एतेन— शून्यस्य जगत्कारणत्वे श्रुतिसद्भावात् शशविषाणस्य तदभावेन वैषम्याच्छून्यस्य कारणत्वे शशविषाणस्यापि तत्स्यादितिशंकैव नोदेतीति परास्तम् । ( ९-सू० ) **सत्स्विति** ॥ 'सदेव सोम्येदमग्र आसी 'दिति सच्छब्दघटितायाः श्रुतेः घटादिसाधारण्येऽपि विष्णोरेवैतच्छ्रुतिप्रतिपाद्यत्वं, न घटादेः प्रतिपाद्यत्वमितिवत् शून्यस्यैवासच्छब्दघटित श्रुतिप्रतिपाद्यत्वं न शशविषणादीनामिति वैलक्षण्यसंभवादिति भावः । **कार्यनाश इति** ॥ सन्मात्रस्याकार्यत्वात् यावत्कार्यनाशस्यैव प्रलयत्वेन सत्त्वशेषो न स्यादिति भावः । **अनेन** 'असत उत्पत्तौ प्रलये सर्वासत्त्वमेव स्या 'दिति भाष्यम्, असतः सकाशात् सत उत्पत्तौ प्रलये विद्यमानस्य सर्वस्य कालादेः असत्त्वमेव स्यात्, सद्विलयरूपे प्रलये स्थितस्य सत्त्वायोगादिति व्याख्यातम् । अनेनैवभाष्येण 'अपीतौ तद्वत्प्रसंगादसमंजस 'मितिसूत्रम्, अपीतौ= प्रलये, स्थितस्य= सर्वस्यकालादेः, तद्वत् = शून्यवत्, असत्त्वप्रसंगादसमंजसम् असम्मतमिति व्याख्यातमिति सूचितम् । ( १०-सू० ) **विप्रतिपन्नोत्पत्तिरिति** ॥ अनेन महदादीनां सज्जन्यत्वे सिद्धे तत्कारणस्य प्रलयकालिकस्य सर्वस्य सत्त्वं सिध्यतीति भावः । **परंपरयाचेति** ॥ वेदो न प्रमाणम् अनाप्तवाक्यत्वा-

दित्यादिरूपेणेश्वरादीनां प्रलये सत्त्वावेदकवेदप्रामाण्यनिराकरणद्वारेत्यर्थः । आद्या नुमानस्य व्यतिरेकित्वादन्वयदृष्टान्ताभावो न दोष इत्याशंक्य दूषयति। (११-सू०) **व्यतिरेकइति ।।** प्रलयकालः शशविषाणवान् प्रलयकालत्वात् व्यतिरेकेण सृष्टिकालवदित्यतिप्रसंग इति भावः । **एतेन द्वितीयोपीति।।** वेदप्रामाण्यादेव त्वदभ्युपगतशून्यकारणत्वादेरप्यभावप्रसंगादित्यर्थः।(१२-सू.)**साधनबाधने आक्षिप्येति।।** अयमाक्षेपः तटस्थस्य न पूर्वपक्षिण इति बोध्यम् । एतेन – पूर्वपक्षिणैव तर्केणाऽसत्कारणतां प्रसाध्य विष्णुकारणत्वस्य दूषितत्वात् पुनस्तदप्रामाण्यकथनायोग इति परास्तम् । **न चेन्नासौ वादीति ।।** ननु इदं साधनम् , उत आपादनम् नाद्यः – तस्य वादित्वेन बाधितविषयत्वात्, अवादित्वसाधनस्य प्रकृतानुपयुक्तत्वाच्च । न द्वितीयः – विपर्यये पर्यवसानाभावात् । मोक्षानभ्युपगंतुरपि चार्वाकस्य समयित्वोपलंभेन आपाद्यापादकयो र्व्याप्तिवैधुर्याच्च । नच — चार्वाकः समयी नेति वक्तुं युक्तुम् समयं निराकुर्वता सूत्रकृता तदनिराकरणप्रसंगात्। नापि चार्वाको मोक्षमंगीकरोति इति शक्यतेवक्तुमिति कथं न व्यभिचार इति चेत्, उच्यते – आपादनमेवेदं न साधनं, नच विपर्यये पर्यवसानाभाव इति वाच्यम्— अंगीकर्तव्यत्वाभावस्यैवाऽऽपादकत्वेनांऽगीकारस्याऽनापादकत्वात् । एतेन – चार्वाकेण मोक्षानंगीकारेपि तेनाप्यंगीकर्तव्यत्वात् व्यभिचारः परास्तो वेदितव्यः। सूत्रयोजना तु ‘ एतावानेव तर्क इति प्रतिष्ठापकप्रमाणाभावादुक्तादन्यथाप्यनुमेयमिति सदसतोः कारणत्वसाधनबाधने अनुपपन्ने इति चेत् , अत्रवक्तव्यम् — किं अप्रमाणिकं प्रतितर्केण बाधयितुं शक्यमुत प्रामाणिकम् । आद्येतु एवमित्युत्तरम् । अप्रामाणिकं दूषयितुं शक्यते इति यत् , तत् एवं एवमेव, अस्माकमनुमतमेवेति यावत् । परं तु प्रकृतं सत्कारणत्वादिकं प्रामाणिकमेवेति न प्रतितर्केण दूषयितुं शक्यमिति भावः । द्वितीयेपि वक्तव्यम् – किमेवंवादिनो मते मोक्षोऽस्ति न वेति । नेति पक्षेपि एवमित्युत्तरम् । मोक्षमनंगीकुर्वतो ऽवादित्वेनोपेक्षणीयत्वात्, उपेक्षणीयोत्प्रेक्षितयुक्तिविरोधेपि यदस्माभिः सदसतोः कारणत्वादिकमुक्तं तत् एवमेव — यथास्थितमेव, न ह्यप्रामाणिकोत्प्रेक्षितयुक्तिविरोधेन प्रामाणिकं हीयतइति भावः । आद्ये ‘एवमप्यनिर्मोक्षप्रसंग’ इत्युत्तरम् । एवमपि

मोक्षांगीकर्तृत्वेन वादित्वेनोपेक्षानर्हत्वेपि प्रामाणिकस्यापि मोक्षस्याभावप्रसंगरूप-बाधकसद्भावात् न प्रामाणिकं सत्कारणत्वादिकं युक्तिविरोधेन त्याज्यमिति द्रष्टव्यम्। एतेन—'तर्काप्रतिष्ठानादन्यथानुमेयमिति चेदनिर्मोक्षप्रसंग' इत्येतावता पूर्णत्वात् एवमप्यत्यस्य वैयर्थ्यमिति परास्तम्। ननु—वादिप्रतिवादितर्कयोरुभयोरपि प्रमाण साहाय्ययुक्तत्वे किं कार्यमत आह—**विरुद्धतर्काविति**॥ उभयोरपि प्रमाणसाहाय्ययुक्तमिति भावः। (१३ · सू०) **विप्रतिपन्नमिति**॥ अत्र घटादि सर्वमपि कार्यं वक्ष्यमाणदृष्टान्तव्यतिरिक्तं पक्षइति बोध्यम्। तत्तद्वादिनां सर्वत्रापि विप्रतिपत्तेः। एतेन — कार्यत्वहेतोर्घटादौ व्यभिचारशंका निरस्ता। ननु—अचेतनकर्तृत्वजीवकर्तृत्वादिमते कथंचित्कार्यत्वस्य हेतुत्वसंभवेपि निष्कारणकत्ववादिमते न तस्य हेतुत्वं संभवति विरुद्धत्वात्। अनन्यथासिद्धनियतपश्चाद्भाविन एव कार्यत्वात्, अन्यथा तदभावे ऽसिद्धमिति अनन्यथासिद्धपदेनैव तेनसिद्धत्वरूपसकारणत्वस्याऽभिधानादितिचेत्, न ब्रूमो वयं कार्यत्वेन हेतुना सर्वथाऽकारणकत्वं साध्यतइति येनोक्तदोषःस्यात्, न चैवं किं नाम अकर्तृकत्वं साध्यत इति। तदुक्तम् — 'अकर्तृकत्वाऽचेतनकर्तृकत्वजीवकर्तृकत्वादयोपी'ति। अत एव — 'कूलपतनव'दिति दृष्टान्तोक्तिर्युज्यते, अन्यथा पतनं प्रति कूलस्यैव कारणत्वेनाऽकारणकत्वाभावात् तदुदाहरणमयुक्तं स्यात्। ननु — 'विप्रतिपन्नमचेतनकारण'मिति अचेतनकर्तृकत्वसाधनमनुपपन्नम्, अचेतनं च कर्ता चेत्यस्य विप्रतिषिद्धत्वात्। अचेतनं हि ज्ञानशून्यं, कर्ता चोपादानगोचरापरोक्षज्ञानादिमान् इति कथनं विप्रतिषेध इति चेत्, उक्तम् —किमुक्तं देहेन्द्रियादिव्यतिरिक्त आत्मा नास्त्येवेति मते स्वतो ज्ञानाभावेन अचेतनानामपि देहेंद्रियाणां क्रमुकपर्णादिसमुदाये मदशक्तिवत् समुदाये ज्ञानशक्तिसद्भावेन अचेतनस्य कर्तृत्वांगीकारे न किंचिदनुपपन्नमित्युक्तम्। अत एव – दध्यादिवदिति दृष्टान्तोक्तिरुपपन्ना। आसंचनादिद्वारा देवदत्तादिसंज्ञकदेहानां कर्तृत्वमित्यभिमानात्! **पूर्ववत्परिहरणीयमिति**॥ 'श्रुतिविरोधपरिहारस्य युक्तिविरोधपरिहारांगत्वात् न तृतीयपादे प्रवेशः, 'अपितु युक्तिपाद' इति परिहरणीयमित्यर्थः। एतेन – इदमन्तर्भेदाधिकरणमिति सूचितम्। अन्यथा अस्याऽधिकरणस्य तृतीयपादप्रवेशमाशंक्य परिहारस्य

प्रागेवाभिहितत्वात् पुनस्तदाशंक्य परिहारो व्यर्थः स्यात् ।

**पूर्वपक्षस्तु**— न विष्णोर्जगत्कारणत्वं युक्तम्, प्रमाणाभावात् । न च— 'यतोवा' (तै० उ० ३) इत्यादिश्रुतिः प्रमाणमिति वाच्यम्—ब्रह्म न जगत्कारणं तत्पूर्वमसत्त्वात् । 'यत् यतः पूर्वं नाऽस्ति न तत् तस्य कारण' मिति युक्तिविरुद्धत्वेन श्रुतेः प्रतीतार्थे प्रामाण्यायोगात् । न चासिद्धो हेतुः 'असदेवेदमग्र आसी' (छा० ६-१-२) दिति श्रुतिसिद्धत्वात् । नच— ब्रह्मणोऽकारणत्वे निष्कारणं जगत् आपद्यत इति वाच्यम् — 'असतः सदजायते' (छा० ६-२-२) ति श्रुतिबलेन शून्यस्यैव कारणतया प्राह्यत्वात् । न च ब्रह्मणः कारणत्वेऽिव शून्यस्य कारणत्वांगीकारे युक्तिविरोधोऽस्ति । प्रत्युत प्रलयकालीनकारण मसद्भवितुमर्हति वस्तुत्वात्कार्यवदित्यनुमानेनाऽविद्यमानशून्याऽनुगते ऽसत्सामान्ये सिद्धे नेदमविद्यमानम् 'असदेवेदमग्रआसी' दिति श्रुत्या अविद्यमानत्वे दूषिते परिशेषात्प्रलयकालीनकारणस्य शून्यत्वमेव सिध्यति । अतः शून्यस्यैव जगत्कारणत्वं न ब्रह्मण इति अयुक्तं लक्षणसूत्रमिति ।

**सिद्धांतस्तु**— युक्तमेव विष्णोर्जगत्कारणत्वं, न त्वसतः ; तस्य 'कारणंने' तिकारणताप्रतिषेधबुद्धिविषयत्वात् । व्यधिकरणधर्मावच्छेदमंतरेण यत् प्रतिषेधबुद्धिविषयः, नासौ तद्वानितिव्याप्ते निरवद्यत्वात् । किंच — असतःकारणत्वांगीकारे प्रलयेऽसन्मात्राऽवशेषप्रसंगः । ननु प्रलयगतानां सर्वेषामपि असत्त्वस्येष्टत्वेन नेदमनिष्टापादनमिति चेत्, न — विप्रतिपन्नोत्पत्तिः सतोर्भवितुमर्हति उत्पत्तित्वात् घटोत्पत्तिवत्, विमतोविनाशः सच्छेषः विनाशत्वात् घटनाशवदित्यनुमानाभ्यां प्रलयकालगतस्य सत्त्वसिद्ध्या तदनंगीकारस्य प्रामाणिकहानरूपत्वेनाऽनिष्टत्वात् । किंच — प्रलये सर्वाऽसत्त्वमप्रामाणिकम्, तथाहि — प्रलये स्थितानां कालादीनामसत्त्वं किं प्रत्यक्षवेद्यम्, उत आगमवेद्यम्, आहोस्विदनुमानवेद्यम् । नाद्यः — असन्निकृष्टत्वात् । न द्वितीयः — तदभावात् । नापितृतीयः — दृष्टान्ताद्यभावात् । नन्वयं पूर्वपक्षः सिद्धान्तश्चानुपपन्नः, एतावानेव तर्क इति प्रतिष्ठापकप्रमाणाभावेन उक्तादन्यथाप्यनुमातुं शक्यत्वादिति चेत्, अत्र कक्तव्यं किं प्रामाणिकं तर्कसिद्धं प्रतितर्केण दूषयितुं शक्यम्, उताऽप्रामा

णिकम् । द्वितीयस्त्वभिमतः । आद्येपि किमेवंवादिनो मते मोक्षोऽस्ति न वेति । नेति पक्षे ऽवादित्वेनोपेक्षणीयत्वात् सिद्धान्त्यभिमत प्रमेयाऽविघातक इति सत्कार णत्वादिकं यथास्थितमेव । आद्ये यदि तर्कोऽप्रमाणं स्यात् , तर्हि मोक्ष एव न सिध्येत् तत्साधनोपायाभावात् । नच—आगमेन तत्सिद्धिः, मोक्षमनभ्युपगच्छता तत्प्रामाण्यानंगीकारात् । एतेन— सत्कारणत्वादौ दृष्टान्ताभावेन विप्रतिपन्नं निष्कारणम् , चेतनकारणं, जीवकारणं वा कार्यत्वात् कूलपतनदध्यादिवदित्यादि विरुद्धसिद्धान्ता निरस्ता वेदितव्याः । अतो युक्त्यादेराभासत्वेन अविरोधकत्वात् युक्तं लक्षणसूत्रमिति सिद्धम् । (अ० ४)

---

( ५ - अधिकरणम् )

## ॐ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॐ (सू० १४)

**नविष्णोर्जगत्कर्तृत्वादीति** ॥ अयमत्र प्रयोगो विवक्षितः ' विष्णुर्जगत्कर्ता न जीवाभिन्नत्वात् संप्रतिपन्नव 'दिति । एतेन—हेतोः पक्षवृत्तित्वाभावात् वैयधिकरण्यमिति परास्तम् । अप्रयोजकतां परिहरति — **नहीति** ॥ नहि यो येनात्यन्ताभिन्नः स तद्विरुद्धस्वभाव उपलब्धः येन जीवाभिन्नोऽपि विष्णु र्विश्वकर्त्ता स्यादिति भावः । अतः परं 'तस्य जीवाभेद एव कुत इत्यतः प्राक् जीवाभेदो ह्युभयगतविरुद्धधर्मत्यागेन जीवसालक्षण्यग्रहणेनवा संभवति, सर्वथा न जगत्कारणत्वादि ईश्वरैक निष्ठं संभवती ' ति वाक्यद्वयं प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयम् — जीवाभेदेन पूर्वपक्षमारभ्य चिन्मात्रभेदव्युत्पादनस्यासंगतत्वात् , जीवस्य ईश्वरसालक्षण्यग्रहणेन जीवेश्वराभेदसंभवोक्तेरनुपयुक्तत्वात् । अप्रयोजकताशंकापरिहाराय प्रवृत्तेन साध्यं विना हेत्वसंभवस्यैव व्युत्पादनीयत्वात् , न ह्यनेन — वाक्येनेश्वरस्य जगत्कर्तृत्वे जीवाभेदासंभवो व्युत्पाद्यते येनोपयुक्तं स्यात् , किं नाम ईश्वरधर्मस्य जगत्कारणत्वस्य जीवनिष्ठत्वांगीकारे अभेदः संभवतीति व्युत्पाद्यते । प्रमाणाभावेन प्रमाणविरुद्धत्वेन च ईश्वरस्य जीवसालक्षण्यग्रहणायोगेन ईश्वरस्य जीवसालक्षण्यग्रहणे अभेदः संभवति इत्युक्त्ययोगाच्च । सालक्षण्यस्य भेदव्याप्तत्वेन तेन अभेदोपपादनायोगाच्च । जीवस्य ईश्वरसालक्षण्य

ग्रहणेन अभेदोपपत्तिपक्षे जगत्कारणत्वस्य ईश्वरैकनिष्ठत्वानपायेन, सर्वथा न जगत्कारणत्वादि ईश्वरैकनिष्ठं संभवतीत्युक्त्ययोगाच्च 'नहि जीवाभिन्नस्य जगत्कर्तृत्वाद्युपपद्यत' इत्यनेन वाक्यद्वयस्यानन्वयाच्चेति ॥ **किं चातइति॥** अस्तु मुक्तस्य परापत्तिश्रवणं, तथापि कुतोऽभेदः, न हि यद्यदेवदत्तेनोच्यते तत्तत्तथा भवतीति भावः । **तेनैवेति ॥** श्रुत्युक्तत्वेनैवेत्यर्थः । यद्वाक्येनोच्यते तत्तथेति नियमाभावेऽपि यच्छ्रुत्योच्यते तत्तथेति नियमसद्भावात् ऐक्यसिद्धिरिति भावः । **कथंचिदिति ॥** नियम्यनियामकभावस्य भेदव्याप्तत्वेन अमुक्तनियामकत्वसंभवेपि मुक्तनियामकत्वस्य असंभव इत्यभिप्रेत्य कथंचिदित्युक्तम् । उपसंहरति -- **अतइति ॥** अत्र ईश्वरस्येत्येवपाठः, ननु ईश्वरस्यैवेति । मूलकोशेष्वदर्शनात् । तादात्म्यंप्राप्तोपीत्यस्य मुक्तोपीत्यर्थः कथमित्यत आह – **हराविति ॥**

**पूर्वपक्षस्तु** – न विष्णोर्जगत्कारणत्वादि युक्तम्, तस्यजीवाभिन्नत्वात्, न हि जीवाभिन्नस्य जगत्कर्तृत्वाद्युपपद्यते । जीवाभेद एव कुत इति चेत्, न– 'परेऽव्यये सर्व एकीभवन्ति' (आ० ६ - ७ ) इति श्रुतेः । अतो जीवाभिन्नत्वादीश्वरस्य जगत्कारणत्वाद्यनुपपन्नमिति न लक्षणसूत्रं युक्तम् ।

**सिद्धान्तस्तु** – जीवेश्वरयोरभेदाभावान्नेश्वरस्य विरुद्धं जगत्कारणत्वादिकं न च – 'परेऽव्यये सर्व एकीभवंती'ति श्रुतेः कथमैक्याभाव इति वाच्यम् – 'निरंजनःपरमं साम्यमुपैती'ति (आ० ५ - ३ ) सन्निहितवाक्यविरोधेन श्रुतेस्तत्र तात्पर्याभावात् । का गतिः तर्हि अभेदश्रुतेरिति चेत्, न – स्थानैक्याद्यालंबनत्वेन जलैकीभावोक्तिवदुपचरितत्वोपपत्तेः । अतः विष्णोर्जगत्कारणत्वे युक्तिविरोधाभावादुपपन्नं लक्षणसूत्रमिति सिद्धम् । अ० ५ )

---

( ६ - अधिकरणम् )

## ॐ तदनन्यत्वमारंभणशब्दादिभ्यः ॐ (सू० १५)

**स्वतंत्रसाधनानपेक्षत्वइति ॥** अत्र साधनानां स्वातंत्र्यं नाम अपरायत्तसाधनत्वोपेतत्वम् । एतेन – अचेतनानां स्वातंत्र्यायोगात् स्वतंत्रसाधनानपेक्षत्वे

युक्तिविरोधस्यैवाभावेन तत्परिहारप्रयासो व्यर्थ इति परास्तम् । **तज्जगत्सृष्ट्यादिकंविषयइति** ॥ अत्र यद्यपि ईश्वरो विषयः स्वतन्त्रसाधनसापेक्षो न वेति संदेहः । कर्तृत्वमलौकिकत्वं च सन्देहबीजमिति वक्तव्यम्, तथापि स्वतंत्रसाधनसापेक्षइति पूर्वपक्षयित्वा स्वतन्त्रसाधनसापेक्षो नेति सिद्धान्तकरणे अस्त्येव किंचित्स्वतन्त्रसाधनं परन्तु ईश्वरो न तदपेक्ष इति विज्ञायेत तन्माविज्ञायीति 'जगत्सृष्ट्यादिकं विषय' इत्युक्तम् । जगत्सृष्ट्यादेस्तु स्वतन्त्रसाधनानपेक्षत्वे साधिते स्वतंत्रसाधनं नेत्येव सिध्यति, कार्यानाक्षिप्तस्य कारणत्वायोगात् । **मृदादीनि खल्विति** ॥ यद्यपि मृदादीनामपि ईश्वराधीनसाधनत्वात् स्वतंत्रसाधनत्वं प्रतिवादिनोऽसिद्धमिति साध्यविकलो दृष्टान्तः, तथापि कर्त्रनधीनसाधनसापेक्षत्वस्यैव साध्यत्वात् । मृत्पिण्डादौ च कर्त्रनधीनसाधनत्वसद्भावेन तस्य स्वतंत्रसाधनत्वात् । तत्सापेक्षत्वात् घटसृष्टेः न साध्यविकलता । मृदादीनां कर्त्रनधीनसाधनत्वमेव कुत इत्यत आह — **तानि विनेति**॥ यदि मृदादीनां साधनत्वं कुलालाधीनं स्यात्तर्हि तदपहाय स्रष्टुं समर्थःस्यात् । न चासौ तथेति न तत्साधनत्वं तदधीनमिति भावः। **न तद्दृष्टान्तेनेति** ॥ घटसृष्टिवत् महदादिसृष्टेः स्वतन्त्रसाधनसापेक्षत्वं नकल्प्यमित्यर्थः । तर्हि किं प्रकृत्यादीनां कारणत्वमेव नेति पृच्छति — **किं त्विति** ॥ उत्तरमाह — **स्वतन्त्रसाधनस्येति** ॥ स्वतन्त्रसाधनतया प्रतीयमानस्य प्रकृत्यादेः तद्व्यतिरेकेणासत्त्वं, तदधीनत्वमिति यावत् । प्रकृत्यादीनां स्वातन्त्र्यमेव नास्ति, कारणत्वं तु न विहन्यत इति भावः । आशयमविद्वान् पृच्छति—**किमुक्तं भवतीति** ॥ आशयमुद्घाटयति — **स्वरूपसामर्थ्यादेवेति** ॥ सत्यमुपादानादिसापेक्षा भगवत्सृष्टिः, तथापि— न स्वतन्त्रसाधनसापेक्षा, कुतः ? तच्छक्तेरपि स्वाधीनत्वादिति भावः । **किं स्विदिति श्रुताविति** ॥ अनेन—'तदनन्यत्वमारम्भणशब्दादिभ्य' इति सूत्रं, 'तदनन्यत्वं = स्वतन्त्रसाधनतया प्रतीयमानस्य प्रकृत्यादेस्तद्व्यतिरेकेणासत्त्वं, तदधीनत्वमिति यावत् । तन्नियामकस्य तु तदभिन्नत्वं, आरम्भणशब्दादिभ्यः = आरम्भणशब्दोपेत 'किं स्विदासी' दित्यादि श्रुत्यादिभ्य इति व्याख्यातं भवति । नन्वस्वनन्यशब्दस्याभेदोऽर्थः अधीनत्वं तु कथमर्थ इति चेत् , न – अभिन्न एव स्वाधीनेऽपि 'अनन्योऽयं मतः' इति प्रयोगदर्श

नात्। **आक्षेपस्येति** ॥ आक्षेपो निन्दा। निन्दाच न व्यसनितया क्रियते किंतु तदभावप्रतिपादनाशयेनेति आक्षेपस्य विपर्यये पर्यवसानम् तदभावपरत्वमित्यर्थः। सिंहावलोकनन्यायेन बहुपदकृत्यमाह— **ईश्वरसृष्टेरिति** ॥ 'स्वतन्त्रसाधना सृष्टिर्लोके दृष्टे'त्येतावन्मात्रोक्तौ ईश्वरसृष्टेरपि स्वतन्त्रसाधनसापेक्षत्वमात्रं साधितं स्यात्, तथाच सिद्धसाधनतेति भावः। 'किं स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित् कथासीत्। यतो भूमिं जनयन् विश्वकर्मा विद्यामौर्णोन्महिनाविश्वचक्षा'(ऋ. स. ८-३-१५)इति ऋचं व्याचष्टे—**विश्वकर्मा हरिरिति**॥ विश्वकर्मा येनाधिष्ठानादिना जनयिता बभूव, येन च राजादिमहिम्ना आवृणोत् तदधिष्ठानादिकं किमासीत्? नासीदित्यर्थः। ननु—विश्वकर्मा हरि रिति व्याख्यानमयुक्तम्। 'य इमा विश्वाभुवनानि जुह्वत् ऋषिर्होता न्यसीदत् पिता न' (ऋ.स. ८-३-१६) इति ऋषेर्जगत्कर्तृत्वाभिधानात् इत्यत उक्तम् — **ऋषिरिति** ॥ अयमेव प्रागुक्त ऋषिः नातोऽन्य इति भावः। **अत्रापरतन्त्रत्वादिति** ॥ ईश्वरः स्वतन्त्रसाधनविधुरः साधनमपहाय स्रष्टुं शक्यत्वात्, यः स्वतन्त्रसाधनवान् नासौ तदभावे कर्तुं शक्तः।इदमेव हि साधनानां स्वातन्त्र्यं,यत्,तदभावे कर्तुमशक्यत्वम्। तथेश्वरः स्वतन्त्रसाधनशून्यः स्वेच्छयोपात्तसाधनत्वात्, यः स्वतन्त्रसाधनः नासौ स्वेच्छयोपात्तसाधनः, किंतु विपक्षे कार्यानुपपत्तिभयोपात्तसाधनः, यथा कुलालः तथेश्वरः स्वतन्त्रसाधनरहितः, साधनसत्ताप्रदत्वात्, व्यतिरेकेण कुलालवदिति व्यतिरेकिहेतुत्रयं 'परतन्त्रो ह्यपेक्षते' इत्यनेन भाष्यकृता सूचितमित्यर्थः। एतेन— 'आदिशब्दाद्युक्तिमिश्च' इति भाष्यं 'स्वरूपसामर्थ्यादेव तस्य सृष्टिरित्यनेनान्वितमित्युक्तं भवति। ततश्च — 'स्वरूपसामर्थ्यादेव तस्य सृष्टि'रित्यादि, आदिशब्दाद्युक्तिभिश्चेत्यन्तभाष्यस्य, एवं योजना 'हिशब्दो हेतौ। हि यस्मात् 'किं स्विदासी' दिति साधनान्तराक्षेपः,तस्मात् स्वरूपसामर्थ्यादेव तस्य सृष्टिः, ननु स्वतन्त्रसाधनाधीना। न केवलमाक्षेपात् स्वरूपसामर्थ्यादेव सृष्टिः किंतु आदिशब्दोक्तयुक्तिभिश्च 'इति।(१६ सू.)**वेदादिप्रमाणैरुपलभ्येतेति** ॥ आदिशब्देन वेदानुसारिपौरुषेयग्रन्था गृह्यन्ते। एतेन— 'भावेचोपलब्धे' रिति सूत्रं 'प्रसङ्ग' इति शेषपूरणेन 'स्वतन्त्रसाधनभावे उपलब्धेःप्रसङ्ग' इति व्याख्यातं भवति।

(१६·सू.)**प्रमाणानुपलब्धमपीति**॥आगमानुपलब्धमपि प्रागुक्तानुमानोपलब्धत्वात् किं न स्यादित्यर्थः। भाष्ये **अनुक्तं पञ्चभिर्वेदैरिति**॥ पञ्चभिर्वेदैरनुक्तमतीन्द्रियं वस्तु, कुतश्चन = अनुमानादेः, नास्ति न सिध्यतीत्यर्थः। **अयं भावः** — नाऽनुमानं स्वातन्त्र्येणाऽर्थं साधयति, किं तर्हि प्रत्यक्षागममूलमेवार्थं साधयति। न तावदत्र प्रत्यक्षं मूलमिति शक्यते वक्तुम्, तस्यातीन्द्रियत्वात्। एवं चागमस्याप्यभावे निर्मूलमनुमानममानमिति। ननु — वेदानुक्तमतीन्द्रियं यदि नानुमानात् सिध्यति, तर्हि — ईश्वरस्य वेदानुक्तगुणसिद्धिर्न स्यात्। न चेष्टापत्तिः –'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्के'ति वेदानुक्तगुणसद्भावाभिधानात् इत्यत आह — **भगवद्गुणादिकं चेति**॥ वेदशब्दार्थपर्यालोचनयापि वेदस्य सर्वार्थगमकत्वं गम्यत इति भावेनाह – मूले **अतो वेदत्वमिति**॥ (१७·सू०)**न तदनुपलब्धिरित्याशङ्क्येति**॥ तथाच भावेचोपलब्धेरितीष्टापादनत्वात्तर्काभास इति भावः। **तदधीनस्य च साधनस्येति**॥ चोऽवधारणे। तदधीनस्यैवेत्यर्थः। **अयं भावः** — यस्य स्वतन्त्रसाधनस्योपलब्धिरापाद्यते नास्त्येव तदुपलब्धिः, यत्रोपलभ्यतेऽस्वतन्त्रसाधनं न तस्योपलब्धिरापाद्यत इति नेष्टापादनमिति। 'अद्भ्यःसंभूतःपृथिव्यैरसाच्च। विश्वकर्मणः समवर्तताधि। तस्य त्वष्टा विदधद्रूपमेति। तत्पुरुषस्य विश्वमाजानमग्रे' (नारा०. उ०.) इति वाक्यं व्याचष्टे। **तत्पुरुषाख्य इति**॥ 'नासदासीन्नोसदासीत्तदानीं नासीद्रजो नो व्योमापरो यत्। किमावरीवः कुहकस्य शर्मन्नम्भः किमासीद्गहनं गभीरम्। न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः। आनीदवातं स्वधया तदेकं तस्माद्धान्यन्नपरः किञ्चनास' ( ) इति ऋचं व्याचष्टे–(१८·सू०) **तदानीं प्रलय इति**॥ नासदासीन्नोसदासीदित्यनेन लब्धमर्थ माह -- **पञ्चभूतानि नासुरिति**॥ 'तम आसीत्तमसा गूळमग्रेऽप्रकेतं सलिलं सर्वमा इदं' इति वाक्यं व्याचष्टे–**यत्तमोऽपरिमितमिति**॥ 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्ती सरूपाम्। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इति वाक्यं व्याचष्टे – **रजस्सत्त्व(तमो)गुणात्मिकामिति**॥ **मुक्तामुक्तयोः परस्परं भेदः श्रूयत इति**॥ यद्यपि— अत्रजीवेश्वरभेदसाध-

नार्थमेव प्रमाणमुदाहर्तव्यं नतु मुक्तामुक्तयोः, तथापि — अनेन वाक्येन मुक्तामुक्तयोर्भेदसिद्धौ तस्य अविद्यानिवृत्तौ अनुवर्तमानस्य आविद्यकत्वायोगेन पारमार्थिकत्वस्यैव वक्तव्यत्वेन मुक्तानां परस्परंभेदे वास्तवे सिद्धे सति तेषां परमेश्वरभेदोऽप्यर्थात् सिध्यति, अत्यन्तं भिन्नानामेकेनैक्यायोगात् इत्याशयेनेदं वाक्यमुदाहृतम् । यद्यपि जीवेश्वरभेदप्रतिपादकानि स्पष्टवाक्यानि सन्ति' तथापि— मीमांसार्थं शिष्यबुद्धिशुद्धये इदं वाक्यमुदाहृतमिति द्रष्टव्यम् । 'इतःपरं अत्रेश्वरोऽपि मुक्त उच्यत ' इति टीकायां श्रूयमाणं वाक्यं न टीकावाक्यम्, अपितु ' मुक्तामुक्तयोः परस्परं भेदः श्रूयत ' इति टीकावाक्यव्याख्यानाय केनचिद्विदुषा निर्मितं दैववशाट्टीकायां मिलितमिति बोध्यम् । **चन्द्रिकाभाववोधयोस्तु** — टीकाबहिर्भूतमपीदं वाक्यं टीकया संवलितत्वात् गङ्गाजलानुप्रविष्टयमुनोदकवत् सेव्यमेवेति द्योतनाय व्याख्यातमिति बोध्यम् । अवश्यं चैतदत्र विज्ञेयम्—भाष्ये- श्रुतौ च मुक्तपदाभावेनात्रेश्वरो मुक्त उच्यत इति व्याख्यानायोगात्, न हि व्याख्येयग्रन्थेऽविद्यमानपदव्याख्यानायप्रेक्षावान् प्रवर्तते । न च ' अत्रेश्वरोऽपि मुक्त उच्यत' इत्यनेन ' जहात्येनां भुक्तभोगामजोऽन्य ' इत्यंशात् ईश्वरोऽपि प्रतिपाद्यत इत्यर्थो विवक्षित इति वाच्यम् । नित्यमुक्तस्य ' भुक्तभोगां जहाति ' त्युक्तययोगात् ।

सत्तर्कदीपावल्यां तु — ' न च प्रकृत्यादिकं विना जगत्सृष्ट्यादिरित्यत्र किञ्चित्प्रमाणमस्ती ' त्याह — **न चेति** ॥ प्रलयेऽपि प्रकृतिपुरुषसद्भावे प्रमाणमाह— **अजोह्येक इति** ॥ ' अजामेकां लोहितशुक्लकृष्णा ' मित्यादिनोक्तां न जायते इत्यजां प्रकृतिं एको न जायत इत्यजो जीवो, जुषमाणोऽनुशेते प्रलये, जहात्येनां भुक्तभोगामजोऽन्यो मुच्यमान इत्यर्थः । एतदेव प्रमाणान्तरैर्द्रढयति । ' अनाद्यनन्त ' मित्यादिनेति व्याख्यातम् ।

**साक्षादर्थविषयत्वादिति** ॥ मुख्यतया ज्ञेयविषयीकारित्वादित्यर्थः । **सर्वविषयत्वान्मध्यमत्वमिति** ॥ अमुख्यतयेति शेषः । ततश्च अमुख्यतया सर्वज्ञेयविषयीकारित्वान्मध्यमत्वमित्यर्थः। अयमत्रविवेकः—आगमस्य सर्वज्ञेयविषयीकारित्वस्य ज्ञानवन्मुख्यत्वाभावात् तदपेक्षया अवरत्वमिति । (१९-सू०) **अग्र्यः**

**सम्भुत इत्यादाविति।।** पूर्वटीकासु लोकानां प्रवृत्युच्छेदो मा भूदिति अष्टाविति न व्याख्यातम् । तत्वप्रदीपे तु अष्टौ लोकपाला इति व्याख्यातमिति तथैव बोध्यमिति भावः ॥

**पूर्वपक्षस्तु** – विप्रतिपन्ना सृष्टिः स्वतन्त्रबहुसाधनसापेक्षा सृष्टित्वात् घटादिसृष्टिवत् । तथाचेश्वरः स्वतन्त्रसाधनापेक्षयैव सृष्ट्यादिकर्तेति न तस्य जगज्जन्मादिकारणत्वेन सर्वगुणपूर्णत्वसिद्धिरिति ॥

**सिद्धान्तस्तु**— नाऽनुमानबलेनेश्वरसृष्टेः स्वतन्त्रबहुसाधनसाध्यत्वं वक्तुं शक्यम् , 'किं स्विदासी' दिति श्रुत्या 'ईश्वरः स्वतन्त्रसधनविधुरः साधनान्तरमपहाय स्रष्टुं शक्यत्वात् , व्यतिरेकेण कुलालवत्, तथा 'ईश्वरः स्वतन्त्रसाधनशून्यः, स्वेच्छयोपात्तसाधनत्वात् यः स्वतन्त्रसाधनशून्यः नासौ स्वेच्छयोपात्तसाधनः, किंतु विपक्षे कार्यानुत्पत्तिभयोपात्तसाधनः, यथा कुलालः ; तथा ईश्वरः स्वतन्त्रसाधनरहितः साधनसत्ताप्रदत्वात् व्यतिरेकेण कुलालवत् , इत्यादियुक्तिभिश्च विरुद्धत्वात् । किञ्च – यदीश्वरातिरिक्तं स्वतन्त्रं साधनं स्यात् तर्हि वेदादिप्रमाणैरुपलभ्येत न चोपलभ्यते तस्मान्नास्तीति । ननु 'अद्भ्यः सम्भूतः पृथिव्यै रसाच्चे' त्यादिना ईश्वरातिरिक्तस्वतन्त्रसाधनप्रतीतेः इष्टापादनमे' तदिति चेत्, न — अवरस्यैव साधनस्य सत्वेन श्रुतेस्तद्विषयत्वात् । एवं च यस्योपलब्धिरापाद्यते न तस्योपलब्धिः, यच्चोपलभ्यते न तत् स्वतन्त्रं साधनमिति नेष्टापादनमिति । ननु — 'नासदासी' दिति श्रुत्या सर्वस्यासत्वाभिधानात् साधनान्तरमङ्गीकृत्य तस्येश्वराधीनत्ववर्णनमयुक्तमिति चेत् , न 'नासदासी' दिति श्रुतौ अव्यक्तत्वपरतन्त्रत्वाधमत्वविकृतरूपविनाशादिधर्मापेक्षया असत्वमुच्यते, अव्यक्तादौ तद्व्यपदेशस्यलोके दृष्टत्वात् , नतु सर्वथाऽसत्वाभिप्रायेण । कुतः ? 'तम आसी'दिति वाक्यशेषे साधनान्तरस्य सत्वाभिधानात् । ननु — साधनान्तरमभ्युपगम्य तस्येश्वराधीनत्वकथनाद्वरं साधनाभावकथनमेव, साधनशून्यस्य सृष्ट्यादिकर्तृत्वाभ्युपगमे महिमाधिक्यलाभादिति चेत्, न — स्वाधीनसाधनान्तरेण प्रवृत्तेरपि परमैश्वर्यज्ञापकत्वस्य 'साधनाना' मित्यागमसिद्धत्वेनाविरोधकत्वात् । स्वाधीनसाधनसाहित्येनापि सृष्टेर्युक्तेः । 'अद्भ्यः

सम्भूतो हिरण्यगर्भ इत्यष्टौ ' ( नारायण ) इति श्रुतौ साधनान्तराभिधानाच्च । ' विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तसाधनसापेक्षा सृष्टित्वात् पटसृष्टिवत् ' इत्यादियुक्तिसिद्धत्वाच्च । नन्वेवं सति विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्त-स्वतन्त्रसाधनसापेक्षा सृष्टित्वात् पटसृष्टिवत् ' इत्यादिना साधनानां स्वातन्त्र्यमपि स्यादिति चेत्, न — देहेन्द्रियादाविव प्रकृत्यादावपि परमात्मप्रवेशस्य ' प्रकृतिं पुरुषं चै ' त्यागमसिद्धत्वात् । अनुप्रवेशस्य प्रेरणार्थत्वेन साधनानामस्वातन्त्र्येण बाधितविषयत्वात् । अतो भगवतः स्वातन्त्र्येण सर्वकर्तृत्वे विरोधगन्धाभावात् युक्तं सर्वगुणपरिपूर्णत्वमिति सिद्धम् ( अ० ६ )

( ७ - अधिकरणम् )

## ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ (सू० २२)

**अर्थभेद इति** ॥ ननु – प्रापकभेदादर्थभेदाभिधानमयुक्तम्, एकस्यैव वह्नेः भेदाभावेऽपि प्रत्यक्षाऽनुमानाऽऽगमरूपप्रापकभेददर्शनादिति चेत्, न ब्रूमो वयम् अर्थभेदो विषयभेद इति, येनोक्तदोषः स्यात्, किं नाम श्रुतिप्रामाण्यवा-दिना श्रुत्या जीवकर्तृत्वे शङ्किते तस्या अर्थान्तरवर्णनेन तदीयाऽऽशङ्कापरिहारोऽस्या-धिकरणस्य प्रयोजनम् । समयप्रामाण्यवादिना पुनर्जीवकर्तृत्वे शङ्किते समयाप्रामा-ण्यव्युत्पादनं वक्ष्यमाणाधिकरणस्य प्रयोजनमिति प्रयोजनभेदो ऽर्थभेद इति । **अत एवेति** ॥ श्रुतिप्राप्तस्य विस्तरान्निराकरणाय प्रवृत्तादस्मादेवाधिकरणात् युक्तिविरोधस्य परिहियमाणत्वादित्यर्थः । **जीवस्यैवेति** ॥ कर्तृत्वं जीवस्यैव नान्य-स्येत्यनुभवादित्यर्थः । ननु — जीवस्य कर्तृत्वमात्रमनुभूयते न त्वन्यव्यवच्छेदः, ततश्चासिद्धिरित्यत आह — **सहीति** ॥ स हि जीवो यत्कार्यमारभते तत्समाप-यति आरम्धान्तगामित्वमनुभूयते, ततश्च जीव एव कर्ता नान्य इत्यनुभवो भवेदे-वेति भावः । ननु — कुलालस्य मृत्पिण्डादिवत् नेश्वरःसहकारीत्यभ्युपगम्यते । येनानुभवविरोधः स्यात्, किं नाम अन्तर्यामितया इत्याशङ्क्य निषेधति — **न च वाच्यमस्त्विति** ॥ **अनुपलभ्यमान इति** ॥ जीवशरीर इति शेषः ।

जीवान्तर्यामितया जीवशरीरस्थत्वे जीवेनोपलभ्येत, न हि तन्नियम्यः पटुकरणः तत्र पश्यतीति सम्भवति । राजनियम्येषु भृत्येषु राजद्रष्टृत्वनियमात्, अनुपलम्भबाधितत्वात् जीवान्तर्यामितया जीवस्थित्यभिधायकं वाक्यमपि प्रतीतार्थे अप्रमाणमेवेति भावः । अत्र पूर्वपक्षिणा नेश्वरस्य सर्वथा सत्त्वमुच्यते किंतु जीवप्रेरणाय जीवस्थित्यादिरूपैश्वर्यविशिष्टतया सत्त्वमुच्यते, अनुपलम्भाभिधानात् । यद्देशे ऽनुपलम्भ स्तद्देशे तदभावसाधनस्यैव युक्तत्वात् । अवश्यं चैतदेवं विज्ञेयम्—ब्रह्मणो जगत्कारणत्वाक्षेपस्य पूर्वपक्षफलत्वात् । अन्यथा—तन्न स्यात् । ब्रह्माभावेन तज्जगत्कारणत्वाक्षेपसम्भवे ब्रह्माभावेन जीवस्य स्वातन्त्र्यं प्रसाध्य तत्फलतया ब्रह्मकारणत्वाक्षेपाभिधानवैयर्थ्यात् । **समस्तजगतोऽपीति** ॥ तथात्वं = जीवकर्तृत्वम्, अनीश्वरकर्तृत्वमिति यावत् । **अयं भावः**—घटादिकार्याणां स्वतन्त्रजीवकर्तृत्वे सिद्धे महदादिकार्यकर्तुः परमेश्वरस्य कुलालादिनियामकत्वरूपपरमैश्वर्यवैधुर्या ज्जीवत्वं नेश्वरत्वमिति । अवश्यं चैतदेवं विज्ञेयम्—जीवस्य सशरीरस्यैव कर्तृत्वं घटादौ दृष्टमिति महदाद्युत्पत्तिसमये ऽशरीरस्य तस्य तत्कर्तृत्वायोगात् । **तदुक्तं सुधायाम्**—'नह्यत्राधिकरणे महदादिसकलकार्यकर्तृत्वं जीवस्याशङ्कितं, किंतु घटादिकर्तृत्वमिति नेश्वरस्य सर्वकर्तृत्व' मिति च । **तस्यैवाभावादिति** ॥ परमैश्वर्यादिविशिष्टस्यैवाभावादित्यर्थः । **इदमत्राकूतम्**—'जीवाद्भवन्ती' ति श्रुतेरीश्वरपरत्वं वदन् प्रष्टव्यः ! किं जीवसाधारणब्रह्मपरत्वं श्रुतेरभिमतम्, आहोस्वित् परमैश्वर्यादिविशिष्टब्रह्मपरत्वम् । आद्ये – न नो हानिः, सर्वजीवानां सम्भूय सर्वजगत्कारणत्वं वदद्भिरस्माभिरपि 'जीवाद्भवन्ती' ति श्रुतिः घटादीनां कुलालजन्यत्वमिव महदादीनां जीवतुल्यब्रह्मजन्यत्वं वक्तीत्यङ्गीकारात् । द्वितीये त्विदमुपतिष्ठते — तस्यैवाभावादिति । **जीवस्यैव स्वतन्त्रकर्तृत्वादिति** ॥ घटादावित्ति शेषः । **असम्भवीति** ॥ ब्रह्मणो महदादिकारणत्वेऽपि जन्मादिसूत्रोक्तं सर्वकारणत्वमसम्भवीति भावः । ननु—अत्र सूत्रे हिताकरणादिदोष उच्यते, भाष्ये तु हिताकरणम्, अहितकरणं च न स्यादिति तदभाव आपाद्यते, अतोऽपव्याख्यानमित्यत आह — **यदि जीवस्येति** ॥ 'जीवाद्भवन्ति भूतानि' इति व्यपदेशबलात् जीवः स्वतन्त्रकर्तेत्युच्यते, तर्हि—

राजाद्यनधीनत्वादिरूपहिताकरणं तदधीनत्वादिरूपाहितकरणंच न स्यादित्यर्थः। **इदमुक्तं भवति** — स्यादयं सूत्रभाष्ययोर्विसंवादः, यदि — **सूत्रस्य** हिताकरणरूपदोषप्रसक्तिरित्यर्थो भवेत्, न **चैवम्** — हिताकरणादेः **प्रामाणिकत्वेन** तदापादने इष्टापादनप्रसङ्गात्, किंनाम — हिताक्रियादेः **दोषप्रसक्तिः** = असत्त्वप्रसक्तिरित्यर्थोऽभिमतः, भाष्यकृताच हिताकरणं अहितकरणंच न स्यादिति तदेवोक्तमिति **न** विसंवादः। **न हि स्वतन्त्रस्य ते सम्भवत इति**॥ स्वेष्टं कर्तुं अनिष्टमकर्तुं **यत्** स्वकारणायातं तद्वान्यथाकर्तुं समर्थस्यैव स्वतन्त्रत्वेन जीवः स्वतन्त्रः, असमर्थश्च स्वेष्टकरणे अनिष्टाकरणे चेत्यस्य व्याहतत्वादिति भावः। (सू० २३) **यदि यत्किञ्चिद्दोषमात्रेणेति**॥ दोषस्य यत्किञ्चित्त्वोक्तिः तर्कस्य श्रुतिविरोधेनाभासत्वसूचनायेति बोध्यम्। उभयत्रापि तर्कविरोधसाम्ये किं जीवस्वातन्त्र्याग्रहेणेत्यत आह — **अनुभवादिसिद्धमिति**॥ ईश्वरस्वातन्त्र्यं श्रुतिमात्रसिद्धं जीवस्वातन्त्र्यं तु श्रुत्यनुभवसिद्धमिति भावः। **एवं विधस्येति**॥ शोकाद्यभाववत्तया प्रमाणसिद्धस्येत्यर्थः।(२४सू०)**ईश्वरवदिति**॥कुलालादिजीवनियामकेश्वरवदित्यर्थः। **ईश्वराभ्युपगमानभ्युपगमाभ्यामिति**॥ कुलालादिजीवान्तर्यामीश्वराङ्गीकारानङ्गीकाराभ्यामित्यर्थः। **अस्वातन्त्र्येण हेतुरिति**॥ अन्याधीनत्वेन हेतुना परनिरपेक्षकर्तृत्वाभावस्यापि साधयितुं शक्यत्वादित्यर्थः। **स्वतन्त्रोहीति**॥ अन्यानधीनत्वादीश्वरः अन्यमनपेक्ष्य कार्यं करोति नतु चेतनत्वात्। ततश्च — तदप्रयोजकमिति भावः। **एतेन कर्मसापेक्षतयेति**॥ ईश्वरस्य कर्मसापेक्षत्वाद्वैषम्यनैर्घृण्ययोः दोषत्वपरिहारवत् जीवस्यापि कर्मसापेक्षत्वात् हिताक्रियादीनामसत्त्वपरिहारोऽपि परास्त इत्यर्थः। **तस्याप्यस्वतन्त्रत्वादिति**॥ तस्यापि कर्मानुसरणस्यापि अस्वतन्त्रत्वादस्वातन्त्र्यनिमित्तकत्वादित्यर्थः। **अयं भावः** — भवेदीश्वरस्य कर्मसापेक्षत्वेऽपि स्वातन्त्र्यं तस्य स्वेच्छयैव वेदप्रामाण्यपरित्राणाय कर्मसापेक्षत्वस्वीकारात्, न जीवस्य कर्मसापेक्षत्वे स्वातन्त्र्यम्, तदीयकर्मसापेक्षत्वस्य स्वेच्छानिमित्तत्वाभावात्। न हि स्वानिष्टं कुर्वन् जीवः तत्कर्म ज्ञात्वा स्वेच्छयैव तदुपादाय दुःखं भुङ्क्ते। किंतु विष्टिगृहीतवत् अजानन्नेव कर्मानुसारि फलं भुङ्क्ते इति वैषम्यात् नेश्वरप्रतिबन्द्या तस्य स्वातन्त्र्यसिद्धिरिति।

पक्षे पराधीनत्वमेव कुतः प्रमाणात् सिद्धमिति पृच्छति— **अस्वातन्त्र्यमेवेति॥** (२६ सू०) **तस्यैवाभावादिति।** जीवनियमनाय जीवप्रवेशयुक्तस्य तस्यैवाभावादित्यर्थः। **न च श्रुत्येति॥** 'य आत्मानमन्तरो यमयति' 'सहि कर्ते' त्यादिश्रुत्येत्यर्थः। **सहि कर्तेतीति॥** 'य आत्मानमन्तरो यमयती' ति श्रुतिरपि ग्राह्या। **ननुभवेद्देवानामदृश्यत्वशक्तिमत्त्वम्** अदृश्यत्वशक्तेः देवत्वानन्तर्गतत्वात् देवत्वसाधिकाया उपासनाया एव अदृश्यत्वशक्तिसाधकत्वेन कारणसद्भावात् न त्वीश्वरस्य उपासनाशून्यस्य तस्य कारणाभावेन कार्यस्याप्ययोगादित्याक्षिपति— **कुत इति॥** कारणाभावान्न कुतोऽपीत्यर्थः। उत्तरमाह— **लोके पिशाचादीनामिति॥** अत्र वक्तव्यम्— अदृश्यत्वशक्तिः उपासनासाध्या तद्विधुरपरमेश्वरस्य नेति वदता उपासनाविधुराणां पिशाचादीनां कुतः कारणात् सेति। यदि तस्याः प्रामाणिकत्वात् उपासनारूपकारणासम्भवेऽपि कारणान्तरं कल्प्यते, हन्त तर्हि परमेश्वरस्याप्यदृश्यत्वशक्तेः 'यत्तदद्रेश्य' मित्यादिनिरवकाशप्रमाणसिद्धत्वात् सा कुतो नाङ्गीकार्या? पिशाचादीनां उपासनारूपकारणासम्भवे कारणान्तरकल्पनवत् इह सर्वथा कारणासम्भवे स्वाभाविकाया एव शक्तेरभ्युपगन्तव्यत्वादिति भावः। अनीश्वराणामिति विशेषणं पिशाचानामदृश्यत्वशक्तिहेतूपासनाभावात् कारणान्तरं कल्प्यमिति द्योतनार्थम्। सर्वेश्वरस्येति विशेषणं तु ईश्वरशक्तेः स्वाभाविकत्वेनाकारणकत्वद्योतनार्थमिति बोध्यम्। (२७–सू०) **न केवलमिति॥** न केवलं जीवकर्तृत्वपक्षे हिताक्रियादीनामसत्त्वमापाद्यते किं तर्हि सूत्रार्थतया वक्ष्यमाणश्च दोष आपततीत्यर्थः। **अंशेनवेति॥** क्वचिदिति शेषः। क्वचित् सामस्त्येन क्वचिदंशेनेत्यर्थः। आद्ये कृत्स्नप्रसक्तिरिति दूषणमापाद्यत इति भावेनाह— **नाद्य इति॥** आद्यपक्षे कृत्स्नप्रसक्तः सद्भावादाद्यपक्षो नेत्यर्थः। **न च स्यादेवमिति॥** आद्यपक्षे दूषणत्वेन यदापादितं तदिष्टमिति न वाच्यमित्यर्थः। द्वितीये तु निरवयवत्वशब्दव्याकोपः स्यादिति दूषणमुपतिष्ठत इति भावेनाह— **न द्वितीय इत्यादिना॥** **अंशाभावादिति॥** नन्विदयुक्तम्, अंशेन प्रवृत्तेरनुभवसिद्धत्वस्य भवद्भिरेवाभिधानात्। न ह्यनुभवसिद्धं प्रमाणशतेन नेति शक्यते वक्तुम्, अतिप्रसङ्गात्। किंच— आत्मनः दशदिक्षु दशपरमाणुसं-

योगा भवन्ति, तेषां चाऽव्याप्यवृत्तित्वात् जीवस्यांशाः स्वीकार्याः । प्रदेशवृत्तित्वस्यैव अव्याप्यवृत्तित्वरूपत्वादिति चेत्, न ब्रूमो वयं सर्वथा जीवस्यांशा एव न सन्तीति, येनोक्तदोषः स्यात् । किं नामरात्रिभोजनमन्तरा दिवा अभुञ्जानस्य पीनत्ववत् अनंशतया श्रुतिसिद्धस्यांऽशापादकपरमस्वतन्त्राघटितघटकपरमेश्वरमन्तरा अनुभवसिद्धा अपि नोपपन्ना इति । **न च सांशत्वमिति** ।। अघटितघटकपरमेश्वरमन्तरेति शेषः । **व्याकोपादिति** ।। श्रुतेः स्वतः कार्योपयोग्यंशाभावप्रतिपादकत्वादिति भावः । अतः परं टीकायां श्रूयमाणं 'एतेन कार्यानुसारेण प्रवृत्तिरित्यपि परास्त'मित्यन्तं वाक्यं प्रक्षिप्तम् । अस्त्वंशो न वेति द्वितीयपक्षत्वात् । अत एव – **सुधायां** तृतीयप्रकाराभावा'दित्युक्तम् । ततश्चैवं टीकापाठः 'श्रुतिव्याकोपादिति भावः' इति । घटकान्तरमाशङ्क्य निषेधति – **नेति** ।।

**पूर्वपक्षस्तु**—'स्वतन्त्र एव जीवो घटादिकार्याणांकर्ता,जीवो हि यत् कार्यं करोमीति सामग्रीं मेलयति तत् करोतीत्यनुभवात् , कुलालः घटादिकर्ता तद्विषयकृतिमत्त्वात् यथाहम्' इत्यनुमानाच्च । न चानुभवबलादस्तु जीवः कर्ता तथापि नासौ स्वतन्त्रः, किं नाम-- स्वान्तर्याम्यधीन इति वाच्यम् — जीवशरीरे जीवनियामकेश्वरस्याभावात्, भावेचोपलभ्येत । न हि जीवशरीरे ईश्वरोऽस्ति, जीवश्च तन्नियम्यः, तथापि नासौ तं पश्यतीति शक्यते वक्तुम्, नियम्यानां नियामकदर्शनावश्यम्भावात् एवमपीश्वरकल्पने कल्पनागौरवम्, अप्रामाणिकस्य जीवशरीरस्थत्वस्य तन्नियामकत्वस्य कल्पनात् । एवं च परिदृश्यमानघटादीनां जीवकर्तृत्वे सिद्धे महदादिकार्याणामपि अनीश्वरब्रह्मकर्तृत्वं सिध्यति । 'न कुलालादयो ब्रह्मवशाः, ब्रह्म तु सर्वनियामक' मित्यस्य तु व्याहतत्वात् तथा च श्रुतिः– 'जीवाद्भवन्ति भूतानी'ति । नन्वियं श्रुतिः ईश्वरविषयेति चेत्, अत्र वक्तव्यं । किं जीवसाधारण्येन श्रुतेः ब्रह्मपरत्वमुच्यते, आहोस्वित् परमैश्वर्यादिविशिष्टब्रह्मपरत्वम् । आद्ये न नो हानिः, सर्वजीवानां सम्भूय सर्वजगत्कारणत्वं वदाद्भिरस्माभिरपि 'जीवाद्भवन्ती'ति श्रुतिः घटादीनां कुलालजन्यत्वमिव महदादीनां जीवतुल्यब्रह्मजन्यत्वं वदतीत्यङ्गीकारात् । न द्वितीयः तस्यैवाभावात् । अतः श्रुत्यादिबलाज्जीवस्यैव स्वतः कर्तृत्वात् असम्भवि द्वितीयसूत्रोक्तं सर्वजगज्जन्मादिकारणत्वलक्षणं ब्रह्मण इति ॥

**सिद्धान्तस्तु** – न जीवः स्वातन्त्र्येण कर्ता, अपितु – परमेश्वरः, तर्कविरुद्धत्वात् । तथाहि — यदि स्वातन्त्र्येण कर्ता स्यात् तर्हि — हिताकरणम्, अहितकरणंच न स्यात् । विद्येते च ते । अतो नासौ स्वतन्त्रः कर्ता । ननु — यदि यत्किञ्चिद्दोषमात्रेण जीवकर्तृता निराक्रियते तर्हि – ब्रह्मणोऽपि कर्तृत्वं न प्रप्नोति, तस्यापि भ्रमादिदोषनियमात् । एवं पक्षयोःसाम्ये ऽनुभवादिसिद्धं जीवकर्तृत्वमेवाश्रयणीयमिति चेत्, न — ईश्वरे भ्रमाद्यभावस्य प्रमाणसिद्धत्वेन तदभावापादनस्येष्टापादनत्वात् । जीवेच हिताकरणादीनां प्रामाणिकत्वेन तदभावापादनस्यानिष्टत्वेन वैषम्यात् । नन्वथापि जीवः अन्यनिरपेक्षकर्ता चेतनत्वात् ईश्वरवत् इत्यनुमानात् स्वातन्त्र्यमिति चेत्, न — अस्वातन्त्र्येण हेतुना अन्यनिरपेक्षत्वाभावस्यापि साधयितुं शक्यत्वात्, चेतनत्वहेतोरप्रयोजकत्वाच्च । ननु — न जीवस्य स्वतःकर्तृत्वाभावो युक्तः, सहि यत् कार्यमारभते तत् समापयतीत्युपसंहारदर्शनादिति चेत्, न — गोषु क्षीरदर्शनेऽपि प्रामाणिकत्वेन प्राणाधीनत्ववत् एतस्य परमात्माधीनत्वोपपत्तेः । न जीवस्येश्वराधीनकर्तृत्वं वाच्यम्, ईश्वरस्य जीवनियामकत्वेन जीवशरीरेऽनुपलब्धेः । नहि जीवः तन्नियम्यः सन् तदाज्ञया प्रवर्तते, तंच न जानातीति सम्भवति अतो जीवनियामकत्वेन नास्त्येव जीवशरीरस्थ ईश्वर इति चेत्, न — देवादिवदन्तर्धानशक्त्या प्रत्यक्षेणाऽनुपलभ्यमानत्वेऽपि आगमेनोपलभ्यमानत्वात् । न चेश्वरस्य देवादिवदन्तर्धानशक्तिमत्त्वं युक्तम्, तस्या उपासनासाध्यत्वेनेश्वरे तदभावादिति चेत्, हन्ततर्हि पिशाचादीनां तन्न स्यात् उपासनाभावात् । अथ प्रमाणसिद्धाऽन्तर्धानशक्तिः पिशाचादीनां न हातुं शक्येति कारणान्तरं कल्प्यते,तर्हि 'यत्तदद्रेश्य' मित्यादिप्रमाणसिद्धा सा न हातुं शक्येति नित्या सा कल्प्यताम् । किंच– जीवः स्वतन्त्रः कर्तेति वदन् प्रष्टव्यः, जीवः सामस्त्येन सर्वस्वकार्यकर्ता, उत कचिदंशेन । आद्ये यदि जीवःसामस्त्येन सर्वस्वकार्यकर्ता स्यात् सामस्त्येन तृणादानादावपि कर्ता स्यादिति तर्कविरोधः । द्वितीये — यदि जीवः अंशेन स्वकार्यकर्ता स्यात् तर्हि निरंशत्वप्रतिपादकश्रुत्यप्रामाण्यं स्यादिति तर्कविरोधः। तथाच कर्तृत्वं सामस्त्येन अंशेन वा प्रवृत्तिव्याप्यमिति जीवस्य स्वातन्त्र्याङ्गीकारे व्याप-

कीभूतप्रवृत्त्ययोगात् कर्तृत्वमेव न स्यादिति स्वातन्त्र्यं त्याज्यम् । न जीवस्य स्वतःकर्तृत्वेऽपि दोषावकाशः, तस्योपाधिकृतांशत्वेन कृत्स्नप्रसक्त्ययोगात्, स्वाभाविकांशाभावेन श्रुतिविरोधाभावादिति चेत्, तत्र वक्तव्यम् — किं जीवः सर्वोऽप्युपहितः तदंशो वा । नाद्यः — सर्वजीवस्योपहितत्वे सर्वस्य ग्रस्तत्वेनांशस्यौपाधिकत्वायोगात् । द्वितीये — नौपाधिकत्वम्, उपाधिसम्बन्धात् प्रागपि अंशस्य वक्तव्यत्वात्, तस्याप्युपाध्यन्तरकृतत्वे ऽनवस्थानात् । ननु — जीवस्य कर्तृत्वं युक्तिविरुद्धत्वादविचारितरमणीयाविद्यानिमित्तमस्त्विति चेत्, न—अविद्यानिमित्तत्वस्याप्रामाणिकत्वात् । 'यद्धि युक्त्या विरुध्येते' ति प्रमाणविरुद्धत्वाच्च । तस्मात् जीवस्य स्वतःकर्तृत्वानुपपत्तेः, युक्त हरेर्जगज्जन्मादिकारणत्वलक्षणमिति सिद्धम् ॥ ७ ॥

---

( ८ - अधिकरणम् )

## ॐ श्रुतेस्तु शब्दमूलत्वात ॐ ( सू० २८ )

**कृत्स्नप्रसक्तेति** ।। नन्विष्टापादनमेतत्, कृष्णकेशस्यापि पूर्णब्रह्मत्ववत् तृणादानादिशक्तेरपि पूर्णशक्तित्वादिति चेत्, न – यद्येकदेशोऽपि पूर्णः स्यात्, तर्हि – एकदेश एव न स्यात्, एकदेशः कृत्स्नश्चेत्यस्य व्याहतत्वात् । तथाच — परेणाङ्गीकृतत्वेऽपि तस्य प्रमाणविरुद्धत्वेन अनिष्टत्वेनापादनसम्भवात् । नन्वयं दोषः जीवस्वातन्त्र्याङ्गीकार एव ननु परमेश्वरस्वातन्त्र्याङ्गीकारे, तस्य परमैश्वर्यसम्पन्नत्वेन जीवादुत्कृष्टत्वात् । नहि — परमाशक्तस्य मुमूर्षो गुरुतरभारोद्वहनादिकर्तृत्वाङ्गीकारे यो दोषः स दृढाङ्गस्यापि तदङ्गीकारे भवतीत्याशङ्क्य निषेधति — **न हि वक्तुं युक्तमिति** ।। कुतो न युक्तमित्यत आह — **ईश्वरेतदस्पर्शनिमित्तस्येति** ।। सत्यमीश्वरस्य परमैश्वर्यं जीवव्यावृत्तमस्ति, नासौ ईश्वरस्वातन्त्र्याङ्गीकर्तुः कृत्स्नप्रसक्त्यादिदोषनिरासहेतुः, किंतु — कात्स्न्र्यप्रवृत्त्यवयवप्रवृत्ती विना प्रकारान्तरेणेश्वरस्य प्रवृत्तिमत्त्वमेव तत्स्वातन्त्र्याङ्गीकर्तुं दोषनिरासहेतुः, न चासावीश्वरेऽस्तीति कृत्स्नप्रसक्त्यादिदोषानिरास इति भावः ।

**शब्दैकसमधिगम्य इति** ॥ अनुमानं तावत् न स्वातन्त्र्येणार्थं साधयति, किंतु प्रत्यक्षमनुमानं वोपजीव्यैवाऽर्थं साधयतीत्यविवादम् । ततश्च – परमेश्वरस्यातीन्द्रियत्वादागमोपजीव्यनुमानमेव विरोधीति वक्तव्यम् । नच तत् सम्भवति, उपजीव्यविरुद्धत्वेन स्वस्यैवाप्रामाण्यादिति भावः । **प्रत्यक्षाविषय इति** ॥ रामकृष्णादौ दोषग्राहिप्रत्यक्षवदित्यर्थः । ' अमनुः, अवाक्, अनिन्द्रः, अप्रवृत्तिरिति ' पदचतुष्टयं युगपद्व्याचष्टे — **न मन्तेत्यादिना** ॥ न विद्यते मन्ता यस्यासावमनुः, न विद्यते वक्ता यस्यासाववाक्, न विद्यते स्वामी यस्यासावनिन्द्रः, न विद्यते प्रवर्तको यस्यासावप्रवृत्तिरिति विवेकः । ( २९ सू०. ) **न तांस्तर्केण योजयेदिति** ॥ अचिन्त्यधर्मसाधनाय, बाधनाय वा, तर्को न प्रयोक्तव्य इत्यर्थः । शब्दमूलत्वादित्यस्य नहि शब्दैकसमधिगम्ये वस्तुनि युक्तिविरोधः, यथा प्रत्यक्षाविषये प्रत्यक्षाविरोध ' इति टीकोक्ताशयमजानन् अचिन्त्यशक्तिमत्त्वं चाऽप्रयोजकमिति मन्यमानः शब्दैकसमधिगम्यत्वादिहेतुना यदि विरोधानामविरोधत्वं तर्हि जीवेऽपि चेतनत्वेन हेतुना विरोधानामविरोधत्वं वक्तव्यमिति शङ्कते – ( ३०. सू०. ) **नन्विति** ॥ ( ३१ · सू०. ) **श्रुत्यनुसारेण स्त्रीलिङ्गप्रयोग इति** । सूत्र इति शेषः ।

**पूर्वपक्षस्तु** – नेश्वरस्य स्वातन्त्र्येण कर्तृत्वं युक्तम् , यदीश्वरः कर्ता स्यात्, तर्हि – कार्त्स्न्येनांशेन वा प्रवृत्तिमान् स्यात् । नच तदीश्वरे सम्भवतीति तर्कबाधितत्वात् । न च — वाच्यमयं दोषो जीवकर्तृत्वाङ्गीकार एव, नेश्वरकर्तृत्वाङ्गीकार इति, दोषनिरासोपयुक्तायाः प्रकारान्तरेण प्रवृत्तेरीश्वरेऽभावात् । अन्यथा – स दोषो न स्यात् । ननु–विचित्रशक्तिवशात् नेश्वरे विरोध इत्ययुक्तम् , सा विचित्रशक्तिः यदाऽल्पविषया यदाच नश्यति तदा दोषावश्यंभावनियमात् । किंच – नेश्वरस्य कर्तृत्वं युक्तम् हस्तादिकरणशून्यत्वात् । अतो युक्तिविरोधात् न विष्णोर्जगत्कारणत्वं युक्तमिति ।

**सिद्धान्तस्तु** – नेश्वरस्य स्वातन्त्र्येण कर्तृत्वे युक्तिविरोधः, विरोधयुक्तेर्धर्मिग्राहकागमोपजीव्यत्वेन तद्बाधेन युक्तेरेवाप्रामाण्यात् । किंच – ईश्वरस्याचिन्त्यशक्तियुक्तत्वात् तद्बलेन अनंशत्वेपि अंशकार्यकारितोपपन्ना । न चैवं सति

जीवस्यापि स्वातन्त्र्येण कर्तृत्वं वक्तुं शक्यम् – दोषित्वेन कल्पकाभावेन तद्दोषस्य अदोषतया नेतुमशक्यत्वात् । नन्वथापि विकरणत्वान्नेश्वरस्य कर्तृत्वं युक्तमिति चेत्, न – 'अपाणिपाद' इति श्रुतौ पाण्यादिरहितस्यापि हरेः ग्राहकत्वादिकमुक्त्वा 'न तस्य कार्यं' मित्यादिना पाण्यादिरहितत्वस्य प्राकृतविषयत्वेन सर्वोत्तमत्वेन परमशक्तित्वेन च उपपादितत्वात् । अतो विष्णोर्जगत्कर्तृत्वे विरोधाभावात् युक्तं लक्षणसूत्रमिति सिद्धम् (अ. ८.)

---

(९ अधिकरणम्)

ॐ न प्रयोजनवत्त्वात ॐ (३३ - सू०.)

**निष्फलत्वादियुक्तिपरिहारादिति ॥** अत्र निष्फलत्वं उद्देश्यविधुरत्वम् । आदिशब्देनापूर्णत्वप्रसङ्गो गृहीतः । अत एव भाष्ये तदूनत्वादिति प्रयोजनविशेषशून्यत्वमुक्तम् । (३४ - सू०.) **लोकानुग्रहायेति ॥** लोकवत्तु लीलाकैवल्य' मित्यनेन स्वप्रयोजनमेव निराकृतं न तुपरप्रयोजनमिति भावः ॥

**पूर्वपक्षस्तु** — विष्णो र्न सर्वकर्तृत्वादि युक्तम् । तथाहि – किं विष्णुः प्रयोजनोद्देशेन सृष्ट्यादिकं करोति तदनुद्देशेन वा । नोभयथापि सर्वकर्तृत्वम्, आद्ये अपूर्णत्वात् । द्वितीये – प्रवृत्तेरेवायोगेन सर्वकर्तृत्वस्य सुतरामयोगात् । विधान्तरस्य चाऽभावेऽनुपपन्नमेव सर्वकर्तृत्वमिति ।

**सिद्धान्तस्तु** – युक्तमेव विष्णोः सर्वकर्तृत्वम्, तस्य पूर्णानन्दत्वेन प्राप्तप्राप्तव्यतया फलोद्देशेन प्रवृत्त्यनङ्गीकारात् । नच – फलानुद्देशेन प्रवृत्त्यनुपपत्तिरिति वाच्यम् लोकवल्लीलयैव प्रवृत्त्युपपत्तेः । नहि लीला प्रयोजनान्तराय भवति । मत्तस्य नृत्तगानादिलीलायाः प्रयोजनाभावेऽपि दर्शनात् । अतो विरोधाभावायुक्तं लक्षणसूत्रमिति सिद्धम् (अ०. ९.)

---

( १० अधिकरणम् )

## ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॐ (३५-सू.)

**सृष्ट्यादिकरोतीति** ॥ प्राणिनामिति शेषः । आदिशब्देन सुखदुःखादिकं ग्राह्यम् । प्राणिनां कर्मसापेक्षः सुरनरतिर्यगादिनीचोच्चयोनिषु सृष्टिं करोति । विभागेन सुखदुःखादिकं च ददातीत्यर्थः । द्वितीयपक्षं परिशेषयितुं आद्यं दूषयति – **नाद्य इति** ॥ इष्टापत्तिरित्यत आह — **अस्वतन्त्रस्येति** ॥ यद्यसौ सहकार्यभावे स्रष्टुमशक्तः, तर्हि आदिकाले सहकारिवैधुर्येण महदादिस्रष्टृत्वं न स्यादिति स्वाभिलषितसर्वकर्तृत्वविरोधित्वान्नास्वातन्त्र्यमिष्टमिति भावः । द्वितीयेत्विदं भाष्यमुपतिष्ठत इति भावेनाह — **द्वितीय इति** ॥ कुत इत्यत आह – **निर्निमित्तमिति** ॥ अत्रेमौ प्रयोगौ – ईश्वरो विषमः, निर्निमित्तं कांश्चिद्देवादिरूपाद्य, सुखदातृत्वात् । तथा – 'ईश्वरो निर्घृणः, निर्निमित्तमेव कांश्चिद्दैत्यादिरूपाद्य दुःखदातृत्वात्' इति । यदर्थं वैषम्यनैर्घृण्ये साधिते तदाह – **वैषम्यादिदोषवतश्चेति** ॥ 'ईश्वरो न महदादिस्रष्टा, वैषम्यादिदोषवान् देवदत्तवत्' इति प्रयोगो द्रष्टव्य इति । एतेन – किमिदमापादन मुत साधनम् । नाद्यः — वैषम्यनैर्घृण्याभावस्य पूर्वपक्षिणाप्यङ्गीकृतत्वेन 'वैषम्यनैर्घृण्ये न सापेक्षत्वा' दित्यनेन सिद्धान्तेन तदभावसाधनवैयर्थ्यात् । किंच – अस्मिन् पक्षे वैषम्यादिदोषवतश्च न सर्वकर्तृत्वमित्युत्तरवाक्यमसङ्गतं प्राप्नोति । न चाऽऽपाद्यस्येष्टत्वपरिहारार्थमुत्तरवाक्यमिति वाच्यम् – यदि प्राणिनां कर्मानपेक्ष्यैव सर्वकर्ता स्यात् , तर्हि — वैषम्यनैर्घृण्ये स्यातामिति आपादयित्वैव आपाद्यापादकयोर्व्याप्तेरङ्गीकृतत्वेन इहपुनर्वैषम्यादिदोषवतश्च न सर्वकर्तृत्वमित्यापाद्यस्य तदभावव्याप्यत्वकथनविरोधात् । अत एव – न द्वितीयः —वैषम्यादिदोषवतश्च न सर्वकर्तृत्वमित्युत्तरवाक्यायोगप्रसङ्गात् । कर्मानपेक्ष्यैव सर्वकर्तृत्वलिङ्गोपजीवनेन सिद्धस्य वैषम्यादेः तद्विघातकत्वायोगात् । नहि व्यापकेन व्याप्याभावसाधन मिति परास्तम् । कर्मनैरपेक्ष्येण सुखदुःखदातृत्वहेतुना वैषम्यनैर्घृण्ये प्रसाध्य ताभ्यां तदन्यस्यैव महदादिसर्वकर्तृत्वस्य निराकरणाङ्गीकारात् । युक्तिविरोधेन सर्वकर्तृत्वं दूषयित्वा प्रमाणा-

भावेन दूषयितुमाह — **कर्मानपेक्षयेति॥** सर्वप्राणिगतसुखदुःखकर्तृत्वे चेत्यर्थः। ज्योतिष्टोमादिवाक्यप्रमाणं सुखाद्यसाधनस्यापि पुण्यादेः तत्साधनत्वाभिधायित्वा' दिति प्रयोगात् ज्योतिष्टोमादिव अप्रामाण्यं स्यात् । ततश्च 'विष्णोः सर्वकर्तृत्वाभिधायको वेदः अप्रमाणं वेदत्वात् ज्योतिष्टोमादिवाक्यवत्' इति प्रयोगसम्भवेन प्रमाणाभावात् न विष्णोः सर्वकर्तृत्वमिति भावः। (सू.३७)**ततोऽन्यत्त्विति॥** नाङ्गीकार्यमिति वर्तते । ततोऽन्यत्तु वेदाप्रामाण्यकारणादन्यत् वैषम्यादिनामकं नाङ्गीकार्यं न अङ्गीकार्यमेवेत्यर्थः।

**पूर्वपक्षस्तु** — न विष्णोः सर्वकर्तृत्वं युक्तम्, वैषम्यादिदोषवत्त्वात् । तथाहि — विष्णुः सर्वकर्तेति वदन् प्रष्टव्यः, ईश्वरः सुरनरतिर्यगादिनानायोनिषु प्राणिनो जनयित्वा तेषां विभागेन सुखदुःखे ददाति, तत्किं तेषां कर्मानुसारेण, उत तन्नैरपेक्ष्येण । नाद्यः — अस्वातन्त्र्यापातात् । नियमेन कर्मसापेक्षस्यास्वातन्त्र्यनियमात् । द्वितीयेतु वैषम्यनैर्घृण्ये प्राप्नुतः, निर्निमित्तं विभागेन सुखदुःखदातृत्वादिति । किञ्च — नेश्वरस्य सर्वकर्तृत्वे मानमीक्षामहे, मानत्वेनाभिमतस्य वेदस्य ज्योतिष्टोमादिप्रतिपादकवेदवदमानत्वात् । ज्योतिष्टोमादिवेदामानत्वं तु सुखदुःखसाधनत्वेन तदुक्तानां धर्मादीनां नैरपेक्ष्येण सुखादिप्रदत्वात् सिद्धम् । अतो हरेः सर्वकर्तृत्वायोगान्न युक्तं लक्षणसूत्रमिति ।

**सिद्धान्तस्तु** — युक्तमेव विष्णोर्जगत्स्रष्टृत्वादिकम्, तत्तत्कर्मानुसारेण फलदातृत्वाङ्गीकारेण वैषम्यनैर्घृण्याभावात् । नन्वपेक्ष्यकर्मणोऽभावात् न तदपेक्षया वैषम्यादिदोषपरिहारः सम्भवति, न चास्ति पूर्वकर्मेति वाच्यम् — 'एव ह्येवे' ति श्रुतौ तस्यापि भगवदधीनत्वश्रवणात् । स्वकारितापेक्षया फलदाने वैषम्यादेरनिस्तारादिति चेत्, भवेदयं दोषः पूर्वतनं कर्म ईश्वरेण यदि निरपेक्षेण कारितं स्यात्, न चैवम् — किं तर्हि प्राचीनकर्मानुसारेण कारितम् । नच — वाच्यं यत्रैव पर्यवसानं तदारभ्य दोष इति — कर्मपरम्पराया अनादित्वात् । नन्वथापि नेश्वरस्य कर्मापेक्षया फलदातृत्वं युक्तं अस्वातन्त्र्यप्रसङ्गादिति चेत्, उपपद्यते खलु ईश्वरस्य कर्मसापेक्षत्वेऽपि स्वातन्त्र्यं, स्वाधीनसापेक्षायाः स्वातन्त्र्याऽविरोधित्वात् । नच — तथासति पुनर्वैषम्यादिकं स्यादिति वाच्यम् —

दृष्टत्वात् । तदुक्तम् —

'वैषम्यं निर्घृणत्वन्तु वेदाप्रामाण्यकारणम् ।
नाङ्गीकार्यं ततोऽन्यत्तु न वैषम्यादिनाशकम् ' ॥

इति । अतो हरेः सर्वकर्तृत्वे युक्तिविरोधाभावादुक्तं लक्षणसूत्रमिति सिद्धम् (अ०. १०)

( ११ अधिकरणम् )

ॐ सर्वधर्मोपपत्तेश्च ॐ　( सू०. ३८ )

**अत एवात्र विष्णोरिति ॥** यद्यप्यत्र पूर्णगुणत्वं निगमयति सूत्रकारः, तथापि - युक्तिविरोधपरिहारेण तत् समर्थ्य निगमयेदित्यर्थः ।

**पूर्वपक्षस्तु** – न विष्णुः सर्वगुणपूर्णः, चेतनत्वात् , अन्यथा देवदत्तादीनामपि तथात्वं स्यादिति ।

**सिद्धान्तस्तु** —युक्तमेव विष्णोः सर्वगुणपूर्णत्वं स्वतन्त्रत्वात् । ' गुणाः श्रुताः सुविरुद्धाश्च देवे ' इति श्रुतेश्च । तस्मात् विष्णोः सर्वगुणपूर्णत्वे युक्तिविरोधगन्धाभावात् उक्तं सर्वमुपपन्नमिति सिद्धम् (अ०. ११)

इति श्रीमत्सत्यनिधितीर्थ श्रीचरणाराधक श्रीमत्सत्यनाथयतिविरचितायां
तत्वप्रकाशिकाभिनवचन्द्रिकायां
द्वितीयाध्यायस्य प्रथमः पादः
श्रीकृष्णार्पणमस्तु

श्रीगुरुभ्यो नमः

# अथ द्वितीयस्य द्वितीयः पादः

( १ - अधिकरणम् )

## ॐ रचनानुपपत्तेश्च नानुमानम् ॐ [ सू . १]

**एतत्पादार्थमिति॥** 'अध्यायस्यैकार्थत्वात् पादभेदः किंनिबन्धन इत्यत' इति वर्तते । तस्य ' एतत्पादार्थं दर्शयती 'त्यनेन सम्बन्धः । **आद्याधिकरणार्थमिति ॥** ' पादस्यैकार्थत्वादधिकरणभेदः किं निबन्धन इत्यत ' इति शेषः । **सांख्ययोगाविति ॥** उपलक्षणमेतत् । चार्वाक इत्यपि ग्राह्यम् । यद्यपि — चार्वाकः प्रत्यक्षमात्रप्रामाण्यवादित्वान्न हैतुकः, तथापि — पररीतिमवलम्ब्य स्वशास्त्रे बहुयुक्त्युपन्यासात् सोऽपि हैतुकेषु सङ्ग्राह्य इति बोध्यम् । **अत एवेति ॥** अस्यैव विवरणं हरेर्जगत्कारणत्वे निरीश्वरसांख्यमतविरोधपरिहारा' दिति । **प्रकृतेरेव महदादिकारणत्वादिति ॥** कर्तृविरहितायाः प्रकृतेः महदादिकारणत्वादित्यर्थः । कर्तृविरहितायाः प्रकृतेः कारणत्वं वक्तुं कारणत्वमात्रसाधकमनुमानं तावदाह — **भवितव्यंखल्विति ॥** कार्यस्य स्वसदृशकारणकत्वनियमेऽपि ईश्वर एव कारणमस्त्वित्यत आह — **न हीति ॥ न चेति ॥** प्रेरकत्वमिह कार्योन्मुखीकरणम् । **केवलप्रकृतेरेवेति ॥** केवलायाः प्रकृतेः कार्योन्मुखत्वस्य समयकर्तृभिरभ्युपगमादित्यर्थः । **अशेषकर्तृत्वादिति ॥** अशेषकार्योन्मुखत्वादित्यर्थः । एतेन — कर्तृत्वस्य ज्ञानादिमत्त्वरूपत्वात् अचेतनस्य कर्तृत्वाभिधानमयुक्तमिति परास्तम् । **जगत्कर्त्रीति ॥** स्वत एव कार्योन्मुखमित्यर्थः । **कर्तृ भवतीति ॥** स्वतःकार्योन्मुखं भवतीत्यर्थः । कर्तैव खलु स्वतःप्रवृत्तिमत्त्वात् स्वतःकार्योन्मुखः, अन्यत्तु उपादानादिकं प्रयत्नविधुरत्वात् कर्त्रधीनतया कार्योन्मुखमिति भावः । (२ - सू ) **युक्त्यन्तरेणापीति ॥** यद्यपि सूत्रे युक्तिर्नोच्यते, तथापि — 'प्रवृत्ते'रिति घटादौ चेतनस्य प्रवृत्त्युक्त्या दृष्टान्तस्य सूचितत्वादनुमानं लब्धमिति भावेन युक्त्यन्तरेणेत्युक्तमिति द्रष्टव्यम् । ननु — ' चेतनस्य

स्वतःप्रवृत्तिदर्शनाच्चे'ति भाष्यमयुक्तम्, अनुपयुक्तत्वात् ।'प्रवृत्तेश्चे'(२ २-२)ति सूत्रव्याख्यानत्वाभावाच्चेत्यत आह – **महदादिसृष्टिश्चेति** ॥ सूत्रं दृष्टान्तसूचनेन **अनुमानसूचकम्** । भाष्यं तु – सूत्रस्य दृष्टान्तसूचकत्वसिद्धये शेषपूरणेन व्याख्यानरूपमित्यदोषः । अहं करोमीति नाऽनुभवः, किंतु माणवकस्य सिंहोऽह मितिवत् मानसो व्यवहार एव, तथाच – दृष्टान्ते न साध्यवैकल्यपरिहार इत्याशङ्क्य निषेधति – **नचेति** ॥ **विशिष्टज्ञानमात्रेति** ॥ अहं दुःखीत्याद्यपि न ज्ञानं किंतु – व्यवहारमात्रमेव स्यादिति भावः। **प्रतिपादयिष्यते चैतदितीति**॥ जीवकर्तृत्वं 'कर्ता शास्त्रार्थवत्त्वात्' (ब्र.सू. २—३—३३) इत्यनेन प्रतिपादयिष्यत इत्यर्थः। पयोऽम्बुवदिति प्रतीकग्रहणानन्तरं टीकायां श्रूयमाणम् 'अपि पदं चेतनप्रवृत्तेराकर्षार्थ'मिति वाक्यं न टीकावाक्यं, किंतु प्रक्षिप्तम् । तथाहि – 'शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यत' इति नियमात् पदाकर्ष एवेति वाच्यम् – पूर्वोत्तरसूत्रयोः चेतनप्रवृत्तिपदाभावेनाकर्षायोगात् ; चेतनप्रवृत्तेरित्यस्याकर्षार्थमिति पाठप्रसङ्गाच्च । 'एतेन ह वाव पयो मण्डं भवती'त्यादि तत्रापि ईश्वरनिमित्तप्रवृत्तिश्रुते' रिति भाष्ये ; अचेतनत्वहेतोर्व्यभिचाराधिकरणतया ये उदाहृते पयोऽम्बुनी तत्रापीत्यपिशब्दस्य व्याख्यातत्वाच्चेति । (३ - सू.) **अचेतनस्यैवाम्बुनो गतिदर्शनादिति** ॥ इतःपरं श्रूयमाणं 'तथा कूलस्य पतनदर्शना दिति वाक्यं प्रक्षिप्तम्' । तथा 'पयोऽम्ब्वादिप्रवृत्तावपी' त्युत्तरवाक्ये आदिशब्दोऽपि प्रक्षिप्तः । अवश्यं चैतदेवं विज्ञेयम् — सूत्रे, भाष्येच पयोऽम्बुवदिति द्वयोरेव गृहीतत्वात्। उपलक्षणत्वेन सूत्रभाष्ययोः कूलपतनमपि सङ्गृहीतमिति चेत् न — अयस्कान्ताद्युदाहरणस्यापि अत्रैव ग्रहणसम्भवेनोत्तरसूत्रवैयर्थ्यप्रसङ्गात्' टीकायामपि 'ननु — श्रुतिसामर्थ्येन पयोऽम्बुनो' रिति तयोरेव गृहीतत्वाच्च । 'निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनां । न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवन् चित्रमर्चे' (ऋ. स. ८-६-१३) ति ऋचं व्याचष्टे (४- सू०) **इन्द्रियगणपत इत्यादिना** ॥ मघवन् = यशस्विन् ' धनवन् मखपत इतिवे' ति कर्मनिर्णयानुसारेण मघवञ्छब्दार्थमाह — **धनवान्निति** ।

**पूर्वपक्षस्तु** – न विष्णोर्जगत्कर्तृत्वंयुक्तं, सांख्यसमये 'महदादिकं स्व-

सदृशकारणजन्यं कार्यत्वात् घटादिवत्' इत्यनुमानेन प्रकृतेः कारणत्वं प्रसाध्य तस्या अनन्याधीनतया कार्योन्मुखत्वाभिधानात् । अतः प्रकृतेरेवानन्याधीनतया अशेषकार्योन्मुखत्वात् नेश्वरः, तत्कर्तृत्वं चास्तीति न जगत्कारणत्वं युक्तमिति ।

**सिद्धान्तस्तु** — युक्तमेव विष्णोर्जगत्कर्तृत्वम्, कार्यं स्वसदृशकारणवत्' इत्यनुमाने कारणतया परिकल्पितस्य प्रधानस्याचेतनत्वेन स्वतःकार्योन्मुखत्वायोगात् । ननु — प्रामाणिकप्रकृतेः स्वतःकार्योन्मुखत्वं न त्यक्तुं युक्तमिति चेत्, न प्रागुक्तानुमानस्य कारणत्वमात्रसाधकत्वेन स्वतःकार्योन्मुखत्वासाधकत्वात्, प्रमाणान्तरस्य चाभावात् । किञ्च—पटादिसृष्टेः चेतनेच्छानुसारित्वदर्शनात् महदादिसृष्टिरपि तथाभ्युपगन्तव्या । ननु — अचेतनयोरपि पयोऽम्बुनोः स्वतःप्रवृत्तिर्दृश्यते, अतस्तत्रैवाचेतनत्वहेतोर्व्यभिचारात्, अचेतनस्य स्वतःप्रवृत्तौ च स एव दृष्टान्तो भविष्यतीति चेत्, न —'एतस्य वा अक्षरस्य प्रशासने गार्गि' (बृ. ५-८-९) इति श्रुत्या तत्रापीश्वरनिमित्तप्रवृत्तिसद्भावावगमात् । ननु — माभूत् पयोऽम्बुनोर्व्यभिचारः, अयस्कान्तादौ व्यभिचारो भविष्यतीति चेत्, न — 'नऋते त्वत्क्रियते' इति श्रुत्या सर्वस्यापीश्वराधीनत्वावगमात् अप्रामाणिकत्वेन, प्रमाणविरुद्धत्वेनच,महाजनपरिगृहीतत्वाभावान्नानुमानपरिकल्पितं प्रधानं जगत्कर्तृ अतो निरीश्वरसांख्यमतस्याऽप्रामाणिकत्वेन, तद्विरोधाभावाद्युक्तं जगज्जन्मादिकारणत्वलक्षणमिति सिद्धम् । ( अ. १ )



( २ - अधिकरणम् )

## ॐ अन्यत्राऽभावाच्च न तृणादिवत् ॐ (सू० ५)

**अधिकरणार्थमिति ॥** पादादौ 'पादस्यैकार्थत्वात् अधिकरणभेदः किंनिबन्धन' इति शङ्कोत्पन्ना, साच पूर्वाधिकरणप्रतिपाद्यप्रदर्शनेन प्रथमाधिकरणविषये निवृत्तापि, द्वितीयाद्यधिकरणविषये ऽनुवर्तत एवेति तामेव शङ्कां द्वितीयाधिकरणविषये परिहर्तुं एतदधिकरणार्थं दर्शयतीत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । कार्यसत्तादेरीश्वराधीनत्वेऽपि ईश्वरोऽनुग्राहक एव न कारणमिति किं

न स्यादित्यत आह – **नहीति** ॥ असतः सत्तासम्बन्धस्यैवोत्पत्तित्वेन कार्यसत्तायाः परमेश्वराधीनत्वमङ्गीकृत्य कारणत्वं नेति वचनं 'मातावन्ध्ये' तिवद्व्याहतमिति भावः। नन्वीश्वरस्य जगत्कारणत्वप्रतिपादनमयुक्तम्, 'ब्रह्मैवेदं सर्वं' मिति तस्य जगदात्मकत्वाभिधानादित्यत आह – **ब्रह्मैवेदमिति** ॥ तदधीना सर्वसत्तेतिहेतोर्ब्रह्मैवेदं सर्वमित्युच्यते न तु तत्तादात्म्याभिप्रायेणेति भावः। 'स एव भूयो निजवीर्यचोदिता' मित्यादिभाष्यमसङ्गतम्, परस्परमन्वयविधुरत्वादित्याशङ्कापरिहाराय भाष्यमवतारयति-– **न केवलमिति** ॥ न केवलं कार्यस्येश्वराधीनत्वादित्यतःपरं 'नानुग्राहकत्वमात्र' मिति प्रक्षिप्तम्। 'ईश्वराधीनत्वा' दिति पञ्चमी च प्रक्षिप्ता। ततश्चैवं टीकावाक्यपाठः। 'न केवलं कार्यस्येश्वराधीनत्वं किंतु सर्वकारणत्वेनाभ्युपगतप्रकृतिसत्तादेरपि तदधीनत्वम्। अतश्च विष्णोरेव स्वातन्त्र्यमिति सप्रमाणकं सूत्राक्षरार्थमाहे' ति। अवश्यं चैतदेवं विज्ञेयम् – नानुग्राहकत्वमात्रमित्यर्थस्य उदाहरिष्यमाणप्रमाणद्वयेन 'चशब्देने 'ति भाष्येण चाऽभावात्। कार्यस्येश्वराधीनत्वादितिहेतोः नानुग्राहकत्वमित्यनेनेव 'किं तु सर्वकारणत्वेनाभ्युपगतप्रकृतिसत्तादेरपि तदधीनत्व' मित्यनेनाप्यन्वयाभावाच्च। अस्य 'अतश्च विष्णोरेवस्वातन्त्र्य' मित्युत्तरग्रन्थेनान्वयात्। **सूत्राक्षरार्थमिति**॥ सूत्रचशब्दार्थमित्यर्थः। **आत्मनि आत्माधारत्वेनेति** ॥ 'अनामरूपात्मनि' त्यत्रत्यात्मनीतिशब्दस्य व्याख्यान**मात्माधारत्वेनेति** ॥

**पूर्वपक्षस्तु** – नेश्वरस्य स्वातन्त्र्येण कर्तृत्वं युक्तम्, परमेश्वरानुगृहीतप्रधानादेव पर्जन्यानुगृहीतपृथिव्या अङ्कुरोत्पत्तिवत् जगदुत्पत्तिसम्भवात्। अतो नेश्वरस्य स्वातन्त्र्येण जगत्कारणत्वलक्षणं युक्तमिति।

**सिद्धान्तस्तु** – युक्तमेव विष्णोर्जगत्कारणत्वं स्वातन्त्र्येण तत्प्रेरणामन्तरेण कस्यापि वस्तुनोऽभावात्। मूलकारणभूतायाः प्रकृतेरपि तदधीनसत्ताकत्वाच्च। अतः सेश्वरसांख्यमतस्याप्रामाणिकत्वेनाऽविरोधकत्वाद्युक्तं हरेर्जगत्कारणत्व लक्षणमिति सिद्धम्। (अ. २)

---

( ३ अधिकरणम् )

## ॐ अभ्युपगमेऽप्यर्थाभावात् ॐ (सू० - ६.)

पूर्वाचेतनादुत्तराचेतनोत्पत्तावपि देहे चैतन्योत्पत्तिः कथमित्यत आह — **क्वचिदिति**!! वृक्षान्तरस्य मदिरोत्पादकत्वाभावेऽपि वृक्षविशेषस्य स्वभावात्तज्जनकत्ववत्, घटादिरूपाचेतनेषु चैतन्योत्पादकत्वाभावेऽपि देहरूपाचेतनस्वभावादेव चैतन्योत्पत्तिरिति भावः । **अतोऽदृष्टस्येति**।। अतीन्द्रियानङ्गीकारे बाधकाभावात् अदृष्टं वस्त्वेव नास्ति, ततश्चकुत ईश्वरः, कुतस्तमां तज्जगत्कारणत्वं स्यात्? न कुतोऽपीति ईश्वरस्योक्तं जगत्कारणत्वलक्षणं न युक्तमिति प्राप्ते सिद्धान्तयत् सूत्रमुपन्यस्य व्याचष्ट इत्यर्थः । तत्र 'प्रष्टव्य' मित्यारभ्य अधिकरणसमाप्तिपर्यन्तं टीकार्थोऽस्माभि र्नज्ञात इति टीका न व्याख्यायते ।

**पूर्वपक्षस्तु** — न युक्तं विष्णोर्जगत्कारणत्वम्, अन्तरेणापीश्वरं पूर्वस्मात्पूर्वस्मादुत्तरोत्तरोत्पत्तिसम्भवात् । चैतन्योत्पत्तेरपि मदिरोत्पत्तिवत् स्वभावादेवोपपत्तेः । न च — श्रुत्यादिबाधो वक्तुं युक्तः, तस्याप्रामाण्यात् । न च तस्याप्राण्ये धर्माद्यसिद्धिप्रसङ्गः, अतीन्द्रियवस्तुनोऽभावेनेष्टत्वात् । अत ईश्वराभावात् नेश्वरस्य जगत्कारणत्वलक्षणं युक्तमिति ॥

**सिद्धान्तस्तु** – युक्तमेव विष्णोर्जगत्कारणत्वं, चार्वाकसमयस्य विषयप्रयोजनादिशून्यत्वेनाप्रमाणत्वेन विरोधाभावात् । तथाहि – न तावच्चार्वाकसमयस्यातीन्द्रियं विषयः तदभावात् । नाप्यैन्द्रियिकं, तस्य प्रत्यक्षासिद्धत्वेन शास्त्रानपेक्षणात्! नापि स्वर्गापवर्गादिश्रोतृफलं तदभावात्। नापि दृष्टं धनादि, तस्य कृष्यादिलघूपायसाध्यत्वात् । नापि प्रणेतुः प्रयोजनं पश्यामः, न च धर्माद्यभावप्रतिपादनद्वारालोकोपकारः प्रयोजनमिति वाच्यम् — धर्माधर्माद्यभावज्ञाने परस्परहिंसादिना अपकारस्यैव प्राप्तेः । नापि उपकारः स्वतः प्रयोजनम्, सुखदुःखावाप्तिहानिरूपत्वाभावात् । न वा तेनापि किञ्चित्साध्यं प्रयोजनं पश्यामः । एवंविधे अधिकारी दूरोत्सारितः । तदभावादेव सम्भ्रमोऽपि । अतः चार्वाकसमयस्याऽप्रामाणिकत्वा द्युक्तं जगत्कारणत्वं हरेरिति सिद्धम् ( अ. ३. )

—•—

( ४ - अधिकरणम् )

ॐ पुरुषाश्मवदिति चेत्तत्रापि ॐ [ सू. ७. ]

अस्यार्थः — अश्मशब्देन सादृश्यादेह उच्यते । ततश्च पुरुषाश्मवत् = चेतनयुक्तशरीरवत्, अचेतनापि = प्रकृतिः पुरुषसम्बन्धात् प्रवर्तेत इति चेत्, न — तत्रापि = शरीरजन्यप्रवृत्तावपि, ईश्वरस्यैव प्रधानकारणत्वे श्रुतिसद्भावेन दृष्टान्तत्वायोगादिति । अत्र 'देहव' दिति वक्तव्ये 'अश्मव' दिति वचनं शरीरप्रवृत्तिविषयद्योतनार्थम् । **निरीश्वरसांख्यैकदेशविरोधपरिहारादिति ॥** नन्वस्य मतस्य सेश्वरसांख्यमतान्न विशेषं पश्यामः, तेन हि प्रधानस्य कारणत्वमङ्गीकृत्य, अनुग्राहक ईश्वरोऽङ्गीकृतः । अनेनापि प्रकृतेः कारणत्वमङ्गीकृत्य, तदुपसर्जनत्वेन पुरुषोऽङ्गीकृतः । न च नामवैलक्षण्यमात्रेण मतवैलक्षण्यं सम्भवति, तन्निराकरणमेवैतन्निराकरणमिति व्यर्थमिदमधिकरणमिति चेत्, उच्यते — सेश्वरसांख्येन पर्जन्यवत् बाह्यानुग्राहकत्वमात्रमभ्युपगतम्, अनेन तु प्रकृतिकर्तृत्वान्तर्गतमेव पुरुषकारणत्वमभ्युपगतं (न?) ततोऽतिरिक्तमिति मतयोर्भेदः । चेतनसम्बन्धात् शरीरस्याऽश्मानयनादिकर्तृत्वदर्शनेनाभ्यधिकाशङ्कासद्भावात् तन्निराकरणार्थमधिकरणं चेदमर्थवदिति । **ईश्वरवैयर्थ्यादिति ।।** यस्तूपसर्जनतयाङ्गीक्रियते नासावीश्वरः तल्लक्षणाभावादिति भावः । ( ८ - सू०. ) **लौकिकपरीक्षकव्यवहारो न स्यादिति ।।** लौकिकाश्चते परीक्षकाश्चेति विग्रहः । युक्तवादिनो लौकिका इत्यर्थः । एतेन लौकिकाः परीक्षकाः, न वा ? आद्ये — पृथग्ग्रहणानुपपत्तिः । द्वितीये — न तेन पुरुषस्याङ्गित्वसिद्धिः । पामरव्यवहारेणार्थसिद्ध्ययोगात् । परीक्षका अपि तीर्थकराश्चेत्ते किं सांख्या, उतान्ये । नाद्यः — तेषां व्यवहारस्य तथानुपलम्भात् । नापि द्वितीयः — तेषु परीक्षकत्वासंमतेरिति परास्तम् । लौकिकानामेव प्रामाणिकत्वेन सर्वसंमतानां व्यवहारस्य विवक्षितत्वात् ।

**पूर्वपक्षस्तु** — न हरेर्जगत्कारणत्वं युक्तं, चेतनोपसर्जनशरीरस्याऽश्मानयनादिकर्तृत्वदर्शनेन पुरुषोपसर्जनप्रधानेनैव जगदुत्पत्तिसम्भवात् । अत ईश्व-

रस्यैवाभावात् जगज्जन्मादिकारणत्वलक्षणं तस्येत्येतद्दूरोत्सारितमिति ।

**सिद्धान्तस्तु** — युक्तमेव हरेर्जगत्कारणत्वं पुरुषोपसर्जनप्रकृतेः जगत्कारणत्वसाधने दृष्टान्ताभावात् । नच — शरीरमेव दृष्टान्त इति वाच्यम् — 'नक्षत्रेत्वञ्क्रियत' (ऋ०. स०. ८-३-१६) इति श्रुत्या शरीरप्रवृत्तावपि परमात्माधीनत्वेन दृष्टान्तस्य साध्यविकलत्वात् । किंच — यदि पुरुषोपसर्जनं शरीरमेव कर्तृ स्यात् तर्हि पुरुषः अङ्गी शरीरमङ्गमिति प्रामाणिकलौकिकव्यवहारो न स्यात् । अस्ति चासौ अतो नायं दृष्टान्तः । अतो मतान्तरविरोधाभावाद्युक्तं जगत्कारणत्वलक्षणं विष्णोरिति सिद्धम् (अ०. ४.)

---

(५ अधिकरणम्)

## ॐ अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॐ (सू-९.)

**प्रधानादेवेति ॥** पुरुषेण सृष्टयादौकर्तव्ये सहकारितया प्रधानाभ्युपगममात्रेणैव सृष्ट्यादेरुपपत्तेरीश्वरो नियामकतया ऽभ्युपगन्तव्य इति भावः। एतेन—प्रकृत्युपसर्जनपुरुषकर्तृत्ववादिना पुरुषस्यैव प्राधान्याङ्गीकारात् प्रधानादेवेत्युक्तिरयुक्तेति परास्तम् । **न च चेतनस्येति ॥** पुरुषसाहाय्यार्थं प्रवर्तमानस्य अचेतनस्य स्वतः प्रवृत्त्यनुपपत्तिरिति न वाच्यमित्यर्थः । **पुरुषयुक्तस्येति ॥** स्वसाहाय्यार्थं पुरुषः प्रकृतिं नियमयतीति भावः। प्रधानस्य सहकारित्वे उभयोः समप्राधान्यं स्यादिति मन्यमानस्य शङ्कामनूद्य निराकरोति— **न चाङ्गित्वेति ॥ शरीरोपसर्जनः पुरुष इति॥** शरीरोपसर्जनः पुरुषः प्रवर्तत इति पक्षे केवलपुरुषस्य प्रवृत्तिशक्तिरस्ति, नवेत्यर्थः । नाद्य इति भावेनाह — **यद्यस्तीति ॥** यदिशरीरं विनापि प्रवृत्तिशक्तिः स्यात्, तर्हि शरीरवैयर्थ्यं स्यात् । न च तद्युक्तमिति नाद्यःपक्षो युक्त इत्यर्थः । निरीश्वरवादिना द्वितीयं नाङ्गीकर्तुं शक्यमिति भावेनाह — **यदि न शक्तिरिति ॥** एतेनाद्यपक्षनिषेधेन द्वितीयस्याङ्गीकृतत्वात् वास्तवत्वाच्च, तन्निषेधो व्याहत इति परास्तम्। शरीररहितस्य कार्यान्तरे प्रवृत्तिसामर्थ्याभावेऽपि शरीरसम्बन्धाय प्रवृत्तौ केवलस्य सामर्थ्यमस्तीति

नाङ्गित्वानुपपत्तिरित्याशङ्क्य निषेधति — **यदि तत्रास्तीति ॥ अन्यतरवैयर्थ्यादिति ॥** यदि शरीरसम्बन्धाय प्रवृत्तौ केवलस्य शक्तिरभ्युपगम्यते तर्हि अन्यत्रापि शिलानयनादावपि केवलस्यैव प्रवृत्तिः स्यात्, अविशेषादिति शरीरवैयर्थ्यम्। यदि अप्रामाणिकत्वात् नान्यत्र केवलस्य शक्तिः, तर्हि शरीरसम्बन्धाय केवलस्य प्रवृत्त्यभ्युपगमवैयर्थ्यम्, अप्रामाणिकत्वेनाऽङ्गित्वनिर्वाहकत्वाऽभावात् इत्यन्यतरवैयर्थ्यमित्यर्थः। एतेन — शरीरसम्बन्धार्थं केवलस्य शक्तिरस्तीतिपक्षे शरीरवैयर्थ्यस्यैकस्यैव सद्भावात् अन्यतरवैयर्थ्याभिधानमयुक्तमिति परास्तम्। शरीरसम्बन्धवैयर्थ्यमिति क्वचित् पाठः। **प्रकृतिसम्बन्धस्येति ॥** स्थूलदेहसम्बन्धात् पूर्वं प्रकृतिरूपसूक्ष्मदेहसम्बन्धसद्भावात् तद्विशिष्टस्य शक्तिरस्तीत्यर्थः। **तत्पूर्वमिति ॥** सूक्ष्मदेहसम्बन्धात् पूर्वं प्रवृत्तिसिद्धये देहान्तरमङ्गीकार्यं ततः पूर्वमेवमित्यनवस्थेत्यर्थः। **अनादिताश्रयण इति ॥** सूक्ष्मशरीरस्याऽनादित्वान्नानवस्थेत्याङ्गीकारे निष्प्रकृतीनां मुक्तानां प्रवृत्तिरुदाहर्तव्येत्यर्थः। **अयं भावः** — प्रकृतिसम्बन्धस्य अनादित्ववादिनं प्रति यदि न शक्ति स्तर्हि पुरुषस्याङ्गित्वमनुपपन्नं स्यादिति द्वितीयपक्षदूषणं न वाच्यम्, किंतु मुक्तानां प्रवृत्तिर्नस्यात्, तेषां निष्प्रकृतित्वेन प्रवृत्तिसामर्थ्याभावात् इत्येव दूषणमुदाहर्तव्यमिति। एतेन — निष्प्रकृतीनां प्रवृत्तिरुदाहर्तव्येति असङ्गतम्। पूर्वोक्तानवस्थास्थापकत्वाभावेन उदाहरणकृत्याभावादिति परास्तम्। **अत इति ॥** पुरुषस्य मुक्तस्य लीलाविग्रहसम्बन्धक्रियायामित्यर्थः। एतेन — पुरुषस्य शरीरसम्बन्धक्रियायां सूक्ष्मशरीरोपकृतस्य प्रवृत्त्यभ्युपगमेन शरीरोपकृतस्य प्रवृत्तिरित्ययुक्तमिति परास्तम्। **तथाऽश्मानयनादीति ॥** अश्मानयनादावपीश्वरस्यैव नियामकत्वेन दृष्टान्ताभावात् प्रकृत्युपसर्जनपुरुषकर्तृत्वे मानाभावः। ततश्च 'युक्तमीश्वरस्य जगत्कारणत्वमिति भाव' इति पूर्वेण सम्बन्धः॥ **दृष्टान्ताभाव इति** — पाठस्तु सुगमः। एतेन — दृष्टान्ताभावादित्यस्यानन्वय इति परास्तम्॥

**पूर्वपक्षस्तु** — न हरे जगत्कारणत्वं युक्तम्, प्रधानोपसर्जनपुरुषादेव जगदुत्पत्तिसंभवेन ईश्वरवैयर्थ्यात्। तथाच प्रयोगः — 'विमता प्रवृत्तिः अचेतनोपसर्जनपुरुषाधीना प्रवृत्तित्वादश्मानयनादिप्रवृत्तिवत्' इति। अतो न

जगत्कारणत्वलक्षणं ब्रह्मणो युक्तमिति ।

**सिद्धान्तस्तु** — युक्तमीश्वरस्य जगत्कारणत्वं, प्रकृत्युपसर्जनपुरुषस्य कर्तृत्वे मानाभावात् । प्राचीनमतादन्यथानुमितमिति चेत्, न—दृष्टान्ते साध्याभावात् । तथाहि — केवलस्य पुरुषस्य प्रवृत्तिशक्तिरस्ति, न वा । आद्ये – शरीरवैयर्थ्यम् । द्वितीये —शरीरसम्बन्धाभावप्रसङ्गेनाऽश्मानयनादिप्रवृत्ति र्न स्यात् । अस्ति चाऽसौ । अतः पुरुषस्य शरीरसम्बन्धघटकः अश्मानयनादिप्रवृत्तिशक्तिप्रदः ईश्वरोऽङ्गीकार्य इति कथं न दृष्टान्तः साध्यविकलः । किंच – सकलश्रुतिस्मृतिविरुद्धत्वात् सर्वमप्यनीश्वरमतमप्रमाणम् । अतो न सांख्यादिमतविरोधेन लक्षणासम्भव इति सिद्धम् (अ० ५.)

---

( ६ - अधिकरणम् )

## ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ [सू ११.]

**कार्यगतगुणानांचेति** ।। आदिशब्देन कार्यैकार्थप्रत्यासत्तिर्गृह्यते । घटादिगतसंयोगादिकं प्रति घटादिगतं कर्म कार्यैकार्थप्रत्यासत्त्याकारणमित्यर्थः । **कर्मणश्चेति** ।। अत्र कर्मणश्च कारणगतगुणकर्मणी कार्यैकार्थप्रत्यासत्त्या असमवायिकारणमित्येव पाठः । तस्यार्थः — फलस्याद्यपतनरूपे कर्मणि गुरुत्वं द्वितीयपतनरूपे कर्मणि तु आद्यपतनरूपं कर्म, जलस्य स्पन्दनक्रियायां द्रवत्वं, शरस्य गमनक्रियायां वेगश्चेति सर्वे कार्यैकार्थप्रत्यासत्त्या असमवायिकारणमिति ! **परमाणुद्व्यणुकगतमिति** ।। यथासंख्यं सम्बन्धः । उपलक्षणमेतत् । तूलपरिमाणं तूलपिण्डपरिमाणासमवायिकारणं न भवतीत्यपि ग्राह्यम् । **किंत्विति** ।। आदिशब्देन प्रचयपरिग्रहः । **कारणविशेषाभावादिति** ।। प्रमाणाभावादित्यर्थः । ननु — एषां परिमाणानां असमवायिकारणत्वतदभावाभ्यां वैलक्षण्ये कारणविशेषाभावोऽसिद्धः । तथाहि – अस्ति तावन्महद्दीर्घपरिमाणयोरसमवायिकारणत्वानुमापकमसमवायिकारणलक्षणम्, अवधारयन्तिखलु सास्नादिमत्त्वलक्षणेन गोत्वम्, न च ह्रस्वाणुपरिमाणयोः तदस्ति; नापि प्रमाणान्तरमस्ति । अपि च पारिमाण्ड-

त्वस्य कारणत्वे द्व्यणुकस्याप्यणुत्वप्रसङ्गः,ह्रस्वस्य परिमाणस्यकारणत्वे त्र्यणुकस्यापि ह्रस्वत्वप्रसङ्गः, न च महद्दीर्घपरिमाणयोः कारणत्वे बाधकं पश्यामः । अतो मन्यामहे साधकसद्भावात् बाधकाभावाच्च महद्दीर्घपरिमाणयोः असमवायिकारणत्वं, साधकाभावाद्बाधकसद्भावाच्च नाऽणुह्रस्वपरिमाणयोः कारणत्वमित्यत आह — **न तावदित्यादिना** । अवर्जनीया प्रत्यासत्तिर्नेत्यत्र हेत्वन्तरमाह– **द्व्यणुकादिपरिमाण इति** ।। नच—संख्याया एव कारणत्वसम्भवात् कारणान्तराभावोऽसिद्ध इति वाच्यम् — तथा सति चतुरणुकादिपरिमाणेऽपि संख्याया एव कारणत्व सम्भवेन महत्त्वदीर्घत्वयोरपि कारणत्वाभावप्रसङ्गादिति भावः । इतःपरं टीकायां श्रूयमाणं 'संख्यादेर्महत्त्वारम्भकत्वप्रसङ्गा' दिति वाक्यं न टीकावाक्यम् । किंतु इममेवाभिप्रायं वक्तुं प्रवृत्तस्य कस्य चिद्व्याख्यातुर्वाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । 'संख्यादेर्महत्त्वारम्भकत्वप्रसङ्गा'दित्यस्य पूर्वोत्तरवाक्याभ्यामन्वयाभावात्, आपादकानुक्तेश्च, आदिशब्दवैयर्थ्याच्च । यदि संख्यायाः कारणत्वं स्यात् तर्हि सर्वत्रापि संख्याया एव कारणत्वप्रसङ्गेन महत्त्वदीर्घत्वयोरकारणत्वप्रसङ्गेन महत्त्वदीर्घत्वयोरकारणत्वप्रसङ्गादिति वक्तव्यत्वेन महत्त्वारम्भकत्वमात्रस्याऽनिष्टत्वाभावाच्च संख्यादेर्महत्त्वारम्भकत्वप्रसङ्गादित्युक्तप्रयोगाच्चेति । तन्तुद्वयसंयोगादेः असमवायिकारणत्वं निराकरोति—**संयोगस्यचेति**।। **भिन्नतयेति** ।। पटासमवायिकारणात् भिन्नतया प्रतीत्यभावादित्यर्थः । **इदमुक्तं भवति** ।। पटस्य समवायिकारणमिवा समवायिकारणमपि दृष्ट्वा तन्तुसंयोगो न समवायिकारणं नाप्यसमवायिकारणम्, अथ च कारणमिति निश्चये निमित्तकारणं स्यात्, न च तथा निश्चयोऽस्ति, असमवायिकारणान्तरादर्शनादिति । **भिन्नतया प्रतीत्यभावेऽपीति** ।। अपेक्षाबुद्धौ आवां द्वाविति प्रतीयमानद्वित्वसमवायिकारणप्रत्यासन्नत्वे सति कारणत्वदर्शनात् असमवायिकारणात् भेदेन प्रतीत्यभाव इति भावः । **अभ्युपगम्य चेदमुदितमिति** ।। 'वस्तुतस्तु कारणमेव न भवति तथाही 'ति वाक्यशेषोद्रष्टव्यः। **अनभ्युपगमादिति** ।। सिद्धान्तविरुद्धत्वादित्यर्थः । एतेन — नाङ्गीकृतं चेत् परेण संयोगमात्रस्य कारणत्वं तर्हि तन्निषेधवैयर्थ्यम्, अथाभ्युपगतं तर्हि अनभ्युपगमादित्ययुक्तमिति परास्तम् । (१३ सू०) **एवमसमवायिकारणं निरस्येति**।।

नन्विदमत्रायुक्तं वर्तते, किमत्रायुक्तं वर्तते, असमवायिकारणं निरस्येत्ययुक्तं वर्तते । तथाहि – भाष्यकारेणासमवायिकारणस्यानिरस्तत्वात् निरस्येति क्त्वादेशल्यपा समानकर्तृकत्वाभिप्रायकेन भाष्यकृतैव निरस्तमित्यभिधानात् । अनिरस्तस्य निरस्तमित्यभिधाने कथं नायुक्तमिति चेत् , न –'वाशब्दात्, अन्यथा एतयोरपि न स्यात् विशेषकारणाभावा'दिति भाष्येणासमवायिकारणस्य निरस्तत्वात् । ननु– 'अन्यथैतयोरपि न स्यादित्यनेन आपाद्यते तस्य च विपर्ययपर्यवसानेन असमवायिकारणं भाष्यकृताङ्गीकृतमिति प्रतीयते, तत्कथमुच्यते निराकृतमितीति चेत् , न भाष्यकृता आपाद्यते एतयोरपि तदभावः साध्यते, विशेषकारणाभावदिति हेत्वभिधानात् । इयमत्र भाष्ययोजना – महद्दीर्घपरिमाणयोः असमवायिकारणत्वमभ्युपगच्छता ह्रस्वपारिमाण्डिल्ययोरपि असमवायिकारणत्वमभ्युपेयम्, अन्यथा – प्रमाणाभावान्नचेत्तदङ्गीक्रियते तर्हि – प्रमाणाभावान्महद्दीर्घपरिमाणयोः न तदङ्गीकार्यं वस्तुसिद्धेः प्रमाणाधीनत्वादिति । **निमित्तकारणनिरासायेति॥** परमते निमित्तकारणासम्भवव्युत्पादनायेत्यर्थः । **अत्र गुणसूत्रम् – उभयथापि न कर्माऽतस्तदभाव इति ॥** अत्र नञ्ग्रहणं कर्मग्रहणं च किमर्थम् , उभयथापि तदभावइत्येव किं नोच्यते । ईश्वरेच्छायाः कर्मनिमित्तत्ववत् द्व्यणुकादावपि निमित्तत्वेन ईश्वरेच्छानित्यत्वानित्यत्वाभ्यां द्व्यणुककार्यासम्भवस्य व्युत्पादयितुं शक्यत्वात् । सूत्रं चैवं सति लघु स्यात् अतश्शब्दस्याप्यग्राह्यत्वादिति चेत् , सत्यम् – ईश्वरेच्छा कर्मणीव द्व्यणुकादावपि निमित्तम् , तथापि– नेश्वरेच्छाया नित्यत्वे द्व्यणुकाभाव आपादयितुं शक्यते । द्व्यणुकस्य प्रत्युत्पन्नपरमाणुद्वयसंयोगजन्यत्वात् प्रलयकाले ईश्वरेच्छासद्भावेऽपि परमाणुसंयोगाभावात् द्व्यणुकानुत्पादेऽपि सृष्टिकाले संयोगसद्भावेन ईश्वरेच्छातः परमाणुद्वयसंयोगोत्पत्त्या द्व्यणुकोत्पत्तिसम्भवात् । न हि सहकारिविरहे कारणं कार्योत्पादकं नेति, तत्समवधानेऽपि नोत्पादकमिति सम्भवति । परमाणुकर्म तु न प्रत्युत्पन्नकारणजन्यमिति उभयथापि न कर्मोत्पादः सम्भवतीत्यापादयितुं शक्यमिति भावेन 'उभयथापि नकर्म' इत्युक्तम् । एवमपि 'अतस्तदभाव' इति व्यर्थमापद्यत इति चेत् , न – बाधकसद्भावादीश्वरेच्छायाः कर्मकारणत्वाभावेऽपि बाधकाभावात् द्व्यणुकादिकार्यकार-

णत्वं स्यादेवेति न परमते निमित्तकारणासम्भव इत्याशङ्कापरिहाराय ' अतस्तद-भाव ' इत्यस्य वक्तव्यत्वात् । यदीश्वरेच्छा निमित्तकारणं स्यात् तर्हि — पूर्वोक्त-रीत्या कर्म न स्यात्। अस्ति चैतत् तस्मान्न निमित्तमिति विपर्ययपर्यवसानार्थमपि तस्य वक्तव्यत्वाच्च । **किमिति** ॥ प्राक्कल्पीयेश्वरेच्छा प्रलये वर्तते उत नास्ती-त्यर्थः । **तथासतीति** ॥ प्राक्कल्पीयेश्वरेच्छाया विनाशे एतत्कल्पीयजगत्कारणेश्व-रेच्छायां कार्यत्वेनेत्यर्थः । **पूर्वेच्छेति** ॥ प्राक्कल्पीयेच्छा विनष्टापि यागवत् एत-दिच्छानिमित्तमित्यर्थः । **प्रमाणाभावादिति** ॥ प्रमाणबलेन विनष्टयागस्य कारणत्वेऽपि प्रमाणाभावान्न पूर्वेच्छा कारणमिति भावः । **अत्र परिमाणाभि धानसन्निधापितमिति** ॥ परिमाणाभिधाने द्व्यणुकादीनां स्मृतत्वात् बुद्धौ सान्निधापितमित्यर्थः । **नचैतदन्यमतेऽपि सममिति** ॥ ईश्वरेच्छाया निमित्तत्वे ऽपि 'उभयथापि नकर्म 'ति दूषणं नेत्येतत् परमतेऽपि सममिति न वाच्यमित्यर्थः। उभाभ्यामपि सृष्टिकालस्य सहकारितयाभ्युपगतत्वात् । कुतः साम्याभाव इत्यतः सिद्धान्तवैषम्यं सूचयितुं स्वमतं तावदनुवदति — **अस्माभिरिति** ॥ एतेन अस्माभिःकालइति वाक्यं व्यर्थं परेणेत्युत्तरवाक्येनैव कृतत्वादिति परास्तम् । एवमुत्तरत्रापि द्रष्टव्यम् । (१३ - सू०) **मूलक्षयेति** ॥ समवायानन्त्ये प्रमा-णाभावे कल्पनागौरवमेव दूषणं स्यात् नत्वनवस्था मूलक्षयकरत्वाभावादितिभावः। ननु— ' प्रथमसम्बन्धासिद्धयैवच तदसिद्धि 'रिति मूले अवयवावयविनां सम्बन्धा सिध्या पूर्वपूर्वसमवायानामसिद्धिरेवोच्यते नतु पूर्वपूर्वसमवायाऽसिध्या उत्तरोत्तर-समवायासिद्धेः मूलक्षतिरुच्यते । ततश्च– सूत्रोक्ताऽनवस्था न समर्थितेत्यत आह– **मूलभूतेति** ॥ सत्यमत्र पूर्वपूर्वसमवायानामप्रामाणिकत्वमुच्यते तथापि न मूल-क्षतिव्युत्पादनाभावः, पूर्वपूर्वाभावेनोत्तरोत्तराभावव्युत्पादनस्य मूलक्षतिव्युत्पाद-नत्ववत् अप्रामाणिकत्वव्युत्पादनस्यापि तथात्वादितिभावः । ' प्रथमसम्बन्धा-सिध्यैवच तदसिद्धे ' रिति मूलप्रवृत्तेः प्रागेवोत्पन्नाशङ्कापरिहाराय ' स्वनिर्वाह-कत्वे समवाय एवनस्या '।दिति मूलं प्रवृत्तमिति भावेनाह — **मास्तुतर्हीति** ॥ एतेन — प्रथमसमवायस्याप्यप्रामाणिकत्वस्याभिहितत्वात्स्वनिर्वाहक एक एव समवाय इति शङ्कानवकाश इति परास्तम् । **तस्य सम्बन्धनिबन्धनत्वसाधन**

**इति ॥** आकाशादिमहत्त्वयोर्विशेषणविशेष्यभावनियामकःसम्बन्धःसिध्यन् नित्य एव सेत्स्यतीति भावः । **व्यभिचारइति ॥** घटाभाववद्भूतलमिति प्रतीतिगोचर-विशेषणविशेष्यभावे व्यभिचार इत्यर्थः । **विशेषण इति ॥** भावत्वेनेति विशेषण दानेन व्यभिचारपरिहारे सर्वत्रापि व्यभिचारस्थलव्यावृत्तये तद्भिन्नत्वेनेति वक्तुं शक्यत्वात् व्यभिचारस्याऽनुद्भाव्यत्वप्रसङ्गइत्यर्थः । (१४ - सू०) **प्रलयनिरा-सार्थमिति ॥** यत्कालमारभ्य सृष्टिर्भवति तत्पूर्वकालस्य परमते प्रलयकालत्वसम्भव निरासार्थमित्यर्थः । **नित्यदास्यादिति ॥** यत्क्षणमारभ्य सृष्टिर्भवति ततःपूर्वमेव स्यादितिभावः । **उक्तंच सुधायां** – 'तत्पक्षे कार्यंसदाभवेत् यदभिलष्यते । **ततःप्रागपि भवे'दिति ॥ ननु कदाचित् प्रलयइति॥** सृष्टिकालात् पूर्वक्षणः न प्रलयकालः स्यात् , किंतु सृष्टिकालःस्यादित्यर्थः । **सामग्रीसम्पत्ताविति ॥** ननु सामग्रीसम्पत्तावुपयोगादित्ययुक्तं परमाणुकर्मसामग्र्याः सदातनत्वेन आगन्तु-कत्वाभावेन अदृष्टस्य तत्सम्पादकत्वायोगात् । किंच सामग्रीसम्पत्तिः कार्यं, नवा । नेतिपक्षे सम्पत्तावुपयोग इत्ययुक्तं स्यात् । आद्ये सम्पत्तिकारणसम्पादकत्वेनैवोप-योगः ननु सम्पत्तावित्यपि स्यात् । ततश्च सम्पत्तिसम्पत्तावप्येवमिति सामग्री-सम्पादकत्वेनोपयोग इति रिक्तंवचःस्यादिति चेत्, न ब्रूमोवयम् अदृष्टं नकार्यकारणं अपितु सामग्रीसम्पत्तावुपयोगीति, येनोक्तदोषः स्यात् । किंनाम कार्यकारणमपीदं सामग्रीसम्पत्तिव्यापकमिति । एवंच प्रलयकालेऽदृष्टाभावे सामग्रीसम्पत्तिरेव न स्यात् । अस्ति चासौ परमाणुकर्म सामग्रीसम्पत्तिः । तेनादृष्टमप्यस्त्येवेति अदृष्ट-विलम्बेन न कार्यविलम्बो वक्तुं शक्यः । **इदमुक्तंभवेति** – भवत्येवादृष्टं कार्यं प्रतिकारणं न चादृष्टविलम्बात् कार्यविलम्बाभावोदोषः । स्वव्याप्यसमवधानदशा-यां स्वव्यतिरेकेण कार्यविलम्बस्य क्वाप्यभावात् स्वस्वव्याप्येतरसकलसमवधाने स्वाविलम्बेन कार्यविलम्बकत्वस्य कारणान्तरवदिहापि भावादिति । **जनिरपि नित्या स्यादिति ॥** जनेरिदंप्रथमता न स्यादिति भावः । ( १५ · सू० ) **पार्थिवादिपरमाणूनामिति॥** पार्थिवाऽऽप्यतेजः परमाणूनां रूपवत्त्वेन हेतुना, वायुपरमाणूनां स्पर्शकत्वेन हेतुना, प्रकृतनित्यत्वविपर्ययः सिध्यतीत्यर्थः । एतेन – 'रूपवत्त्वा'दित्येतावता पूर्णत्वात् सूत्रे आदिशब्दवैयर्थ्यमिति परास्तम् । अत्र

सूत्रे, भाष्येच, रूपादीनां प्रत्येकं हेतुत्वसूचनाय चशब्दोबोध्यः । **यद्रूपादिमदिति** ।। प्राकृतरूपादिमदित्यर्थः । ननु — यद्रूपादिमत् तदनित्यमिति सामान्य व्याप्तिः, यन्निरवयवद्रव्यं तन्नित्यमिति विशेषव्याप्तिः, ततश्च रूपवत्त्वम् अपवाद विषयत्वेननानित्यत्वसाधनायालम् । तदुक्तं महाभाष्ये — 'आदा वपवादा अभिनिविशन्ते पश्चादुत्सर्गाः, प्रकल्प्यच अपवादविषयं तत उत्सर्गा अभिनिविशन्त' इति । ननु रूपवत्त्वमप्रयोजकमितिमते न नित्यत्वसिद्धिः, अस्तु वा परमाणूनां सादित्वं तथापि — न द्वयणुकादिकार्यभावः, परमाणूनां कारणान्तरेणोत्पत्तौ तेभ्यो द्वयणुकाद्युत्पत्तिसम्भवादिति भावेनाशङ्कते – (१६ - सू०) **नन्विति** ।। **यदि रूपादिमतामिति** ।। भवेद्रूपादिमतामपि परमाणूनां नित्यत्वं यदि यत् रूपादिमत् तदनित्यमिति सामान्यव्याप्तिःस्यात् । नच — सामान्यव्याप्तिः रूपादिमतो नित्यत्वापवादकस्य निरवयवत्वरूपविशेषप्रमाणस्याभावात् , रूपादिमत्त्वादेव सावयवत्वस्य साधयितुं शक्यत्वात् । एवंच — सत्यपि प्रमाणे परमाणूनामनित्यत्वं न स्यात्, तर्हि सत्यपि अनित्यत्वावेदकप्रत्यक्षे घटादीनामनित्यत्वं न स्यात् , अर्थसिद्धौ प्रत्यक्षानुमानयोरविशेषादिति भावः ।

**पूर्वपक्षस्तु** – षट्खल्विमे भावपदार्थाः, द्रव्यगुणकर्मसामान्यसमवायविशेषाः, अभावश्च सप्तमः । तत्र द्रव्याणि — पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसिनवैव । गुणास्तु रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारबुद्धिसुखदुःखे (शब्दे) च्छाद्वेषप्रयत्नधर्माऽधर्माश्चतुर्विंशतिरेव । कर्मच उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदात् पञ्चविधम् । सामान्यमनेकविधं जातिरूप मुपाधिरूपंच । समवायस्त्वेक एव । विशेषास्त्वनन्ताः । एतत् त्रितयं नित्यमेव । तत्रानित्यं कारणत्रितयजन्यं । यत्समवेतं कार्यमुत्पद्यते तत् समवायिकारणं परमाण्वादिद्रव्यमेव । तत्र परमाणवो द्व्यणुकादिप्रक्रमेणावयविनमारभन्ते । समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यमसमवायिकारणम् । तत्र कार्यद्रव्यस्यावयवसंयोग एव कार्यैकार्थप्रत्यासत्त्या असमवायिकारणं भवति । कारणगुणाः कर्मच कार्यगुणानां कारणैकार्थप्रत्यासत्त्या असमवायिकारणम् । कर्मणश्च कारणगतगुणकर्मणी कार्यैकार्थप्रत्यासत्त्या असमवायिकारणम् । तत्र

परिमाणं कारणगतं कार्यगतपरिमाणस्यासमवायिकारणं भवति । परमाणुद्व्यणुकतूलगतं परिमाणं न द्व्यणुकत्र्यणुकतूलपिण्डगतपरिमाणाऽसमवायिकारणं किंतु द्व्यणुकत्र्यणुकगतं संख्ययैव, तूलपिण्डपरिमाणंतु प्रचयेन भवति। एतदन्यत् कारणं निमित्तम्, ईश्वरादृष्टकालादि । नचेश्वरः आत्मविशेषः । आत्माच संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारधर्माधर्मा इति चतुर्दशगुणयुक्तः । परमेश्वरस्तु संख्यादिपञ्चगुणः, कर्तृत्वोपयोगिज्ञानेच्छाप्रयत्नशालीच शिष्टषड्गुणायोग्य इति कथं तस्यानन्तगुणवत्त्वं युक्तमतो व्यर्थ एव पूर्वाध्याय इति ।

**सिद्धान्तस्तु** – युक्तमेव हरेः अनन्तगुणपरिपूर्णत्वलक्षणम्, वैशेषिकादीनामनुपपन्नभाषित्वेन तत्समयस्याप्रामाणिकत्वात् । तथाहि — यत्तावदुच्यते ह्रस्वाणुपरिमाणयोर्नासमवायिकारणत्वमिति तथासति महत्त्वदीर्घत्वयोरपि तदभावापातात् । महद्दीर्घपरिमाणयोः कारणत्वे अनयोरपि तत् स्यात् अविशेषात् । किं चेश्वरेच्छा निमित्तकारणमितिवदन् प्रष्टव्यः, सा किं नित्या अनित्यावेति । उभयथापि न परमाणुकर्मसम्भवति । तथाहि — यदीश्वरेच्छानित्या तर्हि — प्रलयसत्त्यामपि तस्यां परमाणुचेष्टाभावेन अन्यदापि तदभावः । अथानित्या तत्कारणाभावेनेश्वरेच्छानुत्पत्त्या परमाणुकर्माभावः । न च — पूर्वकल्पीयेच्छानष्टापि यागवन्निमित्तमिति, प्रमाणाभावात् । अथ नेश्वरेच्छा कारणं, तर्हि अन्यत्रापि कारणं न स्यात् । एवंच परमते परमाणुकर्माभावेन संयोगाभावात् द्व्यणुकादिकार्याभावः । किंच — यदपि परमाण्वादिद्रव्यं समवायिकारणमिति तन्नोपपद्यते, अवयवावयविनोर्भिन्नत्वमङ्गीकृत्य विशेषणविशेष्यभावे समवायाभ्युपगमात् समवायस्यापि भिन्नत्वसाम्येन मृद्घटसमवाय इत्यादिविशेषणविशेष्यभावोपपत्तये समवायान्तरापेक्षा स्यात्, तत्राप्येवं तत्राप्येवमिति अनवस्थानात् । नापि परमते प्रलयः सम्भवति । समवायिकारणासमवायिकारणनिमित्तकारणानां सद्भावेन कार्यानुत्पादे कारणाभावात् । वस्तुतस्तु न परमाणूनां नित्यत्वमुपपद्यते, प्राकृतरूपत्वेनानित्यत्वावश्यम्भावात्, दृश्यते खलु लोके यत् प्राकृतरूपादिमत्तदानित्यमिति । ननु — यद्रूपादिमत्तदानित्यमिति सामान्यव्याप्तिः; यन्निरवयवद्रव्यं तन्नित्यमिति

विशेषव्याप्तिर्बलवती, अतस्तया बाधितत्वात् न रूपादिमत्त्वं परमाणूनामनित्यत्वं साधयति । अस्तु वा परमाणूनां सादित्वं तथापि न द्व्यणुकादिकार्याभावः। परमाणूनां कारणान्तरेणोत्पत्तौ तेभ्योद्व्यणुकाद्युत्पत्तिसम्भवादिति चेत्, मैवम् — यत्तावदुच्यते यद्रूपादिमत्तदनित्यमिति सामान्यव्याप्तिरिति तन्न, रूपादिमति अनित्यत्वापवादकस्य विशेषप्रमाणस्याऽभावात् । न च — निरवयवत्वं विशेषप्रमाणं, रूपादिमत्त्वेन परमाणौ तदभावस्यापि साधयितुं शक्यत्वात् । यदपि अनित्यत्वे दोषाभाव इति तन्न—त्वन्मते परमाणूनां कारणासम्भवेनानुत्पत्तौ द्व्यणुकादिकार्यानुत्पत्तिप्रसङ्गलक्षणबाधकसद्भावात् । किंच — वैशेषिकमतस्य सकलश्रुतिस्मृत्याद्यपरिगृहीतत्वात्तद्विरुद्धत्वाच्चात्यन्तासामञ्जस्यम् । अतः परमाण्वारम्भवादस्याऽनुपपन्नत्वेनाविरोधकत्वात् युक्तं पूर्वाध्यायोक्तमीश्वरस्यानन्तगुणवत्त्वमिति सिद्धम् ( अ०. ६. )

( ७ - अधिकरणम् )

## ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ ( सू० १८ )

रूपविज्ञानवेदनासंज्ञासंस्काररूपेणेति ॥ विषयेन्द्रियाद्यात्मनास्थिताः रूपरसगन्धस्पर्शशब्दाद्यात्मकाः परमाणवो रूपस्कन्धः, अहमित्यभिमानारूढं निर्विकल्पकज्ञानं विज्ञानस्कन्धः, दुःखं वेदनास्कन्धः, सुखंतु दुःखाभाव एव । सुखमपि वेदनास्कन्ध इति केचित् । कुण्डली गौर्गच्छतीत्यादिसविकल्पकज्ञानं संज्ञास्कन्धः, रागद्वेषमोहादिरूपः समनन्तरप्रत्ययः संस्कारस्कन्धः । एवं पञ्चस्कन्धात्मना अवस्थितं परमार्थसदित्यर्थः । यत्कालतः क्षणिकत्वमिति ॥ व्याप्यव्यापकयोरभेदोपचारोऽयम् । ततश्च — व्यापकाभावे व्याप्यायोगात् विद्यमानस्य सर्वस्य क्षणिकत्वमभ्युपेयमिति भावः । एतेन — साध्याविशिष्टयात् सत्त्वेन परकीयं क्षणिकत्वसाधनमनुपपन्नमिति परास्तम् । कालकर्मनिमित्तेनेति॥ कालकर्मनिमित्तेनैव भवति नतु उपादानेनेति भावः । एतेन परमाणूनां क्षणिकत्वे उत्तरक्षणे पुनः परमाणूत्पत्तौ उपादानाभावात् पुनः परमाणूत्पत्तिरनुपपन्नेति परास्तम् । निरुपादानसृष्टेः अभ्युपगतत्वेन उपादानाभावस्यादोषत्वात् ।

**किमयमिति** ।। परस्यानुपपन्नभाषित्वेन युक्तमेवायं ब्रवीतीति नियमाभावात् प्रश्नः । **मिलितानेकत इति** ।। यद्यपि न मेलनातिरिक्तः समुदायो दृश्यते इत्यात्माश्रय इत्यात्मश्रयो वक्तव्यः, तथापि = समुदायव्यक्तिभेदमङ्गीकृत्य पूर्वस्मात्समुदायादुत्तरसमुदायः उत्तरस्माच्च पूर्वसमुदाय इत्यङ्गीकारे ऽन्योन्याश्रयो बोध्यः । व्यक्तिबाहुल्याङ्गीकारेतु अनवस्थां वक्ष्यति ! **सदा सद्भावेनेति** ।। यद्यपि — परमाणवः क्षणिकाः, तथापि — तत्प्रवाहस्तु सदावर्तत इति सदा सद्भावेनेत्युक्तम् । **अतिपीडायामिति** ।। यस्मात् समुदायाद्यः समुदाय उत्पद्यते न तस्मात् पूर्वसमुदायोत्पत्तिरङ्गीक्रियते किंतु समुदायान्तरात् सोऽप्येवं, सोऽप्येवमिति नाऽन्योन्याश्रय इत्यतिपीडायामित्यर्थः ।

**इयमत्र सूत्रयोजना** – परमाणुसमुदायेन केवलं एकपरमाणुहेतुके ऽङ्गीक्रियमाणे समुदायाप्राप्तिः किंतु – उभयहेतुके समुदितानेकहेतुके ऽङ्गीक्रियमाणेऽपि तदप्राप्तिरिति । **भाष्ये अन्यथेति** ।। अन्यथा पूर्वोक्तमिलितानेकहेतुकत्वादन्यथा विरलानेकहेतुकत्वाङ्गीकारे, सर्वदा समुदायत्वं स्यादित्यर्थः । ( २१ - सू०. ) **किं कारणेविनष्ट इति** ।। अत्र यद्यपि – किं कारणनाशकाले कार्यमुत्पद्यत इत्यपि पक्षो विकल्प्य दूषणीयः, तथापि – कारणनाशोत्तरकाले जायमाने कार्ये कारणव्यापाराभाववत् कारणनाशकाले जायमाने कार्येऽपि कारणव्यापाराभावसाम्यात् प्रतिज्ञोपरोधो भवतीति तद्दूषणेनैवाऽस्यापि दूषणं भवतीति पृथङ् न दूषितः । विद्यमानेवेति द्वितीयकल्पस्य कारणोत्तरक्षणे कारणे विद्यमाने कार्यमुत्पद्यते इति वा, कारणोत्पत्तिक्षण एव कार्यमुत्पद्यत इति वा, सम्भवमालोच्य द्वयमपि निषेधति – **न द्वितीय इति** ।। आद्याऽसम्भवे हेतुपरतया मूलं योजयति – **एकस्मिन् क्षण इति** ।। अस्तु द्विक्षणावस्थायित्वं को दोषः, न च — क्षणिकत्वहानिः; क्षणद्वयमेकक्षणत्वेन विवक्षित्वा क्षणिकत्वाभिधानादित्यतो दूषणमाह – **क्षणिकस्य चेति** ।। 'विनाशकारणाभावा' दित्यतः परं 'अवस्थानप्रसङ्गा' दिति ग्राह्यम् । **ततश्चैवं योजना** – क्षणिकत्वेनाङ्गीकृतस्य द्विक्षणावस्थानाङ्गीकारे तदुत्तरत्र तृतीयादिक्षणेषु विनाशकारणमुद्गरप्रहारादेरभावात् तृतीयादिक्षणेष्वप्यवस्थानमङ्गीकार्यम् । ततश्च—पुन स्तस्मात्

कार्योत्पत्तयः स्युः, 'कारणेसति कार्यं भवत्येवे 'ति नियमात्, तेभ्यः कार्येभ्यश्च तथा कार्योत्पत्तयःस्युरिति सर्वकार्याणां, कारणकार्याणां, कार्यकार्याणांच, यौगपद्यमेकस्मिन् काले ऽवस्थानं स्यादिति । कारणोत्पत्त्युत्तरकाले कार्यमित्यङ्गीकारे एकं घटमुत्पाद्य स्थितस्य कुलालस्य सायङ्काले कार्याणां कार्यकार्याणांचावस्थानात् शालापरिपूर्तिःस्यादिति भावः । द्वितीयासम्भवपरतयापि मूलांशं योजयति— **तथेति**।। अस्मिंस्तु पक्षे एकं घटमुत्पाद्य स्थितस्य कुलालस्य द्वितीय क्षणे अघटत्वप्रसङ्ग इति भावः। भाष्ये–'**निस्सन्तान**'इति।। सूत्रे अल्पाचूतरं पूर्वं प्रयोज्यमित्यभिप्रेत्य, ससन्तानविनाशे परेण सङ्केतितः प्रतिसंख्याविरोधशब्दः पूर्वनिर्दिष्टः; तावन्मात्रेणतस्य प्राधान्यं मा विज्ञायीति भावेन परेण निस्सन्तानविनाशे सङ्केतितोऽप्रतिसंख्याविरोधशब्दः प्रथमंव्याख्यात इति बोध्यम् । (२२-सू०) **विविक्ततयेति** ।। वित्तिव्यवहारविषयमिलितपरमाणुजन्यपरमाणूनां विरलतयेत्यर्थः । **निरस्तमिति** ।। 'उत्तरोत्पादेच पूर्वनिरोधा' (२-२-२१) दिति विसदृशकार्यजनकत्वनिराकरणेनेत्यर्थः । मया समुदायावास्तवत्वस्यानुपन्यस्तत्वात् तन्निराकरणमयुक्तमित्यत आह – **समुदायोऽपीति** ।। समुदायस्तु वास्तवइति वदन् किं समुदायः समुदायिमात्रं, तदतिरिक्तोवेति प्रष्टव्य इत्यर्थः । **स एवावयवीति** ।। यस्त्वया अवास्तवत्वेनाभ्युपगतो ऽवयवी तदभिन्नत्वात् कथं समुदायस्यावास्तवत्वं नोक्तमिति भावः । अस्तु तर्हि समुदायस्याप्यवास्तवत्वं कोदोष इत्यतः 'एतेने 'त्युक्तहेतुं विवृणोति – **अवास्तवत्व इति**।। शङ्कते–(२३-सू०) **तथापीति** ।। **तदेति**।। अत्र 'तदे 'त्यनन्तरं 'घटान्तर' मित्यतः पूर्वं 'द्वितीयादिक्षणेषु घटान्तरमुत्पादये 'दिति ग्राह्यम् । **घटान्तरमपीति** ।। घटान्तरमपि प्रथमघटवत् अनेकघटानुत्पादयेदित्यनन्तकार्यापात इत्यर्थः । **कारणेसतिकार्यं भवत्येवेति** ।। 'कारणेसति कार्यंभवत्येवे 'ति योऽयं नियम स्त्वयाश्रितः स किं वास्तवः, अवास्तवोवेत्यर्थः । एतेन – परकीयनियमाङ्गीकारस्यस्पष्टत्वात् नियमो ऽस्तिवा, नवेति विकल्पोऽनुपपन्न इति परास्तम् । **तथाचेति**।। पक्षद्वये सत्त्वाभावेन साधनाभावात् क्षणिकता न सिध्यतीत्यर्थः । (२४-सू०) **मा भूदर्थापत्त्येति** ।। क्षणिकत्वं विनापि अर्थक्रियाकारित्वस्योपपन्नत्वशङ्काप्रतिरुद्धत्वेन

माभूदर्थापत्त्या क्षणिकत्वसिद्धिः 'यत्स 'दित्यनुमानेन तु सेत्स्यतीत्यर्थः । इयांस्तु विशेषः — यदा हेतुः साध्यंविना पक्षे ऽनुपपद्यमानत्वेन अनुसंहितः पक्षेसाध्यं गमयति इति तदार्थापत्तिः, यदातु अन्यत्र गृहीतव्याप्तिबलेन पक्षे साध्यंगमयति तदा अनुमानमिति । एतेन — क्षणिकत्वरूपसाध्यंविनाप्युपपन्नस्य सत्त्वस्य तेन व्याप्त्यभावात् अनुमानेन सेत्स्यतीत्ययुक्तमिति परास्तम् । क्षणिकत्वं विनाप्युपपन्न मिति शङ्कामात्रसद्भावेऽपि वस्तुतस्तेन विनोपपन्नत्वाभावात् । नच व्याप्तिनिश्चयाऽयोगः पक्षेव्यभिचारसन्देह स्यातिप्रसंगेन व्याप्तिनिश्चयविरोधित्वाभावात् । **त्वदनुमानेऽसिद्धिरिति** ।; 'उभयथाचदोषा 'दित्यत्र अर्थ क्रियाकारित्वरूपसत्त्वस्य दूषितत्वादितिभावः । (२५-सू०) **अन्यथा क्षणेऽपीति** ।; एकस्मिन्नेवक्षणे संयोगतदभावाभ्यां विरुद्धधर्माधिकरणत्वेन भावभेदः स्यादित्यर्थः । **उक्तरीत्यापास्तमिति** ।। 'अनुस्मृतेश्चे'(२ - २ - २५) त्युक्तरीत्या बाधितविषयत्वादित्यर्थः । **घटइति च किमिति**।। घटशब्देन परमाणून् लक्षयित्वा घटत्वशब्देन परमाणुत्वमेव हेतुत्वेन विवक्ष्यते, आहोस्वित् परमाणुसमुदायं पक्षीकृत्य घटत्वमेव हेतूक्रियत इति भाव. । **दृष्टान्ताभावादिति** ।। मुसलाहतस्य घटस्य समुदायत्वेनाऽपरमाणुत्वात् तत्र हेत्वभावात् व्याप्तिग्रहणस्थलं नास्तीति भावः । **तस्यावस्तुत्वादिति** ।। सत एव त्वयाक्षणिकत्वस्य साधनीयत्वेनाऽवस्तुनः तत्साधनमनुपयुक्तमिति भावः ।

**पूर्वपक्षस्तु** — न विष्णोर्जगत्कारणत्वं युक्तम् , वैभाषिकसौत्रान्तिकमत. विरुद्धत्वात् । तथाहि — रूपविज्ञानवेदनासंज्ञासंस्काररूपेणावस्थितं खलु जगत् परमार्थसत्, तदंशं परमाणुसमुदायात्मकम् , न त्ववयवीनामकश्चिदस्ति । परमाणुसमुदाय एव घटादिबुद्ध्युपपत्तौ परमाणुपरिणामस्य तदारब्धस्यवाऽवयविनोऽभ्युपगमस्य व्यर्थत्वात् । विद्यमानं च सर्वं क्षणिकमेव, सत्त्वस्य क्षणिकत्वव्याप्यत्वात् । व्यापकाभावे व्याप्यायोगात् । नचैतत् कार्यजातं कालकर्मरूपनिमित्तेनैव भवति, नोपादानापेक्षा; ततः पूर्वपूर्वपरमाणूनां विनाशेन उपादानाभावेऽपि उत्तरोत्तरपरमाणूनां सृष्टिः, कालकर्मादिनैव भवतीति किमीश्वरेणकृत्यम् । नचेश्वरेप्रमाणमस्ति वेदादेरप्रमाणत्वात् ! अत ईश्वरस्यैवाऽभावात् तस्य जन्मादिकारणत्वमयुक्तमिति ।

**सिद्धान्तस्तु** – युक्तमेव विष्णोर्जगत्कारणत्वाभिधानम्, वैभाषिकसौत्रान्तिकयोरनुपपन्नभाषित्वेन तत्समयस्याप्रामाणिकत्वात् । तथाहि – यदुक्तं कालकर्मादिनिमित्तेन क्षणिकपरमाणुनिमित्तकः समुदायोभवति, नत्ववयवी कश्चिदस्तीति, तत्र प्रष्टव्यः । किमयंसमुदायः एकपरमाणुहेतुको, ऽनेकपरमाणुहेतुकोवेति । नाद्यः, एकस्मात् समुदायइत्यस्य व्याहतत्वात् । द्वितीयेऽपि किं मिलितानेकहेतुको विरलानेकहेतुकोवा । नाद्यः —मेलनस्यैव समुदायत्वेनाऽऽत्माश्रयात् । समुदायद्वयस्य कार्यकारणभावाङ्गीकारे ऽन्योन्याश्रयात्, व्यक्तिबाहुल्याङ्गीकारे ऽनवस्थानात् । नोत्तरः —विरलपरमाणुप्रवाहस्य सदासद्भावेन समुदायरूपकार्यविलयात्मकप्रलयाभावप्रसङ्गात् । ननु — अस्त्येव सदा समुदायोत्पत्तिः तथापि न प्रलयाभावः, वित्तिव्यवहाराभावादेव प्रलयोपपत्तेरितिचेत्, न — वित्तिव्यवहारयोः कदाप्ययोगेन सृष्ट्यभावप्रसङ्गात् । तथाहि — आदौपरमाणूनां दर्शनं ततोऽपेक्षा ततोव्यवहारइति क्रमः । न चासावुपपद्यते, परमाणूनां क्षणिकत्वेन कार्यमुत्पाद्य नष्टत्वात् । नहि अन्यत्र दर्शनम्, अन्यत्रापेक्षा, अन्यत्र व्यवहार, इतिसम्भवति; अतिप्रसङ्गात् । एवं पुरुषेऽपि । किंच — न परमते विशेषकार्योत्पत्तिः सम्भवति, कार्यस्य स्वसदृशकार्यजनकत्वस्वाभाव्यात् । नच — स्वसदृशं कार्यमुत्पाद्य पश्चाद्वैसादृश्यमपि जनयतीति वाच्यम् — कार्योत्पादे तस्य नष्टत्वेन वैसादृश्यजननायोगात् । किंच — प्रतिक्षणं कार्योत्पत्तिं वदन् प्रष्टव्यः, किम्, असति कारणेकार्यमुत्पद्यते, उत सति । आद्ये– प्रतिज्ञाहानिः । द्वितीये– प्रथमक्षणोत्पन्नानां विरलपरमाणूनां कार्योत्पत्तिसमयेऽपि भावे, क्षणिकत्वनियमाभावेन विनाशकसम्पत्तिपर्यन्तमवस्थानं स्यात् । तन्मतेच 'कारणेसति कार्यं भवत्येवे' ति नियमात् पुनःपुनः कार्योत्पत्तिः स्यादिति सकलकार्याणां यौगपद्यं स्यात् । अथवा — परमाणूनां क्षणिकत्वात् यस्मिन् क्षणे परमाणवः, तस्मिन्नेवक्षणे कार्यमिति कार्यकारणयोः पौर्वापर्यं न स्यात् । नच — क्षणेषु पूर्वापरमध्यभागोऽस्ति, येन — प्रथमभागे परमाणूत्पत्तिः, द्वितीयभागेतु कार्यजनकत्वमिति स्यात् । अपिच न परमते विनाशोयुज्यते । तथाहि – तन्मते विनाशो द्विविधः — कार्यमुत्पाद्य तमपहाय तत्क्षणेनाशः, तस्याप्येवमिति प्रति·

क्षणं नाशः, स एव निस्सन्तानविनाशो, ऽप्रतिसंख्यानिरोध इतिच, गीयते । सन्तानं विनैव कारणस्य नष्टत्वात् । अपरस्तु — कार्यमुत्पाद्य तेन सहैव मुद्गर-प्रहारादिना क्षणमात्रे नाशः, स एव ससन्ताननाशः प्रतिसंख्यानिरोध इतिच गीयते । तत्राद्यस्तावन्नयुज्यते, कार्यमुत्पाद्य तत्परित्यागसमये सत्त्वेन सतश्चकार्य-जनकत्वनियमात् कार्यमेवोत्पादयेत्, नतु नश्येत् । तद्वियोगसमयेऽप्येवमिति न कदापि निस्सन्तानोनाशः । नापि ससन्तानविनाशो युज्यते, सतोघटस्यह्यान्त्यन्ति को विनाशः, अतोऽसौ सत्त्वात् कार्यमुत्पादयेत्, नतु नश्येत् । एवमुत्तरत्रापि सत्त्वात् कार्यमेवोत्पादयेन्न तु नश्येदिति ससन्तानोच्छेदावसराभावात् । तथापि न सतांभावानां क्षणिकता निषेद्धुं शक्या, सत्त्वं नामार्थक्रियाकारित्वम्, नच क्षणिकतामन्तरेण तदुपपन्नम् । यदि घट आद्यक्षणे घटान्तरमुत्पाद्य, स्वयं न नश्यति, तर्हि — द्वितीयादिक्षणेषु घटान्तराण्यपि जनयेत् । घटान्तराण्यपि तथे त्यनन्तकार्यापातः । तस्मादर्थक्रियाकारित्वरूपसत्त्वसिद्ध्यै भावानां क्षणिकत्वमेष्टव्य मिति चेत्, अत्रवक्तव्यम् — अर्थक्रियाकारित्वंसत्त्वं तदन्यथानुपपत्त्या क्षणिकत्व मितिवदता 'कारणेसति कार्यं भवत्येवे'ति यो नियमआश्रितः स किं वास्तवो न वा । आद्ये — कार्यकारणयोः सव्येतरविषाणवत् समानकालीनत्वात् कार्य-कारणभावो न स्यात् । द्वितीये — प्रथमक्षणे कार्यानुत्पादकत्वेनार्थक्रियाकारित्वा-भावादसत्त्वं स्यात् । ततः कदापि कार्योत्पत्तिर्नस्यात् । ततश्च—सत्त्वान्यथानुप-पत्त्या कल्प्यमानं क्षणिकत्वं च न स्यात् । ननु — माभूदर्थापत्त्या क्षणिकत्व-सिद्धिः, यत् सत् तत् क्षणिकं यथा दीपादि । सन्तश्च अमी भावादित्यनुमानेन सेत्स्यति । न च वाच्यं — दृष्टान्तस्य साध्यविकलतेति, यद्विरुद्धधर्माधिकरणं तन्नाना, यथा घटपटौ, तथाच अयंदीपः पूर्वोत्तरक्षणयोर्विरुद्धधर्माधिकरणं परि-णामविशेषदर्शनादिति चेत्, न — यत् सत् तदक्षणिकं यथा आकाशमिति अक्षणिकत्वस्यापि साधयितुं शक्यत्वात् । न चाकाशे साध्याभावः, विशेषदर्श-नाभावेन क्षणिकत्वसाधकाभावात् । न च — हेत्वन्तरेण तत्सिद्धिः — पञ्चस्कन्धा-तिरिक्तत्वेन तत्र तदनभ्युपगमात् आकाशेसत्त्वं नास्तीतिचेत्, किमिदं सत्त्वं यदाकाशे नास्ति, अर्थक्रियाकारित्वं चेत्, त्वन्मते पूर्वोक्तरीत्या कस्याप्यर्थक्रिया-

कारित्वासम्भवेनासिद्धिः, साधनविकलताच निदर्शनस्य । अथ स्वरूपेण विद्यमानता, भावरूपता वा । साचाकाशेऽप्यस्त्येवेति व्यभिचारो दुष्परिहरः । किंच—सोऽयंघटइति प्रत्यभिज्ञाविरोधः, तथा स्थायित्वसिद्धेः । न च—प्रत्यभिज्ञाभ्रान्तिः—बाधकाभावात् । घटोऽयं निरन्तरोत्तरक्षणवृत्तिध्वंसप्रतियोगी घटत्वात् मुसलाहतैकक्षणवृत्तिघटवदितिच उक्तरीत्या परास्तम् । किंच — घटशब्देन परमाणून् लक्षयित्वा घटत्वशब्देन परमाणुत्वमेव हेतुतया विवक्ष्यते, उत समुदायमेव पक्षीकृत्य घटत्वमेव हेतुतया विवक्ष्यते । नाद्यः — मुसलाहतस्य घटस्य समुदायत्वेन परमाणुत्वाभावात् , तत्र हेत्वभावेन व्याप्तिग्रहणाभावप्रसङ्गात् । न द्वितीयः, — सत एव त्वयाक्षणिकत्वस्य साधनीयत्वेनाऽवस्तुनः तत्साधनस्यानुपयुक्तत्वात् । अतो वैभाषिकसौत्रान्तिकमतस्यानुपपन्नत्वेन अविरोधकत्वात् युक्तमीश्वरस्याशेषजगत्कारणत्वलक्षणमिति सिद्धम् । (अ० ७.)



( ८-अधिकरणम् )

ॐ नाऽसतोऽदृष्टत्वात ॐ　[ सू . २६. ]

**शून्यमतेति** ॥ ननु – नेदं सूत्रं शून्यमतनिरासकं, 'न शून्याददृष्टत्वा' दिति पाठप्रसङ्गात् । न च तथा पाठोऽस्ति किंतु — नासत इति । तेनऽसन्मतनिरासाय 'नासतोऽदृष्टत्वा' दिति सूत्रम् । अभावाद्भावोत्पत्तिरिति पक्षे उदासीनानामप्रयतमानानां कृषीवलादीनां सस्यादिकार्यसिद्धिः स्यादिति वक्तुं 'उदासीनानामपि चैवं सिद्धि' रिति सूत्रं प्रणीतमिति सूत्रद्वयं पूर्वाधिकरणशेष इति चेत् , न — उपमर्दितात् कारणात्कार्योत्पाद इति पक्षस्य 'असति प्रतिज्ञोपरोध' इति सूत्रेण दूषितत्वात्तन्निरासाय पुनः सूत्रप्रणयनानुपपत्तेः । यदपि अभावाद्भावोत्पत्तिरिति पक्षे उदासीनानामप्रयतमानानां कृषीवलादीनां सस्यादिकार्यसिद्धिः स्यादिति तदतिस्थवीयः, सतः कारणस्य उपमर्दे सति कार्यमिति परो मन्यते, तत्र कः प्रसङ्गः उदासीनस्य कार्यसिद्धेः। यदि हि अत्यन्ताऽसत एव कार्यं परो मन्येत तदैवेदं दूषणं सङ्गच्छेत, न च तथा परो मन्यते । अतो नेदं सूत्रद्वयं पूर्वाधिकरणशेषः, अपितु— शून्यमतनिरासाय पृथगधिकरणमिति ; ननु

चोक्तं तथात्वे 'न शून्यादृष्टत्वा' दिति सूत्रणीयमिति, सत्यम् 'न शून्याददृष्टत्वा' दिति सूत्रणीयं, तथापि — शून्यस्य कारणत्वाभावे असत्त्वरूपयुक्तिसूचनार्थं तथोक्तम्। यद्यपि शून्यवादीशून्यस्य नासत्त्वमभ्युपैति, तथापि – पराभिमते शून्ये प्रमाणाभावादसत्त्वं सेत्स्यतीति सूत्रकारो मन्यते। **परमेश्वरस्य जगत्कारणत्वं विषय इति !!** ननु – अस्मिन्नधिकरणे शून्यकारणत्वं निराक्रियते, अतः शून्यस्य जगत्कारणत्वं विषयः, युक्तं नवेति सन्देह इति वक्तव्यम्। न च शून्यवादनिरासस्य विष्णोर्जगत्कारणत्वसिध्यर्थत्वेन तस्यैव प्राधान्यात् विष्णोर्जगत्कारणत्वं विषय इत्याद्येव वाच्यमिति वाच्यम्। आनन्दमयाधिकरणस्यापि विष्णुजिज्ञास्यत्वसिध्यर्थत्वेन तस्यैव प्राधान्यात् तत्रापि विष्णोर्जिज्ञास्यत्वं विषय इत्याद्युक्तिप्रसङ्गात्। किंच–अधिकरणभेदज्ञापनाय हि विषयो निरूपणीयः, प्रतिपाद्यभेदायत्तत्वादधिकरणभेदस्य। न हि विष्णोर्जगत्कारणत्वेन विषयेण अधिकरणानि भिद्यन्त इति शक्यते वक्तुम्। एतदध्यायगतसर्वाधिकरणसाधारणत्वात् जगत्कारणत्वस्येति चेत् सत्यमिह शून्यकारणत्वं विषय इत्याद्येव वक्तव्यमिति, तथापि — तद्विचारस्य विष्णुकारणत्वसिध्यर्थत्वेन तस्यैवैतदधिकरणप्रधानप्रमेयत्वात् एतत्सन्देहाहितस्य सन्देहस्य जगत्कारणत्वेऽपि भावात् विष्णोर्जगत्कारणत्वं विषय इत्याद्युक्तम्। ननु चोक्तमानन्दमयाद्यधिकरणेष्वपि विष्णोर्जिज्ञास्यत्वं विषय इत्यादि वक्तव्यमिति, सत्यमुक्तं दुरुक्तं तत्, वैषम्यात्। आनन्दमयाद्यधिकरणेषु ब्रह्मणो जिज्ञास्यत्वसिद्धिवत् आनन्दमयत्वादिगुणसिद्धिरपि प्रधानं प्रयोजनम्, परं तु तज्जिज्ञास्यत्वं च सर्वाधिकरणसाधारणं तत्तद्गुणलाभस्तु असाधारणं ततः साधरणं विषयं परित्यज्याऽसाधारणो निरूपितः। इहतु विष्णोर्जगत्कारणत्वसिद्धिरेव मुख्यं प्रयोजनं समयनिराक्रिया तु तादर्थ्यात्। न हि समयो व्यसनितया निराक्रियते किंतु – विष्णोर्जगत्कारणत्वविरोधित्वात्। यद्यपि — अनेन विषयनिरूपणेन नाधिकरणभेदसिद्धिः, तथापि — टीकाकृता अधिकरणभेदसिद्धये विषयस्य निरूपितत्वात् तदनुक्तिर्नदोषाय। अधिकरणभेदसिद्ध्येतु शून्यस्य जगत्कारणत्वं विषय इत्याद्यूह्यम्। एव मेवञ्जातीयके सर्वत्र द्रष्टव्यम्। अदृष्टत्वादित्येतत् प्रमाणादृष्टत्वादित्येवं परमिति भावेनाह — **तत्प्रमाणाभावा-**

दिति ॥ ननु — प्रमाणादृष्टत्वादित्युक्तं । प्रत्यक्षस्यैव तत्प्रमाणत्वादित्यत्राप्ये-तदेवोत्तरमिति भावेनाह — **न तावत्प्रत्यक्षमिति ॥ असतः कारणत्वाऽद-र्शनेनेति** ।। ननु — दृष्टान्तनिराकरणाय कारणत्वस्य क्वाप्यदर्शनादिति वक्तव्यं नतु असतः कारणत्वादर्शनादिति, असतः कारणत्वादर्शनेऽपि सतस्तु तद्दर्श-नेन तस्यैव दृष्टान्तत्वसम्भवात् । नहि पर्वते साध्यसाधनाय, पर्वतान्तरे साध्य-साधनयोः सहचारं दर्शयन्ति । नापि परेण शून्यस्य जगत्कारणत्वसाधनायाऽ-सत्त्वं हेतुरित्युक्तं, येनाऽसत्त्वस्य सत्यत्वसम्भवात् असदेव दृष्टान्त इति निर्बन्धः स्यादिति चेत्, सत्यं — 'कारणत्वस्य क्वाप्यदर्शना' दित्येव वक्तव्यमिति, त-थापि — न तथा वक्तुं शक्यते कारणत्वस्य दण्डादौ बहुलमुपलम्भात् असतः कारणत्वादर्शनादित्युक्ते हि कश्चिद्दोषो भवति । तथाहि — शून्यस्य कारणत्वम-नुमानेन साधयता दृष्टान्तो वक्तव्यः । न च शून्यमेव दृष्टान्त इति शक्यते वक्तुं तस्य पक्षत्वात्, नापि शून्यभिन्नः, तस्य त्वन्मते ऽसत्त्वेन, असति च कारणत्व-स्य क्वाप्यदर्शनेन कारणत्वाभावस्यासत्त्वेन हेतुना तत्रानुमातुं शक्यत्वेन, साध्य-वैकल्यादित्याशयेन दृष्टान्ताभावाभिधानसम्भवात् । आगमस्तर्हि प्रमाणं भविष्यती-त्यत्रापि एतदेवोत्तरमिति भावेनाह — **आगमस्त्विति** । ( २७- सू०. ) **अदृ-ष्टमपीति** ।। दृष्टान्त इति शेषः । अयं भावः — माभूत्कारणत्वस्य क्वाप्यदर्शना-दन्वयदृष्टान्तः, व्यतिरेक्यनुमानात्तु शून्यस्य, जगत्कारणता सेत्स्यतीति । एतेन-अप्रामाणिकस्वीकारस्यैव दोषत्वेन प्रमाणदृष्टस्वीकारे को दोष इति प्रश्नानुपपत्ति-रिति परास्तम् । **खपुष्पादीनामपि सकाशात् इति** ।। तत्रापि व्यतिरेक्यनुमा-नस्य कर्तुं शक्यत्वादिति भावः । **खपुष्पादीनामिति** ।। अकारणत्वेऽपीत्यतः परं 'अस्तु शून्यस्य कारणत्व' मिति शेषः । अन्यत्रेति पदमनूद्य व्याचष्टे **अन्यत्र शून्यादिति** ।। ( २८ - सू८. ) **परमार्थतोमृद इति** ।। 'त्वन्मते' इति शेषः । एतेन — मृदो घटोत्पत्तेरपि परमते अपारमार्थिकत्वात्, पारमार्थि-कत्वाभिधानमयुक्तमिति परास्तम् । **असत एव रजताकारेणेति** ।। शून्यस्यैव रजतात्मना प्रतिभासस्यानुभवसिद्धत्वेन घटाद्यात्मना प्रतिभासोनानुपपन्न इति भावः । **बाधविरोधादिति** ।। बाधकज्ञानेशुक्तेरेवाधिष्ठानत्वस्य स्पष्टमुपलम्भात् शून्यस्य रजतभ्रमाधिष्ठानत्वाङ्गीकारो न युक्त इति भावः ।

**पूर्वपक्षस्तु** — न विष्णोर्जगत्कारणत्वं शून्यसमयविरुद्धत्वात्। तथाहि— एकमेव शून्यमन्तत्रयरहितं परमार्थसत्, तस्मादेवाशेषं जगदुदेति। न चाऽसङ्गस्य तदनुपपत्तिः संवृतिसम्बन्धेन तदुपपत्तेः। न च श्रुतिविरोधः — तत्प्रामाण्यानभ्युपगमात्। ततश्च शून्यसमयविरुद्धत्वादयुक्तं विष्णोर्जगत्कारणत्वलक्षणमिति ॥

**सिद्धान्तस्तु** — युक्तमेव विष्णोर्जगत्कारत्वम्, शून्यसमयस्याप्रामाणिकत्वात्। तथाहि — यत्तावदुच्यते शून्यमेव जगत्कारणमिति न तद्युक्तम्, प्रमाणाभावात्। प्रमाणं भवत् प्रत्यक्षमनुमानमागमो वा स्यात्। न तावत् प्रत्यक्षं तत्रास्ति, नाप्यनुमानं, दृष्टान्ताभावात्, ननु घटादावेव कारणत्वदर्शनात् कथं दृष्टान्ताभावइति चेत्, सत्यं दृश्यते तत्र कारणत्वं तथापि नासौ दृष्टान्तः, तस्य त्वन्मतेऽसत्त्वेन असति च प्रतिवादिना कारणत्वस्यानुपलब्धत्वेन असत्त्वेन कारणत्वाभावस्यानुमातुं शक्यत्वेन, साध्यवैकल्यात्। आगमोऽपि बौद्धाद्यागमो वा वेदादिर्वा। नाद्यः — तत्प्रामाण्यस्य प्रतिवादिनोऽसंमतेः। न द्वितीयः — तत्प्रामाण्यस्य वाद्यसंप्रतिपत्तेः, तथाविधवेदानुपलम्भाच्च। ननु — माभूत्कारणत्वस्य कार्यदर्शनादन्वयदृष्टान्तः, व्यतिरेक्यनुमानात्तु शून्यस्य जगत्कारणतासेत्स्यतीति चेत्, न — हेयोपादेयबुद्धिविषयतावर्जितानां खपुष्पादीनां सकाशात् सौरभ्यादिकार्यसिद्धिप्रसङ्गात्, व्यतिरेक्यनुमानस्य तत्रापि कर्तुं शक्यत्वात्। स्यादेतत् — यदि शून्यतत्वात् परमार्थतो मृदो घट इव जगदुत्पद्यत इति ब्रूमः, नचैवं किं नाम संवृत्तिवशात् शून्यमेव जगदाकारेण विवर्तत इति ब्रूमः। न हि शून्ये जगदध्यस्तमित्यत्रोक्तदोषावकाश। शून्यस्यैव रजताकारेण प्रतीयमानत्वादिति चेत्, न — तथात्वे जगतो मिथ्यात्वप्रसङ्गात्। न चेष्टापत्तिः — सदिति प्रतीयमानत्वात्। यदत्रोक्तं शून्यमेव रजताकारेण प्रतीयत इति, तन्न — शुक्तेरेव रजतारोपाधिष्ठानत्वस्यानुभवसिद्धत्वेन शून्यस्य तदधिष्ठानत्वाभावात्। ननु — सदिति दृश्यमानस्यापि स्वप्नजाग्रत्वादे रज्जुभुजङ्गादे रसत्त्वात्, तद्वज्जगतोऽसत्त्वं किं न स्यादिति चेत्, न — स्वप्न एवायं न जाग्रत्, रज्जुरियं न सर्पइति बाधकप्रत्ययविषयत्ववत्, प्रकृते बाधकप्रत्ययविषयत्वाभावेन वैषम्यात्। तदेवं शून्यमतस्याप्ययुक्तत्वात् युक्तमीश्वरस्य जगत्कारणत्वलक्षणमिति सिद्धम् अ.८

( ९ - अधिकरणम् )

ॐ न भावोऽनुपलब्धेः ॐ (सू० ३०)

**नित्यं निरञ्जनमिति** ॥ 'अयं घटः, अयंपट' इत्यादिज्ञानानि भिन्नानीव दृश्यन्ते, तथापि न तेषां भेदो मन्तव्यः, किन्तुएकमेव विज्ञानतत्वम् अनेकज्ञेयाकारं भवतीति मन्तव्यमिति भावः । **अतीताधिकरणन्यायेनेति** ॥ 'सदिति दृष्टत्वादिति न्यायेन' त्यर्थः । **बाधकाभावादिति** ॥ उपलक्षणमेतत् । नीलादीनां प्रतीत्या सहोपलम्भनियमवत् भेदस्यापि स्वप्रतीत्या सहोपलम्भनियमात् स्वज्ञानात्मकत्वेन वास्तवत्वाच्चेत्यपि द्रष्टव्यम् । **स्ववृत्तिविरोधेनेति** ॥ ननु – साधनवैकल्यं स्वरीत्योच्यते, उत परमतेन । न तावदाद्यः, अस्मन्मते ज्ञानेऽपि ज्ञानान्तरविषयत्वसद्भावेन स्ववृत्तिविरोधेऽपि दृष्टान्ते साधनसम्भवात् । न ह्यस्मन्मते पटोऽयमिति ज्ञानं न ज्ञेयं तदभावापातात् । नापि स्ववृत्तिविरोधः, ज्ञानमिति ज्ञानस्य स्वविषयत्वाभ्युपगमात् । नापि द्वितीयः, विज्ञानमेकमेव तत्वम् अन्यत् सर्वं तदात्मकमिति वदता परेण ज्ञानस्य स्वविषयत्वनैयत्याभ्युपगमादिति चेत्, न ब्रूमो वयं विज्ञानवादिरीत्या साधनवैकल्यमिति नाप्यस्मद्रीत्येति किं नाम — यदि त्वदनुमानं मायावादी पश्येत्, तर्हि – तेन एकस्यैव क्रियात्वकर्मत्वयोरनङ्गीकारात् साधनवैकल्यमाक्षिपेदेवेति ब्रूमः । न च– विज्ञानस्यापि विज्ञानान्तरविषयत्वसम्भवेन न स्ववृत्तिविरोध इति वाच्यम् — विज्ञानवादिमते विज्ञानतत्वस्यैकत्वेन विज्ञानान्तराभावात् । **अज्ञाने व्यभिचारश्चेति** ॥ अज्ञानस्य ज्ञानत्वं विरोधादङ्गीकर्तु मनुचितमिति साध्याभावनिश्चयसम्भवाद्व्यभिचार इति भावः । बौद्धेन श्रुत्यादिप्रामाण्यानङ्गीकारात् कथं श्रुत्यादिविरोधाभिधानमित्यत आह — (३२ - सू०) **एतच्चेति** ॥

**पूर्वपक्षस्तु** — न विष्णोर्जगत्कारणत्वं युक्तं विज्ञानवादिमतविरुद्धत्वात् । तथाहि — नित्यं निरञ्जनं विज्ञानतत्वमेकमेव खलु विद्यमानं तन्मात्रमेतदशेषं जगत्, न ततोऽतिरिक्तं किञ्चिदस्ति । अतो जगदुत्पत्तावीश्वरेण कृत्याभावादयुक्तं लक्षणमिति ।

**सिद्धान्तस्तु** – युक्तमेव हरेर्जगत्कारणत्वं विज्ञानवादिसमयस्यायुक्तत्वेना

विरोधकत्वात् । तथाहि – विज्ञानातिरिक्तं जगन्नास्तीति वदन् प्रष्टव्यः । किं विज्ञानतत्वे जगदध्यस्तम्, उत विज्ञानतत्वजगतोरभेद इति । नाद्यः — सदिति प्रतीयमानत्वेनारोपितत्वायोगात् । न द्वितीयः — जगतो ज्ञानात्मकत्वे प्रमाणाभावात् । न च सहोपलम्भनियमादभेदो नीलतद्धियोरिति वाच्यम् — भेदप्रतीतिविरोधात् । न च, सा भ्रान्तिः, बाधकाभावात् । नीलादीनां स्वप्रतीत्यभेदवत् भेदस्यापि स्वप्रतीत्यभेदेन यथार्थत्वात् तत्प्रतीतेर्भ्रमत्वायोगाच्च । साहित्यस्य भेदव्याप्तत्वेन सहोपलम्भादभेद इति प्रतिज्ञाहेत्वोर्विरोधाच्च । ननु – यत्प्रकाशते तद्विज्ञानं, यथाज्ञानं, प्रकाशन्तेच नीलादय इति अनुमानेन नीलादीनां ज्ञानत्वसिद्धिरितिचेत्, न — प्रकाशत इत्यनेन ज्ञानाविषयत्वमुच्यते आहोस्वित् प्रकाशत्वं वा । नाद्यः — मायावादिना स्ववृत्तिविरोधेन विज्ञाने साधनवैकल्याभिधाने निरुत्तरत्वप्रसङ्गात् । अज्ञाने व्यभिचाराच्च । नेतरः– असिद्धेः । किंच – ज्ञानस्य क्षणिकत्वेन जगतश्च स्थायित्वान्न तयोरैक्यम् । सकलश्रुतिस्मृतिविरुद्धत्वाच्च सकलमपि बौद्धमतं न सद्भिर्ग्राह्यम् । अतस्तद्विरोधाभावात् युक्तं विष्णोर्जगत्कारणत्वमिति सिद्धम् । (अ० ९)

( १० - अधिकरणम् )

## ॐ नैकस्मिन्नसम्भवात् ॐ [सू० ३३.]

'आह क्षपणको विश्वं सदसद्द्वयमद्वयम् ।
द्वयाद्वय मतत्सर्वं सप्तभाङ्गि सदातनम् ॥ '

इत्यनुव्याख्यानानुसारेणाह – **सदसदुभयमिति** ॥ सदित्येकः प्रकारः, असदिति द्वितीयः, उभयं सदसदात्मकमिति तृतीयः, उभयविलक्षणं सदसद्विलक्षणमिति चतुर्थः, सदसदुभयविलक्षणमिति पञ्चमषष्ठौ, नैतत्सर्वं सर्वंचेति सप्तमः । तत्र सत्त्वे सति साद्विलक्षणमिति पञ्चमः, असत्वे सति असद्विलक्षणमिति षष्ठः। सदसदात्मकं सदसद्विलक्षणमिति सप्तम इति विवेकः । 'स्यादस्ति, स्यान्नास्ति, स्यादस्तिच नास्तिच,स्यादवक्तव्यं, स्यादस्ति चावक्तव्यंच, स्यान्नास्ति चावक्तव्यंच, स्यादस्तिच स्यान्नास्ति चावक्तव्यं चे'ति क्षपणकोक्तेः । अस्त्वात्मा तत्परिमाणएव बाधकाभावादित्यत आह – (३४ - सू०) **तथाचेति** ॥ प्राप्तावित्यनन्तरं 'परि-

माणस्य यावद्द्रव्यभावित्वेन पिपीलिकादिपरिमाणानपाया' दिति शेषः। शरीरान्तरप्राप्तौ तदीयसर्वचेष्टानुपपत्तिलक्षणप्रमाणबलेन पूर्वपरिमाणविनाशेन परिमाणान्तरोत्पादोऽङ्गीक्रियत इत्याशङ्क्ते – (३५-सू०) **यदायच्छरीरमिति**॥ अत्र गुणसूत्रम् – '**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात्**' इति। अत्रोभयग्रहणं शक्यमकर्तुं मौक्तशरीरनित्यत्वस्यैव सांसारिकशरीर नित्यत्वापादकतया तस्यैव वक्तव्यत्वेन आत्मनित्यत्वस्यैव तदनापादकत्वेन तस्यावक्तव्यत्वादिति चेत्, उच्यते — अत्र सांसारिकशरीराणां नित्यत्वं द्वेधा आपाद्यते। यदि मौक्तं शरीरं नित्यं तर्हि— शरीरत्वाविशेषादिदमपि शरीरं नित्यं स्यात्। तथा यद्यात्मा नित्यः स्यात्, तर्हि — सांसारिकं शरीरं नित्यंस्यात्। अन्यथा एतत्परिमाणनाशेन आत्मनाशापत्त्या मुक्त्यभावप्रसङ्गादिति। अत एव — नित्यत्वापादकयोः शरीरात्मनित्यत्वयोः समुच्चयार्थश्चशब्दः॥

**पूर्वपक्षस्तु**—न विष्णोर्जगत्कारणत्वं युक्तं जैनमतविरुद्धत्वात्। तथाहि—जैनास्तु सप्तभङ्गिजगदिति वदन्ति, सादित्येकःप्रकारः, असदित्यपरः, सदसदात्मकमिति तृतीयः, सदसद्विलक्षणमिति चतुर्थः, सत्त्वेसति सद्विलक्षणमिति पञ्चमः, असत्त्वेसति असद्विलक्षणमिति षष्ठः, सदसदात्मकं सदसद्विलक्षणंचेति। तज्जगत् आत्मादृष्टसाधनैर्भविष्यति, सचात्मा कायपरिमाणः। अत ईश्वरेण कृत्याभावादयुक्तं लक्षणमिति।

**सिद्धान्तस्तु** – युक्तं विष्णोर्जगत्कारणत्वं जैनमतस्याप्रामाणिकत्वात्! तथाहि— यदुच्यते जैनेन सप्तभङ्गिजगदिति तदयुक्तम्, सदसद्द्वयातिरिक्तप्रकारस्य अप्रामाणिकत्वात्, एकस्मिन्नसम्भवाच्च। न चैकैकाङ्गीकारे दोषस्य विद्यमानत्वात्तदङ्गीक्रियत इति वाच्यम् — तथात्वे दोषभयेन सर्वमपि त्याज्यं स्यात्। यदपि जीवस्य शरीरपरिमाणत्वमुक्तं तत्र प्रष्टव्यं, किं तत् सर्वशरीरचेष्टोपपत्त्यर्थमभ्युपगन्तव्यं, शरीरावच्छेदमन्तरेण आत्मनः परिमाणाभावप्रसङ्गाद्वा। नाद्यः— प्राप्तव्यसर्वशरीरेषु सर्वत्र चेष्टानुपपादकत्वात्। न ब्रूमो वयमेकदेहपरिमाण एवात्मेति, किंतु यदा यच्छरीरं प्राप्नोति तदा तत्परिमाण इति। न चैवं सति प्रागुक्तदोषो भवतीतिचेत्, न – आत्मनो विकारित्वेनानित्यत्वप्रसङ्गात्। द्वितीये —

किं जीवस्य मोक्षे परिमाणमस्ति, नवेति । न तावद्वितीयः— आत्मस्वरूपाभाव प्रसङ्गात् । न हि परिमाणशून्यं द्रव्यमस्ति । अस्ति चेत् शरीरमन्तरेण परिमाणायोगात् मोक्षेऽपि शरीरमङ्गीकरणीयम् । तत्रापि वक्तव्यं, तच्छरीरं नित्य, मनित्यंवा । द्वितीये संसारसमानधर्मतापातः । आद्ये— शरीरत्वाविशेषादिदानींतन शरीरमपि नित्यंस्यात् । तस्माज्जैनमतस्यानुपपन्नत्वेन अविरोधकत्वाद्युक्तं जगत्कारणत्वलक्षणं हरेरिति सिद्धम् । (अ० १०)

( ११ - अधिकरणम् )

ॐ पत्युरसामञ्जस्यात् ॐ [सू .३७.]

**इन्तुमेवेति** ॥ ननु – उशब्दस्य एवेति व्याख्यानमनुपपन्नम् । हननस्याकृतत्वात्, भीषणस्यैव कृतत्वात् । ततश्च इन्तुमेवेति प्रतिज्ञाय हननाकरणे भीषणमात्रकरणेच अम्भ्रण्या इच्छा मोघा स्यादिति चेत्, उच्यते — न ब्रूमोवयं ' हन्तवाउ 'इति हननसङ्कल्प इति येनोक्तदोषःस्यात् । किंनाम यथा क्रुद्धः पिता पुत्रं म्रियस्वेत्याक्षेपपूर्वकं दुर्गुणपरित्यागाभिप्रायेण वदति, तथा—अम्भ्रण्यपि रुद्रस्याऽतिभीषणतया तद्दमनमभिप्रेत्यैव इन्तुमेव धनुरातनोमि नतु भीषणार्थमिति वदतीत्यङ्गीकारात् । ' एषस्ये 'ति पदं व्याचष्टे—**आसमन्तादीशस्येति** ॥ आ ई-शस्येति स्थिते गुणे शकारस्यछान्दसे षत्वेच एषस्येति रूपंभवति । मील्हुष इत्यस्य व्याख्यानम्—**अभीष्टसेचकस्येति**॥ (३८ सू०) **अशरीरत्वादिति**॥ नन्वशरीरत्वमसिद्धं तेन तथानङ्गीकारात्, भवद्भिरपि पूर्वसूत्रे जननमरणादीनामभिधानेन शिवस्य शरीराङ्गीकारादिति चेत्, न ब्रूमो वयं सदातनमशरीरत्वं हेतुरिति येनोक्त दोषः स्यात् । किंनाम आदिकालीनं, नच – तदप्यसिद्धं श्रुत्योत्पत्तिश्रवणेन उत्पत्तेःप्राक् अशरीरत्वस्याङ्गीकरणीयत्वात् (४० सू०) **तदुपादानहाननिमित्तोत्पत्तिमरण इति** ॥ अनेन ' तद्गता ' इति भाष्यं तत्प्रयुक्ता इति व्याख्यातम् ।

**पूर्वपक्षस्तु** – न विष्णोर्जगत्कारणत्वं युक्तं पाशुपतसमयविरुद्धत्वात् । तथाहि — पशुपतिःखलु सार्वज्ञ्यादिगुणशाली मायामुपादानीकृत्य हरिहिरण्यगर्भादिजगदुत्पत्त्यादि करोति । श्रुतिस्मृतयश्च अस्मिन्नर्थे भवन्ति । अतोलक्षणसूत्रमयुक्तमिति ॥

**सिद्धान्तस्तु** – युक्तं विष्णोर्जगत्कारणत्वं, पाशुपतसमयस्याप्रामाणिकत्वात्। तथाहि— न पशुपतिर्जगत्कर्ता पारतन्त्र्यजननमरणादिदोषदुष्टत्वात्। न चासिद्धो हेतुः, 'यंकामये तं तमुग्रं कृणोमी '(ऋ.स. ८-७-११)त्यादि श्रुतिसिद्धत्वात्। किंच आदिसृष्टौ तस्याशरीरत्वेन कर्तृत्वायोगः, न ह्यशरीरःकर्ता दृश्यते येनासौ तथास्यात्। अपिच – पशुपतेः अधिष्ठानं नोपलभामहे तेन चासौ न कर्ता। ननु — प्रलयकाले नित्यतया विद्यमानं प्रकृत्यादिकं साक्षात्प्रयत्नाधिष्ठेयतया शरीरादिवत्, न च साक्षात्प्रयत्नाधिष्ठेयप्रेरणाय शरीरापेक्षा शरीरप्रेरणार्थमपि शरीरान्तरापेक्षाप्रसङ्गात्। अतः शरीरादिप्रतिनिधिसद्भावात् कर्तृत्वमुपपन्नमिति चेत्, न — कारकग्रामस्य शरीरतुल्यत्वे शरीरोपादानपरित्यागाभ्यां जननमरणवत् तदुपादानपरित्यागाभ्यामपि जननमरणप्रसङ्गात्; ततश्च सुखदुःखभोगप्राप्तिः। अपिच– पशुपतिः कर्तेति वदन् प्रष्टव्यः, किमसौ शरीरी उत नेति। आद्ये – विनाशप्रसङ्गः। द्वितीये – ज्ञानाभावः। न चैते दोषा विष्णुपक्षेऽपि। 'बुद्धिमान्मनोमा 'नित्यादिश्रुत्या ज्ञानाभावस्य परिहृतत्वात्, 'यदात्मकोभगवान् तदात्मिका व्यक्ति' रित्यादिना अन्तवत्त्वादिदोषाणां परिहृतत्वात्। अनयैव दिशा शाक्तेयसौरस्कान्दगाणापतानां समया निराकृता वेदितव्याः। अतःपाशुपतसमयस्यानुपपन्नत्वेन अविरोधकत्वाद्युक्तं लक्षणसूत्रमिति सिद्धम्। (अ० ११)

( १२ - अधिकरणम् )

ॐ उत्पत्त्यसम्भवात् ॐ (सू० - ४२.)

**पुरुषाननुगृहीतस्त्रीमात्रादिति**॥ ननु–पुरुषाननुगृहीतस्त्रीमात्राद्दुत्पत्तिः प्रमाणदृष्टा न भवति, आहोस्वित् प्रत्यक्षदृष्टा भवति। नाद्यः – 'अजामेकां लोहितशुक्लकृष्णा' (श्वे.उ. ४–५) मिति परोदाहृतबह्वागमसद्भावात्। न द्वितीयः – प्रमाणविशेषाभावस्य प्रमेयाभावासम्पादकत्वात्। मा हि भूत् प्रत्यक्षाभावेन अतीन्द्रियार्थविलोपः मा च भूत् आगमाभावेन ऐन्द्रियिकार्थविलोपः। किंच – पुरुषाननुगृहीताभ्योऽपि स्त्रीभ्यः यत्राद्युत्पत्तिर्दृश्यत इत्यसिद्धिः। अंपत्योत्पत्तिर्न दृश्यत इति चेत्, मा दर्शि, न ह्यस्माभिः लौकिकवत् गर्भिणी

भूत्वा जगज्जनयित्री शक्तिरित्यभ्युपगम्यते, येन पुरुषानुग्रहोऽपेक्षितः स्यात् । किं नाम संकल्पादेव जगज्जनयित्री शक्तिरभ्युपगम्यते । अन्यथा पुरुषान्महदादिसृष्टिरदृष्टेति ईश्वरादपि जगत्सृष्टिर्न स्यात् । अथ तत्र प्रमाणबलादभ्युपेयं तर्हि इदमप्यभ्युपेयम् , विशेषादिति चेत् , मैवम्—शक्तिः सङ्कल्पमात्रेण जगज्जनयित्री इत्यस्यार्थस्य प्रमाणादृष्टत्वादित्याशयात् । यच्च परेणोदाहियते न तत् स्वातन्त्र्येण जगत्कर्तृत्वे मानम् , अपितु ईश्वराधीनतया जगत्कर्तृत्वे मानमिति बोध्यम् ।

**पूर्वपक्षस्तु** — न विष्णोर्जगत्कारणत्वं युक्तम् , शाक्तेयमतविरुद्धत्वात् । शक्तिरेव खलु सार्वज्ञादिगुणशालिनी सकलजगज्जननी श्रुतिस्मृतीतिहासपुराणेषु पठ्यते । अतो लक्षणं हरेर्न युक्तमिति ।

**सिद्धान्तस्तु** — युक्तमेव हरेर्जगत्कारणत्वं शाक्तेयमतस्याऽप्रामाणिकत्वेनाविरोधकत्वात् । तथाहि — यदुच्यते शक्तिरेव पुरुषाननुगृहीता जगत्कारणमिति न तद्युक्तं, शक्तिरेव पुरुषाननुगृहीता जगत्कारणमित्यस्यार्थस्य प्रमाणाऽदृष्टत्वात् । परोदाहृतानां 'अजामेका' मित्यादिप्रमाणानां तु ईश्वराधीनतयैव जगत्कारणत्वाभिधायित्वेनातत्परत्वात् । अपरे तु शाक्ता मन्यन्ते— सार्वज्ञादिगुणविधुरः सदाशिवः शक्त्यनुग्राहकोऽस्ति, तदनुगृहीतायाः शक्तेः जगत्कारणत्वे 'अजामेका 'मित्यादिश्रुतेः प्रमाणत्वात् , सदाशिवानुगृहीता शक्तिः, जगत्कारणमिति, तन्न — सदाशिवस्य ज्ञानादिवैधुर्येणाऽनुग्राहकत्वायोगात् । ये तु शाक्ताः सदाशिवस्य सार्वज्ञादिकं मन्यन्ते तेषां शक्तिकारणत्वाङ्गीकारवैयर्थ्यात् तन्मतं पाशुपतमते ऽन्तर्भवतीति तन्निरासेनैव निरस्तम् । सर्वश्रुतिस्मृतिविरुद्धत्वाच्च सर्वमपि शाक्तेयमतमयुक्तमेवेति, युक्तं विष्णोर्जगज्जन्मादिकारणत्वलक्षणमिति सिद्धम् ( अ. १२ )

इति श्रीमत्सत्यनिधितीर्थ श्रीचरणाराधक श्रीमत्सत्यनाथयति
विरचितायां तत्वप्रकाशिकाभिनवचन्द्रिकायां
द्वितीयाध्यायस्य द्वितीयः पादः
श्रीकृष्णार्पणमस्तु



श्रीगुरुभ्यो नमः

## अथ द्वितीयस्य तृतीयः पादः

(१ - अधिकरणम्)

### ॐ न वियदश्रुतेः ॐ (सू-१.)

**एतत्पादार्थमिति ॥** 'अध्यायस्यैकार्थत्वात् पादभेदः किं निबन्धन इत्यत' इति वर्तते । तस्य एतत्पादार्थं दर्शयतीत्यनेन सम्बन्धः । ननु – 'जीवपरमात्माधिभूताधिदैवे' ष्विति भाष्यमनुपपन्नम्, जीवविचारस्य प्रथममदर्शनादित्यत आह — **तत्र जिज्ञासोरिति ॥** भाष्यं न पादप्रतिपाद्यक्रमप्रदर्शनाय प्रवृत्त मपितु — पादप्रतिपाद्यमात्रप्रदर्शनाय प्रवृत्तम् । यद्यपि — जीवविचारस्यानेकाधिकरणनिर्वाह्यत्वात् सूत्रकृता महामल्लभङ्गन्यायेन जीवविचारं कृत्वा अन्यविचारः कर्तव्यः, तथाहि – जिज्ञासोरध्यात्मविचारस्यान्तिमत्वसूचनाय सूचीकटाहन्यायेन अधिभूताधिदैवपरमात्मजीवविचारः क्रमेण कृत इति भावः । **व्यर्थः पादद्वयारम्भ इति ॥** ईश्वरे श्रुतिविरोधपरिहारार्थान्येवाधिकरणान्यारम्भणीयानि नाऽन्यानीति भावः । अनुत्पत्तिश्रुत्यविरोधेनोत्पत्तिसमर्थनस्याऽऽवश्यकत्वमाह — **सकलजगज्जन्मादिकर्तेत्यादिना ॥** श्रुत्यविरोधेनाकाशोत्पत्तिः समर्थनीयेति विशिष्टा प्रतिज्ञा । तत्र उत्पत्तिसमर्थनाभावे तत्राऽऽकाशस्य नित्यत्वे ऽसम्भवि स्यादिति बाधकमुक्तम् । तस्यार्थः – यदि श्रुतिविरोधेनैवाकाशोत्पत्तिः समर्थ्यते, अनादित्वश्रुतेरप्रामाण्यमभ्युपेत्यैव समर्थ्यत इति यावत्, तर्ह्याकाशानादितानियामकत्वलक्षणगुणहानिः स्यादिति । **अन्यार्थतयेति ॥** प्रादुर्भावार्थतयेत्यर्थः । अत्र टीकायां न वियदश्रुतेरिति सूत्रप्रतीकग्रहणानन्तरं श्रूयमाणम् 'अत्रोत्पत्त्यसम्भवादिति प्रकृतानुत्पत्तिः सम्बध्यत' इति वाक्यं प्रक्षिप्तं न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् — 'उत्पत्त्यसम्भवा' दिति सूत्रे (ब्र०, सू०. २-२-४१) अनुत्पत्तिशब्दाभावात् अनुत्पत्तिमच्छब्दस्यापेक्षितत्वेनाऽनुत्पत्तिशब्दस्यानपेक्षितत्वाच्च (२ सू०.) **अनादित्वश्रुतिरिति ॥**

आधुनिकोत्पत्त्यभावरूपगौणानादित्वपरेत्यर्थः । कुतोऽनादित्वश्रुतेर्गौणत्वम् , उत्पत्तिश्रुतेरेव गौणत्वं किं नाद्रियत इत्यत आह — **तथाहीत्यादिना** ॥ सत्यमुत्पत्तिश्रुतेर्गौणत्वाङ्गीकारेणापि विरोधपरिहारो भवति, तथापि न तदङ्गीकर्तुं शक्यम् , आकाशशब्दार्थे सर्वत्र उत्पत्तिश्रुतिप्रतिपाद्योत्पत्तेः सत्त्वात् , उत्पत्तिश्रुतिः सर्वविषया सर्वत्र स्वार्थप्रतिपादनक्षमा बाधाभावात् । अतः सा मुख्यार्थैवाभ्युपगम्यते । अनादित्वश्रुतिस्तु न सर्वविषया, सर्वाकाशेषु न स्वार्थप्रतिपादनक्षमेति सर्वविषयत्वसिद्धये सैव गौणीत्यभ्युपगम्यत इति भावः । कुतोऽनादित्वश्रुतिः सर्वत्र न स्वार्थप्रतिपादनक्षमेत्यत आह — **भूत इति** ॥ भूताकाशे ऽनादित्वश्रुत्यर्थस्य कथमप्यभावात् न सर्वत्र स्वार्थप्रतिपादनक्षमेत्यर्थः । न्यायविवरणे तु—अनादित्व श्रुतेरव्याकृताकाशपरत्वम् , उत्पत्तिश्रुतेस्तु भूतत्ववदभिमानिपरत्वमिति धर्मिभेदेन श्रुत्योर्विरोधं परिहृत्य उत्पत्तिश्रुतेः अभिमानिविषये अव्याकृताकाशविषये च पराधीनविशेषवत्त्वमात्रविषयत्वं न त्वनादित्वश्रुतिनिषेध्यस्वरूपलाभरूपोत्पत्तिविषयत्वमिति धर्म्यैक्यपक्षेऽपि विरोधः परिहृतः । **प्रबलत्वादिति भाव इति** ॥ बाधायोग्यत्वादित्यर्थः । एतेन — उभयोः प्राबल्यासम्भवात् ‘उत्पत्तिश्रुतीनामपी’ ति समुच्चयाभिधानमयुक्तमिति परास्तम् । मा भूत् श्रुतिविरुद्धत्वेनाप्रामाण्यम् , अनुभवादिविरुद्धत्वेन तु अप्रमाण्यं स्यादित्यत आह— **अनेनेति** ॥ बाधायोग्यत्वेनेत्यर्थः । बहुत्राधस्यान्याय्यत्वात् अनुभवश्रुत्योर्भिन्नविषयत्वमेव कल्पनीयं विभुत्वादियुक्तेस्तु अप्रामाण्यमेवाभ्युपेयमिति भावः । ( ४ - सू० . ) **न केवलमुक्तव्यवस्थेति** ॥ अनादित्वश्रुतेर्न मुख्यानादित्वपरत्वं किंतु गौणानादित्वपरत्वमिति व्यवस्था असम्भवयुक्तिसिद्धा इत्येव न, अपितु अथ ह वा वेति श्रुतिसिद्धा चेत्यर्थप्रतिपादकमित्यर्थः । ननु श्रुतौ पुरुषप्रकृतिकालानां नित्यत्वप्रतिज्ञा अनुपपन्ना । तेषामनित्यत्वात् चित्प्रकृतेरग्रहणात् न्यूनत्वाच्चेत्यत आह — **पुरुषादिपदैरिति** ॥ **श्रद्धा तत्पत्नीति** ॥ इतः परं टीकायां श्रूयमाणं ‘पुरुषपदेन गृहीतयोरप्यनयोः चैतन्यमात्रादधिकमपि नित्यमस्तीति दर्शयितुं पुनः सपरिकरयोर्ग्रहण’ मिति वाक्यं नात्रत्यं, किंतु ‘तस्मान्नित्यानित्यानीति शेष’ इति वाक्यात्परं वाक्यं लेखकदोषादत्र पतितम् । अवश्यं चैतदेवं वि-

ज्ञेयम्— पुरुषपदेन गृहीतत्वात् नित्यत्वेनोक्तयोः अनित्यवर्गे ग्रहणेनाधिकनित्यत्वसूचनासम्भवात् । व्याख्यानं तु तत्रैव करिष्यामः । **उक्तप्रतिज्ञेति** ।। पुरुषादयो नित्याः, प्राणादयो नित्या इति प्रतिज्ञाद्वयसमर्थनायेत्यर्थः । **एवमन्येष्वपीति** ।। अनित्यत्वेन प्रतिज्ञातेषु प्राणादिष्वपि उपनयनिगमने द्रष्टव्ये इति सम्बन्धः । प्राणादीन्युत्पत्तिमन्तीति उपनयप्रकारदर्शनं, तस्माल्लीयन्त इति निगमनप्रकारदर्शनम् । **प्राणादिषु न सर्वेषामिति** ।। अनित्यत्वहेतूपदर्शनमुखेनानित्यत्वमनूद्य नित्यत्वहेतूपदर्शनमुखेन नित्यत्वमुच्यत इति भावः । एतेन— श्रुतौ अनित्यत्वमेवनेति पदाश्रवणात् अनित्यत्वमेव नेत्युच्यत इत्ययुक्तमिति परास्तम् । अनुवाद्येन सह विधेयं दर्शयति— **तस्मान्नित्यानित्यानीति शेष इति** ।। अत्रानित्यानीत्यनुवादः नित्यत्वं तु विधेयमिति विवेकः । अत्र लेखकदोषादुच्छिन्नं 'पुरुषपदेने' ति वाक्यमिह द्रष्टव्यम् । तद्व्याख्यायते— ननु— 'यान्यनित्यानि प्राणः श्रद्धाभूतानि भौतिकानी' ति वाक्ये अनित्यत्वेनोक्तानामनित्यत्वमेव न किंतु नित्यत्वमप्यस्तीति प्रतिपादनाय प्रवृत्ते 'अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणः श्रद्धाकाश' इति वाक्ये आकाशस्यैव ग्रहणं नतु प्राणश्रद्धयोः तयोः 'अथ ह वाव नित्यानि पुरुषःप्रकृतिरात्मा काल' इति वाक्ये पुरुषपदेन गृहीतत्वेन नित्यत्वस्य लब्धत्वादित्यत आह— **पुरुषपदेनेति** ।। जीवेषु चैतन्यमेव नित्यं प्राणश्रद्धयोस्तु ज्ञानमपि नित्यमस्तीति दर्शयितुं पुरुषपदेन गृहीतयोरपि पुनर्ग्रहणमित्यर्थः । ननु— गृहीतयोः प्राणश्रद्धयोरेव नित्यत्व मुक्तं स्यात् नत्वनुपात्तज्ञानस्य नित्यत्वमित्यत उक्तम्—**सपरिकरयोरिति**।। प्राणश्रद्धापदे ज्ञानादिविशिष्टयोः प्राणश्रद्धयोर्वाचके । ततश्च उपात्तत्वज्ञानस्य नित्यत्वं वक्तुं शक्यमिति भावः । **तत्प्रकारश्चेति** ।। अव्याकृताकाशस्य पराधीनविशेषरूपधर्मद्वारेणोत्पत्तिः न स्वरूपेण । भूताकाशस्य तु स्वरूपेणोत्पत्तिरिति तत्प्रकार उक्त इत्यर्थः । अत्रैवम् 'अथहवावे' ति भाष्योदाहृतश्रुतियोजना — अथेति हवावेति निपातसमुदायः श्रोतुरवधानार्थः । नित्यान्युच्यन्ते तान्युदाहरति पुरुषःप्रकृतिरात्माकाल इति । पुरुषः = चैतन्यम्, प्रकृतिः = चेतनाचेतना, आत्मा = परमात्मा, कालः = कालप्रवाहः । अथ नित्यनिरूपणानन्तरं यान्य-

नित्यानि तान्युच्यन्ते तान्युदाहरति — प्राणःश्रद्धाभूतानि भौतिकानीति । प्राणो=मुख्यवायुः, श्रद्धा=तत्पत्नी, भूतानि=आकाशादीनि, भौतिकानि=देहाः, घटाद्याश्च । अनित्यत्वे उत्पत्तिमत्त्वं हेतुरित्यभिप्रेत्य व्याप्तिमाह — यानिहवाइति । ह वा इति निपातो ऽवधारणे । अनित्यानि भवन्त्येवेत्यर्थः । नित्यत्वेऽनुत्पत्तिमत्त्वं हेतुरित्यभिप्रेत्य व्याप्तिमाह — यानि ह वा इति । निगमनमाह — न विलीयन्त इति । उपनये एतानीत्युक्तानुदाहरति — पुरुषःप्रकृतिरात्मा कालइति । एवमनित्यत्वानुमानेऽपि उपनयनिगमने द्रष्टव्ये । अथ यान्यनित्यानीति वाक्ये अनित्यत्वेनोक्तानां प्राणादीनामनित्यत्वमेव न किंतु नित्यत्वमप्यस्तीति भावेनाह— अथैतानीति । एतानीत्युक्तानुदाहरति — प्राणःश्रद्धाकाश इति । अत्र प्राणश्रद्धापदाभ्यां ज्ञानादिसहितयोः प्राणश्रद्धयोर्ग्रहणम् । यद्यपि — पुरुषपदेनैव नित्यत्व मुक्तं, तथापि— तयोर्विज्ञानमपि नित्यमिति द्योतनाय पुनर्ग्रहणम् । उत्पत्तिमत्त्वा नुत्पत्तिमत्त्वयोः विरोधं परिहर्तुं व्यवस्थामाह भागशोह्युपद्यन्त इति । कैश्चिद्भागैर्नोत्पद्यन्त इत्यपि ग्राह्यमिति । ननु — भवेदाकाशस्य गौणानादित्वेन व्यवस्था यद्यनादित्वश्रुतिर्गौणार्थाभवेत्, न चैतदस्ति, बाधकंविना प्रतीतार्थत्यागायोगात् । अन्यथा ' न जायते न म्रियत ' इत्यादावपि मुख्यार्थत्वं न स्यादिति भावेन शङ्कते — ( ५ - सू० ) **भवेदाकाशस्येति** ॥ इयं चाशङ्का ' गौण्यसम्भवा ' दिति सूत्रस्थ ' गौणी 'ति प्रतिज्ञाश्रवणानन्तरमुत्पन्ना, तत्परिहारस्तु 'गौण्यसम्भवा'दिति सूत्रोक्तहेतुना जातोऽपि 'स्याच्चैकस्य ब्रह्मशब्दवत्, प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्य ' इति सूत्राभ्यामपि भवतीति सूत्रद्वयनिवर्त्यत्वेनाऽऽशङ्कात्रोक्ता। एतेन—अनादित्वश्रुते र्मुख्यार्थपरित्यागे असम्भवादित्यनेन हेतोरुक्तत्वात् पुनः शङ्कानुदय इति परास्तम् । अस्याःशङ्काया हेतूपन्यासात् पूर्वमेव जातत्वात् । **अनुत्पत्तिमच्छब्दस्येति** ॥ ' न जायत ' (का० २—१८) इति श्रुतेर्ब्रह्मणि मुख्यार्थत्वेऽपि अनादिर्वा अयमाकाश इति श्रुतेः आकाशेऽमुख्यार्थकत्वमुपपद्यते। तद्यथा ब्रह्मशब्दस्य परब्रह्मणि मुख्यार्थत्वेऽपि चतुर्मुखादावमुख्यत्वं तद्वदितिभावः। ' ब्रह्मशब्दव 'दिति दृष्टान्तोक्त्या बाधकसद्भावादमुख्यार्थत्वमित्यभिप्रैति । ' ब्रह्मशब्दव 'दिति दृष्टान्तोक्त्यासूचितं मुख्यार्थपरित्यागे कारणं बाधकं ज्ञातुमशक्तस्य

प्रागुक्तशङ्का न निवृत्तेति उत्तरसूत्रनिवर्त्यत्वेन तामेव शङ्कामनुवदति – (६-सू०) **युक्तं ब्रह्मशब्दस्येति ॥** एतेन — 'भवेदाकाशस्ये'त्यनेनैवाऽस्याः शङ्कायाः कृतत्वात् पुनराशङ्कानुपपन्नेति परास्तम् । ननु – 'गौण्यसम्भवा' (२-३-२) दिति सूत्रेणैवाऽस्याः शङ्कायाः परिहृतत्वात् सूत्रद्वयं व्यर्थमित्यत आह— **अनेनेति॥** अनेन सूत्रद्वयेनेत्यर्थः। उत्तमाना 'मसम्भवा'दित्यनेनैवोक्तशङ्कापरिहारः, मध्यमानां 'स्या'दिति सूत्रेण, अधमानां 'प्रतिज्ञाहानि'रिति सूत्रेणेति बोध्यम्। "आत्मा वा इदमेक एवाग्र आसी' (ऐ० उ० १-१) दित्यादि श्रुतिगतमिदं-शब्दमनूद्यैतद्विभक्त्यर्थमाह — **इदमस्येत्यर्थ इति ॥ विभक्तत्वादिति ॥** अल्पशक्तित्वादित्यर्थः ।

**पूर्वपक्षस्तु**— न विष्णोर्जगत्कारणत्वं युक्तम्, 'अनादिर्वा अयमाकाश' इति श्रुतेः आकाशस्याऽनादित्वेनाऽऽकाशकारणत्वाभावात् । न च— 'आत्मन आकाशःसम्भूत' इति श्रुत्या आत्मन आकाशकारणत्वमुपपद्यत इति वाच्यम् – अनुभूतियुक्तिबहुवाग्विरुद्धत्वेन तस्याः श्रुतेरप्रमाणत्वात्। न च — सम्भूतश्रुतेरर्थान्तरपरत्वेन अप्रामाण्याभावः — वाय्वादावपि अन्यार्थतापातात् । नहि यत्र शब्दः श्रूयते तत्राऽमुख्यः, यत्राकृष्यते तत्र मुख्य इति सम्भवति । तस्मादाकाशोत्पत्तिश्रुतेरप्रामाण्यादयुक्तं श्रुतिसमन्वयेनाकाशकारणत्वं ब्रह्मण इति ।

**सिद्धान्तस्तु** – युक्तमेव विष्णोर्जगत्कारणत्वम्, आकाशानुत्पत्तौ श्रुत्यभावादाकाशस्याप्युत्पत्तिमत्त्वेनाकाशकारणत्वे बाधकाभावात् । ननु — उत्पत्तौ प्रमाणाभावादेव वियतः अनुत्पत्तिमत्त्वासिद्धिः स्यादिति चेत्, न — 'आत्मन आकाशःसम्भूत' (तै० उ० २ - १) इति श्रुतिसद्भावात् । नानयाश्रुत्या उत्पत्तिः सिध्यति 'अनादिर्वा अयमाकाश' इति श्रुतिविरुद्धत्वादिति चेत्, न—आनादित्वश्रुतेर्गौणत्वात् । तत् कुतःसिद्धमितिचेत्, उत्पत्तिश्रुतिबाहुल्यान्यथानुपपत्त्येति ब्रूमः । 'अथह वाव नित्यानी'ति भाल्लवेयश्रुतेश्च। एतेनाऽनुभवादिविरोधोऽपि परास्तः । ननु—कुतोऽनादित्वश्रुतेर्गौणत्वं मुख्यार्थे बाधकाभावात् । अन्यथा 'न जायते नम्रियत' इत्यादावपि गौणार्थत्वंस्यादिति चेत्, स्यादन्यत्र मुख्यार्थस्याप्यनुत्पत्तिमच्छब्दस्याऽऽकाशे गौणत्वम् । मुख्यार्थ-

स्याकाशे बहुलोत्पत्तिश्रुतिबाधितत्वात्; ब्रह्मणि मुख्यस्यापि ब्रह्मशब्दस्य बाधकवशात् विरिश्चादिष्वमुख्यत्वदर्शनात्। अन्यथा 'इदं सर्वमसृजते'(तै.उ.२-६) ति प्रतिज्ञाहानिः स्यात्। न च–अत्र आकाशमसृजतेत्यनुक्तत्वात् न प्रतिज्ञाहानिरिति वाच्यम् – सर्वशब्देनैवाकाशस्य ग्रहणात्, सङ्कोचे कारणाभावात्, 'आत्मा वा इदमेक एवाग्र आसी' दित्यादिश्रुतेश्च। आकाश उत्पत्तिमान् अल्पशक्तित्वात् घटादिवदित्यनुमानाच्च आकाशोत्पत्तिसिद्धेरनादित्वश्रुतिर्गौणी। अतः श्रुत्यविरोधेन भगवदितरस्योत्पत्तिसिद्धे र्युक्तः सर्वकारणे ब्रह्मणि श्रुति समन्वय इति सिद्धम् (अ०. १.)



(२ - अधिकरणम्)

## ॐ एतेन मातरिश्वाव्याख्यातः ॐ (सू०-८.)

**तथासतीति**॥ यद्यपि – आकाशस्यैवोत्पत्त्यनुत्पत्तिमत्त्वम्, तथापि = छत्रिन्यायेनाकाशादिवदिति उक्तम्। एवमुत्तरत्रापि द्रष्टव्यम्। अनुत्पत्तिश्रुतेर्गौणार्थत्वे आकाशवत् मुख्यवायोरुत्पत्त्यनुत्पत्तिमत्त्वं स्यात् तस्मिंश्चसति तेजोऽवन्ना॰ दिष्वाकाशं निक्षिप्याऽनित्यत्वमुक्त्वा वायोर्नित्यत्वोक्तिरयुक्ता स्यात्। वाय्वाकाशयोर्नित्यानित्यत्वे वैषम्येणोक्तेः कारणाभावादिति भावः। ननु – नित्यानित्यात्मकस्याऽव्याकृताकाशस्य न तेजोऽबन्नाद्यनित्यवर्गे निवेशः। यस्य तु भूताकाशस्य निवेशः नासौ नित्यानित्यः; ततश्च – नित्यानित्यस्यापि वायोर्नित्यत्वोक्ति र्नानुपपन्नेत्यत आह– **नचाकाशपदेनेति**॥ भूतमेवात्रेत्यतः परं 'विवक्षित' मिति शेषः। इतिशब्दात्परं 'अत्र' ति शेषः। भाष्ये – 'अथ ह चेतनाश्चाचेतनाश्चे' त्यादि श्रुत्युदाहरणमयुक्तम्, अनुत्पत्तिप्रतिपादकत्वाभावादित्यतस्तदभिप्रायमाह– **किञ्चेत्यादिना**॥ वायोरनुत्पत्तिः अनुत्पत्तिप्रतिपादिका श्रुतिः। न्यायविवरणाभिप्रेतमुत्पत्तिपक्षे ऽनुभवविरोधमाह – **एवं विधस्यचेति**॥ नित्यत्वव्याप्तोक्तानेकहेतुगतोऽपि उत्पत्तिमत्त्वे ऽनुभवव्याकोपः स्यात्, यत् यत्साधकहेतुमत् तत्तद्वत् इत्यनुभवादित्यर्थः। **अनुत्पन्नत्वेनाश्रुतत्वादिति**॥ नन्वसिद्धोऽयंहेतुः – 'सावा एषा देवताऽनादिः योऽयंपवते, यस्य नादिर्नमध्यं-

नान्त' इत्यादिना अनुत्पत्तेः श्रुतत्वादिति चेत् , न – श्रूयमाणापि श्रुतिर्नार्थ-साधिका गौणत्वादिति भावेन तथोक्तत्वात् । अत एव 'आकाशानुत्पत्ति श्रुति व्याख्यानेनैव व्याख्याततत्वा'दित्यनेन स्वाभिप्रायमुत्तरत्र व्यक्तीकरिष्यति । **अन्योन्यानुरोधाननुरोधयोरिति** ॥ अनुरोधे पराधीनविशेषप्राप्त्या स्वातन्त्र्यहानिः, अननुरोधेतुपरस्परप्रतिरोधेन कार्यासिद्ध्या कर्तुमकर्तुमन्यथाकर्तुं शक्तत्वाख्यसर्वैश्वर्य-हानिरिति भावः। भाष्ये – **परस्तु नित्यः पुरुषः प्रकृतिः काल एव चेति**॥ पुरुषपदेन जीवचैतन्यं,प्रकृतिपदेन महालक्ष्मीः,कालपदेन श्रीभूदुर्गा उच्यन्ते। ननु–वायोर्मुख्यनित्यत्वाभावे विशेषेणानुत्पत्ति श्रुतिः मुख्यचेतनत्वायुक्तिश्च विरुद्धेत्याशङ्का न परिहृतेत्यत आह — **तत्र वायोरिति**॥ उच्यत इत्यत परम् ' इति मात्र ' इति शेषः ; तत्रेत्यस्य उच्यत इत्यनेन सम्बन्धः । यद्यपि – पूर्वपक्षिणा शङ्कितं परात्परनित्यत्वं परनित्यत्वं च नास्त्येव, तथापि – सम्यगनित्यताशून्येभ्यो ऽनित्येभ्य उत्पत्त्यनुत्पत्तिमद्भ्य इति यावत् एतादृशेभ्यो वियदादिभ्यः स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेण अतिशयेन नित्यता तत्र ' अथ ह नित्याश्चानित्याश्चे ' ति श्रुतौ ' वायुर्वाव नित्य ' इत्यनेनोच्यते । उपलक्षणमेतत् । ' अत ह चेतनाश्चाचेतनाश्चे ' त्यादि श्रुतौ ज्ञाननित्यत्वाभिप्रायेणैव मुख्यचेतनत्वादिकमुच्यत इति भाव इत्यर्थः । **अमुख्यस्येतीति** ॥ भूतवायुविषयतयेदं सूत्रं योजनीयमिति शेषः । **वायुशब्देन खल्विति** ॥ यद्यपि – वायुवाचकेनान्यत्र भूतादित्रयमुच्यत इति भूतस्य प्रतिपाद्यत्वप्रसक्तिरस्ति, तथापि– न भूतपरतया सूत्रं योजनीयं तत्र विवादाभावात् , मुख्यवायावेव विवादसद्भावादिति भावः ।

**पूर्वपक्षस्तु** – न विष्णोर्जगत्कारणत्वं युक्तम् — ' वायुर्वावनित्यः, सा वा एषा देवताऽनादिर्योऽयं पवत ' इत्यादिश्रुते र्वायोरुत्पत्त्यभावेन तत्कारणत्वाभावात् । न च — आकाशानुत्पत्ति श्रुतिवत् इयं श्रुति गौणीति वाच्यम्—' अथ हनित्याश्चानित्याश्च, तेजोबन्नान्याकाश इति तान्यनित्यानि वायुर्वावनित्यो वायुना हि सर्वाणि भूतानि नेनीयंते ' इति श्रुत्या आकाशस्यानित्यत्वमुक्त्वा, वायोर्नित्यत्वोक्तेः । अन्यथा – वायोर्विशिष्यनित्यत्वोक्तिरयुक्ता स्यात् । किंच — यदि वायुरुत्पत्तिमान् स्यात् तदा सर्वापेक्षयातिशयितचेतनत्वं सर्वदेवेपास्यत्वं च न

स्यात्, 'यस्य नादि र्नमध्यं नांतमित्यादिश्रुत्या अनादित्वमुक्त्वा उदयनिम्लोचाभावस्याप्युक्तेः । नचोदयनिम्लोचशून्यस्योत्पत्तिः संभावयितुं शक्या साधकवतः साध्य(वत्ता)दर्शनेनानुत्पत्तिसाधकवतोऽप्युत्पत्तिमत्वांगीकारे ऽनुभवव्याकोपः स्यात्। अतः वायोरुत्पत्त्यभावेनोत्पत्ति श्रुतेरप्रामाण्यात् न श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वं युक्तमिति ॥

**सिद्धान्तस्तु** – युक्तं विष्णोर्जगज्जन्मादिकारणत्वम्, वायोरप्युत्पत्तिमत्वात् । न च— तत्र प्रमाणाभावः, 'प्राणाद्वायुरजायते' त्युत्पत्ति श्रुतेः । नचाऽनुत्पत्ति श्रुति विरोधः — तस्याः स्वरूपानुत्पत्तिपरत्वेन गौणत्वात् । ननु — वायोर्मुख्यानुत्पत्तिमत्त्वाभावे आकाशस्यानित्यत्वमुक्त्वा वायोर्विशिष्य नित्यत्वोक्तिः, अतिशयेन चेतनत्वोक्तिः, देवोपास्यत्वोक्तिश्चाऽनुपपन्ना स्यादिति चेत्, न — स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेणाऽतिशयनित्यत्वाद्युक्तिसंभवात् । अतः श्रुत्यविरोधेन वायो रुत्पत्तिसिद्धेः युक्तं ब्रह्मणि श्रुतिसमन्वयेन जगत्कारणत्वमिति सिद्धम् (अ०. २.)

---

(३ - अधिकरणम्)

## ॐ असंभवस्तु सतोऽनुपपत्तेः ॐ [सू० ९.]

**नचानादित्वेपीति॥** अनादित्वेपि श्रुतिसद्भावात् तया प्रतिरुद्धया नोत्पत्तिः सिध्यतीति न वाच्यमिति भावः । **असंभवदुद्भवयोरिति** ॥ अनादित्वेनासंभवदुद्भवयोर्नभोनभस्वतोः उत्पत्तौ सिद्धायां समस्य = नभोनभस्वद्भ्यां अतिशिष्टस्य, ब्रह्मणोऽनुत्पत्तिरयुक्तेति युक्तिसाहित्येन जन्मश्रुतेः प्राबल्यादित्यर्थः । अनादित्वेनोक्तत्वं तु नभोनभस्वतोरपि सद्भावेन नोत्पत्तिवारकमिति भावः । अनेन च ब्रह्मोत्पत्तिमदविशिष्टत्वात्, यो येनाऽविशिष्टः स तद्धर्मवान्, यथा — संप्रतिपन्न इत्यनुमानं सूचितं भवति । का तर्हि अनादित्वश्रुतेर्गतिरिति वदंतं तटस्थंप्रत्याह – **अनुत्पत्तिश्रुतिश्चेत्यादिना** ॥ यदि अनुत्पत्तिश्रुतिः सर्वात्मनानुत्पत्तिपरेत्यभिमानेन पृच्छसि, तर्हि-प्रमाणमेवेत्युत्तरम् । नचेदभिमानः तत्त्वं चेत् पृच्छसि तदा आकाशादाविव व्यवस्थेत्युत्तरमिति विवेकः । एतेन – अनादि-

त्वेपि श्रुतिरस्तीति शंकमानस्य सर्वथाऽनुत्पत्तिवादिनोऽभिमानस्य सिद्धत्वात् अभिमानश्चेत् अप्रमाणम् , न चेत् व्यवस्थेत्युक्तययोग इति परास्तम् । ननु — सूत्रोक्ता प्रतिज्ञा अनुपपन्नेत्याशंकते — **यद्यपीति** ॥ एतेन – अनुत्पत्तिरेवेति सावधारणं प्रतिज्ञातत्वात् सिद्धार्थाप्रतिज्ञेति शंकानुदय इति परास्तम् । ननु — भाष्योक्ता प्रतिज्ञा ऽनुपपन्नोत्सूत्रत्वादित्यत आह – **अत एवेति** ॥ **तेनैवेति** ॥ स्वातंत्र्यसूचनेनैव नभोनभस्वद्भ्या मविशिष्टत्वरूप पूर्वपक्षयुक्तहेतो गतिरसिद्धिश्चोक्ता भवतीत्यर्थः । असिद्धिं दर्शयति — **गगनपवनादीनामिति**॥ अस्वातंत्र्यात्तेषामुत्पत्तिः, ब्रह्मणस्तु स्वातंत्र्यमिति अविशेषोनेति भावः ।

**पूर्वपक्षस्तु** — न विष्णोः श्रुतिसमन्वयेन जगत्कारणत्वं युक्तं तस्योत्पत्तिमत्त्वेन जगत्कारणत्वायोगात् ॥ नच – तत्र प्रमाणाभावः 'असतः सदजायत' (ऋ. सं. ८ ३-१ ) श्रुतिसद्भावात् । नचाऽनादित्वश्रुतिप्रतिरुद्धत्वात् न तयोत्पत्तिः सिध्यतीति वाच्यम् — ब्रह्मोत्पत्तिमदविशिष्टत्वादित्युत्पत्तिश्रुतेः स युक्तिकत्वेन प्रबलत्वात् । नच — कारणाभावादनुत्पत्तिः — असत एव तत्कारणत्वात् । अतो ब्रह्मणोप्युत्पत्तिमत्त्वादशेषकारणतया न श्रुतिसमन्वय इति ।

**सिद्धान्तस्तु** – युक्तमेव विष्णोर्जगत्कारणत्वम् असतः सदुत्पत्तेः काप्यदर्शनेन असतः सकाशात् उत्पत्त्यनुपपत्तेः का तर्हि 'असतः सदजायत' इति श्रुतेर्गतिरिति चेत् उच्यते — 'ब्रह्म वा असत् सद्वाव्प्राण' इति श्रुतेः ब्रह्मणः सकाशाद्वायोरुत्पत्तिः । **श्रुत्यर्थ इति** ॥ तदुक्तं !

'त्वं देवशक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कवि रादधे ऽजः ।
ततो वयं सत्प्रमुखा यदर्थे बभूविमाऽऽत्मन् करवाम किं त (भा०. ३-६-२८) इति ।

ननु — रामकृष्णादिरूपेण हरेर्जायमानत्वात् कथं न जन्मेति चेत् , रामकृष्णादेः प्रादुर्भूतत्वेनाऽनुत्पन्नत्वात् । तदुक्तं

प्रत्यक्षत्वं हरेर्जन्म न विकारः कथं चनेति ।

अतः श्रुत्यविरोधेन ब्रह्मणो ऽनादित्वे सिद्धे युक्तं तत्र श्रुतिसमन्वयेन जगत्कारणत्वमिति सिद्धम् । (अ० ३.)

( ४ - अधिकरणम् )

ॐ तेजोऽतस्तथाह्याह ॐ (सू० १०)

**एवमिति** ।। उत्पत्तौ सिद्धायामित्यन्तमवसरसंगतिसूचनार्थम् । ननु — प्राथमिकत्वाद्वियद्विचार एव कर्तव्यः, न तेजोविचार इत्याशंकापरिहाराय 'वियदादीनांच परमात्मनो जन्मेत्यत्र विवादाभावेने 'त्येतं वाक्यं प्रवृत्तम् । अत्राऽऽदिशब्दः प्रक्षिप्तः वियतश्चेत्येव पाठः । वायोरवधिकरणे विचार्यमाणत्वात् विवादसद्भावाच्चादिशब्दसंग्रहाह्याभावात् । ततः परं 'वियद्विचारं परित्यज्ये'ति शेषः । अत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थमित्याद्यंतर्भावसंगतिनिरूपणार्थम् । वायुविचारपरित्यागेन, प्रथमं तेजोविचारस्तु क्वचित् तेजः पूर्वसृष्टेः श्रवणात् तत्प्राधान्यविवक्षयेति बोध्यम् । **तदभावप्रसंग इति** ।। स्वातंत्र्येण जगत्कारणत्वाभावप्रसंग इत्यर्थः । **तस्या इति** ।। उभयकारणत्वेपि तस्याः श्रुतेः अविरोधात् । निरवधारणत्वेनोपपन्नत्वादित्यर्थः । 'सर्वं वाक्यं सावधारण' मिति न्यायेन 'तत्तेजोऽसृजते' ( छा०. ६ - २ - ३ ) श्रुति रवधारणतात्पर्यवतीत्यत आह — **ब्रह्ममात्रेति** ।। **व्रीह्यादेरकारणत्वेपीति** ।। वाय्वादीन् विना स्रष्टुं शक्यत्वेपीति भावः । **वायुप्रभृतीनां देवतात्वादिति** ।। वायुप्रभृतीनां देवतात्वेन 'वायोरग्नि' रिति श्रुतेः निमित्तपरत्वस्यापि सद्भावेन विरोधसद्भावादायासः सार्थक इति भावः । 'उपादानशक्तेश्च परमात्माधीनत्वा' दिति वाक्यं प्रक्षिप्तम् न टीकावाक्यमिति बोध्यम् ।

**पूर्वपक्षस्तु** — न श्रुतिसमन्वयेन विष्णोरसाधारण्येन जगत्कारणत्वं वाच्यम्, तेजसः वायुजातत्वे श्रुतिसद्भावेन विष्णुवत् वायोरपि अग्निकारणत्वेन विष्णोर्विशेषाभावात् । नच — वायुद्वारातेजसः परमात्मजातत्वाभिधायकत्वं श्रुतेर्वाच्यं । किं ब्रह्म वायुद्वारमंतरेण तेजः स्रष्टुमीष्ट, न वा । आद्ये द्वारवैयर्थ्यम् । द्वितीयेतु — साम्यं तयोरवर्जनीयम् । अतो न जगत्कारणत्वेन सर्वश्रुतिसमन्वयो युक्त इति ।

**सिद्धान्तस्तु** — युक्तमेव तत्र सर्वश्रुतिसमन्वयेन जगत्कारणत्वं 'तत्तेजोऽसृजते' ति श्रुते रग्नेर्विष्णुजातत्वात् । नच — 'वायोरग्नि' रित्यादि श्रुति

विरोधः — तत्र वायुद्वारा तेजसो ब्रह्मजातत्वोक्तिः। नच — द्वारवैयर्थ्यानुपपत्त्या उभयोरपि कारणत्वं वाच्यम् — शक्तस्यापि ब्रह्मणः स्वेच्छयैव द्वारमनुसृत्य कारणत्वस्य प्रमाणसिद्धत्वात्। अतः श्रुत्यविरोधेन तेजसो ब्रह्मजातत्वे सिद्धे सर्वश्रुतिसमन्वयेन जगत्कारणत्वं हरेरिति सिद्धम् (अ० ४)



(५ - अधिकरणम्)

## ॐ आपः ॐ (सू-११.)

**पूर्वपक्षस्तु** — न हरेः श्रुतिसमन्वयेन जगत्कारणत्वं युक्तम्, अपाम् 'अग्नेराप' इति श्रुतिबलात्तेजोजातत्वात्। नच — 'तदपोऽसृजते' (छा० ६-२-३) ति श्रुतिविरोधात् प्रतीतार्थे तेजोजातत्वश्रुतेः अप्रामाण्यं वक्तुं युक्तम् — 'आपः तेजसो जायन्ते अप्त्वात् स्वेदादिव' दिति युक्तियुक्तत्वेन प्राबल्यात्। तथाच श्रुतिः — 'तत्तेज ऐक्षत बहुस्यां प्रजायेयेति तदपोऽसृजत, तस्माद्यत्र क्वच शोचति, स्वेदते वा, पुरुषः तेजस एव तध्यापो जायंत' इति। ततश्च न ब्रह्मणः श्रुतिसमन्वयेन जगत्कारणत्वमिति।

**सिद्धान्तस्तु** — युक्तमेव हरेरशेषकारणत्वम्। 'अग्नेराप' इति श्रुतेः अपां परमात्मन उत्पत्तौ अग्निर्द्वारमित्येवंपरत्वात्। 'ब्रह्मैवेदमग्र आसीत् तदपोऽसृजते' ति श्रुतेः। ननु — श्रुतिद्वयान्यथानुपपत्त्या ब्रह्मतेजसोः साम्येनैव कारणत्वं किं न स्यादिति चेत्, न —

'कर्ता सर्वस्य वै विष्णु रेकएव न संशयः।
इतरेषां तु सत्ताद्या यतएव तदाज्ञये' ॥ ति

वचनविरोधात्। तस्माच्छ्रुत्यविरोधेनाऽपां ब्रह्मजातत्वसिद्धेः युक्तं वेदसमन्वयेन जगत्कारणत्वं हरेरिति सिद्धम् (अ० ५)



(६ - अधिकरणम्)

## ॐ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॐ (सू० - १२.)

संदेहबीजं पूर्वपक्षंच पृच्छति — **किमस्येति** ॥ संदेहबीजं पूर्वपक्षंच

भाष्यकार एव दर्शयतीत्याह— **तत्र श्रुति विगानमिति** ।। तत्र=शंकायां सत्यामित्यर्थः । **श्रुतिद्वयस्य परस्परविरुद्धत्वादिति** ।। 'ता अन्नमसृजन्ते ' ति श्रुतिः, अन्नसृष्टेरबानंतर्यं वक्ति, 'अभ्द्यः पृथिवी ' ति श्रुतिस्तु पृथिव्या अबानंतर्यं वक्ति । ततश्च अन्नस्याबानंतर्यं विरुणद्धि, पृथिव्यास्तदानंतर्यम् अन्नानंतर्यं विरुणद्धीति श्रुत्योः परस्परविरुद्धत्वादित्यर्थः । एतेन — अपा मुभयकारणत्वसंभवान्नविरोध इति परास्तम् । अन्नस्यैवाप्सृष्टयनंतरं सृष्टिः पृथिव्यास्तु तदानंतर्यम् । अथवा— पृथिव्या एवाऽप्सृष्टयानंतर्यम्, अन्नस्यतु तदानंतर्यमित्यभ्युपगमे न विरोध इत्यत आह — **निरवकाशत्वेनेति** ।। द्वयोरपि श्रुत्योर्निरवकाशत्वेन अन्यतरपक्षपाताऽयोगा न्नैवं विरोधः परिहर्तुं शक्य इति भावः । अविरोधमाशंक्य निषेधति — **नचेति** ।। प्रकारांतरेणाऽविरोधमाशंक्य निषेधति=**नचेति** ।। सव्येतरविषाणवत् उभयोरप्यवानंतर्यमाशंक्य निषेधति — **नापीति** ।। **उक्तश्रुतिविरोधादिति** ।। 'ओषधीभ्योन्न' मित्युक्तश्रुतिविरोधादित्यर्थः । पृथिवीजन्यौषधिजन्यत्ववचनात् नाऽन्नस्य पृथिव्या सहोत्पत्तिरिति भावः । आदिसृष्टौ परमात्मनः सकाशादुत्पन्नानां देवानां सृष्टयन्तरे कश्यपादुत्पत्तिवत् पृथिव्या सहोत्पन्नस्याप्यन्नस्य सृष्टयन्तरे ओषधिजन्यत्वं संभवतीत्याशंक्य निषेधति— **नचान्नस्यैवेति** ।। **वहुकल्पनेति** ।। अन्नस्य सृष्टिद्वयकल्पनम्, एकस्यां सृष्टौ पृथिव्या सहैव जन्मकल्पनम्, 'अभ्द्यः पृथिवी ' ति श्रुतौ अन्नपरित्यागे 'ता अन्नमसृजंते ' ति श्रुतौ पृथिवीपरित्यागे च कारणं परिकल्पनीयमित्यनेककल्पनापातादित्यर्थः । **नन्वेति** ।। श्रुत्योर्द्वयोरपि निरवकाशत्वेपि ' गङ्गायां घोष ' इत्यादाविव ' ता अन्नमसृजंते ' ति श्रुते मुख्यार्थत्याग इति भावः । **कारणाभावादिति** ।। गङ्गायां घोष इत्यादौ आप्तवाक्यत्वेन प्रामाण्यस्य सिद्धत्वान्मुख्यार्थत्यागो ऽङ्गीक्रियते, न चात्रप्रामाण्यमस्तीति न मुख्यार्थस्याग इति भावः ।

**पूर्वपक्षस्तु** — न श्रुतिसमन्वयेन बिष्णोर्जगत्कारणत्वं युक्तम्, द्वारकारण श्रुतीनां परस्परं विरोधेनाऽप्रामाण्यात् । तथाहि — 'ता अन्नमसृजंते 'ति अन्नसृष्टेरप्सृष्टयानंतर्यमुच्यते, 'अद्भ्यःपृथिवी 'ति पृथिवीसृष्टेः अप्सृष्टयानंतर्यम्, न चोभयं संभवति विरोधात् । नच — तत्रान्नशब्देन पृथिव्येव विवक्षितेति वाच्यम् — अन्नश्रुतेः प्रसिद्धान्नपरत्वे बहुवाक्यानुसारित्वगुणलाभात्, ' तस्मा-

यत्रक्वचवर्षति तदेव भूयिष्ठमन्नं भवति अन्नमशितं त्रेधा विधीयत' इति प्रसिद्धान्नलिंगाच्च । नच पृथिवीपदेनाऽन्नसंग्रहः अद्भ्य एव अन्नसृष्ट्यंगीकारे 'अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नं' (तै. उ. २– )मिति श्रुतिविरोधात् । नापि पृथिव्यन्नयोरद्भ्यः युगपदेवोत्पत्तिः, उक्तश्रुतिविरोधात् । न चान्नस्य सृष्टिभेदेन अद्भ्यः, ओषधीभ्योऽपि जन्म; बहुकल्पनापातात् । अतः श्रुतिद्वयस्य परस्परं विरुद्धत्वात् अप्रामाण्यमेवेति न श्रुतिसमन्वयेन ब्रह्मणो जगत्कारणत्वं युक्तमिति ।

**सिद्धान्तस्तु**– युक्तमेव विष्णोः श्रुतिसमन्वयेन जगत्कारणत्वम् । श्रुत्योर्विरोधाभावात् । तथाहि – 'ता अन्नमसृजंत' त्यत्राऽन्नशब्देन पृथिवीविवक्षिता 'तत्तेजोऽसृजत तदपोऽसृजते 'ति भूतप्रकरणात्, यदग्नेरोहितं रूपं तेजसस्तद्रूपं, यच्छुक्लं तदपाम्, यत्कृष्णं तदन्नस्ये'(छा. ६)ति अन्नस्य काष्ण्यंश्रवणाच्च । नचैवं लक्षणा – 'आपश्च पृथिवीचान्नं, पृथिवीवा अन्न' मिति शब्दांतरे पृथिव्या अन्नशब्दाभिधेयत्वाभिधानात् । नच वृष्टिजत्वलिंगविरोधः, पार्थिवपदार्थानां वृष्ट्युत्पन्नत्वार्थत्वेनोपपत्तेः । ननु – श्रुतेः किमर्थांतरकल्पनया श्रुत्योर्विरोधेन अप्रामाण्यमेव किं न स्यादिति चेत्, न – वेदो नाऽप्रमाणम् अप्रामाण्यकारणदोषशून्यत्वात् प्रत्यक्षवदित्यादि युक्तिविरोधात् । एवंच विरोधाभावात् हरेः श्रुतिसमन्वयेन जगत्कारणत्वं युक्तमिति सिद्धम् ( अ० ६ )

---

( ७ - अधिकरणम् )

## ॐ तदभिध्यानादेव तु तल्लिंगात्सः ॐ (सू० १३)

**लोकेच पितुरन्यस्यैवेति** ॥ ननु – लोके उद्बंधशस्त्रगरळमृगुपातादिनात्महंतार आततायिनो दृश्यंते, तत्र काऽनुपपत्तिः पितुः पुत्रहननेऽपि, जनन्यपि शंतनोर्भार्या पुत्रहंत्रीदृश्यते, नहि मातुरपि पितुः पुत्रेषु स्नेहो गरीयान्, येन मातुः तद्धंतृत्वेऽपि पितुर्न स्यात्, दृश्यते चाऽजीगर्तः स्वपुत्रशुनःशेपवधाय प्रवृत्तः, तत्कथमुच्यते पितुरन्यस्यैव मारकत्वदर्शनादिति चेत् – न ब्रूमोवयं लोके पितुर्मारकत्वं नैवदृष्टमिति येनोक्तदोषस्स्यात्, किं नाम लोके अन्यस्य पितुः प्राज्ञविलक्षणस्य मूढस्येति यावत् । पुत्रमारकत्वं दृष्टमिति तदुक्तम् –ःअहो विधात

स्त्वमतीव बालिशो यस्त्वात्मसृष्टेः प्रतिरूपमीह ' इति । एवंच — उत्पादकस्यैव संहर्तृत्वे मौढ्यं स्यात् नच तद्युक्तमिति संहर्तृत्वमेवानभ्युपेयमिति । **विरोध इति** ॥ बाध इत्यर्थः । **भाक्तार्थत्वेनेति** ॥ अंतकवद्वयंकरत्वार्थकत्वेनेत्यर्थः । ' रुद्रो माविशांतक ' इत्यत्र रुद्र, उमेति पदच्छेदमुपेत्याह — **रुद्रत्वमिति** ॥ ' रुद्रस्त्व ' मित्यपि क्वचित्पाटः । ननु— सूत्रकृतोक्तस्य ' तदभिध्याना ' दिति लिंगस्य विश्वसंहारशक्तिमत्त्वसिध्द्या सावकाशत्वात् । अनादिभवभेत्तुः संहारे सामर्थ्यमस्तु विश्वसंहर्तृत्वं तु कुतः प्रमाणात् प्रतिपत्तव्यं सूत्रे तत्साधकप्रमाणानुपन्यासादित्याशयेन शंकते — **नन्विति** ॥ ईश्वरान्यस्य शक्त्यभावादस्यैव तदङ्गीकार्यमिति भावः । **शक्तस्यैव तत्संभवादिति** ॥ अतःपरं श्रूयमाणम् ' अथैतावता परितोष ' इति वाक्यं न टीकावाक्यम् , अपितु प्रक्षिप्तम् । अस्य भाष्योक्तकैमुत्यविरोधित्वात् । न हि पूर्वोक्तप्रमाणादर्थलाभप्रयुक्तापरितोषे प्रमाणांतरप्रवृत्तिः कैमुत्यन्यायेन भवति, येनेदं वाक्यं प्रक्षिप्तं न स्यात् । ' एकदेशिक्रियाचात्रे ' ति भाष्यगत ' मत्रे ' ति पदमनूद्य व्याकुर्वन् अप्यर्थकचशब्दसंबंधं सूचयति — **अत्रपरतंत्रेपीति सृष्ट्यादिकमितीति** ॥ पूर्वत्र = ईरितमित्यत्र । अनेन परतंत्रेपीरितसृष्ट्यादिकं सर्वात्मना नेति स्मृत्यर्थः सूचितः । **ममत्वादिदोषराहित्येनेति** ॥ लौकिकपितुः ममतासद्भावेन मौढ्यंविना पुत्रहंतृत्वमयुक्तम् । ईश्वरस्य तु ममताभावात् मौढ्यंविनापि हंतृत्वसंभवान्न मौढ्यप्रसंग इति भावः ।

**पूर्वपक्षस्तु**—न विष्णुःसंहर्ता अपितु रुद्र एव । 'प्राणानां ग्रंथिरसी'(महाना. १६–२ ) ति श्रुतेः । न च विष्णोः सर्वशब्दवाच्यत्वात् सा श्रुतिः विष्णुपरा, रुद्रपरत्वेऽपि तस्य द्वारकारणत्वाभिधात्रीवा किं न स्यादिति वाच्यम्— लोकविरोधात् । लोके हि पिता न पुत्रमारकः, मारकोऽपि मूढ एव न प्राज्ञः, एवंच — पितुरीश्वरस्य जगन्मारकत्वांगीकारे मौढ्यमेव स्यात् । न चतद्युक्तमिति लोकविरोधो दुर्वारः । न च–विष्णोः संहर्तृत्वेपि ' यत्प्रयंती ' ति श्रुतिरस्तीति वाच्यम्– तस्याः बलवदेतच्छ्रुतिविरोधेनाप्रमाणत्वात् । अतो विष्णोर्न संहर्तृत्वमिति ।

**सिद्धान्तस्तु**— युक्तमेव विष्णोः संहर्तृत्वं 'तस्याभिध्यानाद्योजना ' ( श्वे. उ. १—१० ) दिति श्रुतौ तध्यानजन्यप्रसादरूपेच्छाधीनत्वस्य बंधनिवृत्तेरभिधानात् । किंचातः, तदिच्छाधीनत्वेन तत्कृतत्वमनुमीयते । एवंच — अनादे

बन्धस्य लयकर्त्ता, सुतरां सादेर्जगतः संहारकर्तेति सिध्यति । 'स इदं सर्वं वि-ज्ञापयती' त्यादि श्रुतेश्च । नच — रुद्रस्यसंहारकत्वाभिधायकश्रुतिविरोधः — तस्या द्वारकारणत्वाभिधायकत्वात् । न च — पितृत्वादीश्वरस्य विनाशकत्वे मौढ्यप्रसंगः — लौलिकपितॄणां ममतायुक्तत्वेन हन्तृत्वायोगात्, मौढ्यमुपाधित्वे-नंगीक्रियते, ईश्वरस्य तु तदभावात् मौढ्यंविना संहर्तृत्वोपपत्तेः अतः श्रुतिविरो-धाभावेन विष्णोः संहारकर्तृत्वं सिद्धमिति (अ. ७)

---

(८ - अधिकरणम् )

ॐ विपर्ययेणतुक्रमोऽत उपपद्यते च ॐ [सू.१४.]

**असौ श्रुतिरप्रमाणमेवेति** ।। ननु — अप्रमाणमेवेत्ययुक्तम्, अपौरुषे-यत्वेनाप्रामाण्यकारणीभूतपुरुषदोष शून्यस्य वेदवाक्यस्य अकारणकार्योत्पत्तिप्रसंगे-नाऽप्रामाण्याऽयोगात् । नहि विरोधशतेनापि अप्रमाण्यकारणाभावे अप्रामाण्यं वक्तुं युक्तमितिचेत्, न — अप्रामाण्यव्याप्येन प्रमाणविरुद्धत्वेनाऽप्रामाण्यसिद्धौ कार्यबलात् पुरुषदोषासंभवे तदतिरिक्तस्य नित्यदोषस्य कल्पयितुं शक्यत्वात्, नहि पीनस्य दिवाऽभुंजानस्य कस्यचित् कारणतया दिवाभोजनकल्पनासंभवे रात्रिभोजनं न कल्प्यते । येनेह प्रसिद्धदोषासंभवे दोषांतरकल्पनं न स्यादिति । **एवंचेति** ।। गुणत्वादित्यतःपरम् 'उक्तंयुक्त' मितिशेषः । एतेन — पंचम्यं तस्यानन्वय इति परास्तम् ।

**पूर्वपक्षस्तु** — न श्रुतिसमन्वयेन परमात्मनो व्युत्क्रमेण संहर्तृत्वं युक्तम्, व्युत्क्रमप्रतिपादकश्रुते रप्रामाण्यात् । तथाहि — अस्तितावत्क्रमाल्लयप्रतिपादिका 'अतएवर्हादं परात्क्रमादुत्पद्यते, क्रमाद्विलीयत' इति श्रुतिः । साच प्रत्यक्षानु-गुणाः 'क्रमादुत्पद्यते क्रमाद्विलीयते क्रमेणैवोत्पत्तिर्विलयश्च' त्याद्याश्चश्रुतयो ऽस्मिन्नर्थे भवन्ति । अतो बलवदेतच्छ्रुति विरोधेन व्युत्क्रमप्रतिपादक श्रुते रप्रा-माण्यमेवेति समन्वयो न युक्त इति ।

**सिद्धान्तस्तु**— व्युत्क्रमेणैव लयो युक्तः, क्रमश्रुतेः सावकाशत्वेनाऽबाध कत्वात्, अस्तिहि व्युत्क्रमशब्देपि क्रमप्रवेशः । क्रमाल्लयाभिधायकभाल्लवेयश्रुता-

वेव 'कर्ता प्राणादिकस्या ऽस्य हंता भूम्यादिकस्यचे'ति व्युत्क्रमेणलयाभिधानाच्च, 'अनुरुपक्रमः सृष्टौ प्रतिरूपो लये क्रम' इतिवचनाच्च । नच — लोकविरोधः— पूर्वेषां पूर्वेषां सामर्थ्याधिक्येन लोकविरोधस्यैवाऽनुगुणत्वात् । अतः श्रुत्यविरोधेन व्युत्क्रमाल्लयसिद्धेः युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् । (अ० ८.)

---

( ९ - अधिकरणम् )

## ॐ अन्तरा विज्ञानमनसी क्रमेण तल्लिंगादितिचेन्ना ऽविशेषात् ॐ (सू० १५)

**समसामर्थ्यस्यापिसंभवादिति ॥** ननु — मनस्तत्वस्य विज्ञाने लयव्युत्पादनाय वैपरीत्येन सामर्थ्यस्यापि संभवादिति वक्तव्यम्, नतु समबलत्व-संभवादिति, लयाधिकरणस्य अधिकबलवत्वनियमादिति चेत्, नब्रूमो वय एकमेवसामर्थ्यमुभयत्र समानमिति, येनोक्तदोषः स्यात् । किंनाम विज्ञानतत्वोत्पाद नाय मनस्तत्वस्य विशिष्टं सामर्थ्यम्, एवंच कृत्वा समसामर्थ्यमिति । तद्यथा लोके कश्चिद्धनेनोत्तमः, कश्चिद्बलेनोत्तमः, एवमपि तौ समावुच्येते ।

**पूर्वपक्षस्तु** — न विष्णोर्व्युत्क्रमेण सर्वसंहर्तृत्वं युक्तम्, किंतु विज्ञान-मनसी अन्तरा व्युत्क्रमेण लयकर्तृत्वम् 'मनसश्च विज्ञान' मिति मनस उत्पन्ने विज्ञानतत्वे 'तद्यच्छेत् ज्ञान आत्मनी'ति मनस्तत्वस्य लयश्रवणात्, लोकानु-गुण्याच्च । लोके क्रमेण, व्युत्क्रमेणच लयदर्शनात् । नच—सामर्थ्यतारतम्यविरो-धः मनस उत्पत्तिविषये सामर्थ्याधिक्यमित्यंगीकारे बाधकाभावात् । अतः सयुक्ति कलिंगदर्शनविरुद्धायाः क्रमश्रुतेः अप्रामाण्योपपत्तेः न श्रुतिसमन्वयो युक्तइति ।

**सिद्धान्तस्तु** – युक्तमेव विष्णोर्व्युत्क्रमेण सर्वसंहर्तृत्वम्, विज्ञानमन-सोरपि बाधकाभावेन व्युत्क्रमेण लयांगीकारात् । नच — 'मनसश्चविज्ञान' मिति श्रुत्या मनस्तत्वात् विज्ञानतत्वस्योत्पन्नत्वेन मनस्तत्वस्य विज्ञानतत्वे लयांगी-कारे कथं न विरोध इतिवाच्यम् — श्रुत्यर्थापरिज्ञानात्, नहि सा श्रुतिः मनस्तत्वाद्विज्ञानतत्वस्योत्पत्तिमाचष्टे, किंतर्हि मन इंद्रियाद् ज्ञानस्योत्पत्तिमाचष्टे । तदुक्तम् —

' परा दव्यक्त मुत्पन्न मव्यक्तात्तु महांस्तथा ।
विज्ञानतत्वं महतः समुत्पन्नं चतुर्मुखात् ॥
विज्ञानतत्वात्तु मनो मनस्तत्वाच्च खादिकं '

मिति । अतः श्रुत्यविरोधेन सर्वेषां व्युत्क्रमेण लयसिद्धेः हरौ श्रुतिसमन्वयो युक्त इतिसिद्धम् । ( अ० ९.)



( १० - अधिकरणम् )

## ॐ नात्माश्रुतेर्नित्यत्वाच्च ताभ्य ॐ (सू० १७)

**परमात्मापि लीयतएवेति** ॥ अनेन 'परमात्मापि न लीयत' इति भाष्यस्थनञः, उत्कर्षेण 'परमात्मापि लीयत' इत्यंतः पूर्वपक्षः, नेति सिद्धांत इति सूचितं भवति । **स्वातंत्र्यस्यापीति** ॥ ननु – लीलया विग्रहग्रहणपरित्यागेन लयोपपादनमनुपपन्नं, प्रागुक्तजगज्जन्मादिकारणत्वविरोधित्वात् । अपरिहार्यमेव लयादिकम् दोषत्वात्, जगज्जन्मादिकारणत्वविरोधि, नतु लीलया प्राप्तं नहि लीलया बालकैस्ताड्यमानो राजा न राजाभवति, येनेश्वरो जगज्जन्मादि कारणं न स्यात्, इतिचेत्, न ब्रूमो वयम् – लीलया विनाशो भवतीति, येनोक्तदोषः स्यात्, किंनाम यथा – लीलया कुड्यात् कुड्यमुत्पततः अवर्जनीयः पातः, एवं लीलया विग्रहं गृहीतवतोपि अवर्जनीयो विनाश इति । सतिच विनाशे दोषित्वात् न सर्वजगत्कारणत्वमिति युक्तएव पूर्वपक्षः । ततश्चैवं योजना– लीलया विग्रहग्रहणेसति परित्यागोपपत्तेरिति । **नच – श्रुत्यंतरबलादिति** ॥ 'अर्थांतरं परिकल्प्यत' इत्यनुवर्तते । 'परोगुणै'रिति भाष्ये तृतीयाश्रवणात् ईश्वरनिष्ठं परत्वं गुणकृतमिति न मन्तव्यमिति भावेनाह — **गुणेभ्य इति** ॥ ईश्वरस्य गुणा लिंगानीतिभावः ।

**पूर्वपक्षस्तु** — न विष्णोः श्रुतिसमन्वयेन सकलजगज्जन्मादिकारणत्वं युक्तम्, तस्य विनाशित्वात्, 'अंतस्तमसिनिलीन'इति श्रुतेः । नच –'नित्यो नित्याना' ( श्वे. उ. ६– १३ ) मिति श्रुतिविरोधः– ईश्वरो विनाशी चेतनत्वा दिति युक्तिसहितत्वेन विनाशश्रुतेः प्राबल्यात् । नच – स्वातंत्र्येण हेतुना ईश्व-

रस्यानुत्पत्तेः साधितत्वाद्विनाशायोगः — स्वतंत्रस्यापि लीलया विग्रहग्रहेसति अवर्जनीयपातोपपत्तेः । तद्यथा लीलया कुडयात्कुडयमुत्पततः पातः, नहि उत्पतनं लीलयेति पातोपि लीलया, अपितु कारणांतरादवर्जनीयः। अतः सयुक्तिकश्रुतिविरोधेनाऽन्यश्रुतेरप्रामण्यान्नोक्तसमन्वयो युक्त इति ।

**सिद्धान्तस्तु** – युक्तमेव विष्णोर्जगत्कारणत्वं प्रळयस्याऽप्रामाणिकत्वात्। नच– ' अन्तस्तमसि निलीन ' इति श्रुतिरत्र प्रमाणम् , 'अन्तस्तमसि निलीन' इत्युक्त्वा पुरुषादीन् स्वयं पश्यति ' नैनं पश्यति कश्चने ' ति वचनेन निलीनशब्दस्याऽपिहितार्थत्वात् । अन्यथा – ' नित्योनित्याना 'मित्यादि बहुश्रुतिविरोधः स्यात् । अतः श्रुत्यविरोधेन परमात्मलयस्य निरस्तत्वात् युक्तं तस्मिन् श्रुतिसमन्वयेन जगत्कारणत्वमिति सिद्धम् । (अ० १०)

---

( ११ - अधिकरणम् )

ॐ श्रोऽत एव ॐ [सू० १८. ]

**प्रागभावशून्यताया इति ॥** यदोत्पत्तिरुच्यते तत्पूर्वकाले अभावशून्यतायाः सत्तायाः विवक्षितत्वादित्यर्थः। असतः सत्तासंबंधाऽभावोह्यत्र साध्यः, तदुपपादनायाऽसत्त्वरूपविशेषणाभावो हेतुतयोच्यते, अतो न साध्यावैशिष्ट्यमिति भावः । **न च — तत्रविवाद इति॥** प्रळयकाले जीवानां सत्त्वस्य मयानंगीकारात् अन्यतरासिद्धो हेतुरिति न वाच्यमित्यर्थः । कुत इत्यत आह – **उत्पत्तेरेवेति ॥** अदृष्टस्य कार्यमात्रकारणत्वात् प्रळयकाले जीवाभावे तदाश्रिताऽदृष्टस्याप्यभावापत्त्या कारणाभावेन जगदुत्पत्तिरेव न स्यादित्यर्थः । (सू. १९) **नचैवमिति ॥** जीवोत्पत्तिरिति वच उपचारमात्रं स्यात् । ततश्च तथा प्रतिज्ञाय उपाध्युत्पत्तिसाधने अर्थांतरं स्यादिति न वाच्यमित्यर्थः ।

**पूर्वपक्षस्तु**— न परमात्मनः श्रुतिसमन्वयेन जगत्कारणत्वं युक्तं जीवस्य अनुत्पन्नत्वात् ' नित्योनित्याना ' मिति श्रुतेः । नचोत्पत्तावपि ' सर्वे एत आत्मनो व्युच्चरन्ती' ति श्रुतिरस्तीति वाच्यम् — जीवो नोत्पत्तिमान् अनादित्वात् ईश्वरवदित्या दियुक्तिसहितत्वेन अनादित्वश्रुतेः प्राबल्यात् । न च — साध्यावि-

शिष्टताहेतोः, अनादिशब्देन तत्सत्तायाः अनादिकालीनत्वस्य विवक्षितत्वात्। न च – प्रळये जीवानां सत्वे विवादः, तथासति जीवाभावेन तद्धर्मस्यादृष्टस्याप्यभावापत्त्या कारणाभावेन जगदुत्पत्तिरेव न स्यात्। अथवा — कारणशून्यत्वमनादित्वं विवक्षितम्। न च — तत्रापि विवादः, कारणानुपलंभात्। अतो जगत्कारणे ब्रह्मणि श्रुतिसमन्वयो न युक्त इति।

**सिद्धान्तस्तु** — युक्तमेव परमात्मनः श्रुतिसमन्वयेन जगत्कारणत्वम्, अनादिनित्यानामेव जीवानां 'ते वा एते चिदात्मानो ऽविनष्टाः परंज्योतिर्निविशन्ति, विनष्टा एवोत्पद्यन्त' इत्युत्पत्तिविधानात्। न च - कारणाभावः — परमेश्वरस्यैव कारणत्वात्। न च — अनादिनित्यत्वमंगीकृत्य उत्पत्तिमत्त्वांगीकारे 'माता वंध्ये' ति वत् व्याघातः, नित्यस्यापि जीवस्योपाध्युत्पत्त्यपेक्षयोत्पत्त्युपपत्तेः। तथापि — न स्वरूपलाभरूपोत्पत्तिर्लभ्यते इति चेत्, मालाभि पराधीनविशेषावाप्तिरूपोत्पत्तेरेव विवक्षितत्वेन तदलाभस्येष्टत्वात्। अतः श्रुत्यविरोधेन जीवस्य ब्रह्मजातत्वसिद्धेः युक्तस्तत्र समन्वय इति सिद्धम् (अ० ११)

---

( १२ - अधिकरणम् )

### ॐ उत्क्रान्तिगत्यागतीनाम् ॐ (सू० २०)

**व्याप्तत्वमणुत्वंचेति** ॥ श्रुतिद्वयपर्यालोचनया जीवस्य व्याप्तत्वमणुत्वंच प्रतीयत इति हेतोः, भाष्ये – यथायोगं शेषो द्रष्टव्य इत्यर्थः। अत्रायं विवेकः— काषायणश्रुतौ 'प्रतीयत' इत्यतः परं 'जीवस्ये' ति शेषः, गौपवनश्रुतौ 'अणुत्व' मित्यतः परं 'जीवस्य प्रतीयत' इति शेष इति ; **उक्तदोषत्वादिति॥** पिपीलिकादेहगतस्य गजादिशरीरप्राप्तावपूर्तिः स्यात्, गजादि देहगतस्यापि पिपीलिकादिशरीरप्राप्तावतिरेकः स्यादित्युक्तदोषत्वादित्यर्थः। दोषांतरमाह — **शरीरपरिमाणत्वेचेति** ॥ आपादकस्य आपाद्येन व्याप्तिमाह — **मध्यमपरिमाणस्येति** ॥ आपाद्यस्यानिष्टत्वमाह — **तेषां चांशानामिति** ॥ ऐकमत्यान्नायं दोष इत्यत आह — **न हि युगपदिति** ॥ भवेदयं दोषः यदि जीवो नाम चेतनारब्धद्रव्यं स्यात्, नचैवं किंनाम अचेतनानां समुदाय इत्यभ्युपगम्यत इत्यत आह — **नचेति** ॥ समुदायत्वे ज्ञानादिधर्मयोगित्वं न स्यादिति भावः ॥

विपर्यये पर्यवसानमाह — **न चांशारब्ध इति** ॥ कुत इत्यत आह — **अनित्यत्वेति** ॥ यद्यपि — आत्मनः सांशत्वे शरीरमुन्मथ्येत् अविक्रियं वाऽऽपद्येतेति दूषणमुक्तम् । तथापि — घटांशानामघटत्वेपि घटस्य घटत्ववत् समुद्रांशानामसमुद्रत्वेपि समुद्रस्य समुद्रत्ववत् चेतनांशानामचेतनत्वेपि चेतनस्य चेतनत्वसंभवादिति नोक्तदोष इति परः परिहर्तुमुत्सहेतापीति अनित्यत्वप्रसंग उक्तः। परिशेषेण विभुत्वं साधयित्वा अनुमानेनापि साधयति—**तथाच प्रयोग इति** ॥ एतेन — परिशेषानुमानप्रयोगप्रदर्शनाय आत्मा महत्परिमाणाश्रयः अणुमध्यमपरिमाणानाश्रयत्वेसति द्रव्यत्वादिति वक्तव्यत्वेन सर्वमिदं मूर्तमित्याद्युक्तप्रयोग इति परास्तम् । ( २१ - सू० ) **प्रसंगाच्चिंत्यत इति** ॥ 'उत्क्रांतिगत्यागतीना' मिति जीवाणुत्वं प्रसाध्य, अत्युक्तटतया स्मृतत्वात् 'स्वात्मनाचोत्तरयो' रित्यधिकरणेन जीवास्वातंत्र्यं प्रसाध्य, पुनः 'सिंहावलोकन' न्यायेन 'उत्क्रांतिगत्यागतीना' मिति प्राचीनाधिकरणप्रमेयमेव 'नाणुरतच्छ्रुते' रित्यादिना विचारयामासेति इदमंतर्भेदाधिकरणमिति भावः । 'एष ह्येवेति' वाक्ये ईश्वरवाचकशब्दाभावान्नेश्वरपरत्वमित्याशंकानिरासाय आह — **एष ह्येवेति** ॥ पूर्ववाक्यगतात्मशब्दनिर्वचनपरत्वादीश्वरपरत्वनिर्णय इति भावः ।

'स्वात्मनाचोत्तरयो' रित्यधिकरणस्येदं संगत्यादि अत्र परमेश्वरे श्रुतिसमन्वयसिद्ध्यर्थं जीवस्योत्क्रांत्यादौ स्वातंत्र्यविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः विष्णुः सर्वनियामक इत्युक्तं तस्यच श्रुत्योः परस्परविरोधेनाप्रामाण्ये ऽयोगप्रसंगादवश्यं विरोधः परिहरणीयः । जीवोऽत्र विषयः, स्वतंत्रः परतंत्रो वेति संदेहः, 'सोस्माच्छरीरादुत्क्रम्याऽमुं लोकमभिगच्छति, स एतेन स्वात्मना परेणेमं गर्भमनुप्रविशती' ति श्रुतिविगानं संदेहबीजम् । 'जीवः स्वतंत्र' एवेति **पूर्वपक्षः** — 'सोऽस्माच्छरीरादुत्क्रम्याऽमुं लोकमभिगच्छती' ति श्रुतेः । न च — श्रुत्यंतरविरोधः, 'एकः प्रसूयतेजंतु' रिति अनुभवानुसारिस्मृतिसहितत्वेन तद्बाधात् । ततश्चायुक्तं लक्षणसूत्रमिति ॥

**सिद्धान्तस्तु** — परतंत्र एव जीवः प्रतिपत्तव्यः, 'स एतेनैव स्वात्मना परेणेमं गर्भमनुप्रविशति, एष ह्येवानंदमादत्ते, एष ह्येवैनं जीवमभिजीवयती' त्युक्तश्रुतिविरोधादप्रमाणमेव, स्मृतिस्तु प्रसवादिदुःखाऽनुभवविषयेति : 'आ तेन

यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना। यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः(ऋ.स.७ ८ १७)निमिषश्चिज्जवीयसा रथेनाऽऽयातमश्विना अन्तिषद्भूतुवामव ' (ऋ०.स८. ६-५-१८ ) इति मंत्रद्वयं व्याचष्टे — (२२ · सू० ) हे अश्विनाविति ॥ ( २६ · ) प्रकारांतरेणापि तदुपपादकमिति ॥ अविरोधश्चन्दनवदिति ॥ प्रागुक्तसमाधानस्य उत्तमजीवेषु संभवेप्यंशतो व्यतिरेकशून्येष्वसंभवात् प्रकारान्तरेण तदुपपादकं सूत्रमित्यर्थः । आलोकवदुपपत्तेरिति भाव इति ॥ यद्यपि भाष्यानुगुण्यात् प्रकाशवत् इति वक्तव्यम् , तथापि — पीलुशब्दस्य वृक्षतत्फलवाचकत्ववत् आलोकशब्दस्यापि गुणगुणिनोरुभयोरपि वाचकत्वात् आलोकवदित्युक्तम् । अत्र टीकायां सूत्रभाव एव प्रदर्शितो नतु योजनोक्तेति द्रष्टव्यम् । एतेन — ' यथाऽऽलोकस्थे ' त्यादि भाष्यविरोध इति परास्तम् । एतेनैव— ' ननु आलोकस्य द्रव्यत्वात् कथं गुणत्वमुच्यत इत्याद्ययुक्तं सूत्रभाष्यकाराभ्यां प्रकाशस्यैव गुणत्वाभिधानेन आलोकस्य गुणत्वानभिधानादिति परास्तम् । प्रकाशस्याप्यालोकशब्दवाच्यत्वात् । तेनेति ॥ प्रकाशात्मकेन तेन तेजसो रूपेण घटादिरूपं प्रतीयत इति तावदीक्षामहे न पुनस्तस्य रूपमित्यसिद्धो हेतुरिति भावः । तदेवोपपादयति—नहि व्योम्नीति॥ व्योम्नि प्रतीयमानस्य रूपं न गृह्यते किंतुरूपात्मनैव प्रकाशो गृह्यत इति हि प्रसिद्धमित्यर्थः । व्योमग्रहणन्तु आदित्यादिप्रकाशस्य प्रायो व्योमगतत्वाभिप्रायेण । एतेन — यत्रक्वापि विद्यमाने प्रकाशे रूपप्रतीत्यभावात् विशिष्य व्योमग्रहणं व्यर्थमिति परास्तम् । क्वचित्पुस्तकेषु ' युक्तमालोकोगुण ' इत्यतःपरम् ' अप्राधान्यसाम्येन वा गुणत्वोक्ति ' रिति वाक्यं दृश्यते तत्प्रक्षिप्तम् बहुकोशेष्वदर्शनात् । आलोकस्य द्रव्यत्वे ' अविरोधश्चन्दनव ' ( २ - ३ - २४ ) दिति पूर्वोक्तसमाधानात् । ' गुणाद्वालोकव ' ( २ - ३ - २६ ) दित्यस्य समाधानान्तरत्वाभावप्रसंगाच्च ।

**पूर्वपक्षस्तु**—न जीवोऽणुः 'व्याप्ताह्यात्मान' इति श्रुति विरुद्धत्वात् । न च — अणुत्वेपि श्रुतिरस्तीति वाच्यम् — व्याप्तिश्रुतेः सयुक्तिकत्वेन प्राबल्यात् तद्बाधितैतच्छ्रुतेः प्रामाण्यायोगात् ; तथाहि — आत्मा ना ऽणुः सर्वदेहावच्छेदेन स्पर्शादिग्राहित्वात् , नाप्यणुत्वे युगपत्सर्वेन्द्रियैर्ज्ञान संभवति । न च—आत्मा

देहपरिमाणः मध्यमपरिमाणत्वेनाऽनित्यत्वप्रसंगात्, अतः परिशेषादात्मनो व्यापकत्वमेव स्वीकार्यम्, तथाप्रयोगोपि 'सर्वमिदंमूर्तमात्मना स्पृष्टं मूर्तत्वात् मच्छरीरवत्' इति। तथाच — अणुत्वश्रुतेरप्रामाण्येन श्रुतिमात्रस्य प्रामाण्यनैयत्याभावात् न श्रुतिसमन्वयो युक्त इति।

**सिद्धान्तस्तु** – जीवो ऽणुरेव न व्याप्तः, उत्क्रान्तिगत्याऽऽगतिमत्वात्, पतत्रिशरीरवदिति। अत्रमहत्परिमाणातिरिक्तपरिमाणस्यैव विवक्षितत्वेन न दृष्टान्तः साध्यविकलो मन्तव्यः। न चात्र हेतवोऽसिद्धाः, 'सोऽस्माच्छरीरादुत्क्रम्ये' त्यादिश्रुत्या तेषां' सिद्धत्वात्। 'व्याप्तं ह्यात्मानश्चेतना निर्गुणाश्चे' ति श्रुते र्नाणुर्जीव इति चेत्, न — 'स आत्मा इदं सृजति स द्विधा इदं बिभर्ति' इत्यादिना प्रकृतस्य परमात्मन एवाऽत्राऽभिधानात्। नच — अस्य वाक्यस्य विष्णुपरत्वे बहुवचनाविरोध इति वाच्यम् — स आत्मा, स आत्मानः सईशः, सविष्णु' रित्यादिना बहुवचनान्तपदवाच्यत्वेन तस्यैव प्रकृतत्वात्। यदुक्तमीश्वरप्रकरणात् व्याप्तिश्रुतिस्तद्विषयेति न तद्युक्तम्— प्रकरणमात्रस्य दुर्बलत्वेन बहुवचनश्रुतेर्बाधायोगादिति चेत्; स्यादयं दोषः यदि प्रकरणमात्रेण व्याप्तिश्रुतेस्तद्विषयत्वं ब्रूमः, नचैवं किं नाम 'एषह्येवात्माऽध्युद्गतो मानशक्ते' रिति वाक्यशेषे श्रुतात्मशब्दा ऽपरिमितत्वलिङ्गाभ्यां चेति। ननु — अथापि जीवस्य नाऽणुत्वं युक्तम् — तत्रतत्र परिज्ञानायोगप्रसंगादिति चेत्, न— अणोरपि चन्दनबिन्दुवत् शरीरव्याप्त्यङ्गीकारात्। तदुक्तम् —

'अणुमात्रोप्ययं जीवः शरीरं व्याप्य तिष्ठति।
यथाव्याप्य शरीराणि हरिचन्दनविप्लुष'॥ इति

ननु – भवतां चन्दनबिन्दोर्व्याप्यव्याप्तौ सम्यगसम्यगवस्थासद्भावात् ननु जीवस्य तदभावादि चेत्, न–'हृदि ह्येष आत्मा'(प्र.प्र.३-६)इति श्रुतेः आत्मनोपि चन्दनबिन्दुवत् सम्यगसम्यगवस्थानाभ्युपगमात्। अथवा — दीपादीनामपवारकादौ प्रकाशगुणेन व्याप्तिवत् जीवानां चिद्गुणेनव्याप्तिसद्भावात् न सार्वत्रिकज्ञानमनुपपन्नम्। ननु— आलोकस्य द्रव्यत्वात् कथं गुणत्वमिति चेत्, न – तद्द्रव्यत्वे मानाभावात्। रूपित्वं मानमिति चेत्, न — आलोकेरूपाऽप्रतीतेः। कुतस्तर्हि गुणत्वमिति चेत् तदनुविधानादिनेति ब्रूमः। गुणेन अंशैश्च व्याप्तिर्-

संभवति विरोधादिति चेत्, न — केषांचिद्गुणेन केषांचिदंशैः, व्याप्तिरित्यङ्गीकारात्। तदुक्तम् —

'असम्यक्सम्यगिति च व्यवस्थाभेदतः सुराः।
व्याप्त्यव्याप्तियुता स्वन्ये चिद्गुणेनैव नान्यथा'॥ इति

अतः श्रुत्यविरोधेन जीवानामणुत्वे सिद्धे युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् (अ० १२)

(१३ - अधिकरणम्)

## ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ (सू०- २७)

**किमेकरूपइति**॥ किमेकदा एकदेहावच्छिन्नः, अथवा — तदैवाऽनेकदेहावच्छिन्न इतिसन्देह इत्यर्थः। **पूर्वपक्षइति**॥ यद्यपि भाष्यकृता सन्देहनिरास मात्रेण अधिकरणस्याऽर्थवत्त्वात् सन्देह एव प्रर्शितो न पूर्वपक्षः, तथापि — सन्देहनिरासवत् पूर्वपक्षनिरासोपि अधिकरणप्रयोजनमिति भाष्यकृदभिमतत्वात्पूर्वपक्षः प्रदर्शितः। **तथासतीति**॥ समुद्रपानादिकर्तारो न योगिनः, रामकृष्णादिवत् परमेश्वररूपाण्येवेतिभावः। एतेन — अघटितघटनासामर्थ्यं न परमेश्वरेण गुणसाम्यापादकं तादृशसामर्थ्यवत्स्वपि कुम्भोद्भवादिषु परमेश्वरसाम्याभावादिति परास्तम्। भाष्ये — 'अत' इत्यस्य 'परिहरती' त्यनेनाऽन्वयाऽयोगात् शेषं पूरयित्वा व्याचष्टे — **अतोविरोधइति**॥ **गन्धादौ दृष्टत्वादिति**॥ यद्यपि — गन्धो गुणो नांशः, तथापि — गुणोपि यदा व्यतिरिच्यते किंमु तदा अंशस्य अंशिव्यतिरेके वक्तव्यमितिभावेन गुणो दृष्टान्तत्वेनोपात्त इति।

**पूर्वपक्षस्तु** — जीवो नैकदा ऽनेकशरीरावच्छिन्नः, किंतु — एकेनैव, 'सएकधा न सत्पधे' ति श्रुतेः; नच — अन्यत्राप्यस्ति श्रुतिरिति वाच्यम् — तस्या युक्तिविरुद्धत्वेना ऽप्रामाण्यात्। तथाहि— अनेकशरीरावच्छिन्नत्वं हि द्वेधा-भवेत्, जीवस्य विभुत्वेन वा, सांशत्वेन वा। नोभावपि पक्षौ संभवतः, अणुत्वे निरवयवत्वेच श्रुतिसद्भावात्। नच— उभयाभावेपि योगिनामघटितघटकसामर्थ्यवत्त्वेन उपपन्नमनेकशरीरत्वम्, दृश्यतेहि तेषां समुद्रपानादिकमिति वाच्यम् — तथात्वे जीवस्य ईश्वरेण गुणसाम्यप्रसंगात्। अतः सयुक्तिकैतच्छ्रुतिविरोधेन

बहुरूपश्रुते रप्रामाण्यात् । न हरौ श्रुतिसमन्वयो युक्तइति ।

**सिद्धान्तस्तु** – न जीवस्यैकरूपत्वमेवेति नियमः, किंतर्हि योगाद्या-पादितेश्वरानुग्रहेण केषांचित् युगपदनेकरूपत्वमपि । नच– अंशिनं विहायांशस्य गमनानुपपत्तिः – दृश्यतेखलु गुणस्यापि गन्धस्य धर्मिणं विहायान्यत्र गतिः, सतिचैवं काऽनुपपत्तिः द्रव्यस्यांऽशस्य अंशिनंविहाय अन्यत्र गमने । नच – 'एकधेति श्रुतिविरोधः – तस्य स्वरूपैक्यविषयत्वात् । कुत एतत्सर्वमिति चेत्, 'अथैक एव सन् गन्धवत् व्यतिरिच्यते, 'अथैकीभवती 'ति श्रुतेः । अतएव — श्रुत्यविरोधेन जीवस्य बहुरूपत्वोपपत्तेः युक्तो हरौ श्रुतिसमन्वय इतिसिद्धम्।(अ१३)

( १४ - अधिकरणम् )

## ॐ पृथगुपदेशात् ॐ [सू.२८.]

**तत्त्वमसीत्यादिश्रुतेरिति॥** ननु – अनेन वाक्येन श्वेतकेतोरेव ब्रह्माऽभेदःसिध्येत् न सर्वजीवानां ' त्वमसी ' त्यभिधानात् ; नच — तावता जीव-ब्रह्माऽभेदःसिध्यति श्वेतकेतो रामकृष्णादिवत् ब्रह्मावतारत्वेनाप्युपपत्तेः । नच— श्वेतकेतुमुपलक्षणीकृत्य सर्वजीवानामभेदो बोध्यत इतिवाच्यम् — ज्ञापकाभावात् । अन्यथा —

' तस्मान्नन्दाऽऽत्मनो ऽयं ते नारायणसमो गुणैः ।
श्रिया कीर्त्या ऽनुभावेन गोपायस्व समाहित '

इति वाक्यं नन्दपुत्रमुपलक्षणीकृत्य सर्वपुत्राणां गुणैर्नारायणसमत्वं वक्तीति स्यात् । अतएव — अस्यवाक्यस्य प्राबल्योपपादनाय षड्विधतात्पर्यलिङ्गव्युत्पादन मप्युक्तम् । अनेन वाक्येन जीवैक्यप्राप्तौ तात्पर्याभावशङ्कायामेवाऽस्य वक्तव्यत्वा-दिति चेत्, सत्यम् — अनेनवाक्येन न सर्वजीवानां ब्रह्माभेदःसिध्यतीति, तथापि – श्वेतकेतोर्ब्रह्माऽभेदसिध्या जीवब्रह्माभेदस्तु सिध्यत्येव, श्वेतकेतोर्जीवत्वात् । नच श्वेतकेतो रामकृष्णादिवद्भगवदंशत्वं शक्यते वक्तुम्– 'नवैसोम्याऽस्मत्कुलीनो ऽननूच्य ब्रह्मबन्धुरिव भवती ' (छा.६) त्यादि वाक्यपर्यालोचनया तस्यजीवत्वाव-गमात् । सिद्धेच जीवस्यापिश्वेतकेतोर्ब्रह्माभेदे अविशेषात्सर्वजीवानामपि तत्सि-ध्येत् । एवंच – जीवाभेदसिद्धये तत्त्वमस्यादिवाक्योदाहरणं तत्प्राबल्यसिद्धये उ-

पक्रमाद्यानुगुण्यव्युत्पादनमपि नाऽयुक्तमिति । **षड्विधतात्पर्यलिङ्गयुक्ताया इति॥** अत्रोपपत्तियुक्ताया इत्यपि ग्राह्यम् । उपक्रमादिवत् उत्तरत्रोपपत्तेरप्युपपादनात् । **उपक्रमादिति ॥** 'तात्पर्यलिङ्गोपेता चेयमद्वैतश्रुति' रित्यध्याहृतसाध्येन सर्वेषां पञ्चम्यन्तानां संबन्धः । **विरुद्धधर्माधिकरणत्वेति ॥** अत्रधर्माणां विरुद्धत्वं भावाभावरूपत्वं नतु सहानवस्थितत्वमिति बोध्यम् । एतेन — जीवब्रह्मणोर्भेद-सिद्धौ धर्मयोः सहानवस्थितत्वरूपविरोधसिद्धिः, तत्सिद्धौच तत्सिद्धिरित्यन्योन्याश्रय इति परास्तम् । संयोगतदभावाधिकरणस्यापि वृक्षस्य भेदाभावात् कथं तेन भेदासिद्धिरिति चेत्, न – तत्रापि अवच्छेदकभेदसद्भावात् । तथापि धर्मिभेदे किमायातमिति चेत्, उच्यते — विरुद्धधर्माधिकरणत्वं भेदेनविना अनुपपद्यमान मुत्सर्गतो धर्मिभेद गमयति, तस्यानुपपत्तौ कालभेदम्, तस्याप्यनुपपत्तौ अवच्छेदकभेदम्, तस्याप्यनुपपत्तौ संबन्धभेदं गमयति । प्रकृतेच बाधकाभावात् धर्मिभेद एव सिध्येत् । (२९-सू०.) **गौणवृत्त्येति ॥** 'अहं ब्रह्माऽस्मी' त्यादौ अभेदप्रापकब्रह्मादिशब्दस्य जीवे गौण्यावृत्त्या ऽभेदव्यपदेशोपपत्तेरित्यर्थः । एतेन — श्रुतौ सादृश्यरूपगौणाभेदस्यैवोक्तत्वेन मुख्याभेदव्यपदेशाभावात्, अभेदव्यपदेशोपपत्तेरित्ययुक्तमिति परास्तम् । एतेनैव — अभेदस्य वाक्यार्थत्वात् गौण्या वृत्त्या अभेदव्यपदेशोपपत्तेरित्ययुक्तमिति परास्तम् । **अन्यत्राभिनिवेशादिति ॥** अन्य इति शेषः । ततश्च — 'यः सर्वज्ञ' इति श्रुतिसिद्धात् सार्वज्ञ्यादन्यत्र अन्यस्मिन् अद्वैत श्रुतिसिद्धेऽर्थे ऽभिनिवेशादन्यः को विश्वासहेतुः न कोपीत्यर्थः । आग्रहमूलकमेव परकीयमद्वैतप्रतिपादनमिति भावः । एतेन — अभिनिवेशादन्य इतिवक्तव्यं न त्वन्यत्रेति भवदादियोगाभावे प्रथमायाश्चलोविधानाभावादिति परास्तम् । अद्वैतस्य प्रमाणविरुद्धत्वं पराभिमतमित्याह— **परेणापीहीति ॥** अद्वैतश्रुतेरर्थो लाक्षणिकोऽङ्गीकृत इत्यर्थः । ततःकिमित्यत आह — **तथाचेति ॥** त्वत्पक्षे एकस्य लाक्षणिकत्वे अस्मदीयं गौणार्थग्रहणं युक्तं लक्षणातो गौण्या वरत्वात् । त्वत्पक्षे पदद्वयस्य लाक्षणिकत्वेतु अस्मदीयं गौणार्थग्रहणं सुतरां वरमिति भावः । लक्षणावृत्तिमङ्गीकृत्यापि स्वपक्षस्याधिक्यं वक्तुमाह — **लक्षणावृत्तावहीति ॥** लक्षणावृत्तावुभाभ्यामङ्गीकृतायामपि त्वत्पक्षपातिना तत्त्वंपद वाच्यार्थपरित्यागेना ऽसिपदमात्रस्य मुख्यार्थताऽशेषप्रमाणविरु-

द्धाऽङ्गीकर्तव्या भवति, त्वया तथैवाऽङ्गीकृतत्वात्, ततोपि तत्त्वंपदयोर्मुख्यार्थमङ्गीकृत्य असिपदमात्रस्य इवार्थलक्षणामङ्गीकृत्य, सादृश्याऽभेदरूपगौणार्थवर्णनं युक्तमित्यर्थः। अनेन — 'तत्त्वमसी' ति श्रुतेः त्वंतदसि 'तदिवे' ति योजनोक्ताभावति। ननु — असिपदस्य मुख्यार्थता अशेषप्रमाणविरुद्धेत्ययुक्तम्, असिपदार्थभवनस्य प्रमाणविरुद्धत्वाभावादिति चेत्, न – त्वंपदनिर्दिष्टे तत्पदार्थभवनस्य प्रमाणविरुद्धत्वात्। ननु - त्वंपदलक्ष्यचिन्मात्रस्य तत्पदलक्षितचिन्मात्रात्मकत्वमुच्यते तत्कथं प्रमाणविरुद्धत्वमिति चेत्, न — लक्षणया चिन्मात्रैक्यबोधनस्यैवाऽयोगात्। तथाहि — त्वंशब्दस्य चिन्मात्रलक्षणायां तेन निर्विकल्पकबोधः स्यात्, एवं तच्छब्देनापि निर्विकल्पकबोधः स्यात्, न च — एवंसति अस्या ऽनेनतादात्म्यमुच्यत इति विज्ञातुं शक्यमिति अकामेनापि तत्त्वंपदाभ्यां विशिष्टबोधो वक्तव्य इतिकथं नाशेषप्रमाणविरोधः। किंच—तत्त्वंपदयोर्मुख्यार्थमभ्युपगम्य अद्वैतबोधने प्रमाणविरोधोऽस्ति न वा। नेतिपक्षे लक्षणाङ्गीकारवैयर्थ्यम्। आद्ये — लक्षणाङ्गीकारेपि प्रमाणविरोधो दुष्परिहरः, न हि विद्यमानस्य धर्मस्य अविवक्षामात्रेण विरोधःपरिहृतो भवति। 'आदित्यो यूपः, यजमानः प्रस्तरः, अग्निर्जल' मित्यादिवाक्येनापि स्वरूपमात्रलक्षणया अग्निजलादीनां तादात्म्यापातात्। जीवेश्वरगतासार्वज्ञ्यादिधर्माणां मिथ्यात्वादैक्यं न प्रमाणविरुद्धमिति चेत्, न—श्रुतिसिद्धसार्वज्ञादीनां मिथ्यात्वे ऐक्याऽसिद्धिप्रसंगस्योक्तत्वादिति। **नाऽत्रप्रमाणविरोधेनेति**॥ अत्र – तत्त्वमसीति श्रुतौ प्रमाणविरोधेन श्रुतेः त्वंपदस्य तत्पदस्य, अमुख्यार्थता=लाक्षणिकार्थता नाभ्युपगम्यते, येन 'तत्त्वमसी' ति श्रुतेः गौणार्थः सादृश्याभेदरूपोऽर्थोऽङ्गीकृतः स्यादित्यर्थः। **तथाऽभिप्रेतत्वादिति**॥ लाक्षणिकार्थतात्पर्यवत्त्वादित्यर्थः। **तात्पर्यलिङ्गैरिति वदन्निति**॥ तात्पर्यलिङ्गैः तात्पर्येसिद्धे तदन्यथाऽनुपपत्त्या तत्त्वंपदयो र्लाक्षणिकत्वसिद्धिरिति वक्तव्ये तात्पर्यलिङ्गैरिति वदन् मूर्खत्वादुपेक्षितव्य इत्यर्थः। तथैव वक्ष्यामीतिभावेन शङ्कते — **लिङ्गबलादिति**॥ **रूढियोगौ विहायेति**॥ यथा 'गङ्गायां घोष' इत्यादिलौकिकवाक्यं गङ्गादिपदानां लाक्षणिकार्थमादायैव अर्थं प्रतिपादयति न पुना रूढार्थमभ्युपादाय, न तथा वेदवाक्यम्; किन्तु — महायोगादिवृत्त्या कंचिदर्थं प्रतिपाद्यैव गौणवाद्यमुख्यवृत्त्यापि

अर्थान्तरं प्रतिपादयतीत्याशयेन 'रूढियोगौ विने' त्यादिना गौणाद्यभावा-दित्यर्थः। एतेन – वेदइव लोकेपि शब्दानां केवलगौणाद्यर्थाभावात्, ... 'नैव वेदगो भवे' दिति कथनमयुक्तमिति परास्तम्। ननु – रूढियोगौ ... केवलवृत्त्यन्तरस्य निषिद्धत्वादित्ययुक्तम्, केवलाया गौण्यादिवृत्तेरप्रसक्तत्वे निषेधायोगात् प्रसक्तिर्वक्तव्या. साच प्रसक्तिः प्रमाणेनैवेति निषेधानुपपत्तिरित्यत आह – साचेति॥ भवत्येव केवलगौण्यादिवृत्तिः प्रसक्ता, परन्तु न ... णेन, किंतु – परकीयन्यायेनैव। तथाच – निषेधो नाऽनुपपन्न इतिभावः। ... – असिपदगौणतायाः स्वमतत्वात् परकीयन्यायेनेत्ययुक्तमिति परास्तम्। ननु – वेदो रूढियोगौ विना गौण्यादिवृत्त्यैव अर्थान्तरं न प्रतिपादयतीत्ययुक्तम् ... मस्यादि' वाक्यानामर्थान्तरदर्शनेन अमुख्यवृत्त्यैव अर्थप्रतिपादकत्वस्याभ्युपगमनी-यत्वादित्यत आह – अस्तिहीति॥

**पूर्वपक्षस्तु** — अभिन्नएव जीवः परमात्मना, 'तत्त्वमसी'त्यादिश्रुतेः। यद्यपि – श्रुतिरियं श्वेतकेतोरेव साक्षादैक्यं बोधयति, तथापि — सर्वजीवाऽभेदे तात्पर्यसद्भावात् भवत्येव सर्वजीवाभेदे प्रमाणम्; तथाहि – श्वेतकेतुस्तावत् जीवो न रामकृष्णादिवद्भगवदंशः, 'न वै सौम्याऽस्मत्कुलीन' (छा० ६–१–) इति पूर्ववाक्यपर्यालोचनया तथाऽवगमात्। नच — जीवत्वाविशेषे कस्यचिद्ब्रह्माभेदः, कस्यचिन्नेति संभवति। अतो मन्यामहे सर्वजीवानां ब्रह्माभेदं विवक्षित्वैव श्रुतिः श्वेतकेतोर्ब्रह्माभेदं वक्तीति। नच – विपर्ययेप्यस्ति श्रुतिरिति वाच्यम् — अद्वैतश्रुतेः सोपपत्तिषड्विधतात्पर्यलिङ्गयुक्तत्वेन बलवत्त्वात्। तथाहि — तात्पर्य-लिङ्गोपेताचाऽद्वैतश्रुतिः, 'एकमेवाद्वितीय' मित्युपक्रमात्, 'तत्त्वमसी' त्युपसं-हारात्, 'तत्त्वमसि, तत्त्वमसी'ति नवकृत्वोऽभ्यासात्, अद्वैतस्य प्रमाणान्तरे-णाऽप्राप्तत्वेनाऽपूर्वत्वात्, 'तस्य तावदेवचिर'मिति फलश्रवणात्, 'येनाऽश्रुतं श्रुतंभवति' इत्यर्थवादात्, मृत्पिण्डादिदृष्टान्तोपपादनादिति। एवंच अद्वैतश्रुते रद्वैत एव तात्पर्यावगमात् तद्विरुद्धभेदश्रुते रतत्त्वावेदकत्वमेवेति न परमात्मनि श्रुतिसमन्वयो युक्तइति।

**सिद्धान्तस्तु** – भिन्नएव जीवः परमात्मनः 'भिन्नोजीव'इति श्रुतेः, नच — अभेदेपि अस्ति श्रुतिरिति वाच्यम् — विरुद्धधर्माधिकरणत्वयुक्तियुक्तत्वेन

भेदश्रुतेः प्राबल्यात् । ननु – तर्ह्यद्वैतश्रुतेरप्रामाण्यं प्राप्तमिति चेत् , न–जीवस्य परमात्मगुणसदृशानन्दादिगुणवत्त्वात् , 'अहंब्रह्मास्मी' (बृ. ३–४–१०) त्यादिश्रुतिगतानां ब्रह्मादिशब्दानां गौण्यावृत्त्या जीवे प्रवृत्तत्वेन सादृश्याभेदस्य श्रुत्यर्थत्वात् । 'तत्त्वमसी' त्यादौ ब्रह्मवाचकशब्दस्य जीवे गौणवृत्त्यङ्गीकार इव, असिपदस्य इवार्थे लक्षणाङ्गीकारेपि सादृश्याभेदप्रतीतेश्च । अभेदाभावेपि अभेदव्यपदेशस्य तद्गुणसारत्वेन 'सर्वंखल्विदंब्रह्म' (छा० ३-१४- ) त्यादौदर्शनात् । ननु – अभेदश्रुतेरभेद एवार्थः किं न स्यादितिचेत् , न — तत्त्वंपदबोध्ययोर्विशिष्टयो रैक्यस्य बाधितत्वात् तत्त्वंपदयोर्भागत्यागलक्षणया चिन्मात्राऽभेदबोधनेन विरोध इतिचेत् , न — निर्विशेषयो र्विशेषण विशेष्यभावायोगेना ऽभेदबोधनाऽयोगात् अभेदस्य नीलमुत्पलमित्यादाविव विशेषणविशेष्यभावमुखेनैव बोधनीयत्वात् । ननु—' रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवे' दितिनिषेधात् कथं गौणपरतया व्याख्यानमितिचेत् , न — भावानवबोधात् । न ह्याचार्यः श्रुतेर्गौणाद्यर्थः सर्वथा नास्तीत्यनेनाह, येनोक्तदोषःस्यात् , किंनाम — यथा 'गङ्गायां घोष' इत्यादिलौकिकवाक्यस्य गंगादिपदामुख्यार्थद्वारकएव वाक्यार्थः नतु मुख्यार्थद्वारकः, नैवं वेदे, वेदेहि स्वपदानां महायोगादिवृत्त्या ऽर्थं प्रतिपाद्यैव गाण्यादिवृत्त्या ऽर्थान्तरं प्रतिपादयतीत्याह । ननु — 'केवलया गौण्यादिवृत्त्या वेदोऽर्थं प्रतिपादयति' इत्ययुक्तम्, अप्राप्तनिषेधायोगादितिचेत् , न — पररीत्या प्राप्तिसद्भावात् । अतः श्रुत्यविरोधेन जीवस्य परमात्मभेदासिद्धे र्युक्तस्तत्र श्रुति समन्वय इति सिद्धम् (अ० १४)

---

( १५ - अधिकरणम् )

## ॐ यावदात्मभावित्वाच्च न दोष स्तद्दर्शनात ॐ [सू.३०.]

ननु – 'सोऽनादिने' ति श्रुतिः अनादिकर्मसंबन्धे तात्पर्यवत्त्वात् तत्रैव-प्रमाणं नतु नित्यत्व इत्यत आह – **अत्र जीवस्येति** ॥ श्रुत्युक्तानादिकर्मसंबन्धाऽऽनन्त्योक्त्यन्यथानुपपत्त्या जीवनित्यत्वसिद्धे जीवनित्यत्वे श्रुति र्मानमिति भावः । **अनित्यत्वश्रुतेरिति** ॥ अनित्यत्वसाधकश्रुतेः साक्षादनित्यत्वसंस्पर्शेन युक्त्यासह एकार्थप्रतिपादकत्वात् प्राबल्यम् । अनादिकर्मसंबन्धाभिधायक-

श्रुतेस्तु साक्षान्नित्यत्वसंस्पर्शाभावेन तदभावाद्दौर्बल्यमिति भावः । **प्रतिबिम्बस्येति** ॥ यद्यपि जीवो न ईश्वरस्य प्रतिबिम्बः, तदभिधात्री श्रुतिरपि माणवके सिंहशब्दवत् गौणी, तथापि – आदर्शे प्रतिबिम्बवत् जीवोपि ईश्वरप्रतिबिम्ब इति मन्वानस्याऽयं पूर्वपक्ष इति बोध्यम् । **प्रतिबिम्बस्येति** ॥ यद्यपि – जीवस्य यावत्परमात्मा विद्यते तावत्कालभावित्वात् अनादिकाले संबन्धस्यापि सत्त्वात् न श्रुत्यप्रामाण्यलक्षणोदोषः श्रुत्यादौ तद्दर्शनादिति भाष्याशयो वर्णनीयः, जीवस्य तदधीनत्वेसति तत्सदृशत्वरूपगौणप्रतिबिम्बत्वेन दर्पणाद्युपाधिगतमुखादिप्रतिबिम्बवत् मुख्यप्रतिबिम्बत्वाभावात् । 'तदधीनत्वतत्सदृशत्वमात्रेण एषांचिदात्मनां रूपं स्वरूपम्, अस्माभिराभास इत्युक्तम, सूर्यकाद्युपमाच तावन्मात्रेणोपात्ते' ति सुधोक्तेः, तथापि – टीकाकृता अङ्गीकारवादेन प्रवृत्तं 'नह्युपाधिबिम्बसंनिध्यनाशे प्रतिबिम्बनाश' इत्यादिगीताभाष्यमनुसृत्य भाष्याशयो वर्णित इति बोध्यम् । **सर्वगतबिम्बस्येति** ॥ ननु – 'हृदयस्था हरेर्मूर्ति जीवो यत्प्रतिबिम्बक' इति वचनात् सर्वगतोपास्त्यनधिकारिणां बिम्बोपासनाभावेन मोक्षाभावप्रसंगाच्च परिच्छिन्नमूर्तिविशेषस्यैव बिम्बत्वं न सर्वगतस्य बिम्बत्वं तत्कथमुच्यते सर्वगतबिम्बस्य उपाधिसंनिधेश्च नित्यत्वादिति चेत्, सत्यमस्त्येव मूर्तिविशेषस्य बिम्बत्वम्, तथापि – परिच्छिन्नस्यापि मूर्तिविशेषस्य सर्वगतत्वात् तस्याऽन्यत्रगमनप्रयुक्तसांनिध्यनाशो न मन्तव्य इत्यभिप्रायेण तथोक्तम् । **बाह्योपाधेरेवेति** ॥ देहस्योपाधित्वं न प्रतिबिम्बोपादानत्वम्, अपितु–घटमठादीनामाकाशावच्छेदकत्वरूपोपाधित्वमिव देहस्यापि जीवावच्छेदकत्वमेवोपाधित्वमिति बोध्यम् । एतेन — यदिबाह्यदेहस्योपाधित्वं तर्हि तन्नाशे जीवनाशो भवेदेव, उपादाननाशे उपादेयस्थित्ययोगात् । अथ न जीवरूपप्रतिबिम्बोपादानत्वं तर्हि बाह्यदेहस्योपाधित्वमिति रिक्तं वचःस्यादिति परास्तम् । 'आत्मानित्यःसुखदुखेत्वनित्ये' इत्येका, जीवोनित्य' इत्यपरेति भावेनाह – **स्मृतिद्वयेति** ॥ **सर्वोपाधिविनाशेत्विति** ॥ स्वरूपभूतोपाधेरपि विनाशे 'असौ वा आदित्योदेवमधु' (छा०. ३ - १ - १) इत्यादौ मधुत्वेनोपदिष्टाऽऽदित्यवत्प्रतिबिम्बत्वकल्पनोपदिष्टो जीवः कथमविनाशीभवेत् । तदत्यन्ताऽभिन्नस्य देहस्य विनष्टत्वादित्येवाशयः, ननु — जीवस्य वस्तुतः प्रतिबिम्बत्वात् उपाधिनाशे तदवस्था-

नायोग इत्याशयः कुत इति चेत् — जीवस्य प्रतिबिम्बत्वाभावात् । तथाहि— यदिजीवो दर्पणे प्रतिबिम्बवत् ईश्वरप्रतिबिम्बःस्यात् तर्हि लक्ष्मीनारायणयोरवियोगात् तत्रैव लक्ष्मीप्रतिबिम्बोऽपि अपरो जीवः स्यात्, उपाधेःसंनिकृष्टयावत्प्रतिफलनहेतुतास्वाभाव्यात्, ततश्च — विरुद्धदिक्क्रियं शरीरमुन्मथ्येत । **उपाधेश्चैवनित्यत्वादिति** ॥ तदत्यन्ताऽभिन्नोपाधिनाशस्यैव जीवनाशत्वेन तदभावे जीवनाशाऽभिधानं व्याहतमिति भावः ।

**पूर्वपक्षस्तु** — अनित्य एव जीवः ' ब्रह्मन् लयमभ्युपैती ' त्यनित्यत्व श्रुतेः । न च — ' सोऽनादिना ' इति श्रुति जीवनित्यत्वेप्यस्तीति वाच्यम् — अनित्यत्वश्रुतेः सयुक्तिकत्वेन प्राबल्यात् । उक्ताखलु जीवस्योत्पत्तिः ' ज्ञोऽत एवे ' ( ब्र०.२ - ३ - १८ ) ति । ततश्च जीवो विनाशी भावत्वे (सत्वे) सति उत्पत्तिमत्त्वात् ' इत्यनुमानसद्भावात् । न च — वक्तव्यं तत्रोपाधेरेवोत्पत्तिरुक्ता, नतु जीवस्येति उपाधेरुत्पत्तिमत्त्वाद्विनाशे प्रतिबिम्बनाशस्यावर्जनीयत्वात् । अतः सयुक्तिकश्रुतिविरोधात् तस्याऽनादिकर्मसंबन्धाद्ययुक्तेः तदभिधायकश्रुते रप्रामाण्यात् अयुक्तो ब्रह्मणि श्रुतिसमन्वय इति ।

**सिद्धान्तस्तु** — नित्य एव जीवः ' नित्यःपर ' इति श्रुतौ आत्मवत् जीवस्यापि नित्यत्वाऽभिधानात् । तथा—' आत्मानित्यः सुखदुःखेत्वनित्ये, जीवोनित्यो धातुरस्त्वनित्य ' इतिस्मृतिद्वयेच जीवस्यनित्यत्वमुक्त्वा तच्छरीरादे रनित्यत्वाऽभिधानात् । न च — उपाधिनाशे प्रतिबिम्बस्य जीवस्य विनाशोदुष्परिहर इति वाच्यम् — जीवस्याऽप्रतिबिम्बत्वात् । न च — ' रूपंरूप ' मिति श्रुतिर्जीवस्य प्रतिबिम्बत्वमावेदयतीति वाच्यम् — तस्याःश्रुतेः तदधीनत्वेसति तत्सदृशत्वरूपगौणप्रतिबिम्बत्वपरत्वेन मुख्यप्रतिबिम्बत्वानावेदकत्वात् । अवश्यं चैतदेवं विज्ञेयम् — अन्यथा जीवोपाधौ परमेश्वरप्रतिबिम्बवत् तदविनाभूताया महालक्ष्म्या अपि प्रतिबिम्बसंभवेन जीवद्वयापत्त्या विरुद्धदिक्क्रियं शरीमुन्मथ्येत । न च — एकस्मिन्नुपाधौ एकस्यैव प्रतिबिम्बो नाऽन्यस्येति संभवति दर्पणादावपि तथाप्रसंगात् ! अपिच— प्रतिबिम्बस्य उपाध्येकदेशवृत्तित्वनियमेन जीवस्य चिच्छरीरैकदेशवृत्तित्वं प्राप्नोति । किंच बाह्यशरीरे प्रतिबिम्बो भवति, न वा आद्ये बाह्यशरीरनाशे जीवनाशो दुष्परिहरः ! द्वितीये ' जीवोपाधिर्द्विधाप्रोक्त ' इत्यादौ

तस्योपाधित्ववचनमयुक्तमेवापतति । अथ — तस्योपाधित्ववचनं गौणं तर्हि चिच्छरीरस्यापि तद्वचनं गौणमस्तु अर्धजरतीयानुपपत्तेः । अस्तु वा जीवस्य प्रतिबिम्बत्वं तथापि बिम्बोपाधितत्सन्निधीनां नित्यत्वेन न जीवनाशो भवति कारणाभावात् । उपाध्यनित्यतावचनानि बाह्योपाधिविषयाणि । अतः श्रुत्यविरोधेन जीवस्य नित्यत्वसिद्धेः युक्तो हरौ वेदानां समन्वय इति सिद्धम् ( अ०. १५ )

---

( १६ - अधिकरणम् )

## ॐ पुंस्त्वादिवत्त्वस्यसतो ऽभिव्यक्तियोगात् ॐ (सू० ३१)

**विपरीतापिश्रुतिरिति** ।। 'विज्ञानात्मा सह देवै श्च सर्वै' रिति ज्ञानरूपत्वे, स आनन्दःसबल' इति आनन्दरूपत्वेच श्रुतिरस्तीत्यर्थः । **नचासाविति** ।। ज्ञानरूपत्ववादिनी आनन्दरूपत्ववादिनीच श्रुति र्नेश्वरविषयेत्यर्थः । **प्राणभूतानीति** ।। 'प्राणभूतानि संप्रतिष्ठन्तियत्र' त्यन्तम् , 'विज्ञानात्मा सहदेवैश्च सर्वै' रिति भाष्योदाहृतपदप्रश्नवाक्यशेषइतिबोध्यम् । **न ह्यानन्दादि रूपमिति**।। योग्यत्वे सत्युपलभ्यमानत्वात्तद्रूपत्वंनेतिभावः । **जीवस्येति**।। त्वन्मते जीवस्य नित्याभिव्यक्तत्वेन आनन्दादीनां तत्स्वरूपत्वे प्रतिबन्धकस्यैवाऽनुपपत्तेरित्यर्थः । **किमावरणमिति** ।। यद्यपि ज्ञानाभावोपपादनाय ज्ञानाभावस्यैव आवरणत्ववचन मनुपपन्नमिति न प्रष्टव्यम् , तथापि — युक्तमेव परोब्रवीतीति नियमाभावात्प्रश्नः । **तस्यैवेति** ।। अज्ञानस्यैवानुपपत्तेरस्माभिः शङ्कितत्वात् तदुपपादनाय अज्ञानस्यैवाऽऽवरणत्वकथनमनुपपन्नमितिभावः । **वैपरीत्यादिति** ।। शरीरस्य आनन्दाद्यनुभवरूपभोगायतनत्वेन भोगप्रतिबन्धकत्वानुपपत्तेरितिभावः । तटस्थः शङ्कते— (३२·सू०) **यदुक्तमिति**।। एतेन—पूर्वपक्षिणा जीवस्य ज्ञानानन्दादिरूपत्वं नास्तीति विस्पष्टमुक्तत्वात् 'तत्रप्रष्टव्य' मित्यादिना वक्ष्यमाणविकल्पानुपपत्तिरिति परास्तम् । अत्रगुणसूत्रम् — 'नित्योपलब्ध्यनुपलब्धिप्रसंगो ऽन्यतरनियमोवाऽन्यथा' इति । अत्र अनुपलब्धिग्रहणम् , अन्यतरनियमग्रहणं, वा ग्रहणंच शक्यमकर्तुम् 'नित्योपलब्धिप्रसंगो ऽन्यथे' त्येतावतैव यस्य यादृशं स्वरूपं तस्य तन्नित्यमुपलभ्येतेत्येवमापादनंसम्भवादितिचेत् , सत्यम् –

तावतैव त्रिविधजीवानां नित्यं स्वस्वरूपानुभवः स्यादित्यापादयितुं शक्यत इति ; आपाद्यतेच सूत्रकृता सर्वमिदं तावतैव, तथापि – आवरणसद्भावान्नोपलब्धिरिति परःपरिहर्तुमुत्सहेत तन्निराकरणार्थम् 'अनुपलब्धिप्रसंग' इत्यापाद्यान्तरमुक्तम् ! तत्र द्वयोरापाद्ययोरापादकविवेचनाय 'अन्यतरनियम'इत्युक्तम्, आपाद्यापादकयो र्व्यवस्थितत्वद्योतनाय 'वे' त्युक्तम्, ततश्च एवं सूत्रयोजना — अन्यथा = ईश्वर प्रसादादावरणनिवृत्तिरित्यनङ्गीकारे, नियमेन=अवर्जनीयतया, अन्यतरत् स्यात्, नास्त्येवावरणमितिवा स्यात्, अस्त्यावरणं तच्चावरण मनिवर्त्यमितिवा स्यात्, आवरणनिवृत्तिर्नेति वचनस्य उभयथापिसंभवात् । नास्त्येवावरणमितिपक्षे यस्य-यत्स्वरूपं तस्य नित्योपलब्धिप्रसंगः, अनिवर्त्यमावरणमितिपक्षे नित्यमनुपलब्धि-प्रसंग इति । **जीवस्याऽऽनन्दादिरूपत्वमिति**।। अत्र 'अभावात्त'दितिप्रक्षिप्तम् ! ततश्च एवं टीकावाक्यपाठः 'किं जीवस्यानन्दादिरूपत्वमङ्गीकृत्य तदावरणनिवृत्ति र्नाभ्युपगम्यते' इति ; **जीवस्वरूपस्येति** ।। अत्र आवरणाभावादित्यतःपरं 'तन्नित्यत्वाद्वे'त्येतदुच्छिन्नम् । ततश्चैवं टीकावाक्यपाठः 'स्वरूपस्याऽऽनन्दादि रूपत्वमङ्गीकृत्या ऽऽवरणाभावात्, तन्नित्यत्वाद्वा व्यक्ति रावरणनिवृत्तिर्मोक्षे नाङ्गीक्रियते'इति । व्यक्त्यनङ्गीकारे आवरणाभावो मूलमित्यस्मिन्पक्षे बाधकमाह— **तर्हीति** ।। तत्रैव बाधकमुदाहरणान्तरमाह – **असुरादीनामिति** ।। असुरादीनां स्वरूपदुःखानुभवएव स्यात् न कदाप्यानन्दानुभवःस्यात् स्वरूपदुःखस्यावरणाभावे वैषयिकसुखोत्पत्त्ययोगादिति भावः । तत्रैव बाधकोदाहरणान्तरं वदन् आवरण-निवृत्त्यनङ्गीकारे आवरणस्या ऽनिवर्त्यत्वं मूलमितिपक्षे बाधकोदाहरणमाह — **मध्यममानुषाणामिति** ।। अत्र 'केवल' मिति पदंप्रक्षिप्तम् । 'तदुपलब्ध्य-भाव' इति वाक्यंतु 'समैवस्या'दित्यत परं द्रष्टव्यम् । ततश्चैवं टीकावाक्य पाठः— मध्यममानुषाणांच नित्यमानन्दादीनामुपलब्धिः दुःखाद्युपलब्धिश्च समैव, तदुप-लब्ध्यभावः स्यादिति । अत्रायं विवेकः — मध्यममानुषाणांच नित्यमानन्दादी-नामुपलब्धिः,दुःखाद्युपलब्धिश्च समैवस्यादिति प्रथमपक्षे, बाधकोदाहरणान्तरम्, 'तदुपलब्ध्यभावः स्या'दिति द्वितीयपक्षबाधकोदाहरणम् । तस्यार्थः— यद्यावरण-मनिवर्त्यं स्यात् मध्यममानुषाणां सुखदुःखयो र्नित्यमनुपलब्धिः स्यादिति । अ-स्मिन्पक्षे देवादीनां नित्यमानन्दाद्यनुपलब्धिः स्यादित्याद्युदाहरणान्तर मनयैव

द्दिशा ज्ञातुं शक्यमिति नोक्तम् । **आवरणाभाव इति** ॥ ' आवरणस्य नित्यत्वे अनुभवायोगा ' दित्यपिग्राह्यम् । अत्र ' इतिशब्दः ' प्रक्षिप्तः मूलकोशेषु अदर्शनात् । **अत इति** ॥ आवरणाभावे बाधकसद्भावात् आवरणमङ्गीकृत्य तन्निवृत्त्यनङ्गीकारेच बाधकसद्भावादित्यर्थः ! एतेन — आवरणानङ्गीकारे बाधकस्योक्तत्वात् अस्त्येवाविद्यावरणमित्युपसंहारो युक्तः, आवरणमङ्गीकृत्य तन्निवृत्त्यनङ्गीकारे बाधकस्यानुक्तत्वात् अस्त्येव भगवत्प्रसादेन तन्निवृत्तिश्चेत्युपसंहारो ऽनुपपन्न इति परास्तम् । आवरणानङ्गीकारे उपलब्धिप्रसंग इति, आवरणमङ्गीकृत्य आवरणानिवृत्त्यनङ्गीकारे अनुपलब्धिप्रसंग इति उभयानङ्गीकारे बाधकस्योक्तत्वात्। अत्रेवं भाष्ययोजना — **व्यक्त्यनङ्गीकार इति** ॥ आवरणाभावात् आवरणस्य नित्यत्वाद्वा व्यक्त्यनङ्गीकारे देवानां नित्योपलब्धिरानन्दादीनां स्यात्, असुराणां स्वरूपदुःखस्यावरणाभावे वैषयिकसुखाद्युत्पत्त्ययोगात् नित्यमानन्दादीनामनुपलब्धिः स्यात्, मध्यममुक्तियोग्यानां मनुष्याणां सुखदुःखयोर्नित्यमुपलब्धिः स्यात्, तथा नित्यमनुपलब्धिः स्यादिति । अत्रायं विवेकः – आवरणानङ्गीकारे देवानामानन्दादीनां नित्योपलब्धिः; असुराणां वैषयिकसुखादीनां अनुपलब्धिः, मनुष्याणां नित्योपलब्धिरिति दूषणोदाहरणत्रयम्, आवरणनित्यत्वपक्षेतु मनुष्याणां स्वरूपभूतसुखदुःखानुपलब्धिरित्येकं दूषणम् । उदाहरणद्वयन्तु ज्ञातुं शक्यमिति नोक्तम् । **भगवत्प्रसादेन तन्निवृत्तिश्चेति** ॥ इदन्तु देवानाम्, दैत्यानान्तु आनन्दात्मकभगवत्कोपेन आवरणनिवृत्तिः, मध्यममनुष्याणांतु ईषत्प्रसादयुक्तेषत्कोपेन आवरणनिवृत्तिरिति बोध्यम् । न च — मध्यममनुष्याणां मुक्त्यङ्गीकारे नित्यबद्धत्व नित्यसंसारित्वादि व्यपदेशविरोध इति वाच्यम् — केषांचिदेव मनुष्याणां मिश्रमोक्षाङ्गीकारेण नित्यबद्धादि व्यवहारस्य तद्रहित मनुष्यविषयतोपपत्तेः। कुतो वैरूप्यमिति चेत्, केषांचित्तावन्मोक्षोऽङ्गीकार्यः। ' मानुषाणां विमिश्रितमिति मिश्रज्ञानस्य मोक्षसाधनत्वाभिधानात् । न च – सर्वेषा मोक्षोऽयुक्तः ' शृण्वे वीर उग्रमुग्र '( ऋ. स. ४—७ ) मिति श्रुतौ संसारस्य नित्यत्वाभिधानादिति ।

**पूर्वपक्षस्तु** – न जीवो ज्ञानानन्दादिरूपः ' स दुःखाद्विमुक्त आनन्दी भवती 'त्यादि श्रुतेः । न च – आनन्दादिरूपत्वेऽपि ' स आनन्दः सबल '

इत्यादि श्रुति रस्तीति नानन्दादिरूपत्वाभावनिर्णयः संभवतीति वाच्यम्– जीवो नानन्दादिरूपः तथोपलब्धियोग्यत्वेसति तथानुपलभ्यमानत्वादिति युक्तिसद्भावेन अनानन्दत्वश्रुतेः सयुक्तिकत्वात् , न जीवस्यानन्दादिरूपत्वेन केनचिन्मोक्षाय-प्रयतितव्यमिति बाधकसद्भावाच्च । न च – प्रतिबन्धकवशात् अनुपलब्धिः, तन्निवृत्त्यर्थं प्रयत्नश्च संभवतीति वाच्यम् – जीवस्य 'अहं' मिति नित्याभिव्यक्तत्वेन तत्स्वरूपभूतानां व्यवधानस्यैवानुपपत्तेः । किंच – आवरणवशादननुभव इति वदन्प्रष्टव्यः । किमावरणम् अज्ञानं, शरीरादिर्वा । नाद्य. – जीवस्यानन्दादिरूपत्वे आनन्दाद्यज्ञानमनुपपन्नमिति चोदिते अज्ञानवशादज्ञानमुपपन्नमिति परिहारायोगात् । नद्वितीयः — वैपरीत्यात् । तदेवं सयुक्तिकश्रुतिविरोधादप्रमाणमेवाऽन्यश्रुतिः । अतो नेश्वरे श्रुतिसमन्वयोयुक्त इति ।

**सिद्धान्तस्तु** – भवत्येव आनन्दादिरूपो जीवः, तथा श्रुतेः । न च— 'आनन्दीभवती' त्यादि श्रुतिविरोधः, यथा पुरुषयोषिदादीनाम् अपत्योत्पत्तिशक्तिस्वरूपत्वेऽपि कालत स्तदभिव्यक्ते र्नायं पूर्वपुमान् इदानीं पुमानित्यादि युज्यते, एवं जीवस्वरूपत्वेन मुक्तेः पूर्वमपि सतो ज्ञानानन्दादेरीश्वर-प्रसादेनाऽभिव्यक्तिनिमित्तेन 'आनन्दी भवती' त्यादि व्यपदेशोपपत्तेः । नापि प्रयत्नानुपपत्तिः तदभिव्यक्त्यर्थमेव मुमुक्षूणां प्रयत्नोपपत्तेः । नचावरणानुपपत्तिः, ज्ञानाभावातिरिक्ताऽविद्याया एवाऽऽवरणत्वाभ्युपगमात् । ननु — जीवस्वरूपभूताना मानन्दादीनां प्रागनभिव्यक्तानां मोक्षे अभिव्यक्तिरित्ययुक्तं, जीवस्वरूपस्य नित्याभिव्यक्तत्वादिति चेत् , अत्र वक्तव्यम – किं जीवस्वरूपस्याऽऽनन्दादिरूपत्वमङ्गीकृत्य आवरणनिवृत्तिर्नाभ्युपगम्यते, उतानङ्गीकृत्येति । आद्येऽपि वक्तव्यम् — आवरणनिवृत्त्यङ्गीकारे आवरणाभावोमूलम्, उत तस्यानिवर्त्यत्वम् । नाद्यः — देवदानवमानवानां नित्यं स्वस्वरूपोपलब्धिप्रसङ्गात् । आवरणाभावेऽनुभवाभावायोगात् । नद्वितीयः — देवदानवमानवानां कस्यपि स्वस्वरूपस्यानुपलब्धिप्रसंगात् प्रतिबन्धकस्य सदातनत्वात् । नान्त्यः – 'नित्यानन्द' इति श्रुति विरुद्धत्वात् । तदेवं श्रुत्यविरोधेन जीवस्य आनन्दादिरूपत्वसिद्धेः, युक्ते हरौ श्रुतिसमन्वय इति सिद्धम् ( अ०. १६ )

( १७ - अधिकरणम् )

## ॐ कर्त्ताशास्त्रार्थवत्त्वात् ॐ ( सू० ३३ )

**श्रुतिसमन्वयसिध्यर्थमिति** ॥ ' एव उ एव साधुकर्मकारयती ' त्यादि श्रुतिसमन्वयसिध्यर्थमित्यर्थः । **अनुपपन्नःस्यादिति** ।। कर्तुरभावे ईश्वरस्य कारयितृत्वायोगादिति भावः । शङ्कते – **जीवकर्तृत्वेऽपीति** ।। **विवेकाग्रहोऽस्त्येवेति** ।। परमतकर्तृत्वविषये आत्मीयताकल्पनमस्त्येवेत्यर्थः । ( ३४-सू० ) **तादृशकर्तारमिति** ।। काल्पनिककर्तृत्वोपेतमितित्यर्थः । ( ३७ - सू०. ) **नहीति** ॥ जिज्ञासुर्जीवः ज्ञानक्रियायामेव साक्षाद्व्याप्रियते स्वेच्छामात्रेण ज्ञानवान् भवति येनदृष्टान्तः साध्यसमः स्यात् । किन्तु साधने व्याप्रियते ततश्च – कदाचित् ज्ञानं लभते कदाचिन्नेति हेतोः न दृष्टान्तः साध्यसमः संदिग्धश्च इति भावः (३८-सू०) **ननूभयोःकर्तृत्वेति** ॥ उभयोर्जीवेश्वरयोःसाधनान्तरसापेक्षत्वेन कर्तृत्वाविशेषेऽपि तत्कुत ईश्वरस्यैवफलस्वातंत्र्यं न जीवस्येत्यर्थः । **स्वातन्त्र्यपारतन्त्र्येइति** ॥ साधनस्वातन्त्र्यपारतन्त्र्याभ्यां फलस्वातन्त्र्यपारतन्त्र्ये इति वक्तुमित्यर्थः । **अयमाशयः** – सत्यम् उभावपि जीवेश्वरौ साधनान्तरमपेक्ष्यकर्मकुरुत इति, तथापि – ईश्वरस्य साधनेषु स्वातन्त्र्यात् , तदिच्छानुसारेण साधनानि लभ्यन्त इति तस्यफले स्वातन्त्र्यम्, जीवस्य तु तदभावात् न स्वातन्त्र्यमिति । जीवास्वातन्त्र्यमाक्षिपति — ( ४० - सू०. ) **नन्वेवं यदीति** ॥ **तर्हीति** ।। श्रुतिस्मृत्यादौ कर्त्तेत्युच्यत इत्यर्थः । कर्तृशब्दोहि स्वतन्त्रकर्तुरेव प्रत्यायको नास्वतन्त्रस्यकर्तुः, यदाहि देवदत्तो यज्ञदत्तेन पुनःपुनर्बोधितः पाकक्रियां निर्वर्तयति, तमन्यो ब्रवीति किमस्य पाकस्य भवान् कर्तेति, स आह – नाहमस्य पाकस्य कर्ता किन्तु यज्ञदत्त एव कर्ता अहन्तु तेनबोधितः करोमीति । तेन मन्यामहे — कर्तृशब्दो नास्वतन्त्रस्य प्रत्यायक इति । ततश्चैवं योजना — यदिजीवो ऽस्वतन्त्र एव कर्तास्यात् तर्हि श्रुतिस्मृत्यादौ तस्यकर्तृत्वव्यपदेशो न स्यात् स्वतन्त्र एवहि खलु प्राज्ञैः कर्तेति व्यपदिश्यते, नास्वन्त्रः । अस्ति च श्रुतिस्मृत्यादौ जीवे कर्तृशब्दः तस्मान्नास्वतन्त्रोजीवः कर्ता, अपितु स्वतन्त्र एवेति । एतेन — जीवस्य कर्तृत्वात् कर्तरिकर्तृशब्दप्रयोगानुपपत्त्यभावेन ' कथं तर्हि क-

त्रोच्यत ' इत्ययुक्तमिति परास्तम् । **इत्याशंक्य परिहरदिति** ॥ अस्वतन्त्रेऽपि कर्तरि कर्तृशब्दप्रयोगप्रदर्शनमुखेन आपाद्यापादकयोः व्याप्त्यभावप्रदर्शनेन शङ्कां परिहरत् सूत्रमुपन्यस्येत्यर्थः । ननु — अत्रभाष्ये ' कर्तृत्वं च युज्यत ' इति कर्तृत्वसमर्थनमयुक्तम् , पूर्वपक्षिणा कर्तृत्वमङ्गीकृत्य कर्तृशब्दप्रयोगानुपपत्तेरेवाऽऽशङ्कितत्वादित्यत स्तदभिप्रायमाह–**तथेश्वरनियतोऽपीति** (४१-सू०) **वचनवेतनदानादिवदिति** ॥ अत्र ' दिवे ' ति प्रक्षिप्तम् । ततश्चैवं पाठः — ईश्वराधीनता तु वचनवेतनदानादुतेति । **इत्याशङ्कामिति** ॥ द्वितीयपक्षस्वीकारमुखेन आद्यपक्षस्याऽनङ्गीकारात् न तत्रोक्तो दोष इति परिहरत् सूत्रमुपन्यस्येत्यर्थः । एतेन — द्वितीयेन तस्य कर्तृत्वमिति शङ्कायाः अनेन सूत्रेणाऽपरिहारात् ' इत्याशङ्क्य परिहरत् सूत्र ' मित्ययुक्तमिति परास्तम् । ननु– शास्त्रवैयर्थ्यादिकं ' वैषम्यनैर्घृण्ये नसापेक्षत्वा ' (२ - १ - २८) दित्यनेन परिहृतमेव, वैषम्यनैर्घृण्यग्रहणस्य उदाहरणमात्रत्वेन शास्त्रवैयर्थ्यस्यापि तत्र विवक्षितत्वात्, पुनरिहशास्त्रवैयर्थ्यादिपरिहारे पौनरुक्त्यमित्यत आह —( ४२-सू०. ) **उक्तोऽपीति** ॥ स्मरणन्तु दाढर्यार्थम् । ततश्च प्रयोजनसद्भावात् न पौनरुक्त्यमित्यर्थः । यद्यपि — वचन मनुभावकमेव न स्मारकम् , तथापि — उक्तस्य पुनर्वचने अनुभवानन्तरं स्मृतिर्भवतीति स्मारयितुमित्युक्तम् ।

**पूर्वपक्षस्तु** — जीवो न कर्ता, ' नान्यःकर्ते ' ति श्रुतेः । न च — ' यत्कर्मकुरुते तदभिसंपद्यते ' इति जीवकर्तृत्वेऽप्यस्ति श्रुतिरिति वाच्यम् — अकर्तृत्वश्रुतेः सयुक्तिकत्वेन प्राबल्यात् । समर्थितं खलु ईश्वरस्यैव अनन्ययोगेन कर्तृत्वम् ' इतरव्यपदेशा ' (२–१–२२) दित्यादौ । ततश्च जीवस्य कर्तृत्वमेव नास्तीति ' एष उ एव साधुकर्मकारयती ' त्यादि श्रुतिसमन्वयो न युक्त इति ।

**सिद्धान्तस्तु** — युक्त एव ' एषउएव साधुकर्मकारयती ' त्यादि श्रुति समन्वयः, जीवस्यापिकर्तृत्वेन तत्प्रेरकत्वसंभवात् । अन्यथा — विधिनिषेधशास्त्रवैयर्थ्यं स्यात् । नन्वथापि जीवस्य न वास्तवं कर्तृत्वमभ्युपगन्तव्यम् , व्यावहारिकेणैव कर्तृत्वेन विधिनिषेधशास्त्रस्य सार्थक्यसंभवादिति चेत् , न — मोक्षेपि ' स्त्रीभिर्वायानैर्वे ' ( छा०. ८ - ६ - ३ ) त्यादिना विहारकर्तृत्वोपदेशात् । न च मोक्षे सतः व्यावहारिकत्वं संभवति । अस्तु तर्हि मोक्षेकर्तृत्वं पार-

मार्थिकम् , संसारेतु व्यावहारिकमेव किं न स्यादिति चेत् , न — मोक्षार्थं साधनाद्युपादानदर्शनात् । न च — तदपि परगतमेव जीवे आरोप्यत इति वाच्यम् — फलाभावप्रसंगात् । न हि अन्यगतसाधने स्वकीयत्वाभिमानमात्रेण फलं भवति । अतिप्रसंगात् । ' आत्मानमेव लोकमुपासीते '(बृ. ३–४–१५) ति श्रुतौ जीवस्य कर्तृत्वव्यपदेशाच्च । कथं तर्हि ईश्वर एव कर्ता न जीवइत्युक्तिरिति चेत् , इत्थम् – यथा इदमहं ज्ञास्यामीति इच्छायामपि न स्वेच्छानुसारेण ज्ञानलाभो जीवस्य एव मिदं करिष्यामीति संकल्पेपि न स्वेच्छानुसारेण कार्यसिद्धिः । ईश्वरस्यतु स्वेच्छानुसारेण कार्यसिद्धिर्भवतीति स्वातन्त्र्याभिप्रायेण ईश्वरएव कर्ता न जीवः कर्तेत्युच्यते । ननु — ईश्वरस्य जीववत् साधनसापेक्षकर्तृत्वेनाऽविशेशेषात् , ईश्वरस्यैव स्वातन्त्र्यं न जीवस्येत्येतत् कुत इति चेत् , न — ईश्वस्य सकलसाधननियामकत्वेन साधनस्वातन्त्र्यसद्भावात् कार्यसिद्धौ स्वातन्त्र्यम् , जीवस्यतु साधनस्वातंत्र्याभावात् । फलस्वातंत्र्याभावः । किंच – ईश्वरस्य पूर्णकामत्वात् फलस्वातंत्र्यं जीवस्यतु तदभावात्स्वातंत्र्याभावः । ननु – यदि जीवस्य न स्वातंत्र्येण कर्तृत्वं कथं श्रुतिस्मृत्यादौ कर्त्रोच्यते, अस्वतंत्रकर्त्तरि कर्तृशब्दप्रयोगाभावेन तस्य स्वतंत्रकर्तृमात्रप्रत्यायकत्वनियमाऽभावात् । नचैवं तक्षण इव जीवकर्तृत्वशक्तिः जीवाधीनैवाऽऽपन्ना, ततश्च — अपसिद्धांत इति वाच्यम् —' कर्तृत्वं करणत्वं चे ' ति श्रुतिबलेन जीवकर्तृत्वशक्तेरीश्वराधीनत्वांगीकारात् । नचैवं सति जीवस्याकर्तृत्वमेवप्राप्तमिति विधिनिषेधशास्त्रवैयर्थ्यमिति वाच्यम् — विधिप्रतिषेधशास्त्रवैयर्थ्यपरिहाराय स्वस्य वैषम्यनैर्घृण्यपरिहाराय च जीवकर्मप्रयत्नयोग्यतापेक्षयैव ईश्वरोजीवं प्रेरयतीत्यंगीकारात् । तदुक्तं ' पूर्वकर्मप्रयत्नंचे 'त्यादिना । अतःश्रुत्यविरोधेन जीवस्य कर्तृत्वसिद्धेः युक्तो भगवति समन्वय इति सिद्धम् ( अ० १७ )

---

( १८ - अधिकरणम् )

ॐ अंशोनानाव्यपदेशादन्यथाचापि दाशकितवादित्वमधीयत एके ॐ ( सू० ४३ )

**श्रुतिसमन्वयोनिरूपित इति ।।** वाक्यान्वयेन जीवविषयकवक्ष्यमाण-

श्रुतेः, जीवार्थकत्वमंगीकृत्य समन्वयोऽभिहितः, जीवविषयेच श्रुतेरप्रामाण्ये भगवति समन्वयोऽनुपपन्नः स्यादिति भावः । **किमीश्वरांशोनवेति** ॥ यद्यप्ययं संशयो न वक्ष्यमाणपूर्वपक्षकोट्यवलंबी, तथापि — जीवो नेश्वरांश इत्यपि पूर्वपक्षः कार्य इतिद्योतयितु मेवं प्रदर्शितः । पूर्वपक्षमाह — **तत्रेति** ॥ यद्यपि सिद्धांते अंशत्वसाधना दनंशइत्येव पूर्वपक्षःकार्यः, तथापि — यावान् सूत्र निरस्यो विपर्ययः, स सर्वोपि पूर्वपक्ष इति दर्शयितु मयं पूर्वपक्षो दर्शितः । अयंच 'श्रुती अनिर्णायके' इति विपर्ययः, श्रुत्या 'अंश' इति निर्णये कृते अर्थान्निरस्तोभवती ' ति सूत्रनिरस्योभवति । व्रीहियवश्रुत्योरिव व्यवस्थितविकल्पेनाऽविरोधमाशंक्य निषेधति—**नचेति** ॥ **वस्तुविकल्पेति** ॥ भवेत्तत्र विकल्पः श्रुतिद्वयोक्तक्रियायाःश्रुत्युक्तसाधनयो र्द्वयो रन्यतरोपादानेन स्वेच्छया निष्पादयितुं शक्यत्वात् इहतु-सिद्धस्वरूपस्य जीवस्य इच्छानुसारेण अंशत्वानंशत्वयो रयोगेन विकल्पो न युज्यत इतिभावः । बाधकान्तरमाह—**अंशाएवेति** ॥ व्यवस्थितविकल्पमाशंक्य निषेधति — नचेति ॥ एकस्यैव सिन्धुनद्याःपरभागे स्थित्या ब्राह्मण्यं, तत्परभागेस्थित्या ऽब्राह्मण्यमितिवत्, जीवस्य भूलोकादिस्थित्या ऽनंशत्वं स्वर्गादिस्थित्यां ऽशत्वमिति देशभेदेनवा, एकस्यैव सुद्युम्नस्य कालभेदेन स्त्रीत्वपुंस्त्ववत्, इदानी मनंशत्वं कालान्तरें ऽशत्वमिति कालभेदेनवा, व्यवस्थितो विकल्पो भविष्यतीति न वक्तव्यमित्यर्थः । **विशेषप्रमाणमन्तरेणेति** ॥ सुद्युम्नादौ 'आचार्यानुग्रहात्कामं लब्ध्वा पुस्त्वं व्यवस्थये' त्यादि प्रमाणसद्भावात् निर्णयो युज्यते, प्रकृतेतु प्रमाणाभावा न्नानिर्णयो युज्यत इतिभावः । **अतइति** ॥ अस्यैव विवरणं — **श्रुतिद्वयस्य नानात्वादिति**॥ श्रुत्योश्च नानात्वं नाम परस्परविरुद्धत्वमिति वोध्यम् 'अवःपरेण पितरं यो अस्यानुवेद परएनावरेण कवीयमानः कइह प्रवोच देवं मनः कुतो अधिप्रजातं' (ऋ.सं.२-३-१७) मिति ऋचःपूर्वार्धं व्याचष्टे — **यः परादिति** ॥ अवरस्य जगत्पितृवेत्तृत्वेऽपि जगत्पितुः तज्जातत्वव्यपदेशःकुतः, देवदत्तस्य स्वज्ञातपुत्रत्वव्यपदेशाभावादित्यत आह — **तज्ज्ञानंच दुर्लभमिति** ॥ चशब्दो हिशब्दार्थः । यस्मात्तज्ज्ञानं दुर्लभं तस्मात्तज्ज्ञात इति व्यपदिश्यत इत्यर्थः । देवदत्तस्य स्वज्ञातपुत्रत्वव्यपदेशाभावेऽपि परमेश्वरस्य स युज्यत एव असतः सत्तासंबन्धवत् अनभिव्यक्तव्यक्तेरपि उत्पत्तिशब्दार्थत्वादिति भावः । नच —

तज्ज्ञानस्य दुर्लभत्वमसिद्धम्, उत्तरार्धे तथोक्तत्वादिति भावेनोत्तरार्धं व्याचष्टे – **कोनुसर्वज्ञकल्पइति** ॥ 'स्त्रियःसती स्ताँउमे पुंस आहुः पश्यदक्षण्वान्नविचेतदन्धः। कविर्यः पुत्रः सईमाचिकेत यस्ता विजानात् स वितुष्पितासत्' (ऋ. सं. २-३-१७)इति ऋचं व्याचष्टे– **याःभगवन्मूर्तय इति** ॥ ऋषिज्ञान मवश्यं संपादनीयमिति भावेनाह – **एतद्दीर्घतमोवाक्यमिति** ॥ **श्रुतिंचाहेति** ॥ सूत्रार्थे स्मृतेर्वक्ष्यमाणत्वात् तद्विवक्षया ऽयं चः पठितः। **हेत्वन्तरेणेति** ॥ हेत्वन्तरप्रतिपादकसूत्रखंडव्याख्यानेनैतत्समर्थयतइत्यर्थः। **अभेदस्थाने ऽशत्वमिति** ॥ संबन्धित्वमित्यर्थः। भिन्नेऽपि अत्यन्तं प्रीत्यास्पदे भृत्ये 'अयमेवराजे' त्यादि प्रयोगदर्शनादिति भावः। **उक्तंचेति** ॥ अनुव्याख्यान इति शेषः। (४६ सू.) **तथासतीति** ॥ जीवस्येश्वरांशत्वेसति मत्स्यादि साम्यापातात् न जीवस्येश्वरांशत्वमिति पूर्वेण संबन्धः। अस्तु जीवस्यांशत्वं तथापि न मत्स्यादिसाम्यं मत्स्यादीनां महत्त्वापादकस्यांशत्वस्य विजातीयत्वादित्यत उक्तम् – **अंशत्वाविशेषादिति** ॥ अंशत्वे तारतम्यादर्शनात् जीवस्यां ऽशत्वे मत्स्यादिसाम्यमवर्जनीयमिति भावः। **मत्स्याद्यसाम्यमिति** ॥ अंशत्वविषये मत्स्याद्यसाम्यं चार्थ इत्यर्थः। यद्यपि सूत्रे अनंशत्वश्रुतेः साक्षात् गतिर्नोक्ता, तथापि – अर्थात् सिध्यतीति भाष्ये तथोक्तम्। **जीवानामिति** ॥ जीवानां मत्स्यादीनांच भगवदंशत्वेन श्रौतत्वाविशेषेऽपि आनन्दादि साम्यं न प्रयुज्यत इत्यर्थः। तत्र हेतुमाह – **मत्स्यादीनामिति** ॥ **नचांशत्वाविशेषादिति** ॥ अंशत्वे विशेषस्य क्वाप्यदर्शनात् जीवा भिन्नांशाः, मत्स्यादयस्त्वभिन्नांशा इति भेदाभेदानुपपत्तिरिति नेति भावः। **अंशत्वाऽविशेषेपीति** ॥ अंशत्वोक्त्यविशेषेपीत्यर्थः। (४७-सू०) **जीवानां मत्स्यादीनामिति** ॥ मत्स्यादीनामिव जीवानां स्वरूपांशत्वं किं न स्यादित्यर्थः। **इत्युक्तइति** ॥ 'भावयत्येषसत्त्वेन लोकान्वै लोकभावनः। लीलावतारानुगतः तिर्यङ्नरसुरादि' ष्वित्यनेनोक्त इत्यर्थः। **उक्तेति** ॥ द्वितीयन्तु भावायाऽस्य रसातलगतां महीम्। उद्धरिष्य नुपादत्त यज्ञेशः सौकरंवपु' रित्यादि नोक्तेत्यर्थः। **एतेपरमपुरुषस्येति** ॥ 'पुंस' इत्यस्य व्याख्यानं 'परमपुरुषस्ये' ति। 'स्वांशकला' इत्यस्य व्याख्यानं 'स्वरूपांशाविभागा' इति। 'स्वयंभगवान् कृष्ण' इति अन्वयं प्रदर्श्य मूलरूप्येवे'ति कृष्णशब्दस्य तुशब्देन सह व्याख्या

नम् , नारायणएवेत्यर्थः । 'एते स्वांशकलाःपुंस' इति पूर्वार्द्धस्य 'इन्द्रारि व्याकुलं लोकं मृडयन्ती' त्युत्तरार्धेन संबन्धइत्याभिप्रेत्याह — **वराहादयो लोकंमृडयन्ती'ति** ॥ ततश्च एते स्वांशकळाः पुंसः कृष्णस्तु भगवान् स्वयम्। इन्द्रारि व्याकुलं लोकं मृडयन्ति युगे युगे' इति भागवतश्लोकस्य एवं योजना — पुंस = परमपुरुपस्य, स्वांशकला = स्वरूपांश विभागाः, भगवान् = कृष्णः, स्वयमेव = मूलरूपी नारायणात्मक इति यावत् । एते = वराहाद्याः, इन्द्रारिव्याकुलं लोकं युगे युगे रक्षन्तीति । सिंहावलोकनन्यायेन कृष्णशब्दस्य मूलरूपि नारायणवाचित्वे प्रतिज्ञापूर्वकं प्रमाणमाह—**कृष्णशब्दश्चेति** ॥ भाष्ये **एतेस्वांशकला इति** । अत्रायं विवेकः—'एते स्वांशकला इत्यारभ्य सजीवोयःपुनर्भव' इत्यन्तं भागवतवचनम् , 'न त्वत्समश्चाभ्यधिकः कुतोऽन्य'(गी० ११)इति गीतावचनम् । (सू०-४८) **जीवानां प्रवृत्तिमोक्षयोरिति** ॥ जीवानां प्रवृत्यादौ भगवदधीनत्वात् मत्स्यादीनां तदभावात् उभयोरंशत्वोक्तिसाम्येऽपि नैकप्रकारतेत्यर्थः । **स्वांशिकर्मानिर्मितेति** ॥ स्वांशिकर्मानिर्मितप्राकृतदेहसंबन्धित्वादित्यर्थः । भाष्ये **यत्किंचिदिति** ॥ हे विशांपते इह चेतनवर्गे, अस्मिन् लोके, यत्किंचित् देहबद्धं, तत्सर्वम् , ईश्वरबुद्धिजैः ईश्वरबुद्धिनिर्मितैः, पंचभिर्भूतैः; आविष्टं बद्धमिति यावत् । ईश्वरस्तु महद्भूतम् । नारायणो मुक्ताश्रयः । अत एव प्रभुः, विशेषणराजत इति विराट्, नित्यमुक्तः, भूतान्तरात्मा भूतान्तर्यामी, विज्ञेयो मुमुक्षुभिः, सगुणः स्वातन्त्र्यादिगुणवान् , निर्गुणः सत्वादिगुणसून्यः, हेनृपसत्तम, भूतप्रलयं भूतानि पलीयन्ते यस्मिन्तत्, अव्यक्तं महालक्ष्मीः, तस्य विष्णोः, शुश्रूषुरित्यर्थः । शुश्रूषुरिति लिङ्गव्यत्ययः छान्दसः । ईश्वरस्य नित्यमुक्तत्वात् न तस्य प्राकृतदेहसंबन्ध इति भावः । नन्वस्तु मूलरूपस्य एवं भूतत्वेन देहाभावः, अवतारस्यतु देहसम्बन्धः स्यादेवेत्यत आह — **अवतार प्रसंगे चेति** ॥ **स्वांशिकर्मानिर्मितेति** ॥ स्वांशिकर्मानिर्मितप्राकृतदेहसम्बन्धित्वादित्यर्थः । स्वरूपासिद्धिवारणाय प्राकृतेति देहविशेषणम् । तावन्मात्रस्य दृष्टान्ते ऽभावेन व्याप्यत्वासिद्धिः, तत्परिहाराय स्वांशिकर्मानिर्मितेति प्राकृतदेहविशेषणमिति बोध्यम् । ननु — प्रकाशाभिमानिनि स्वांशिना साम्यस्यासिद्धत्वात् साध्यविकलो दृष्टान्त इत्यत आह – **अत एव दृष्टान्तोपीति** ॥

अवतारप्रसंग उदाहृतात् मोक्षधर्मवचनादेव दृष्टान्तोऽपि विवृत इत्यर्थः । यद्यपि तत्र, देवावताराणां देवसाम्यं नोक्तम्, तथापि— ईश्वरावताराणामीश्वरसाम्योक्त्या न्यायसाम्येन देवावताराणामपि देवसाम्यं लब्धमिति भावः । 'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रति चक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश '(ऋ.स.४–७–३३) इति मन्त्रं व्याचष्टे — (५० · सू०.) **जीवसमुदाय इति ॥ मूले सोपाधिरनुपाधिश्चेति ॥** प्रतिबिम्बः = प्रतिबिम्बशब्दाभिधेयोऽर्थः । सोपाधिरनुपाधिरिति द्विधा द्विःप्रकार ईयते । प्रतिबिम्बशब्दस्य अक्षादिशब्दवत् नानार्थत्वात् न तदर्थस्य सर्वस्योपाध्यपेक्षेति भावः । जीवानामंशाभासत्वं श्रुत्यन्तरेण द्रढयति — **भाष्ये यथैवेति ॥** 'रूपं रूपम्' इत्यंशाभासत्वप्रतिपादकव्यवहितश्रुतिसमुच्चयार्थश्चशब्दः । यथैव छाया पुरुषे आतता पुरुषाधीनेति यावत् । तथा एतस्मिन्परमात्मनि एतज्जीवजातम् आततमित्यर्थः ।

**संदहटीकासूचितपूर्वपक्षस्तु** – न जीवः परमेश्वरांशः; तत्र प्रमाणाभावात् । न च – 'अंशा एवहीमे जीवा अंशीहरि' रिति श्रुतिः, प्रमाणमस्तीति वाच्यम्– 'नैवांश इति' श्रुति बाधितत्वेन स्वार्थनिश्चायकत्वाभावेन तस्य श्रुतेरप्रामाण्यात् । जीवेशयोर्भेदस्य साधितत्वेन भिन्नस्य च अंशत्वायोगात । असंभवदर्थायाः प्राचीनश्रुतेः, सम्भवदर्थाया 'नैवांश' इति श्रुतेः प्रबलत्वेन बाधकत्वात् । एवंच – अंशत्वश्रुतेरप्रामाण्यात् न तत्समन्वयो हरौ युक्त इति ।

**टीकोक्तपूर्वपक्षस्तु** — अनिर्णायकमेव श्रुतिद्वयम्, परस्परप्रतिबन्धात् । न च – व्रीहियवश्रुत्योरिव विकल्पो युक्तः – वस्तुनि विकल्पायोगात । न च – देशकालभेदेन व्यवस्थितो विकल्पः– विशेषप्रमाणाभावात अतः श्रुतिद्वयस्याऽप्रामाण्यमेवेति नोक्तसमन्वयो युक्त इति ।

**सिद्धान्तस्तु** – अंश एव जीवः परमात्मनः, 'मांशश्च' इत्यादिनानाप्रकारेण जीवस्य ईशमंबन्धित्वव्यपदेशात, तस्मत्स्वांशत्वस्यैव तदंशत्वरूपत्वात । 'पादोऽस्यविश्वाभूतानि' (पुरुषसू०.) इति मन्त्रवर्णाच्च, 'ममैवांशो जीवलोक' (गी० १५– )इति स्मृतेश्च । ननु—न जीवस्येश्वरांशत्वं युक्तम्, अनंशत्वश्रुतिविरोधादिति चेत, न – अनंशत्वश्रुतेरसम्पादितस्वरूपांशत्वाभावपरत्वात ।

अत एव न मत्स्यादिभिः सुखादिसाम्यम् । न चांशोक्तिसाम्यात् जीवानां भिन्नांशत्वं, मत्स्यादीनां स्वरूपांशत्वमिति वैषम्यं न युक्तमिति वाच्यम् – कालाग्निखद्योतादेः तेजोंशत्वोक्तिसाम्येऽपि स्वरूपांशत्वभिन्नांशत्वरूपवैषम्यदर्शनात् । ननु – कालाग्निखद्योतादीनामेकप्रकारांशत्वाभावेऽपि मत्स्यादीनां जीवानांच तथात्वं किं न स्यादिति चेत्, न — भागवते – एते स्वांशकळाः पुंस' (१–३–२८) इत्यादिना वराहादीनानभिन्नांशत्वमुक्त्वा 'अतः परं यदव्यक्त' मिति जीवानां भिन्नांशत्वाऽभिधानात् । परमात्माधीनप्रवृत्तिमोक्षाभ्यां जीवस्य भिन्नांशत्वावगतेश्च । अंशत्वेन श्रुत्युक्तत्वेऽपि मत्स्यादीनां पूर्णशक्तित्वात्, जीवानां तदभावाच्च नोक्तव्यतिकरः । 'रूपं रूपं प्रतिरूपोबभूवे' (ऋ.स. ४-७-३३) इति जीवानां प्रतिबिंबत्वाभिधानाच्च । अतः श्रुत्याविरोधित्वेन जीवस्येश्वरांशत्वोपपत्ते र्युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् (अ०. १८)

---

(१९ - अधिकरणम्)

## ॐ अदृष्टाऽनियमात् ॐ (सू० ५१)

**अत्र ब्रह्मणीति** ॥ ननु – इदं सूत्रत्रयं पूर्वोधिकरणशेषो नाधिकरणान्तरम्, 'आभास एव चे' (ब्र०. सू०. २ - ३ - ५) ति पूर्वसूत्रोक्तप्रतिबिम्बत्वे मिथो वैचित्र्यानुपपत्तिरूपबाधकोद्धारमात्रस्येह करणात्, साध्यनिर्देशाभावाच्च । एवमपि अस्याऽधिकरणान्तरत्वे 'प्रकाशादिव' (ब्र०.सू०. २ - ३ - ४६) दित्यस्याप्यधिकरणाऽन्तरत्वं स्यादिति चेत्, सत्यमेवं तथापि – तदधीनत्वे सति तत्सदृशत्वरूप प्रतिबिम्बत्वे बाधकस्यैवाभावात् कृत्वाचिन्तया प्रवृत्तमिदं सूत्रत्रयम्, 'प्रकाशादिवन्नैवं पर' इत्यादि सूत्रवत् न पूर्वाधिकरणशेषो युक्त इति सूचनाय, अधिकरणान्तरं कृतम् । अत एव टीकायां 'जीवानां प्रतिबिम्बत्वमभ्युपेत्य तेषां वैचित्र्ये कारणमाहे' त्युक्तम् । **रूपंरूपमित्येकेति** ॥ इतःपरं न संबन्धो नापेक्ष्यो जीवः परस्येत्यपरे 'ति वाक्यं लेखकदोषात् उच्छिन्नमिह द्रष्टव्यम् । यद्यपि — अनंशत्व श्रुते र्गतिरुक्ता, तथापि 'न सम्बन्ध' इत्यस्य गते रनुक्तत्वात् युक्ता संदेहबीजता । अवश्यं चैतदेवं विज्ञे-

यम् — 'रूपं रूप' मित्येकां श्रुति मुदाहृत्य, श्रुत्यन्तरानुदाहरणे कारणाभावात् । अत्रैव 'प्रकरणवशात् विरुद्धं श्रुत्यन्तरमनुमीयत' इति वाक्यं प्रक्षिप्तम् ।
अवश्यं चैतदेवं विज्ञेयम् — श्रुतेरपि प्रत्यक्षसिद्धत्वेन अनुमितत्वोक्त्ययोगात् । न च – अप्रतिबिम्बत्वप्रतिपादकश्रुतेरप्रत्यक्षत्वात् अनुमितत्वोक्तिरिति वाच्यम् — प्रत्यक्षश्रुतेः प्रबलत्वेन अनुमितश्रुत्या संदेहपूर्वपक्षोक्त्ययोगात् । अस्मिन्पादे अस्याधिकरणस्य प्रासंगिकत्वेन पादे निवेशमात्रेण विरुद्धश्रुत्यनुमानायोगाच्च । अस्मदादीन्प्रतिश्रुतेरप्रत्यक्षत्वेऽपि, सर्वज्ञत्वात् भाष्यकारस्य सा तत्प्रत्यक्षैवेति तेन वक्तव्यत्वाच्च । न हि जानन्नपि भाष्यकारः अवश्य मुदाहर्तव्यामपि श्रुतिं नोदाजहारेति संभवति, अनुदाहरणे कारणाभावात् ।

**चन्द्रिकाभावबोधयोस्तु** — गङ्गाजलानुप्रविष्टक्षुद्रनदीजलवत् तद्वाक्यं सेव्यमेवेत्याशयेन व्याख्यातम् । **कारणान्तरमाहेति** ॥ अत्रान्तरशब्दः प्रक्षिप्तः, मूलकोशेषु अदर्शनात्, कारणमाहेति यथावस्थितभाष्ये अनुपपत्त्यभावेन अन्तरशब्दमेलने कारणाभावाच्च । **भगवत्प्रतिबिम्बत्वेपीति** ॥ प्रतिबिम्बत्वाङ्गीकारेपि न वैचित्र्यानुपपत्तिः । दर्पणाद्युपाधिगतमालिन्यादिदोषवशात् एकप्रतिबिम्बेष्वपि प्रतिमुखेषु श्यामत्वादिवैचित्र्यवत् धर्माधर्माद्यागंतुककारणवैचित्र्येण जीवेष्वपि वैचित्र्यसंभवादिति भावः। ( ५२ - सू० ) **निरुपाधिप्रतिबिम्बत्वविषयेति** ॥ उपाधिप्रतिबिम्बत्वस्य अभावो निरुपाधिप्रतिबिम्बत्वमिति अर्थाभावे ऽव्ययीभावः, ततो निरुपाधिप्रतिबिम्बत्वं विषयो यस्याः सा तथोक्तेति बहुव्रीहिः । एतेन — 'नसम्बन्ध' इति श्रुतेः अभाव विषयत्वेन निरुपाधिप्रतिबिम्बविषयत्ववर्णनमयुक्तमिति परास्तम् ।

**पूर्वपक्षस्तु** — न जीवा भगवत्प्रतिबिम्बाः, 'नैवांशो न सम्बन्ध' इति श्रुतेः । न च – प्रतिबिम्बत्वेऽपि 'रूपंरूप' (ऋ.स. ४-७-३३) मिति श्रुतिरस्तीति वाच्यम – 'न सम्बन्ध' इति श्रुतेः सयुक्तिकत्वात् । तथाहि — जीवास्तावत् सुरनरतिर्यगादिभेदेन विचित्राः । न च – तदेकप्रतिबिम्बत्वे सम्भवतीत्यप्रतिबिम्बत्वमेव जीवानाम् । ततश्च सयुक्तिकाऽप्रतिबिम्बत्वश्रुतिविरोधात् प्रतिबिम्बत्वश्रुतिरप्रमाणमेवेतिनोक्तसमन्वयसिद्धिरिति ।

**सिद्धान्तस्तु** – स्यादयं दोषः, यदि जीवस्य प्रतिमुखवत् प्रतिबिम्बत्वं स्यात्, नचैवं किंनाम पारिभाषिकं तदधीनत्वेसति तत्सदृशत्वरूपं नचास्मिन् पक्षे वैचित्र्याभावो भवति । पित्रधीनत्वेसति तत्सदृशानां पुत्राणां मिथो वैचित्र्यदर्शनात् । अस्तुवा प्रतिमुखवदेव प्रतिबिम्बत्वम्, तथापि – न वैचित्र्यानुपपत्तिः, अदृष्टादिवैचित्र्यरूपकारणसद्भावात् । न चादृष्टादि वैचित्र्यमेव कथमिति वाच्यम् – तस्यापि पूर्वकर्मवैचित्र्याधीनत्वात् । कर्मभेदपरंपरायाश्चाऽनादित्वात् । ननु — किमदृष्टकल्पनया रागद्वेषमोहादिवैचित्र्येणैव वैचित्र्यसंभवादिति चेत्, न – दोषवैचित्र्यार्थमप्यन्ततो ऽदृष्टस्य कल्पनीयत्वात्, दोषवैचित्र्याभावेऽपि प्रतिक्षणवैचित्र्यदर्शनात् च । न च – स्वर्गभूम्यादिस्थानवैचित्र्येणैव वैचित्र्यसंभवात् किमदृष्टकल्पनेनेति वाच्यम् – तत्प्राप्तेरप्यदृष्टसाध्यत्वात्, एकप्रदेशस्थितानां वैचित्र्यदर्शनाच्च । तदेवं पारिभाषिकप्रतिबिम्बत्वस्य युक्तिविरोधप्रसक्त्यभावात् 'नैवांशो न सम्बन्ध' इति श्रुतेश्च प्रतिमुखवत्प्रतिबिम्बत्वाभावविषयत्वेन तद्विरोधस्याप्यभावेन 'रूपं रूप' मिति श्रुत्या पारिभाषिक प्रतिबिम्बत्वसिद्धेः युक्तो नारायणे श्रुतिसमन्वय इति सिद्धम्(अ.१९)

इति श्रीमत्सत्यनिधितीर्थ श्रीचरणाराधक श्रीमत्सत्यनाथयति
विरचितायां तत्वप्रकाशिकाभिनवचन्द्रिकायां
द्वितीयाध्यायस्य तृतीयः पादः
कृष्णार्पणमस्तु



॥ श्रीः ॥

श्री वेदव्यासाय नमः

# अथ द्वितीयस्य चतुर्थः पादः

( १ - अधिकरणम् )

## ॐ तथाप्राणाः ॐ ( सू- १. )

**एतत्पादार्थमिति ॥** ' अध्यायस्य एकार्थत्वात् पादभेदः किं निबन्धन इत्यतो विरोधेष्ववान्तरभेदेनेति भावेने ' ति वर्तते । तस्य एतत्पादप्रतिपाद्यं- दर्शयतीत्यनेन सम्बन्धः । ननु — भाष्यकारीयं पादप्रतिपाद्यकथनमयुक्तम्, अस्यार्थस्य पूर्वपादार्थाऽभिन्नत्वेन पादभेदाभावप्रसङ्गादित्याशङ्कामनूद्य समाधत्ते— **अत्रापीत्यादिना ॥** अत्रापीति निपातसमुदायो यद्यपीत्यर्थे । ' अत्रत्ययुक्तीना' मिति वाक्यस्योपक्रमे ' तथापी ' ति ग्राह्यम् । **पूर्वपक्षंच सूचयतीति ॥** ' नोपादानं हीन्द्रियाणा ' मिति स्मृत्युदाहरणेन पूर्वपक्षं सूचयतीत्यर्थः । **अत्र पुनर्विप्रतिपत्त्यभावेनेति ॥** अत्र विप्रतिपत्तिशब्देन ब्रह्मकारणकत्वविरुद्धार्थ- प्रतिपादकं वाक्यमुच्यते । अन्यकारणकत्वप्रापकाभावात् कारणमविचार्यैव सिद्धवत्कृत्य ' परमात्मन ' इत्युक्तमित्यर्थः । ( २ - सू०. ) **हेतुरुक्त इति ॥** ' न वियदश्रुते ( २ - ३ - १ ) ' रिति सूत्रोक्तो हेतुः ' अनादिर्वायमाकाश 'इति श्रुति गौणत्वोक्त्या उक्तः समर्थित इत्यर्थः । **कथमसाविति ॥** ' प्राणा- एवाऽनादय ' इति श्रुते र्विद्यमानत्वात् असौ = अश्रुतेरिति हेतुः, इह = प्राण- विषये, कथं सम्भवतीत्याशंकां पूर्वश्रुतिवत्, अस्यापि श्रुते गौणार्थत्वप्रतिपा- दनेन परिहरत्सूत्रमुपन्यस्य व्याचष्ट इत्यर्थः । यद्यपि ' तथाप्राणा ' इत्येकेनैव सूत्रेणालम् । ' अस्ति ' ( ब्र०. सू०. २ - ३ - २ ) त्विति सूत्रोक्तार्थस्यातिदे- शवत् ' गौण्यसम्भवा ' दित्यादिसूत्रार्थस्याप्यतिदेष्टुं शक्यत्वात्, तथापि – अत्र ' अस्तितु ' इति सूत्रार्थस्यैवाऽतिदेशः, नत्व ' श्रुते ' रिति हेतोरिति विज्ञायेत, तन्माविज्ञायीति ' गौण्यसम्भवा ' दिति सूत्रं कृतम् । एवमपि – ' अश्रुते '

रित्यस्यैवाऽतिदेशः न सर्वस्येति विज्ञायेत तन्माविज्ञायि, किन्तु सर्वातिदेश इति ज्ञापनाय 'प्रतिज्ञानुपरोधाच्चे' ति सूत्रं कृतमिति सूत्रद्वयमर्थवदिति । 'असम्भवा' दिति सौत्रपदं प्रकारान्तरेण व्याचष्टे– **एतस्माज्जायत इतीति** ॥ श्रुत्यसम्भवोऽपि सौत्रासम्भवशब्दार्थो द्रष्टव्य इत्यर्थः । **प्रळयेवियुक्तानामिति** ॥ उपचायकभूतैरित्यर्थः ।ननु — 'तेषां भूतै' रिति इन्द्रियाणां भूतेषु उपचयकथनमयुक्तम् । 'तैजसानीन्द्रियाण्याहु' रिति स्मृतौ अहंकारकारणत्वस्य स्मरणादित्यत आह – **अत्राहंकारेति** ॥ अत्र 'भूतैरुपचय' इति स्मृतौ अहंकारकारणत्वस्याप्यनिषेधलिङ्गेन स्वीकारविज्ञानादविरोध इत्यर्थः । अहंकारकारणकत्वस्वीकारेण भूतकारणकत्वस्याविरोधोपपादनमयुक्तम् । अन्योपादानकत्वस्याऽन्योपादानकत्वविरोधित्वादित्यत आह — **अहंकारोत्पन्नेति** । **अहंकारोत्पन्नानामपि** ॥ भूतानां सूक्ष्मप्राणैरुपचयः प्रमाणदृष्टोऽस्तीति तत्राप्युभयोपादानकत्वस्वीकारेप्यविरोध इत्यर्थः । 'सूक्ष्मप्राणै' रिति विशिंषता तेभ्यो भूतानि जज्ञिर' इति भूतानां प्राणजन्यत्वस्य प्रागुक्तत्वात् इदानीं पुनरिन्द्रियाणां भूतजन्यत्वाभिधानादन्योन्याश्रय इति शङ्का निराकृता । केषांचित् सूक्ष्मप्राणानां भूतोपादानत्वं, तदन्येषान्तु भूतोपचितत्वमित्यङ्गीकारात् । ननु — अस्तु मुख्यनित्यत्वं, परेण साम्यसम्प्राप्तिः कुत इत्यत आह — **मुख्य नित्यतायामिति** ॥ स्वप्राप्यविशेषाणां पराधीनत्वाभावस्य स्वातन्त्र्येणाविनाभावादिति भावः । **अनेनेति** ॥ 'परेण साम्यसम्प्राप्ते' रित्यनेनेत्यर्थः । '**यावद्विकार' मित्यादियुक्त्य इति** ॥ अल्पशक्तित्वादियुक्त्य इत्यर्थः । ततश्चायं प्रयोगः — प्राणा उत्पत्तिमन्तः, अल्पशक्तित्वादिति ।

**पूर्वपक्षस्तु** – न प्राणा उत्पत्तिमन्तः, 'प्राणा एवानादय' इति श्रुतेः। न चोत्पत्तावपि श्रुतिरस्तीति वाच्यम्— अनुत्पत्तिश्रुतेः स्पष्टार्थतया निरवकाशत्वेन प्राबल्यात् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' ( आ. २-१-३ ) ति श्रुतेः प्रादुर्भावपरतयापि योजयितुं शक्यत्वादविस्पष्टार्थत्वेन दौर्बल्यात् , प्राणा नोत्पत्तिमन्तः निरुपादानत्वादिति युक्तियुक्तत्वाच्च । न चाऽसिद्धिः — 'नोपादानं हीन्द्रियाणा' मिति स्मृतिसिद्धत्वात् । अतः प्रबलश्रुतिविरोधादुत्पत्तिश्रुतिरप्रमाणमेवेति नेश्वरस्य श्रुतिसमन्वयेन जगत्कारणत्वासिद्धिरिति ।

**सिद्धान्तस्तु** – उत्पत्तिमन्त एव प्राणाः, आकाशस्योत्पत्तिसाधकानां हेतूनामिहापि सद्भावात् । नन्वाकाशोत्पत्तिसिध्यर्थं श्रुत्यभावो हेतुरुक्तः, न चासाविह सम्भवति, श्रुतेर्विद्यमानत्वादिति चेन्, सत्यम्; अस्ति श्रुतिः, तथापि – नासौ मुख्यार्था किंतु गौणार्था परमात्मना साम्यप्रसङ्गेन मुख्यार्थाऽसम्भवात्, प्राणा उत्पत्तिमन्तः अल्पशक्तित्वादिति युक्तिविरुद्धत्वाच्च, स इदं सर्वमसृजतेति प्रतिज्ञाविरोधाच्च, अतः श्रुत्यविरोधेन प्राणानां परमात्मोत्पन्नत्वसिद्धेः युक्तं श्रुतिसमन्वयेन ब्रह्मणो जगत्कारणत्वमिति सिद्धम् ( अ०. १ )

( २ - अधिकरणम् )

## ॐ तत्प्राक्श्रुतेश्च ॐ [ सू. ४. ]

**इति श्रुतेरिति ॥** नित्यत्वे हेतुतया ऽनादित्वप्रतिपादकश्रुतेरित्यर्थः । **विशिष्यमनस इति॥** गौणानादित्वस्यविशिष्यप्रतिज्ञातानित्यत्वसाधकत्वायोगात् न गौणत्ववर्णनं युक्तमिति भावः । अनादित्वश्रुतेः श्रौतयुक्तिसाहित्यं वक्तुमाह — **किञ्चेति ॥ अतो नित्यमेवेति ॥** अनुत्पत्तिमदेवेत्यर्थः । **गत्यन्तरमिति ॥** छत्रिन्यायेन उत्पत्तेः प्रतिपादकत्वं न वाच्यमित्यर्थः । **विशेषश्रुतित्वादिति॥** इन्द्रियैःसह मनस एकोक्त्यभावेन छत्रिन्यायानर्हश्रुतित्वादित्यर्थः । ननु – 'मनः सर्वेन्द्रियाणि च' ( आ. २-१-३ ) ति श्रुतिगतस्य मनःशब्दस्य मनस्तत्वपरत्वात्, न मनोरूपेन्द्रियस्य उत्पत्तिसाधकत्वम्, अन्यथा – पुनर्ग्रहणं व्यर्थं स्यादित्याशंक्य निषेधति – **नचेति ॥ पूर्वमुत्पन्नतयेति ॥** उत्पन्नतया पूर्वमुक्तत्वादिति सम्बन्धः । एतेन – 'मनः सर्वेन्द्रियाणि च' ति श्रुतौ मनसः उत्पन्नतया पूर्वमुक्तत्वेऽपि पूर्वोत्पन्नतया उक्त्यभावात् पूर्वमुत्पन्नतयेत्यर्थकथनमयुक्तमिति परास्तम् । ननु – अन्येन्द्रियेभ्यो ऽपि प्रागुत्पन्नत्वाभिप्रायेणेति भाववर्णन मयुक्तम् पूर्वोत्पत्तौ प्रमाणाभावात् । न च — 'मनः सर्वेन्द्रियाणि च' ति उत्पन्नतया पूर्वमुक्तिरेव मानं पश्चादुत्पन्नस्यापि पूर्वोक्तिसम्भवात् इत्याशयेन शङ्कते – **नन्विति ॥ अत एवेति॥** सूक्ष्मरूपेण मनसः सद्भावादेव 'नह्यमानाः पुमांस्तिष्ठती' ति श्रौतयुक्तिविरोधो नेत्यर्थः ।

**पूर्वपक्षस्तु** – नोत्पत्तिर्मनसः 'नित्यं मनोऽनादित्वा' दिति श्रुतेः । न चोत्पत्तिश्रुत्यनुसारेण इन्द्रियोत्पत्तिश्रुतिवत् अनादित्व श्रुतेर्गौणार्थवर्णनं यु-

क्तमिति वाच्यम्— इन्द्रियाणामनित्यत्वमुक्त्वा विशिष्य मनसो नित्यत्वाभिधानात्। किञ्चमनसः — सादित्वे तद्विना कदाचिदनादिना पुरुषेण अवस्थातव्यम् न चतत्सम्भवति, तथासति तदा संसाराभावप्रसङ्गात्, मनसः संसारकारणत्वात्, 'मन एव मनुष्याणां कारणं बन्धमोक्षयो' रिति स्मरणात्। अतो नित्यमेव मनः। एवञ्च — युक्तियुक्तविशेष श्रुतेः प्राबल्यात् तद्विरोधेनोत्पत्तिश्रुतेरप्रामाण्या न्न श्रुतिसमन्वयेनेश्वरस्य जगत्कारणत्वसिद्धिरिति।

**सिद्धान्तस्तु** — नानुत्पत्तिर्मनसो युज्यते, उत्पन्नत्वे श्रुतिसद्भावात्। न चास्या गत्यन्तरं वाच्यम् — पृथक् मनसो जन्माभिधायकत्वेन विशेष श्रुतित्वात्। न चान्येन्द्रियवत् मनसोप्युत्पत्तिमत्त्वे तस्येन्द्रियान्तर्गतस्य पृथगभिधानं व्यर्थमिति वाच्यम् — अन्येन्द्रियेभ्योपि प्रागुत्पन्नत्वाभिप्रायेण तदुपपत्तेः। न चोत्पत्तिमत्त्वे ऽनुत्पत्ति श्रुतिविरोध इति वाच्यम् — तस्याः सूक्ष्मरूपमनोविषयत्वात्। न च — विशिष्य नित्यत्वोक्तिविरोधः — अन्येन्द्रियेभ्यो ऽल्पोपचयाभिप्रायत्वात्तस्याः। तदुक्तम् — 'तदनुत्पत्तिवचनमल्पोपचयकारणा' दिति। अतः श्रुत्यविरोधेन मनसो भगवदुत्पन्नत्वसिद्धे र्युक्तो जगत्कारणे ब्रह्मणि श्रुति समन्वय इति सिद्धम् ( अ०. २. )

---

( ३ - अधिकरणम् )

## ॐ तत्पूर्वकत्वाद्वाचः ॐ (सू० ५)

**समाख्याश्रुताविति** ॥ 'नित्यया ऽनित्ययास्तौमि ब्रह्म तत्परमं पदम्, श्रुतिर्वावनित्या अनित्यावाव स्मृतयो याश्चाऽन्यावाच' इति समाख्याश्रुतावित्यर्थः। **विशेष श्रुतित्वादिति** ॥ वाक्यशेषबलेन वाक्शब्दस्य वागिन्द्रियरूप विशेषार्थ वाचित्वादित्यर्थः। **श्रुतं श्रुत्याश्रयत्वमिति** ॥ श्रुतिसिद्धं निरन्तरवेदोच्चारण सामर्थ्यमित्यर्थः। अनित्यस्यापि घटादेः नित्यघटत्वाद्याश्रयत्ववत् नित्यसामर्थ्याश्रयत्वं वाचः किं न स्यादित्यत आह — **नहीति** ॥ नित्यसामर्थ्याश्रयः अनित्यः क्वापि न दृष्ट इत्यर्थः। अनित्याश्रितानां धर्मिसत्तानिरपेक्षाणां धर्माणां नित्यत्वसम्भवेऽपि न सामर्थ्यस्य तत्सम्भवति, धर्मि सत्तासापेक्षत्वादिति भावः। **अथापि स्यादिति** ॥ अथापि 'वाग्वावनित्ये' ति श्रुतेः वागिन्द्रिय परत्वेऽपि सयुक्ति-

क्त्वेऽपि वक्तुमवकाशः स्यादित्यर्थः । **सूक्ष्मरूपविषयेति** ॥ अनादित्वप्रतिपादिका 'नह्येषोत्पद्यत' इति श्रुतिः वागिन्द्रियस्य सूक्ष्मरूपविषया । ततश्च उत्पत्ति श्रुत्यानुकूल्यात् उपचयोऽस्ति, सूक्ष्मरूपेणाऽनादित्वमस्तीति किं न स्यात् बाधका भावादित्यर्थः । श्रुतौ श्रूयमाणं श्रुत्याश्रयत्वं श्रुत्यधिकरणत्वमात्रम्, ननु – सदा-तनोच्चारणसामर्थ्यं मुख्यार्थेबाधकाभावात् । ततश्च श्रुत्याश्रयत्वं नोत्पत्तिमत्त्वं विरुणद्धीत्यत आह — **श्रुत्याश्रयत्वंनामेति** ॥ **नित्यसर्वगतानामिति** ॥ अत्र मध्ये श्रूयमाणं 'अन्यथे'ति पदं वाक्योपक्रमे द्रष्टव्यम् सूक्ष्मरूपेण स्थिताया अपि वाचः वेदोच्चारणसामर्थ्यमस्त्येवेति नैतद्बाधक मित्यत आह — **सदा-वेदोच्चारणेति** ॥ **मनःपूर्वरूपमिति** ॥ अत्र 'तस्मादेवे'ति पदद्वय मुच्छिन्नम् । ततश्चैवं टीकापाठः — तस्मान्मनस एव पूर्वरूपं वागुत्तररूपमिति मनोलक्षण कारणवत्त्वश्रुतेरिति । अवश्यं चैनदेवं विज्ञेयम् — 'तस्मान्मनएवे' ति भाष्यकृतो दाहृतत्वात् तत्परित्यागेन वाक्यान्तरग्रहणे कारणाभावात् । भाष्यकृतोपसंहारस्थं वाक्यमुदाहृतम्, टीकाकृता तत्समर्थनार्थत्वादुपक्रमस्थं वाक्यमुदाहृतमित्यपि वक्तुं न युक्तम्, 'वाचा व्याहरती'ति पूर्ववाक्यबलेनेत्युत्तरटीका विरोधात् । तद्वा-क्यस्य टीकोदाहृत वाक्यापेक्षया पूर्वत्वाभावात् । ननु — 'मनःपूर्वरूप' मिति श्रुतिः न मनोरूपेन्द्रियस्य कारणतामाचष्टे, अपितु मन्तृत्वान्मनोनामकस्य विष्णु रूपस्य संहितापूर्ववर्णप्रतिपाद्यता माचष्टे । तथा 'वागुत्तररूप' मिति श्रुतिरपि वक्तृत्वाद्वाङ्नामकस्य विष्णुरूपस्य संहितोत्तरवर्णप्रतिपाद्यतामाचष्टे । 'अथातः संहिताया' उपनिष'दित्युपक्रमात् । 'वाक्पूर्वरूपं मन उत्तररूपं, मनःपूर्वरूपं वागुत्तररूप'मिति मतयोः ऋषिमतत्वेन प्रमाणत्वाच्च । नहि कार्यकारणपरत्वे मतयोः प्रामाण्यं भवति । अन्योन्याश्रयप्रसङ्गात् 'प्राणःसंहिते' त्यादेरुपयोगा भावात् । उक्तञ्चान्यत्र भाष्यकृतैव 'मन आदिशब्दानां भगवत्परत्वं, 'मनोवाक् प्राणनामाऽसौ मनआदिषु संस्थित' इति । ततश्च — वाचोमनःकारणकत्वे नैतच्छ्रुत्युदाहरण मुचितम्, अपितु 'मनसो वागुदपद्यत, वाचो व्याहरण 'मिति श्रुतिरेवोदाहर्तव्येतिचेत्, स्यादयं दोषः यदि ऐतरेयवाक्यं भाष्यकृता वाचो मनो जन्यत्वे प्रमाणत्वेनोदाहृतमिति ब्रूमः, नचैवं किंनाम वाचो जन्यत्वे 'मनसो-वागुदपद्यत, वाचो व्याहरण' मिति न्यायविवरणोदाहृतप्रत्यक्षश्रुतिसद्भावेऽपि

सूत्राणा मनन्तशाखानिर्णायकत्वज्ञापनाय अनन्तशाखाविदा भाष्यकृता शाखान्तरस्थ मेव वाक्यमुदाहृतमिति ब्रूमः। **कारणवत्त्वश्रुतेरिति** ॥ ननु– श्रौतेन कारणत्वेन कार्यतासाधनमनुपपन्नम्, साक्षात् 'वागुत्तररूप'मिति कार्यत्वस्यैव श्रुतत्वादिति चेत्, सत्यम्—श्रुतमपि कार्यत्वं कारणशून्यत्वात् स्यादुपचारमिति शङ्का स्यात्, सा माभूदित्येतदर्थं कारणवत्त्व श्रुतेरित्युक्तमिति बोध्यम्। **पूर्ववाक्यबलेनेति**॥ अत्रटीकाकृतोऽपि भाष्यकारानुग्रहेण सर्वज्ञकल्पत्वात् तेनापि भाष्यकारदृष्टशाखान्तर गतमेव 'अथ वाचाव्याहरती' ति पूर्ववाक्यमुदाहृतं नैतरेयस्थमिति बोध्यम्। एतेन — शाखान्तरगत 'वागुत्तररूप'मिति वाक्यस्य वागिन्द्रियपरत्वव्युत्पादनाय 'अथ वाचाव्याहरती' ति ऐतरेयस्थवाक्यस्य पूर्ववाक्यतयोदाहरण मयुक्तमिति परास्तम्। **अत्र पूर्वोत्तरशब्दाविति**॥ 'तस्मान्मन एव पूर्वरूपं वागुत्तररूप' मिति भाष्योदाहृतशाखान्तरवाक्यस्थपूर्वोत्तरशब्दौ कारणकार्यपरौ, न त्वैतरेयवाक्यगतपूर्वोत्तरशब्दाविव पूर्वोत्तरवर्णदेवतापराविित्यर्थः। वाक्यार्थोपपत्तिहेतुनापि वाग्वात्रनित्येतिश्रुते रुपचरितनित्यत्वार्थकत्वमाह— **एवमभ्युपगम एवेति** ॥ नित्यत्वप्रतिपादकतया प्रतीयमानापि श्रुतिः औपचारिकनित्यत्वार्थकत्व एवोपपन्नार्था नभवतीत्यर्थः। वाक्यार्थानुपपत्तिलक्षणबाधकेन स्वाभाविक नित्यत्वपरत्वं दूषयति — **न नित्यत्वइति** ।। नित्यत्वे नित्यत्वार्थकत्वे श्रुतिरुपपन्नार्था नभवतीत्यर्थः। ननु – नोपचरितनित्यत्वार्थकत्वे श्रुति रुपपन्ना 'न ह्येषोत्पद्यत' इति श्रुतिविरोधादित्यत आह – **तस्या अपीति** ।। तस्या अपि 'नह्येषोत्पद्यत' इति श्रुतेरपि एतदर्थत्वात् अनुत्पत्तिमद्देदसन्निधियोग्यतार्थकत्वादित्यर्थः। नन्वेवमपि श्रुतिर्नोपपन्नार्था 'अस्यां हि' ति वाक्यशेष वैयर्थ्य प्रसङ्गात्। न हि उपचरितनित्यत्वार्थकत्वे वाक्यशेषस्योपयोगोऽस्तीत्यत आह– **वाग्वावेति** ॥ उपपन्नार्थत्वं दर्शयति — **एवञ्च सतीति** ॥ ननु – वाचो नित्यत्वाभावात्, 'अस्यां हि श्रुतिरवतिष्ठत' इति वाक्यशेषबलाच्च, वेदाश्रयत्वेन नित्येत्यर्थोऽस्तु पुराणाद्याश्रयत्वेना ऽनित्यये' ति कुतोर्थोऽङ्गीक्रियते स्वरूपेणाऽनित्यत्वसद्भावात् 'अनित्यये' त्येवार्थः किं न स्यादित्यत आह — **एवं च समाख्येति** ॥ सत्यं — तथा व्याख्यातुं शक्यम्, तथापि – 'नित्ययाऽनित्यया स्तौमी' ति भाष्योदाहृत श्रुतेः समाख्यारूप 'नित्यया स्तौमि ब्रह्मतत्परम-

पद ' मिति श्रुत्यनुरोधात्तथाव्याख्यातमित्यर्थः । वेदाश्रयत्वेन नित्यया पुराणाश्रयत्वेना ऽनित्यया वाचा स्तौमीत्यस्यापि वेदोच्चारणेन पुराणोच्चारणेन स्तौमीत्यत्रैव तात्पर्यात्तच्छ्रुतेः समाख्यातत्वमिति द्रष्टव्यम् ॥

**पूर्वपक्षस्तु** – न वागुत्पत्तिमती, ' वाग्वाव नित्या, न ह्येषोत्पद्यत ' इति श्रुतेः । न चेयं श्रुतिर्वेदविषयेति वाच्यम् – ' अस्यां हि श्रुति रवतिष्ठन ' इति श्रुतश्रुत्याश्रयत्वायोगात् । किंच – ' वागनुत्पत्तिमती नित्यदा श्रुत्याश्रयत्वात् ' इत्यनुमानाविरोधो वाचः सादित्वे दुष्परिहरः । सादे र्नित्याश्रयत्वादर्शनात् । न चाऽनादित्वश्रुतिः सूक्ष्मरूपविषयेति वाच्यम् – नित्यं श्रुतश्रुत्युच्चारण सामर्थ्यरूप श्रुत्याश्रयत्वायोगादिति ।

**सिद्धान्तस्तु** —वागुत्पत्तिमती, ' वागुत्तररूप ' मिति कार्यत्वश्रवणात् । न च – कारणाभावात् कार्यत्वमनुपपन्नमिति वाच्यम् – ' मनःपूर्वरूपं वागुत्तररूप ' मिति शाखान्तरश्रुत्या अर्थात् मनःकारणत्वस्य सिध्या कार्यत्वोपपत्तेः । न च – वागिन्द्रियस्य उत्पन्नत्वाङ्गीकारे श्रुतिविरोध इति वाच्यम् — श्रुतौ उपचारेण नित्यत्वाभिधानात् । तदुक्तम् – ' वागिन्द्रियस्य नित्यत्वं श्रुतिसंनिधियोग्यते ' ति । न च – नित्याश्रयत्वयुक्त्या नित्यत्वमिति वाच्यत् – वाचो नित्यं श्रुतिसन्निधियोग्यतया एवाङ्गीकृतत्वेन नित्यफलोपहितश्रुत्याश्रयत्वाङ्गीकारात् । श्रुत्यर्थपर्यालोचनया औपचारिकनित्यत्वस्यैव लाभाच्च । तथाहि – एवं सत्येव हि वेदाश्रयत्वेन नित्यया, पुराणाश्रयत्वेन अनित्यया, स्तौमीति वाक्यार्थो घटते नाऽन्यथा । अतः श्रुत्यविरोधेनोत्पत्तिसिद्धेर्वाचो युक्तः श्रुतिसमन्वयो जगत्कारणे हराविति सिद्धम् (अ०. ३. )

---

( ४ - अधिकरणम् )

## ॐ सप्तगतेर्विशेषितत्वाच्च ॐ (सू० ६)

**किं सप्त, उत. द्वादशेति ॥** यद्यपि नायं पूर्वपक्षसिद्धन्तकोटिकः सन्देहः, पूर्वपक्षिणा संख्याद्वयानङ्गीकारात्; तथापि — सूत्रस्य पूर्वपक्षनिरासवत् सन्देहनिरासोऽपि प्रयोजनमिति सूचनाय पूर्वपक्षसिद्धान्तकोट्यनवलम्बी

सूत्रनिरस्यः सन्देहोऽयं दर्शितः । संख्याद्वयाङ्गीकारेण सिद्धान्ताभिधानेनोक्त संशयनिरासात् । **ग्रहा इति** ।। सोमरसग्रहणार्थाः पात्रविशेषाः । ज्योतिष्टोमेहि ' उपांश्वन्तर्यामैन्द्रवायवमैत्रावरुणाश्विनाः पञ्च, शुक्रमन्थिनौ द्वौ, ऋतुपात्रे द्वे, अतिग्राह्यास्त्रय ' इति द्वादश । यद्यप्यश्वदाभ्यावपि तत्र ग्रहौ स्तः । तथापि–तयोरनित्यत्वात् सादनोपस्थापनाद्यभावाच्चनित्यसादनादियुक्तग्रहविवक्षया द्वादशत्वमिति द्रष्टव्यम् । पूर्वपक्षयति — **सप्तैवप्राणा इति** ।। यदि ' द्वादशवा एते प्राणा' इति श्रुतिबलात् द्वादशप्राणा इत्यभ्युपगम्यते तर्हि— परोऽपि ' सप्तप्राण,' इति श्रुतिबलात् सप्तैव प्राणा इति ब्रूयादित्यर्थः। एतेन — ' सप्तप्राणा इति श्रुति प्रामाण्येन प्राणानां सप्तत्वाङ्गीकारो न युक्तः । परस्पर विरोधेन श्रुतिद्वयस्याप्य· प्रामाण्यादिति वक्ष्यमाणग्रन्थविरोधादिति परास्तम् । न परेण सप्तैवेति प्रतिवक्तुं शक्यते, ' सप्तप्राणा ' इति श्रुतौ अवधारणाभावेन तदसाधकत्वात् श्रुत्यनुसारेण सप्तत्वाभिधानेच न द्वादशत्वविरोध इत्याशंक्य निषेधति — **नचेति** ॥ **कारणविशेषमन्तरेणेति** ॥ नेयं श्रुतिः द्वादशत्वसंख्याविरोधिनी सप्तत्वसंख्यां ब्रूते, अवच्छेदकाभावेन विशिष्यसप्तत्वाभिधानायोगात्, किन्तु तां संख्या मसहमाना स्वयं सप्तत्वसंख्यामभिधत्ते इति भावः । तर्हि — अहमपिसप्तैव प्राणा इति वक्ष्यामीत्यत आह — **अथवेति** ॥ अथवेत्ययं निपातसमुदायो यद्यर्थे वर्तते। ' सप्तैवप्राणा ' इति अनुवर्त्तते तर्हीति शेषः । ततश्चैवं योजना — यदि त्वया सप्तैव प्राणा इत्यभ्युपगम्यते, तर्हि — परो द्वादशप्राणा इति ब्रूयादिति । **एकदेवत्याभिप्रायेणेति** ।। मासादीना मेकदेवत्याभिप्रायेणेत्यर्थः । **कथितयुक्तेरिति** ।। अभिमान्यभिमन्यमानयोः समसंख्याकत्वयुक्तेरित्यर्थः । ततश्च न सप्तत्वश्रुतेरधिकबलवत्त्वामित्यर्थः । **अन्यथेति** ।। मासाद्यभिमानिनामेव प्राणाभिमानित्वमित्यभिप्रायाभावे ' द्वादशमासा ' इत्यसंगतं स्यादिति भावः । ' येषुचरन्ति प्राणा गुहाशयां निहिताः सप्तसप्त ' ति वाक्यं व्याचष्टे — **गुहाहृदयमिति**।। गुहाशयामुद्दिश्येति योजनां मनसि कृत्वाह — **तदर्थमिति** ॥ तत्वप्रदीपेतु — ' गुहाशयां निहिताः सप्तसप्त ' ति गुहाशयायां बुद्धौ, निहिताः सप्तसप्तप्राणाः ' समानेलोप ' इति सूत्रादेकयकारलोपः । तादर्थ्ये सप्तमी । गुहाशयां प्रतिनिहिता इतिवेति व्याख्यातम् । **एतच्छ्रुतावेवमिति** ।।

बाधकश्रुतेरन्यार्थत्वात् प्राणानां द्वादशत्वे 'द्वादशवा एते प्राणा' इति श्रुतिरप्युदाहर्त्तव्येत्यर्थः । ( ७. सू० ) **तदुभयंचोक्तविरुद्धमिति** ॥ 'तथा प्राणा' (ब्र. सू. २-४-१) इति सूत्रे सर्वप्राणानां परमात्मजन्यत्वोक्तेः, तद्विरोध इत्यर्थः । ननु – तथात्वे बाधकज्ञानस्य गतिशब्दवाच्यत्वं न स्यात्, निवृत्तकर्मणश्च स्थितशब्दवाच्यत्वं न स्यादित्यत आह — **अन्यत्रापीति** ॥ यथा चतुर्मुखपादतलोर्ध्वभागस्य भगवतः प्रपतनान्निमित्ता त्प्रपदनशब्दवाच्यत्वं, तत्सादृश्यात्तु मनुष्याणां पादतलोर्ध्वभागस्य प्रपदशब्दाभिधेयत्वम्, तथा-(अ)ब्रह्मज्ञानस्य उद्गतिसाधनब्रह्मज्ञानसादृश्यात् गतिशब्दवाच्यत्वम्, तथा निवृत्तकर्मणोपि प्रवृत्तकर्मसादृश्यात् स्थितशब्दवाच्यत्वमित्यर्थः । तदुक्तम् – '**तस्मात्प्रपतनादेव प्रपदं**नामकीर्तितम् । चतुर्मुखाकारवतां नृणां पादतलोपरि। प्रपदाख्यां वर्ततेऽत इति' इति । अनेन — **मूले** संसारस्थिति हेतुत्वा' दित्यतः परम् 'तत्सदृशत्वाद्दे' ति शेषः ! 'उद्गतिहेतुत्वा' दित्यतः परमपि 'तत्सदृशत्वा' दिति शेषः सूचितः।

**पूर्वपक्षस्तु** — 'सप्तप्राणाः प्रभवन्ति तस्मात्, द्वादशवा एतेप्राणा' इतिश्रुती परस्परविरुद्धत्वादनिर्णायिके । न च — अन्यतरश्रुत्याऽन्यतरबाधो युक्तः — समबलत्वात् । न च – अभिमानिनां सप्तत्वात्प्राणानामपि सप्तत्वमेव अभिमान्यभिमन्यमानयोः समसंख्याकत्वनियमात्, ततश्च – सप्तत्वश्रुतिः सयुक्तिकत्वेन प्रबलेति वाच्यम् — 'द्वादशवा एते प्राणा' इतिश्रुतौ प्राणमासादीनामेकदेवत्याऽभिप्रायेण 'द्वादशमासा' इत्यभिहितत्वेन प्राणाभिमानिनां द्वादशत्वेन प्राणानामपि द्वादशत्वं वाच्यम् — अभिमान्यभिमन्यमानयोः समसंख्याकत्वस्य वक्तव्यत्वादितियुक्ते रत्रापि साम्यात् । न च — द्वादशप्राणेषु सप्तापि संभवन्तीति न श्रुत्योर्विरोध इति वाच्यम् — द्वादशत्वे कारणविशेषाभावे सप्तत्वोक्तेरयोगात् ! ततश्च – श्रुत्योरप्रामाण्यात् न श्रुतिसमन्वयेन ईश्वरस्य जगत्कारणत्वं युक्तमिति ।

**सिद्धान्तस्तु** — द्वादशैव प्राणाः, 'द्वादशवा एतेप्राणा' इतिश्रुतेः । न च — सप्तत्वश्रुतिविरोधः — द्वादशप्राणेषु सप्तत्वस्यापि संभवात् । न च – प्राणानां द्वादशत्वे कारणाभावेन सप्तत्वोक्तेरयोगः — श्रोत्रचक्षुः स्पर्शनरसनघ्राणमनोबुद्धीनां ज्ञानसाधनेन्द्रियत्वेन तद्विवक्षया सप्तत्वोक्तिसंभवात् । न च —

तेषां ज्ञानार्थत्वमसिद्धम् – 'गुहाशयां निहिताः सप्तसप्ते' ति वाक्यशेषसिद्धत्वात् । ननु – न सप्तप्राणेभ्यो ऽन्ये प्राणाःसन्ति तद्भावे ऽत्र सहपाठप्रसंगादिति चेत्, न – हस्तादीनां पञ्चानां स्थितिहेतुत्वलक्षणवैलक्षण्यमाश्रित्याऽसहपाठोपपत्तेः । ततश्च–श्रुत्योर्विरोधाभावेन प्रामाण्यात् श्रुतिसमन्वयेन विष्णो जेगत्कारणत्वनिश्चयो युक्त इति सिद्धम् ( अ०. ४ )

( ५ - अधिकरणम् )

## ॐ अणवश्च ॐ ( सू-८. )

**प्राणानामितिशेष इति** ॥ यद्यपि श्रुतौ 'दिवीवचक्षु' रितिश्रवणात् । चक्षुष इति वक्तव्यम् । तथापि — श्रुतिबलाच्चक्षुषो व्याप्तत्वे सिद्धे श्रोत्रादीनामपि दूरस्थार्थग्रहणसंभवात् चक्षुर्वदेव व्याप्तत्वं सिध्यतीत्यभिप्रेत्य 'प्राणाना' मिति शेष इत्युक्तम् । 'प्राणैर्ह्येतद्भवती' ति श्रुत्यंशमवतारयति – **कुतोऽत्रोक्ता इति** ॥ 'प्राणा' इत्यतःपरम् 'इत्यत आह, प्राणैर्ह्ये' तद्भवतीति ग्राह्यम् । ततश्चाऽयं श्रुत्यर्थः — अणुभिः पश्यति जानाति, अणुभिः कृणोति करोति, केतेऽणव इत्यत उक्तं – **प्राणावा अणव इति** ॥ कुतएतेऽणव इति प्राणाः प्रतिपत्तव्या इत्यत उक्तं — **प्राणैर्ह्येतद्भवतीति** ॥ हि = यस्मात्, एतत् = ज्ञानादिकार्यं, प्राणैर्भवति प्राणकार्यमितियावत् । ततश्च = प्राणकार्यकारित्वात् अणूनां प्राणत्वमिति गम्यत इति । पक्षैकदेशे साध्यसिद्धये हेतुमाह — **तथाश्रुतेरिति** ॥ पक्षमात्रे साध्यसिद्धये हेतुमाह — **किंचेति** ॥ चक्षुर्विषये प्रमाणान्तरत्वात् समुच्चायकश्चशब्दः प्रयुक्तः । **स्मरणादिति** ॥ अत्र स्मरणशब्देनाऽनुसंधानमुच्यते आदिशब्देन घ्राणम् । एतेन – अतीतपदार्थस्य संस्कारप्रत्यासत्त्या स्मरणवत् दूरस्थस्यापि स्मरणसंभवात् न तेन मनसोऽव्याप्तत्वसिद्धिरिति परास्तम् । हस्तपादादिप्रान्तभागावस्थितयुगपत्सुखदुःखानुसंधानेन मध्यमपरिमाणानाश्रयतया उभयवादिसंमतस्य मनसोऽणुत्वाभावसाधनस्य इहाभिमतत्वात् । **प्राप्यकारित्वादिति** ॥ ननु – इन्द्रियाणां प्राप्यकारित्वात् व्याप्तत्वसाधनमयुक्तम्, प्राप्यकारित्वस्य ऽव्याप्तिकारित्वात् । प्राप्येतिल्यपा 'स्नात्वाभुङ्क्ते' इत्युक्तेः स्नानस्य भोजनपूर्वकालिकोत्पत्तिप्रतीतिवत् प्राप्ते ज्ञानोत्पत्ति-

पूर्वकालिकोत्पत्तिप्रतीतेरिति चेत्, न — इन्द्रियाणां व्याप्तत्वेपि विषयजन्यकादाचित्कप्राप्तेरङ्गीकारात्। **अन्यथेति**॥ प्राप्त्यनङ्गीकारे संनिकर्षरूपव्यापारशून्यत्वात् ज्ञानकरणत्वं न स्यादित्यर्थः। सूत्रार्थंवदन् भाष्ये तदनुक्तौ कारणमाह — **अणव एवेत्यादिना**॥ 'सर्वंवाक्यं सावधारण' मिति न्यायमनुसृत्य एवेत्युक्तम्। चशब्दसमुच्चेयं वक्तुमाह — **नैतावतेति**॥ **यावतातेजसा व्याप्ताश्चेति**॥ यावतेति विभक्तिप्रतिरूपकमव्ययं यस्मादित्यर्थे। यस्मात् प्राणा अणवोपि तेजसा व्याप्ताः, अतो न व्याप्त्यभिधायकवलवच्छ्रुतियुक्तिविरोध इति सूत्रार्थः स्पष्टत्वात् भाष्यकृतो नोक्त इत्यर्थः। **विशेषश्रुतित्वादिति**॥ 'प्रकाशोऽयातत' इति प्रकाशद्वारा व्याप्तिरितिविस्पष्टवादित्वादित्यर्थः। पूर्वपक्षिणा दूरस्थश्रवणदर्शनादियुक्तिश्चेत्युक्ते सिद्धान्तिना दूरस्थश्रवणस्याखण्डनात् तदनुमतमेवेति ज्ञायते तच्चाऽयुक्तमिति शङ्कते— **स्यादेतदिति॥ श्रोत्रोत्पन्नेति**॥ शब्दज्ञाने प्रतीतदूरस्थशब्दविषयकत्वपरित्यागेन श्रोत्रोत्पन्नशब्दमात्रविषयकत्वस्वीकारे मूलभूतबाधकमानाभावादित्यर्थः। यद्यपि — 'वक्तृप्रयत्नप्रेरितो वायुः उरःप्रभृतिभिःस्थानैः संयुक्तः स्थानसंयुक्ताकाशे ध्वनिलक्षणं शब्द मुत्पादयति सच देशान्तरे प्रतिशब्दम्। यस्तु कर्णशष्कुल्यवच्छिन्नाकाशप्रदेशे समुत्पन्नः तद्गुणोध्वनिः तस्मिन् व्यज्यमानोवर्णः श्रोत्रेण गृह्यते। ध्वनेश्च आशुतरविनाशित्वेन व्यञ्जकाभवात् न सर्वदोपलब्धि' रिति तत्त्वनिर्णयटीकायामुक्तम्, तथापि — नायं सिद्धान्तः परेति मवलम्ब्यैव तदमिधानात्। शब्दपरंपरोत्पादे प्रमाणाभावाच्चेति न तद्विरोध इति बोध्यम्। दूरस्थशब्दविषयकत्वपरित्यागमूलं बाधकं शङ्कते — **अन्यथेति**॥ **गमनोपपत्तेरिति**॥ इदंसमाधानं न सार्वत्रिकम्, किंतु — वराहश्रोत्रविषयम्, तच्छ्रोत्रस्यैव रश्मिद्वारा गतिमत्त्वात्। तदन्यश्रोत्रस्यतु प्रभावच्छद्वागमनेनैव संनिकर्षः। 'यंवै स्वधिष्ण्योपगतं ब्रजादयः श्रुत्वा स्वधामाप्य मङ्ग मेनिरे' इति शब्दागमनस्योक्तत्वादिति बोध्यम्। **किमाकाशपदेनेति**॥ अव्याकृताकाशंवा, भूताकाशंवेति प्रश्नः। **पृथिव्यादीनामिति**॥ इन्द्रियाणां तैजसत्वेपि पञ्चीकरणात् त्रिवृत्करणाद्वा पृथिव्यादित्वमुपपद्यत इति भावः। **युक्तएवाभ्युपगम इति**॥ पूर्वपक्ष्युक्तस्य दूरस्थशब्दग्रहणस्याभ्युपगमो युक्त इत्यर्थः।

**पूर्वपक्षस्तु**— व्याप्ताः प्राणाः ' विवीवचक्षुरातत ' ( ऋ. स. १-२-७ ) मिति व्याप्तिश्रुतेः । दूरस्थवस्तुदर्शनश्रवणानुसंधानादियुक्तेश्च । न च – अणुत्वश्रुतिविरोध इति वाच्यम् – विष्णोर्व्याप्तत्वे दृष्टान्तत्वेन चक्षुर्व्याप्तेरुक्तत्वेन एतच्छ्रुतेः प्राबल्यात् ; अतः प्रबलव्याप्तिश्रुतिविरोधादणुत्वश्रुतिरप्रमाणमेवेति न जगत्कारणे ब्रह्मणि श्रुतिसमन्वयो युक्त इति ।

**सिद्धान्तस्तु** – अणव एव प्राणाः तथाश्रुतेः, न च – ' दिवीवचक्षुराततं ' मिति प्रबलश्रुतिविरोधादणुत्वाभावः — अणुत्वस्यापि ' तद्यथाह्यणुनक्षक्षस ' इति प्रवलश्रुतिसिद्धत्वात् ! न च — एवं सत्यनिर्णयः – ' तद्यथाह्यणुनश्चक्षस ' इति श्रुते र्विस्पष्टवादित्वेन व्याप्तिश्रुतितो ऽपि बलवत्वात् । न च — तदप्रामाण्यम् – ' तद्यथाह्यणुन ' इति श्रुत्यनुसारेण व्याप्तिश्रुते स्तेजसा व्याप्त्यर्थकत्वनिर्णयात् । अत एव युक्तिविरोधोपि परास्तः । अतः श्रुत्यनुरोधेन प्राणानामणुत्वसिद्धे र्युक्तोजगत्कारणे हरौ श्रुतिसमन्वय इति सिद्धम् (अ०.५)

--०--

( ६ - अधिकरणम् )

## ॐ श्रेष्ठश्च ॐ [ सू. ९. ]

**प्राणप्रकृत्या संनिधापित इति ॥** प्राणशब्देन मुख्यप्राणस्याप्युपस्थित्या बुद्धौ संन्निधापित इत्यर्थः, । ' मध्येस्थाते ' ति श्रुतिगतमध्ये इतिपदं व्याचष्टे – **मध्य इति ॥** प्राणिनां जननमरणान्तर्वर्तिमध्यावस्थाप्रेरणाय तस्यामवस्थायां स्थातेत्यर्थः ! एतेन — अस्य जननमरणशून्यत्वात् तदवस्थाया न मध्यावस्थात्वसंभव इति परास्तम् । **अन्यथापुनरुक्ति प्रसंग इति ॥** उपलक्षणमेतत् । आत्माश्रयप्रसंग इत्यपि द्रष्टव्यम् ।

**पूर्वपक्षस्तु** – मुख्यप्राणो नोत्पत्तिमान् ' नैष प्राण उदेती 'ति श्रुतेः । न च – मुख्यवाय्वनुत्पत्तिश्रुतिवत् इयमपि श्रुतिरन्यथा योजनीयेति वाच्यम् – तस्य उत्पत्तिमरणकारणत्वेन उत्पत्त्याद्ययोगयुक्तियुक्ताऽनादित्वश्रुतेः प्राबल्यात् । अतः प्रबलानादित्वश्रुतिविरोधादुत्पत्तिश्रुतिरप्रमाणमेव । अतो न जगत्कारणे परमेश्वरे श्रुतिसमन्वयोपपत्तिरिति ।

**सिद्धान्तस्तु** — यथा इतरे प्राणा उत्पद्यन्ते तथा श्रेष्ठोपि 'सौक्ष्म्येण ह्वाएषोऽवतिष्ठते स्थूलत्वेनोदेती' ति श्रुतेः । ननु — अनादित्वश्रुतिः सयुक्तिकत्वेन प्रबला, अतः तदनुसारेण उत्पत्ति श्रुतिरेव चेष्टा बाह्यवायुविषयतया व्याख्यातव्येति चेत्, न — 'सप्राणमसृजत' (प्र. प्र. ६ - ४) ति श्रुतौ प्राणस्योत्पत्तिमभिधाय प्राणाच्च चेष्टावाय्वोः पृथगुत्पत्यभिधानात्, 'श्रुतानिमात्राश्चेष्टाश्चे' ति स्मृतावपि तथैवाऽभिधानाच्च । न च — सर्वभूतोत्पत्तिकारणत्वेन उत्तमत्वा त्कथं तस्योत्पत्तिरिति वाच्यम् — महतोपि तस्य ततोप्यतिमहता विष्णुनाजन्मसंभवात् । तदुक्तम् —

'महत्वा न्महतां विष्णुः कर्ता प्राणस्यचैकराट् ।
किंनाम न सृजेदेष येन शक्त्येदमावृतम्' इति

अतः श्रुत्यविरोधेन मुख्यप्राणस्य जननसिद्धेः युक्तं जगत्कारणत्वं श्रुतिसमन्वयेन वासुदेवस्येतिसिद्धम् ॥ (अ० ६.)



(७ - अधिकरणम्)

## ॐ चक्षुरादिवत्तु तत्सह शिष्ट्यादिभ्यः ॐ (सू०११)

**अखिलजगच्चेष्टकत्वमाहात्म्यवत्त्वेनेति** ॥ तस्य मुख्यप्राणस्य अखिल जगच्चेष्टकत्वमाहात्म्यवत्त्वेन सिद्धा या ऽनन्याश्रयत्वयुक्तिः, तद्युक्ततया स्वातन्त्र्यश्रुतेः प्राबल्यादित्यर्थः । **जन्माऽसंप्रतिपत्तेरिति** ॥ ननु – यथास्वातन्त्र्यवादिनः जन्माऽसंप्रतिपन्नं तथा इतरस्यापि अखिलचेष्टकत्वमसंप्रतिपन्नमेवेति स्वातन्त्र्यश्रुतेरपि सयुक्तिकत्वाभावेन प्राबल्याभावात् न पारतन्त्र्यश्रुतिबाधकत्वमिति चेत्, न – सिद्धान्तिना प्राणस्य सकलजगच्चेष्टकत्वानङ्गीकारात् । **अतो नारायणस्येति** ॥ ननु – यथापारतन्त्र्यश्रुत्यप्रामाण्येपि प्राणस्वातन्त्र्यश्रुतिप्रामाण्यात्प्राणस्य स्वातन्त्र्यं तथा विष्णो जगत्कारणत्वश्रुतिप्रामाण्यसंभवात् भवेदेव विष्णोर्जगत्कारणत्वनिश्चयः, अन्यथा मुख्यप्राणस्वातन्त्र्यनिश्चयोपि नस्यादितिचेत्, न — एतच्छ्रुत्यप्रामाण्ये एतच्छ्रुतिसमन्वयद्वारा प्राणनियामकत्वसिध्यभावापत्त्या स्वाधीन प्राणकारणत्वं न स्यात्, ततश्च – सर्वकारणत्वमयुक्तं स्यादित्यत्र तात्पर्यात् ।

एवमेवंजातीयके सर्वत्र द्रष्टव्यम् । **कर्तृप्रयोज्यत्वाऽप्रयोज्यत्वेति** ।। यद्यपि–इन्द्रियाभिमानिनोदेवा जीवादुत्तमाः, तथापि – ईश्वराज्ञया जीवकार्यैकरणत्वस्य स्वीकृतत्वेन स्वेच्छया स्वीकृतसारथ्यस्य कृष्णस्य पार्थाधीनत्ववत् ईश्वराज्ञया जीवाधीनत्वं, मुख्यप्राणस्यतु ईश्वरनियोगाभावात् न कर्तृनियोज्यत्वमिति द्रष्टव्यम् ।

**पूर्वपक्षस्तु** – स्वतन्त्रएव मुख्यप्राणः 'न प्राणःकिंचिदाश्रितः' इति श्रुतेः । न च पारतन्त्र्यश्रुतिविरोधः – स्वातन्त्र्यसाधकाऽखिलजगच्चेष्टकत्वयुक्तियुक्तत्वेन स्वातन्त्र्यश्रुतेर्बलवत्त्वात् । न च – उत्पत्तिमत्त्वयुक्तियुक्तत्वेन पारतन्त्र्यश्रुतिरपि बलवतीति वाच्यम्— स्वातन्त्र्यवादिनो जन्माऽसंप्रतिपत्तेः । जन्मश्रुतीनामपि एतच्छ्रुतिविरोधेनाऽप्रामाण्यात् । प्रामाण्येपि लीलया विग्रहग्रहणसंभवेन तस्य पारतन्त्र्यसाधकत्वाभावेन पारतन्त्र्यश्रुतेः सयुक्तिकत्वाभावः । अतः प्रबलश्रुतिविरोधाऽपरिहारादप्रमाणं पारतन्त्र्यश्रुतिः । अतो न नारायणस्य श्रुतिसमन्वयेन जगत्कारणत्वसिद्धिरिति ।

**सिद्धान्तस्तु** – चक्षुरादिवत् मुख्यप्राणः परमात्माधीन एव 'सर्वेह्येवैतत्परमवतिष्ठते प्राणश्चप्राणाश्च प्राणिनश्चे' ति चक्षुरादिभिःसहैव तद्वशत्वाभिधानात् मुख्यप्राणो न स्वतन्त्रः, भगवत्प्रेरणामन्तरेणदर्शनाधिशक्तिविधुरत्वात् इतियुक्तेश्च । नचाऽसिद्धिः — नान्यदतोऽस्ती '( बृ०. ५.८.११ ) तिश्रुतिसिद्धत्वात् । यद्यपि प्राणःसर्वकर्ता, तथापि — ईश्वराधीनोऽभ्युपगन्तव्यः, अन्यथा प्राणएव न स्यात्, तथाहि – अस्ति तावत् विष्णुः परमेश्वरःस्वतन्त्रः, बहुप्रमाणसिद्धत्वात् न तस्याऽपलापः । न च – स्वतन्त्रद्वयं संभवति, जगदुदयाद्यसंभवापातात् । ततश्च भगवदन्य एव स्वतन्त्रो ऽपलपनीय इति प्राणस्य स्वातन्त्र्ये तदभावः प्राप्नोतीति । ननु – चक्षुरादिवदेवेश्वराधीनत्वं मुख्यप्राणस्य, तर्हि तस्य अवान्तरेश्वरत्वाद्यसंभवेन स्वातन्त्र्यश्रुतिर्व्यर्थास्यादिति चेत्, न — सर्वेषामीश्वराधीनत्वसाम्येपि इतरेषांकर्तृप्रयोज्यत्वात् मुख्यप्राणस्य तदभावेन विशेषात् अवान्तरेश्वरत्वोपपत्तेः। अतः श्रुत्यनुरोधेन मुख्यप्राणस्येशवशत्वसिद्धेः युक्तश्रुतिसमन्वयेन जगत्कारणत्वं हरेरिति सिद्धम् ( अ०. ७. )

(८ - अधिकरणम्)

ॐ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॐ (सू० १२)

**मुख्यप्राणस्यदासा, उत तत्स्वरूपाणीति सन्देह इति॥** यद्यपि—नायंपूर्वपक्षसिद्धान्तकोटिकः सन्देहः पूर्वपक्षिणा श्रुतिद्वयाऽप्रामाण्याङ्गीकारेण अन्यतरपक्षानङ्गीकारात्, सिद्धान्तिनाच पक्षद्वयाऽङ्गीकारात्, तथापि — सूत्रनिरस्यत्वा दयंसन्देहः प्रदर्शितः। **श्रुतिः दासत्वंस्वरूपत्वंच वक्तीतिशेष इति॥** श्रुतिरिति न प्रतीकधारणम्, दासत्वं स्वरूपत्वंच वक्तीति न शेषकथनम्, किंतु — हेतुकथनं ततश्च — श्रुतिर्दासत्वंचवक्तीतिहेतो यथायोग्यंशेषो द्रष्टव्य इत्यर्थः। **अत्रायं विवेकः**–'कौण्डिन्यश्रुति' रित्यनन्तरं 'दासत्वं वक्ती'तिशेषः, 'गौपवनश्रुति' रित्यनन्तरं 'स्वरूपत्वं वक्ती'तिशेष इति। पूर्वपक्षयितुं प्रस्तावयति — **प्राणादय इति॥** यदि प्राणादयो मुख्यप्राणस्य स्वरूपाणीतिब्रूषे, तर्हि — परोपि मुख्यप्राणस्य दासा इति ब्रूयादित्यर्थः। कुत एवं ब्रूयादित्यत आह— **सर्वे वा एत इति॥ मुख्यप्राणस्यस्वरूपाणिवा-एतानीति॥** अथ प्राणादयोदासा इति ब्रूषे तर्हि — परोपि स्वरूपाण्येवैतानि न दासा इति ब्रूयादित्यर्थः। 'यथा — सम्राडेवाधिकृतान् विनियुङ्क्ते, एतान् ग्रामानधितिष्ठस्व, एतान्ग्रामानधितिष्ठस्वेति; एव मेवप्राण इतरान्प्राणान् पृथक् पृथगेव सन्निधत्ते पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयंप्रतिष्ठते मध्येतुसमान एषह्येतद्धुतमन्नं समनयति तस्मादेताः सप्तार्चिषोभवन्ति हृदिह्येष आत्मा अत्रैतदेकशतं नाडीनां तासांशतम्, एकैकस्यां द्वासप्ततिं द्वासप्ततिं, प्रति शाखा नाडीसहस्राणि भवन्त्यासुव्यानश्चरति अथ एकयोर्ध्व उदानः पुण्येनपुण्यं लोकं नयति पापेनपापम्, उभाभ्यामेव मनुष्यलोकम्, आदित्योहवै बाह्यप्राण उदेति, एषह्येनं चाक्षुषं प्राणमनुगृह्णानः पृथिव्यां या देवता सैषा पुरुषस्यापान मवष्टभ्याऽन्तरे'(ष. प्र. ३-६)ति। **श्रुत्यर्थःसिद्धान्तरीत्योच्यते**—यथा लोके-सम्राट् सार्वभौमः, अधिकृतान्=नियोगिनः, विनियुङ्क्ते=कथं त्वमेतान् पाटलिपुत्रादीन्ग्रामान्, अधितिष्ठस्व = तदाधिपत्येतिष्ठेत्येकम्, अन्यंच त्वमेतान् कौशाम्बीप्रभृतीन्ग्रामान्, अधितिष्ठस्वेति। एवमेव एष मुख्यप्राणः, इतरान् =

भिन्नान्प्राणान् वायून्, पृथक्पृथगेव स्थानेषु, सन्निधत्ते = स्थापयति, स्वयंच तत्र क्रियाप्रवर्तकतया तत्र प्राणादिपञ्चरूपो ऽवतिष्ठत इत्याशयः। पृथक्पृथगित्युक्तंविव्रियते — पायूपस्थे इत्यादिना ॥ पायुश्च उपस्थश्च पायूपस्थं तत्र मलादेरपनयनात् अपानवायुमात्मनोरूपेणा ऽपानेना ऽधिष्ठितं संनिधत्ते इति संबन्धः। चक्षुश्च श्रोत्रंच चक्षुश्रोत्रम्, तस्मिन् मुखनासिकाभ्यां सह = मुखे नासिकायांचेति यावत्, प्राणः = स्वयंमुख्य एव, श्वासादिप्रणयनात् प्राणनाम्ना रूपेण प्राणवायुमधिष्ठाय, प्रतितिष्ठति, समानस्तु समाननामानं वायुमधिष्ठाय, मध्ये = प्राणापानयोः नाभिदेश इति यावत् प्रतितिष्ठति। सचैषः, यस्मात् एतद्धुक्तमन्नं, समं = यथाशरीरावयवं नयति, तेनसमाननामेतिशेषः। किंतेन तस्मादन्नस्यसमीकरणात्, एताःसप्तार्चिषः = सप्तज्ञानेन्द्रियवृत्तयः, भवन्ति। ननु — आत्मैवविषयसंसर्गेण ताननुभविष्यति किमिन्द्रियवृत्तिरिति, मैवम्- हृदिह्येष आत्मा जीवः स्वरूपेणवर्तते, अतः कथं तस्याणोर्विषयसंगतिःस्यादिति। व्यानस्यप्रवृत्तिं वक्तुमुच्यते — अत्रेत्यादि ॥ अत्र = शरीरे यदेतदेकशतम् = एकोत्तरं शतम्, नाडीनाम् = सिराणां भवति। तासांनाडीनां मध्ये एकैकस्यांनाडयां शतंशतं प्रतिशाखानाडयोभवन्ति, पुनस्तासां च प्रतिशाखानाडयोभवन्तीति वक्तव्यम्। एवंच — प्रतिशरीरं तासां प्रतिशाखानाडीनां सहस्राणि द्वासप्ततिंजानीयात्। किंचाऽतः आसुनाडीषु विविधनयनात् व्यानवायुमधिष्ठाय चरति। अथोदानस्तु उदानवायुमधिष्ठाय, एकयानाडया = सुषुम्नया, ऊर्ध्वगतिश्चरति। स च तत्र चरन्, पुण्येन = जीवकृतं पुण्यं निमित्तीकृत्य पुण्यं स्वर्गादिलोकं नयति, एवं ज्ञानेन मोक्षमिति च द्रष्टव्यम्। अत एव ऊर्ध्वनयनादुदानः, पापेन पापं = नरकादिकं दुःखबहुलं नयति। उभाभ्यां = समप्रधानाभ्यांपुण्यपापाभ्यां समदुःखसुखं मनुष्यलोकं नयतीति। मुख्यप्राणएवहि प्राणनामा बाह्यो बहिर्भवः, आदित्यः आदित्येस्थितः तन्नामानंदधत् उदेति, एष आदित्यस्थः प्राणएव, एनं = चाक्षुषं चक्षुषिभवं प्राणवायुमनुगृह्णानो वर्तते। बहिः पृथिव्यां या धारिका व्यानाख्यादेवता, सैषा पुरुषस्य अपानं देहेवर्तमानमपानवायुम्, अवष्टभ्य = धृत्वा, अन्तरा = शरीरान्तः वर्तत इति।

पूर्वपक्षयति — एवं चेति ॥ श्रुत्योः प्रामाण्यायप्राणानांदासत्वं मुख्य-

प्राणस्वरूपत्वंच वक्ष्यामीत्यत आह — **नन्वेति ॥** पूर्वपक्षफलमाह — **अत इति ॥ न केवलं प्राणादय इति ॥** न केवलमस्माभिः प्राणादयो दासा एवेत्युच्यते, नापि स्वरूपाण्येवेति, येन श्रुत्योरप्रामाण्यं स्यात्, किंनाम — दासाः स्वरूपाणिचेत्युच्यत इत्यर्थः । एतेन — पूर्वपक्षिणा दासा एवेत्यनभिहितत्वात् न केवलं दासा एवेत्यभिधानमयुक्तमिति परास्तम् । **न च वस्तुविकल्पप्रसंग इति ॥** दासत्वस्वामित्वे परस्परविरुद्धे चेदेकत्राभ्युपगम्येते, तर्हि — अविशेषाद्रूपादिकमपि वस्तु रसोपिस्यादिति न वाच्यमित्यर्थः । एतेन — प्राणादीनां स्वामिदासभावाङ्गीकारे प्राणादीनां विकल्पापादन मयुक्तम्, अपाद्यापादकयोरभेदादिष्टत्वाच्चेति निरस्तम् । **चेतसोव्याप्तिरिति ॥** बहुस्मरणकारणत्वमित्यर्थः । तदुक्तं शब्दनिर्णये — चित्तिर्बुद्धिरितिज्ञेयाचित्तंतु स्मृतिकारणम् । बहुस्मरणशक्तिस्तुचेतनेत्यभिधीयत ' इति । ननु — ' पायूपस्थेपान ' मिति सद्गुणत्वप्रतिपादकश्रुते र्मुख्यप्राणस्वरूपमात्रविषयत्वाङ्गीकारेणोपपत्तौ दासानामपि सद्गुणत्वाङ्गीकारो न युक्त इत्यत आह — **दासानुपक्रम्येति ॥** ' इतरान्प्राणान् पृथक् पृथगेव संनिधत्त ' इति दासानुपक्रम्य तदनन्तरमेव ' पायूपस्थेपान ' मित्यादिना सद्गुणत्वोक्तेरित्यर्थः ।

**पूर्वपक्षस्तु** — ' सर्वे वा एते मुख्यदासाः, प्राणस्यैव स्वरूपाणी ' ति श्रुतिद्वयमप्रमाणम् । अर्थानिर्णायकत्वात् । तथाहि — यद्येको मुख्यस्यैव स्वरूपाणीति श्रुतिं व्यक्तसद्गुणत्वयुक्तिंचावलम्ब्य प्राणादयो मुख्यप्राणस्वरूपाण्येवेति ब्रूयात्, तर्हि — परोऽपि ' सर्वेवा एत ' इति श्रुतिं तदाज्ञयाकर्मकारित्वयुक्तिं चावलंब्य, प्राणादयो दासा एवेति ब्रूयात् । अथ एतच्छ्रुतियुक्तयवष्टम्भेन आद्यो दासा एवेति ब्रूयात्, तर्हि — परोऽपि प्राचीनश्रुतियुक्तयवष्टम्भेन स्वरूपाण्येवेति ब्रूयात् । न च — अन्यतरश्रुतिबाधो युक्तः समबलत्वात् । एवं च अर्थानिर्णयेन श्रुतिद्वयाप्रामाण्यात्, न श्रुतिबलेन विष्णोर्जगत्कारणत्वसिद्धिरिति ।

**सिद्धान्तस्तु**—अर्थनिर्णयसंभवेन श्रुतिद्वयस्यापि प्रामाण्यम् । तथाहि — न ब्रूमो वयं प्राणादयो दासा एव, स्वरूपाण्येवेति वा, येन श्रुत्योः परस्परविरोधेनानिर्णयः स्यात्, किं नाम अथ ' पञ्चवृत्त्यैतत्प्रवर्तत ' इति श्रुत्यवष्टम्भेन मनोवत् द्विविधाः प्राणादयः स्वरूपाणि दासाश्चेति । ततश्च — श्रुत्योर्भिन्नविषयत्वेन

न विरोधः । न च — प्राणानां दासत्वे व्यक्तसद्गुणत्वविरोधः — दासानामपि तदङ्गीकारात् । न च — स्वामिभृत्यभावानुपपत्तिः — स्वामिनां ततोऽपि व्यक्तसद्गुणत्वेन स्वामिभृत्यभावोपपत्तेः । तदुक्तम् —

अशेषगुणपूर्णानि मुख्यरूपाणि पञ्च च ।
तद्दासाः पञ्चचान्येऽपि प्राणाद्याः सद्गुणैर्युताः इति

अतः श्रुत्यविरोधेन प्राणादिस्वरूपसिद्धेः युक्तो जगत्कारणे ब्रह्मणि श्रुतिसमन्वय इति सिद्धम् ( अ०, ८. )

( ९ - अधिकरणम् )

ॐ अणुश्च ॐ ( सू- १४. )

**मुख्यप्राणपरिमाणविषयेति ॥** मुख्यप्राणदेहपरिमाणविषयश्रुतिविरोधपरिहारादित्यर्थः। **व्याप्तोऽणुर्वेति॥** महत्परिमाणोऽणुपरिमाणोवेति सन्देह इत्यर्थः। **समस्कन्धगत इति ॥** पातालादिसप्तभूमिविवरगत इत्यर्थः । **व्याप्तश्चेति ॥** प्राणवाय्वोरेकत्वात् वायुदेहस्य व्याप्तत्वेन प्राणोऽपि व्याप्ततया श्रुत्योच्यत इति न तद्विरोध इत्यर्थः । एतेन वायोर्जीवत्वेन जीवाणुत्वस्य ' उत्क्रान्तिगत्यागतीनां ' ( ब्र० सू० २-३-२० ) मित्यत्र साधितत्वात् तस्य व्याप्तत्वकथनमयुक्तमिति परास्तम् । एतेनैव देहाद्बहिर्वर्तमानेनेत्युक्तया व्याप्त्यभावस्यार्थादुक्तत्वात् पुनर्व्याप्त्यभिधानं विरुद्धमिति परास्तम्, देहमहत्वस्यैव विवक्षितत्वात् ॥

**पूर्वपक्षस्तु** — व्याप्तएवायं प्राणः, 'प्राण एवाधस्ता' दिति व्याप्तिश्रुतेः, न चाणुत्वश्रुतिविरोधः — सकलजगद्धारकत्वयुक्तियुक्तत्वेन व्याप्तिश्रुतेः प्राबल्यात् । अतः प्रबलश्रुतिविरोधादप्रमाणं अणुत्वश्रुतिरिति न श्रुतिसमन्वयेन हरेर्जगत्कारणत्वसिद्धिरिति ॥

**सिद्धान्तस्तु** — अणुरेव मुख्यप्राणः ' स वा एष प्राणोऽणु ' रिति श्रुतेः । न च — व्याप्तिश्रुतिविरोधः — तस्या बहिर्देहाद्वर्तमानवायुरूपविषयत्वात् । ' कुत एतदिति चेत् ' अन्तर्वाणुर्बहिर्महान् ' इति विशेषश्रुतेः, नाडीसंचारित्वयुक्तेश्च । अतः श्रुत्यविरोधेन मुख्यप्राणस्याऽणुत्वसिद्धेः युक्तो जगत्कारणे ब्रह्मणि श्रुतिसमन्वय इति सिद्धम् ( अ०, ९. )

( १० - अधिकरणम् )

ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ (सू०१५)

**संदेहवीजं श्रुतिविगानमिति** ॥ ननु – नेदं श्रुतिविगानम् , इन्द्रियाणामुभयकरणत्वसंभवात् । यथाहि देवदत्तायाः पुत्रो देवदत्तस्यापि पुत्रो भवति, एवम् इन्द्रियाणि ईश्वरकरणान्यपि जीवकरणाणि भविष्यन्ति इति चेत् , उच्यते — भवत्येवैतच्छ्रुतिविगानम् । तथाहि — ' जीवस्य करणान्याहु ' रिति श्रुतिस्तावत् जीवस्य करणस्वातन्त्र्यं वक्ति, ' तद्वशगा ' इति तद्वशत्वाभिधानात् । ' ब्रह्मणो वा एतानि करणानी ' ति श्रुतिस्तु ब्रह्मण एव करणस्वातन्त्र्यं वक्ति, एतैः कारयतीत्यभिधानात् । न चोभयोः स्वातन्त्र्यं संभवतीति । **चक्षुरादिभिः करणैरिति** ॥ स्वसंबन्धिभिरिति शेषः । **न पुनर्जीवेति** ॥ ईश्वराज्ञया जीवप्रयोज्यान्यपि न जीवसंबन्धीनीत्यर्थः । कुतो नेन्द्रियाणि जीवसंबन्धीनीत्यतो लाघवाय ' तदामनना ' दिति वक्तव्ये ' ज्योतिराद्यधिष्ठानं ' त्विति वदता सूत्रकृता सूचितां युक्तिमाह – **ब्रह्मण एवेति** ॥ चक्षुरादेर्ब्रह्मप्रयोज्यत्वस्य यथेष्टविनियोज्यत्वस्योपपत्ते र्ब्रह्मसंबन्धीनि चक्षुरादीनि न तु जीवसंबन्धीनि, चक्षुरादीनां देवत्वेन यथेष्टविनियोगानर्हत्वात् । तदेव हि स्वं नाम भवति, यद्यथेष्टविनियोगार्हमिति भावः ॥

ननु भूतानामाकाशप्रभृतित्वेन आकाशाद्यधिष्ठानमिति वक्तव्यमित्यत आह — **चक्षुरादिवदिति** ॥ ' कथं तर्हि जीवकरणत्वश्रुति ' रितिभाष्यं शेषपूरणेन व्याख्याति—(सू० १६) **यदिप्राणानामिति** ॥ का कथंतेति पृच्छति— **किंत्विति** ॥ **ब्रह्मकरणत्वस्येति** ॥ ब्रह्मकरणत्वमबाधित्वा न प्रामाण्यं भजत इति भावः । एतेन – यदिब्रह्मकरणमित्युक्ततर्कस्यविपर्ययपर्यवसानेनैव पूर्णत्वात् ' किंत्वितिवाक्यं व्यर्थमिति परास्तम् । तदभिप्रायकथनार्थमेवाऽस्य वाक्यस्यप्रवृत्तत्वात् । ( सू० १७ ) **अनादीति** ॥ श्रौतोऽयं व्यवहारः अनादिसंबन्धनिबन्धन इत्येतत् कुत इत्यत आहेति संबन्धः। **जीवस्यप्रकृतत्वादिति**। प्राणवच्छब्देन प्राधान्येन जीवस्यप्रकृतत्वात् तत्परामर्शस्यैवयुक्तत्वेन जीवस्यनित्यत्वादिति सूत्रं व्याख्येयमिति भावः । एतेन — ' प्राणवते ' ति विशिष्टस्य

प्रकृतत्वेन जीवमात्रपरामर्शोऽभिधानमयुक्तमिति परास्तम् । **तच्छब्देनेति ॥** सत्यं तच्छदेन प्रधानतया प्रकृतस्य परामर्शः, तथापि — करणसंबन्धस्य नित्यत्वाभिधानमुपपद्यते जीवस्य नित्यत्वान्वये चशब्देन करणतत्संबन्धाभ्यां समुच्चयाभिधानात् । प्राणवच्छब्देन कथमनयोः संनिधापितत्वमित्यत आह — **नहीति ॥** भवतीत्यतः प्राक् 'प्राणवच्छब्दोबोध्य' इति शेषः । प्राणवान् जीवः । ततश्चैवं योजना – जविःप्राणवान् , तद्वत्वंच विना प्राणवच्छब्दबोध्यो़नं भवतीतिहि प्रसिद्धमिति । ततश्च प्राणवच्छब्देन जीवबोधे तयोरप्युपस्थितिर परिहार्यैवेति भावः । संबन्धनित्यत्वस्यैवोपयुक्तत्वेन तदेववाच्यं किं संबन्धिनित्यत्वाभिधानेनेत्यत आह – **संबन्धिनोरभाव इति ॥**

**पूर्वपक्षस्तु** – इन्द्रियाणि जीवकरणानि 'जीवस्यकरणान्याहु' रिति जीवसंबन्धित्वश्रुतेः । न च– श्रुत्यन्तरविरोधः–जीववशत्वेन प्राणानां दृश्यमानत्वयुक्तियुक्तत्वेन जीवकरणत्वश्रुतेः प्राबल्यात् ; ततश्च एतच्छ्रुतिविरोधेन ब्रह्मकरणत्वश्रुतेरप्रामाण्यात् न श्रुतिसमन्वयेन जगत्कारणत्वसिद्धिरिति ॥

**सिद्धान्तस्तु** – ब्रह्मसंबन्धीन्येव करणानि जीवस्यज्ञानादिसाधनानि न पुनर्जीवकरणानि जीवापेक्षया तेषामुत्तमत्वेन जीवप्रयोज्यत्वाऽसंभवात् । तदेव हि स्वं नाम भवति यद्यथेष्टविनियोगार्हम् । न च — तत एव न ब्रह्मसंबन्धीन्यपीति वाच्यम् — एतन्मूलतेजः प्रभृतिभूतस्यैव ब्रह्मनियम्यत्वेन सुतरामेतेषां तन्नियम्यत्वात् । 'यश्चक्षुषितिष्ठ' ( बृ० ५—७—१८ ) त्यादि श्रुतेश्च । यदिकरणानि जीवसंबन्धीनि तर्हि तत्करणत्वाभिधायकश्रुतेरप्रामाण्य प्रसंग इति चेत्, तच्छ्रुतेः 'ब्रह्म स्वकरणैरेव दर्शनादिकारयतीति याचितकुठारवत् ईषत्संबन्धित्वमस्तीति तत्परत्वेन प्रामाण्योपपत्तेः ; जीवकरणसंबन्धस्याऽनादिनित्यत्वात् तदभिप्रायेणापि प्रवृत्तायाः प्रामाण्योपपत्तेः । दृश्यतेखलुलोके परकीये बहुकालसंबन्धिनि तदीयत्वोपचारः । ननु — यदीन्द्रियाणि ब्रह्मकरणानि, तर्हि – मुख्यप्राणस्यापि तत्समानमेवेतिप्रागुक्तं तस्मात्प्राण एवाऽकरण इति मुख्यप्राणकरणत्वमयुक्तं स्यादिति चेत्, न – ईश्वरःचक्षुरादीन् किंचिज्जीवेच्छया प्रेरयति मुख्यप्राणंतु स्वेच्छयैवेतिविशेष सद्भावेन तदुपपत्तेः। तदुक्तम्–

'करणैः कारणं ब्रह्म पुरुषापेक्षयाखिलम् ।
श्रोत्रादिभिः कारयति करणानीत्यतोविदुः ॥
नजीवापेक्षया मुख्यं कारयेत्परमेश्वरः ।
केवलात्मेच्छया तस्मा न्मुख्यत्वं तस्यनिश्चित ' मिति ।

तस्माच्छ्रुत्यविरोधेन प्राणानां ब्रह्मकरणत्वसिद्धेः युक्तो जगत्कारणेहरौ श्रुतिसमन्वय इति सिद्धम् ( अ०. १० )

---

( ११ - अधिकरणम् )

## ॐ त इन्द्रियाणि तद्व्यपदेशादन्यत्रश्रेष्ठात् ॐ (सू०. १८)

**अन्याश्रुतिरिति** ॥ सत्यं 'द्वादशवेन्द्रियाण्याहु' रिति श्रुतिःद्वादशानामेवेन्द्रियत्वं वक्ति, तथापि — न विप्रतिपत्तिः । द्वादशत्वसंख्यापूरकत्वस्य 'मनोबुद्धीतुद्वादशे' ति व्यासज्यवृत्तिताभिधानेन प्रागुक्तत्रयोदशानामन्यतमस्याऽपरित्यागादिति चेत्, स्यादेतदेवम् 'यदिमनोबुद्धी' त्विति श्रुत्या द्वादशत्वम्, 'इतिहासपुराणःपञ्चमोवेद' इत्यत्र इतिहासपुराणयोः पञ्चमत्वमिव मनोबुध्द्यो र्व्यासज्यवर्तत इत्युक्तं स्यात् नचैवं किंनाम प्रत्येकं द्वादशत्वं तत्रतत्र विश्रान्तमुच्यते 'द्वादशे 'इति द्विवचनश्रवणात् । अन्यथा—पञ्चम इति वत् अत्रापि एकवचनमेवस्यात् । तथा — 'मनोबुद्धी 'इत्यत्रसमाहारः स्यात् ! ततश्च मुख्यप्राणस्य परित्याग एवेति भवति श्रुत्योर्विरोध इति । **चक्षुरादिष्वप्येवमिति**॥ परित्यागे बाधकमूह्यमित्यर्थः । उभयोर्द्वादशत्वमयुक्तमित्यतो मनस एकादशत्वे बुद्धेर्द्वादशीत्वं, बुद्धेरेकादशीत्वे मनसो द्वादशत्वमिति व्यवस्थया तदूह्यमिति भावेनाह — **द्वादशे एकादशद्वादशे इति** ॥ एकादशंच एकादशीच एकादशे 'नपुंसक मनपुंसके '(पा० सू० १-२-६९ ) त्येकशेषः । तथा — द्वादशंच द्वादशी च द्वादशे । ततःकर्मधारयः एकादशेच ते द्वादशेच एकादशद्वादशे इति । ततोमनोबुध्द्योः प्रत्येक मेकादशत्वं द्वादशत्वंच लभ्यते । यदिमनस एकादशत्वमेव बुद्धेर्द्वादशीत्वमेवेति टीकाशयःस्यात् तर्हि — एकादशद्वादशावित्येव ब्रूयात्, नचैवमुक्तवान् तेनोक्त एवाशयोबोध्यः । एनेन— एकादशद्वादशशब्दयो-

र्विरूपत्वात् श्रुतौ एकशेषोऽनुपपन्न इति परास्तम् । मनोबुध्योरुभयोरपि द्वादशत्वस्येहविवक्षितत्वे द्वादशंच द्वादशीचेतिस्थिते 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यां' मित्यनेन एकशेषाङ्गीकारात् । (सू० २०)। **ईश्वरवशत्वसाम्यादिति॥** कर्तातावदीश्वरो जीवज्ञानादौ, प्राणस्तु ईश्वरप्रयोज्यः सन् ज्ञानादौ कारणम्, इदमेव हि करणानां करणत्वं यत्कर्तृप्रयोज्यत्वेसतिकारकत्वम् । तच्चमुख्यप्राणस्याऽस्तीति इन्द्रियत्वमपरिहार्यं ज्ञानादिकरणस्येन्द्रियत्वात् । अन्यथा — चक्षुषोपि न स्यादिति भावः । एतेन — ईशवशत्वस्य घटादौ भावेपि इन्द्रियत्वाभावात् ईशवशत्वं नेन्द्रियत्वसाधकमिति परास्तम् ।

**पूर्वपक्षस्तु**— सर्वेऽपि प्राणा इन्द्रियाणि 'प्राणावा इन्द्रियाणि' इति श्रुतेः । सामान्यश्रुतेः सर्वगामित्वात् । न च — 'द्वादशैवेन्द्रियाणी' ति विशेष श्रुत्या बाधः – इदं द्रवणयुक्तियुक्तत्वेन सामान्यश्रुतेर्बलवत्त्वात् । दुष्करंच द्वादशानामेवेन्द्रियत्वग्रहणम्, अन्यतमनिवारणस्या ऽशक्यत्वात् । नियामकंविना कस्यचित्परित्यागे अपरस्यापि तत्स्यादिति द्वादशत्वहानिः। अतोयुक्तियुक्ताऽऽद्यश्रुतिविरोधात् द्वितीयाश्रुतिरप्रमाणमेवेति न जगत्कारणे ब्रह्मणि श्रुतिसमन्वयो युक्त इति।

**सिद्धान्तस्तु** — न सर्वेप्राणा इन्द्रियाणि, किन्तु मुख्यप्राणमृते द्वादशैव 'द्वादशैवेन्द्रियाण्याहुः प्राणोमुख्यस्त्वनिन्द्रिय'मिति विशेषश्रुतेः । नच इदंद्रवणवतः कथमनिन्द्रियत्व मितिवाच्यम्— तस्यद्रवतांस्वामित्वेन इदंद्रवणाभावात् । तदुक्तम्— 'विषयद्रवणात्तेषामिन्द्रियत्वमुदाहृतम् । तेषांनियामकः प्राणः स्थितएवाखिलप्रभु' रिति । इदंद्रवणाभावेपि चक्षुरादिवत् कर्तृत्वप्रयोज्यत्वसद्भावादिन्द्रियत्वमवर्जनीय मितिचेत्, न–' स्थितएवहि इदं मुख्यप्राणः करोति कारयती 'ति ईशसाम्याऽभिधानेन तस्यकर्तृप्रयोज्यत्वाभावात् । ननु–ईश्वरोहि कर्ता, तत्प्रयोज्यत्वंच इन्द्रियाणामिव प्राणस्यवक्तव्यम् । ततश्च—इन्द्रियत्वमवर्जनीयमितिचेत्, न—ईशाधीनत्वेपि चक्षुरादिवत् जीवाधीनत्वाभावात् । अतःश्रुत्यविरोधेन मुख्यप्राणस्याऽनिन्द्रियत्वसिद्धेः युक्तो जगत्कारणे विष्णौ श्रुतिसमन्वयइतिसिद्धम् । (अ० ११)

( १२ - अधिकरणम् )

## ॐ संज्ञामूर्तिक्लृप्तिस्तुत्रिवृत्कुर्वत उपदेशात् ॐ [सू० २१]

**शरीरमिति ॥** यद्यप्यत्र रूपनामनी विषय इतिवक्तव्यम्, तथापि– संगति सूचनार्थं शरीरंविषय इत्युक्तमिति बोध्यम् । ननु–नामरूपकर्तृत्वस्य परमशब्दार्थ-त्वाभावात् 'अथ कस्मादुच्यते परमइतिप्रश्नपूर्वकं नामरूपकर्तृत्वेन परमशब्द-निर्वचन मयुक्तमित्यतआह — **नामरूपकर्तृत्वमिति ॥** अनेन कस्माद्वेतोर्विष्णुः परमउच्यतइति परमत्वे हेतुप्रश्ने हि–यस्मात्, उत्तमादेव नामरूपे व्याक्रियेते इति व्याप्तिमुक्त्वा तस्मादेनं नामरूपकर्तारंपरममाहुरिति हेतूक्तिपूर्वकं साध्योपसंहारः क्रियतइति श्रुतियोजना सूचिताभवति । 'अथकस्मादुच्यतेब्रह्मे' त्यत्रापि हेतुप्रश्ने पूर्ववत् 'बृहत्वा'दित्यनेन हेतुरुच्यत इति भ्रान्तिनिरासायाह–**ब्रह्मशब्दास्त्विति॥** भाष्ये – 'अथकस्मादुच्यतेब्रह्मेती' ति वाक्यशेषोद्धारस्तु परमस्य विष्णुत्वज्ञाप-नार्थः । **श्रुतिर्विरिञ्चस्यविष्णोश्चेति॥** श्रुतिरिति न प्रतीकधारणम्, विरिञ्चस्य विष्णोश्च नामरूपकर्तृत्वं वक्तीति न शेषः, किंतु हेतुकथनम् । ततश्च श्रुतिः विरि ञ्चस्य विष्णोश्च नामरूपकर्तृत्वं वक्तीतिहेतोः क्रमेणशेषोद्रष्टव्यइत्यर्थः । **अत्रायं-विवेकः** – आद्याश्रुतिः विरञ्चस्य नामरूपकर्तृत्वं वक्तीतिहेतोः 'गौपवनश्रुति' रित्यनन्तरं विरिञ्चस्य नामरूपकर्तृत्वं वक्तीतिशेषः, द्वितीयाश्रुतिः विष्णोर्नामरूप-कर्तृत्वंवक्तीतिहेतोः आग्निवेश्यश्रुतिरित्यनन्तरं विष्णोर्नामरूपकर्तृत्वं वक्तीतिशेष इति । **विरिञ्चत्वयुक्तियुक्तत्वादिति ॥** विरिञ्चशब्दाभिधेयत्वयुक्तियुक्तत्वादि-त्यर्थः । **युक्तियुक्ताभवतीति ॥** ननु – 'विरिञ्च' इतिगौपवनश्रुतिः विरिञ्चस्य नामरूपकर्तृत्वंवक्ति, 'अथकस्मादुच्यतपरम' इतिआग्निवेश्यश्रुतिर्विष्णोर्वक्तीति यथा नामरूपकर्तृत्वे सन्देहः, तथा त्रिवृत्कर्तृत्वेपि' इति कथंतस्यहेतुत्वाभिधान-मितिचेत्, न – त्रिवृत्करणं प्रथमभावि, तत्साध्ये नामरूपे गौपवनश्रुतौच प्रथम भावित्रिवृत्करणंपरित्यज्य नामरूपयोरेव ग्रहणेन त्रिवृत्करणस्य विरिञ्चसाध्यत्वानभि मत्या तत्र संदेहाभावात् ।

**पूर्वपक्षस्तु** — विरिञ्चएवनामरूपकर्ता तथाश्रुतेः । नच – इतरश्रुति-विरोधइतिवाच्यम् – विरिञ्चत्वयुक्तियुक्तत्वेनाऽस्याःश्रुतेः प्राबल्यात् । नच –

इयं श्रुतिद्वारकारणत्वपरा, मुख्याऽसंभवेऽमुख्यस्यग्राह्यत्वात् । प्रकृतेचमुख्यार्थसंभवात् । अतः सयुक्तिकैतच्छ्रुतिविरोधेन इतराश्रुतिरप्रमाणमिति ।

**सिद्धान्तस्तु**–परमात्मैव नामरूपकर्ता 'सर्वाणिरूपाणी' ति श्रुतेः, नच — विरिञ्चस्यापि कर्तृत्वे श्रुतिरस्तीतिवाच्यम्– नामरूपकरणस्य त्रिवृत्करणसापेक्षत्वा त्तत्कर्तुरेव मुख्यतो नामरूपकर्तृत्वस्य वक्तव्यत्वे विरिञ्चश्रुते द्वारकारणत्वमात्रार्थत्वात् । अतएव विरञ्चत्वयुक्तिविरोधोपि परास्तः । तदुक्तं — 'ब्रह्माद्यास्तदवान्तरा' इति । अतः श्रुत्यविरोधेन शरीरस्य हरिकर्तृकत्वसिद्धेः युक्तं तस्यश्रुतिसमन्वयेन जगत्कारणत्वमितिसिद्धम् । (अ० १२)

—०००—

## ( १३ - अधिकरणम् )

## ॐ मांसादिभौमंयथाशब्दमितरयोश्च ॐ (सू०-२२)

**किमाप्यइति** ॥ किमाप्यः, उतभूतत्रयात्मकः ; तथा—किंपार्थिवः, उत भूतत्रयात्मकः ; तथा—किं तैजसः, उतभूतत्रयात्मकइतित्रयःसंदेहा बुध्याविवेकेनद्रष्टव्याः । **आप्यमितितावदिति** ॥ पूर्वपक्षान्तरंवक्ष्यामीतिभावेन तावच्छब्दः प्रयुक्तः । **नचश्रुत्यन्तरेति** ॥ 'इमास्तिस्त्रोदेवता' (छा.६) इति श्रुत्यन्तरविरोधइतिनेत्यर्थः। ननु–तर्पकत्वयुक्ति र्नभूतत्रयात्मकत्वश्रुतिंविरुणद्धि । भूतत्रयात्मकत्वेपि अब्जन्यत्वेनतर्पकत्वसंभवादित्यतआह — **अपांहीति** ॥ अपांतर्पकत्वमसाधारण धर्मइति हि प्रसिद्धमित्यर्थः। केवलाब्जन्यत्वे मांसस्याप्त्वापत्त्या स्मार्ततर्पकत्वमुपपन्नं भवेत् । भूतत्रयोपादानकत्वेतु अप्त्वाभावात् तर्पकत्वं न स्यात् । अतएव 'अपांतर्पकत्वंधर्म' इत्युक्तम् । अन्यथा आप्यानामित्यवक्ष्यत् । यद्यपि — अस्मिन्पक्षे 'पृथिवीशरीरम्, सोऽग्नेर्देवयोन्या' इतिश्रुतिभ्यां विरोधोऽस्ति, तथापितदाच्छादनेनाऽयंपूर्वपक्षोद्रष्टव्यः । एवमितरावपिपूर्वपक्षौद्रष्टव्यौ । पूर्वपक्षान्तरमाह — **पार्थिवमितीति** ॥ पूर्वपक्षान्तरमाह—**तैजसमितीति** ॥ पूर्वपक्षत्रयव्यावर्त्यंयुगपदाह—**सर्वथाश्रुतोपीति** ॥ 'आप्यमेव शरीर' मितियुक्तं, श्रुतोपि चतुर्थः पक्षः=भूतत्रयात्मकमितिपक्षो न युक्तइति एकोमन्यते । एवमन्यावपीतिभावः। कुतो न युक्तइत्यतः पूर्वपक्षित्रयाभिमतांयुक्तिं युगपदाह — **शरीरइति** ॥ शरीरस्य

मिश्रतायामभ्युपेतायाम्, 'आपःशरीर' मिति विशेषोक्ति र्नस्यादित्येकः पूर्वपक्षी, अपरः 'पृथिवीशरीर' मितिविशेषोक्ति र्नस्यादिति, अन्यस्तु 'सोऽग्नेर्देवयोन्या' इति विशेषोक्ति र्न स्यादिति मन्यत इति विवेकः। **कासांचिच्छ्रुतीनामिति** ॥ त्र्यात्मकत्वाभिधायिनीनामित्यर्थः। **अयंचैकपक्षेति** ॥ 'मांसाद्येवभौमं नतु सर्वशरीर' मिति भाष्यकारीयःप्रतिषेधः शरीराणां केवलपार्थिवत्वपक्षस्य शरीराणां केवलाप्यत्वतैजसत्वपक्षावपि स्वयमेव प्रतिषेध्यावित्यर्थः। (सू०. २३) **कथं तर्हि विशेषोक्तिरिति** ॥ शरीरे भूतानांमिश्रतायामभ्युपेतायाम् 'आपः शरीर' मित्यादिविशेषोक्तिः कथमित्युक्तमाशङ्क्येत्यर्थः। **तद्भावेचेति** ॥ शरीरे भूतत्रयमध्ये कस्यचिद्विशेषसंयोगाङ्गीकारे तद्भूतजन्यत्वव्यपदेश एव युक्तः स्यात्, नतु— भूतान्तरजन्यत्वव्यपदेशः। न हि — अपांभूयस्त्वे निर्निबन्धना पार्थिवत्वोक्तिः, तथा पृथिव्याभूयस्त्वे निर्निबन्धना अबादित्वोक्तिश्च युज्यत इत्यर्थः। भाष्ये — **इति सामान्यतोज्ञेयमिति** ॥ पार्थिवानां शरीराणामित्यादिकं सामान्यतो ज्ञेयम्, पार्थिवशरीरेष्वपि कुचित्तेजस आधिक्यम्, कुचिद्वायोराधिक्यम्, एवमाप्यादिष्वपि अवान्तरभेदो द्रष्टव्य इत्यर्थः। भाष्ये— **अध्यायान्त इति** ॥ यत्नोक्तार्थेविचारः विचिकित्सा सज्जेत प्रसक्ताभवति, तत्र पूर्वोक्तस्याऽवधारणे अवधारणार्थं, वेदेवा, वैदिकेपि वा, अध्यायान्ते द्विरुक्तिः स्यादित्यर्थः। द्विरुक्तिमात्रेण कथं संशयनिवृत्तिरित्यत आह — **अनुक्तानामिति** ॥ यतो द्विरुक्त्या इतरान् मार्गान् विनिन्द्य अनुक्तानां प्रमाणानां स्वीकारःकृतो भवेत्। अतः संशयनिवृत्तिः। प्रयोजनान्तरमाह — **संपूर्णेति** ॥ द्विरुक्त्या शास्त्रस्य संपूर्णफलतोक्ता भवतीत्यर्थः।

**पूर्वपक्षस्तु**—आप्यमेवशरीरम् 'अद्भ्योहीदमापद्यत' इति श्रुतेः। शरीरावयवेषु मांसादिषु अब्धर्मतर्पकत्वदर्शनाच्च, नतु भूतत्रयात्मकम्, तथात्वे 'आपः शरीर' मिति विशेषोक्त्ययोगात्। अथवा पार्थिवं, पृथिवीशरीरमप्येतीति पृथिव्या लयाभिधानात्, काठिन्यादियुक्तेश्च, नतु भूतत्रयात्मकं, तथात्वे 'पृथिवीशरीर' (बृ०. ५-२-१३) मिति विशेषोक्त्ययोगात्। अथवा तैजसं 'सोऽग्नेर्देवयोन्या' (ऐ० व० ७-४) इतिश्रुतेः, औष्ण्यदर्शनाच्च, नतु भूतत्रयात्मकं

तथात्वे 'हिरण्यशरीर' इति विशेषोक्तययोगप्रसंगात् । अतो विरोधेन 'इमास्तिस्रोदेवता' इति श्रुते रप्रामाण्यात् न श्रुतिसमन्वयेन विष्णो जेगत्कारणत्वमिति ।

**सिद्धान्तस्तु** — यत् शरीरे कठिनं मांसादि तदेव पार्थिवम्, यच्च शोणितादि तदेवाऽऽप्यम्, यच्च मज्जादि, तदेव तैजसं, शरीरं तु त्र्यात्मकं 'यत्कठिनं सापृथिवी, यत् द्रवंतदापो, यदुष्णं तत्तेजः (गर्भ.३) इति श्रुतेः। ननु— कथं मांसस्य पार्थिवत्वमुच्यते, 'आपोवावमांस' मिति श्रुतिविरोधादिति चेत्, न — मांसस्यापि केवलपार्थिवत्वानङ्गीकारात्, श्रुत्यनुसारेण अबादिकार्यत्वस्याप्यभिमतत्वात् । यदि शरीरं नैकभूतकार्यं कथं तर्हि विशेषोक्तिरिति चेत्, न— तत्तच्छरीराणां तत्तद्भूतसंयोगविशेषसद्भावेन वैशेष्यात्तत्तद्व्यपदेशोपपत्तेः । तदुक्तम् — 'पार्थिवानांशरीराणा मर्धेनपृथिवीस्मृता । इतरेऽर्धेत्रिभागिन्य आपस्तेजस्तु भागतः' इति । अतः श्रुत्यविरोधेन शरीरस्य पाञ्चभौतिकत्वसिद्धेः युक्तो जगत्कारणे नारायणे श्रुतिसमन्वयः सिद्ध इति (अ०. १३.)

रामचन्द्रस्य सत्कस्य सत्यनाथहृदम्बरे ।
दिवानिशं शोभमाना शुद्धा ऽभिनवचन्द्रिका ॥ १ ॥
दूरीचकाराऽतिवेगात् हृद्गुहान्तर्गतं तमः ।
टीकाभावं ज्ञापयन्ती द्वितीयाध्यायसंगता ॥ २ ॥

इति श्रीमत्सत्यनिधितीर्थ श्रीचरणाराधक श्रीमत्सत्यनाथयति
विरचितायां तत्वप्रकाशिकाभिनवचन्द्रिकायां
द्वितीयाध्यायस्य चतुर्थः पादः
द्वितीयाध्यायः समाप्तः
श्रीकृष्णार्पणमस्तु

श्री.

# अथ श्रीमत्तत्वप्रकाशिकाव्याख्याऽभिनवचन्द्रिकायां

## तृतीयाऽध्यायस्य प्रथमः पादः



श्री वे द व्या सा य न मः

वैराग्यज्ञानसिध्यर्थं रामं दिग्विजये रतम् ।
नमामि परया भक्त्या पूर्णबोधेष्टदैवतम् ॥ १ ॥
नौमि सत्यनिधिं यस्मा ल्लेभिरे बहवः श्रियम् ।
कोपाऽभावात्कोपि शापं न लेभे तं दयानिधिम् ॥ २ ॥



[ १ – अधिकरणम्. ]

### ॐ तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॐ ( सू. १ )

**एतदध्यायप्रतिपाद्यमिति ॥** 'ब्रह्मस्वरूपनिरूपणेऽनवशेषात्किमध्यायशेषेणेत्यत'इतिवर्तते । ततश्चैवयोजना – पूर्वाऽध्यायाभ्यां ब्रह्मस्वरूपस्य निरूपितत्वेन ब्रह्मस्वरूपनिरूपणे ऽनवशेषात् अध्यायसंज्ञकेन किमेनेन शास्त्रशेषेणेत्यत एतदध्यायप्रतिपाद्यं तावद्दर्शयतीति । साधनविचारस्यापि ब्रह्मविचाराऽनुबन्धित्वेन ब्रह्मविचारत्वात् तस्यचाऽवशिष्टत्वात् ब्रह्मविचारस्यनानवशेष इतिभावः । **प्रथमपादार्थमिति ॥** 'तर्ह्यध्यायस्यैकार्थत्वात् पादभेदः किंनिबन्धन इत्यत'इतिवर्तते 'साधनेष्ववान्तरभेदेन पादभेद उपपन्नइतिभावेने'ति प्राह्यम्। तस्य प्रथमपादार्थं दर्शयतीत्यनेन संबन्धः । **भगवद्भक्तिश्चेति ॥** यद्यपि – माहात्म्य श्रवणेनैव भक्तिर्भवतीति माहात्म्यमेव प्रथमतो वक्तव्यम्, तथापि – माहात्म्य-

१. आनन्दमयाधिकरणटीकास्थ वाक्यमिदमत्रानुवर्तत इत्यर्थः । २. निर्दोषेत्यादौ योज्यम् । ३. आनन्दमयटीकात इतिवाक्यमनुवर्तत इत्यर्थः। ४. अध्याहार्य मितिभावः ।

श्रवणेन भक्तिमात्रंभवति, वैराग्यसहितमाहात्म्यश्रवणेनतु सुदृढनिरूढैव भक्तिरुत्पद्यते, सैवच मोक्षसाधनमिति निरूढभक्त्युत्पादनार्थं वैराग्यमेवाऽऽदावपेक्षितमित्यर्थः। एतेन – माहात्म्य श्रवणं भक्त्युत्पादकत्वात् प्रधानं, वैराग्यंतु उत्पन्नभक्तेर्दार्ढ्यापादकत्वादप्रधानमिति न तस्य प्राथम्यं युक्तमितिपरास्तम्, माहात्म्य श्रवणवत् वैराग्यस्यापि भक्तिहेतुत्वाङ्गीकारात्। **अयंभावः** – माहात्म्यश्रवणं भवत्येव भक्तिसाधनं, वैराग्याभावेपि भक्तिं जनयत्येव, किंनाम अदृढां भक्तिंजनयति, नतु वैराग्यलक्षणसहकारिसंपत्तिमपेक्षते वैराग्यमापैद्य माहात्म्यश्रवणेतु सुदृढां मोक्षपर्यवसायिनीं भक्तिंजनयतीति आदावेव वैराग्यमापादनीयम् तद्यथा– लोके दानशीलो महाराजो याचकेभ्यः प्रेरकव्यापारमनपेक्ष्यैवा ऽर्थंददाति तत्तत्स्वरूपाभिज्ञप्रेरितस्तु विशिष्टमर्थंददाति, अतएव – याचकाः प्रेरकसहभावदशायामेव राजदर्शनं कामयन्ते, नतु– तदभावदशायामिति। **प्राचीनोक्तिरिति ॥** प्रथमसूत्रे साधनानां कर्तव्यत्वोक्तिः, तथा वैराग्यादिसाधनसद्भावेपि मरणरूपमोक्षादर्शनं तदभावेपि मरणदर्शनंच संदेहबीजमित्यर्थः। एतेन = मोक्षदर्शनायोग्यत्वेन तत्कार्यकारणभावग्रहे अन्वयव्यतिरेकयोरनुपयोगात् तदभावविधानमयुक्तमितिपरास्तम् इह मरणमेव मोक्षइति मन्यमानस्य संदेहाङ्गीकारादितिभावः। **इत्यर्थइति** ॥ अभिप्रेतार्थ इत्यर्थः। **मरणेभवतीति** ॥ अन्तर्भवति तदात्मकमितियावत्। एतेन — भाष्ये 'मरणेभवती'ति मरणभूतवियोगयोः भेदमुक्त्वा 'भूतानांविनिवृत्ति' रितितयोरभेदे प्रमाणोदाहरणमयुक्तमिति परास्तम्। 'मरणे भवती'ति भाष्येण तयोरैक्यस्यैवाभिहितत्वात्। **मरणे भूतवियोगस्यैवाऽभावादिति** । यावद्भूतवियोगस्य मरणत्वेपि यत्किंचिद्भूतवियोगरूपमरणे यावद्भूतवियोगाभावादित्यर्थः। ननु — सूत्रे प्रश्ननिरूपणाभ्यामित्ययुक्तं प्रश्नस्याऽसाधकत्वादित्यतआह – **क्रमंप्रकारंचेति** । नाऽत्रप्रश्नो भूतपरिष्वङ्गविषयः

१. साधनमितिस्वोक्त स्यैवायंविवरणमिदम्। २. अथापीत्यर्थः। ३. संपाद्येत्यर्थः। ४. संपादनीयम्। ५. जिज्ञासासूत्रे। ६. आनन्तर्यार्थकाऽथशब्देन इदमुक्तमितिभावः। ७. तयोः - मोक्षदर्शनयोः कार्यकारणत्वाग्रहे इत्यर्थः।

किंनाम होमे क्रमप्रकारविषयः, ततश्च — प्रश्नवाक्यस्यक्रमांशे प्रामाण्याभावेऽपि भूतपरिष्वगांशे प्रामाण्यमुपपद्यतएवेति भाव. । **परिहाराच्चेति॥** परिहारवाक्यादित्यर्थः ।

**पूर्वपक्षस्तु** — नाऽनुष्ठेयमेवसाधनं फलार्थंहि साधनमनुष्ठेयं फलंच बन्धनिवृत्ति न मरणादतिरिच्यते, 'भूतबन्धोहि बन्धः स्यान्मुक्तस्तेभ्यो विमोचनम्। भूतानांविनिवृत्ति स्तु मरणं समुदाहृत'मिति वचनात । नचमरणार्थमेवसाधनमनुष्ठेयम् । वैराग्याद्यनुष्ठानेऽपि मरणदर्शनात्। ततश्च — शास्त्रमपीदं व्यर्थमिति ।

**सिद्धान्तस्तु** — अनुष्ठेयमेव वैराग्यादि बन्धनिवृत्तिरूपफल सद्भावात्। नच — मरणमेव बन्धनिवृत्तिः, मरणे भूतसंपरिष्वक्तस्यैव जीवस्य गमनांङ्गीकारात । नच तत्र प्रमाणाभावः — 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवंती' (छा०. ५ ३-९) ति प्रवाहण प्रश्नवाक्ये 'इतितुपंचम्या' (छा०. ५-३-९) मिति तस्यैव परिहारवाक्येच मृतस्य भूतपरिष्वंगाऽभिधानात। 'भूतानांविनिवृत्ति' स्त्विति वचनंतु भूतभागविनिवृत्त्यभिप्रायमिति न तद्विरोधः। अतोमरणमात्रेण मोक्षाऽयोगात् अनुष्ठेयमेव साधनमिति सार्थकमेव शास्त्रमिति सिद्धम् [ अ०. १ ]

( २ - अधिकरणम् . )

## ॐ त्र्यात्मकत्वात्तुभूयस्त्वात् ॐ ( सू . २ )

**समस्तभूतानामिति॥** ननु 'आपःपुरुषवचसोभवंती'(छा०.५-३-९)ति अपांदेहारम्भकत्वंश्रूयते, यदिकेवलाभ्योऽद्भ्यः सृष्टिरनुपपन्ना, तर्हि तदन्यथानुपपत्त्यैवभूतान्तरगमनमपि सिध्येदेव, अथोपपन्ना, तथापि — मरणमात्रस्य मुक्तित्वाभावात् मुक्त्यर्थं वैराग्याद्यनुष्ठानसंभवात् व्यर्थमेवेदमधिकरणमितिचेत . उच्यते— भूतानां परिष्वंगोहि बंधो न भूतस्यपरिष्वंगः, ततश्च — यदिमृतस्य न सर्वभूतैः परिष्वंगः, तर्ह्यसौ मुक्तएव, एकभूतपरिष्वंगेपि सर्वभूतपरिष्वंगाभावात।

१. आदिनाप्रकारग्रहः। २. प्रवाहणस्यैव ।

नच मुक्तस्य पुनः संसारोयुज्यतइत्युपचारितोर्थं 'आपः पुरुषवचसोभवंती'ति वाक्यमितिमन्यमानस्य शंङ्कापरिहाराय सर्वभूतपरिष्वङ्गसाधनाय सार्थकमेवेद-मधिकरणमिति । **एकभूतस्यशरीरानारंभकत्वादिति** ॥ ननु — मास्तु एकस्यभूतस्य शरीरारंभकत्वं भूतान्तरसहकृतस्यतु स्यादेव शरीरारंभकत्वम् नहि सहकारिणासहैव गंतव्यमिति नियमोस्ति । अतथाभूतानामपि दंडचक्रादीनां घटोत्पत्तौ मृत्सहकारित्वदर्शनात्, ततश्चाऽम्मात्रस्य सहगमनेपि देहोत्पत्तिसमये कर्मवशात् सहकारिसमवधानेन देहारम्भसंभवात्, न मरणमात्रेण मोक्षइति कर्तव्यमेव वैराग्यादीतिचेत्, न ब्रूमो वयं सहकारिविरहात् एकस्यभूतस्या-ऽऽरम्भकत्वाऽसंभवइति, येनाऽदृष्टवशात्सहकारिसमवधानेन देहोत्पादः स्यात्, नचैवं किंनाम त्वन्मतेएकस्यैवभूतस्य मोक्षविरोधित्वाभावेन मृतस्यमुक्तत्वात् मुक्तस्यच संसाराऽयोगात् आरम्भकत्वाभावंब्रूमः । ततश्चनवैराग्यादिकमनुष्ठेयमिति । **अपांक्षितीति** ॥ क्षितिसलिलाऽनलेति त्रिवृत्कृतभूतत्रये अपांप्रविष्टत्वेन शक्य संबंधसद्भावेनाऽब्ग्रहणेन लक्षणया भूतत्रयप्रातेरित्यर्थ । 'तासांत्रिवृतंत्रिवृत'(छा०. ६-३-३) मिति श्रुत्यप्रामाण्यंशंकते — **नन्विति** । यद्यपांभृतत्रयजन्यत्वंस्यात् तर्हि कार्यस्य चित्रद्रव्यत्वप्रसंगेनाऽप्शब्दवाच्यत्वं न स्यात् । अस्तिचैतत्, ततो-नाऽपांभूतत्रयकार्यत्वं ततश्चाऽप्रामाण्यमेव श्रुतेरित्यतः परिहारमाहाऽऽचार्योभाष्य-कारइत्यर्थः । **मिश्रत्वेपीति** ॥ सजातीयपरमाणूनामेव आरंभकत्वमिति तार्कि-कप्रक्रियाया अप्रामाणिकत्वात् उपादानेषु पृथिव्यप्तेजस्सु यस्याऽऽधिक्यं तज्जातीयत्वमेव कार्यस्येतिभावः । **नन्वपामिवेति** ॥ अपामिव भूतेजसोरपि-त्रिवृत्कृतभूतत्रयकारणत्वेन तत्रै प्रविष्टत्वात् पृथिव्यादिशब्देनापि सर्वग्रहणसंभवात किं विशिष्याऽपामेवग्रहणेनेत्यतोवाऽऽहेत्यर्थः ॥

**पूर्वपक्षस्तु** — जीवेनसह आपएवगच्छन्ति न सर्वाणि, 'आपः पुरुष-वचसोभवंती'तिश्रुतेः अन्यथा भूतानीतिश्रुतिः स्यात् । अतो मृतस्य समस्तभूत-बंधाभावात् मरणमेव मोक्षइति व्यर्थमेववैराग्यादीति ।

१. भूतान्तरस्यापि उपलक्षकमित्यर्थः २. कारणत्वेनेति ॥ भूतत्रयस्यकारणत्वेनेतिषष्ठी-समासः, ३. तत्र = अप्सु, ४. अदिनातेजः पदग्रहः, ५. 'वेत्थयथे'ति श्रुतावित्यादिः ।

**सिद्धान्तस्तु** — सर्वभूतपरिष्वक्तएव रंहति जीवः ' आपःपुरुषवच-सोभवन्ती'(छा०.५-३-९.)ति पुनरुत्पत्तिश्रवणात् । नचसर्वभूतपरिष्वंगाभावे पुन-रुत्पत्तिर्युज्यते भूतबंधस्यैवसंसारत्वेन तदभावे मुक्तत्वापातात् । एकभूतस्यचा-ऽबन्धकत्वात् । नच — विशेषश्रुतिविरोधः — अपांत्रिवृत्कृतपृथिव्यप्तेजोहेतुत्वेन अब्ग्रहणेनैव सर्वेषांप्राप्तेः। नच—अपामिवभूतेजसोरपि त्रिवृत्कृतभूतत्रयकारणत्वात् शद्बान्तरमपहायाऽप्शद्बस्यैव ग्रहणे कारणाभावइतिवाच्यम् — सर्वशरीरेषु संभूय अपां बहुत्वस्यैव नियामकत्वात् । ' तापापनोदो भूयस्त्व मंभसोवृत्तयस्त्विमा'इति वचनात् । अतोऽस्तिसमस्तभूतानां जीवं परिष्वज्य गमनमिति स्वाभाविक-मरणेन मुक्त्यभावात् अनुष्ठेयं वैराग्यादि इतिसिद्धम् ( २ )

( ३ — अधिकरणम, )

## ॐ प्राणगतेश्च ॐ [ सू. ३ ]

**अत्रपुनरिति** ।। ननु — शास्त्रादिसंगतिव्युत्पादनं व्यर्थं पूर्वाधिकरण-एवनिरूपितत्वात् अस्याऽधिकरणस्य प्राक्समर्थितसमर्थनार्थं प्रवृत्तत्वात् । नह्य-भ्यधिकाशङ्कया पुनरधिकरणप्रवृत्तौ अनंतर्भावशङ्काऽस्ति येन तद्वचनं सार्थकं स्यादितिचेत्, सत्यम्, पूर्वनिरूपितसंगत्यैव चारितार्थ्यमिति, तथापि — इमा-न्यधिकरणानि प्रत्येकमनेक वेदवाक्यविचाररूपत्वा दवान्तरब्रह्मविद्या इतिसूचयितुं पुनःसंगति निरूपणम । एवमन्यत्रापि द्रष्टव्यम् । **विशेषप्रमाणाऽभावादिति**।। विस्पष्टप्रमाणाऽभावादित्यर्थः । **विशेषप्रमाणस्येति** ॥ निरवकाशस्याऽनुमा-नस्य सत्त्वादित्यर्थः । ननु — प्राणगत्या भूतगतिसाधनमयुक्तं व्याप्त्यभावा-दित्यत आह — **अस्तितावदिति** ।। परस्परमितिशेषः । दृष्टान्ताभा वात्कथं-व्याप्तिग्रहइत्यत आह । **यत्रवावेति** ।। 'नैतानिकदाचिद्वियुज्यंते' इति-परस्परमविनाभावस्य श्रुतिसिद्धत्वात् नतत्र दृष्टान्ताऽपेक्षेतिभावः । **तदविना-भूतेति** ॥ ते प्राणाः, अविनाभूताः, यैः तानि तदविनाभूतानि, तेषां जीवे-

१. ' वेत्थयथे'ति श्रुतौ अप्शद्बश्रवणाविरोध इत्यर्थः । २. अन्तर्भावकथनम् ।

नसह गतिर्ज्ञायतइत्यर्थः। एतेन प्राणगत्या भूतगतिं साधयता प्राणानामेव भूतव्याप्यत्वस्य वक्तव्यत्वात् भूतानां प्राणव्यापकत्वकथनमयुक्तमिति परास्तम्। **चशब्दइति** ॥ प्राणानां भूतैरविनाभावार्थ इत्यर्थः । **तत्सहगंत्रिति** ॥ तत्सहगंतृप्राणा अविनाभूताः, यैस्तानि तेषांभावः तस्मात् तत्सहगंतृप्राणव्यापकत्वादितियावत्। **अमात्याविनाभूतेति** ॥ अमात्यव्यापकभृत्यइत्यर्थः ।

**पूर्वपक्षस्तु** — न भूतानि सहगच्छन्ति प्रमाणाऽभावात् नच — प्रश्नव्याख्याने प्रमाणम्। तयोरपि भूतैः सह गमनाऽप्रतीतेः। आर्थिककल्पनायाश्च विशेषप्रमाणमन्तरेणाऽसंभवात्। अतः स्वाभाविकमरणमेव मुक्तिरिति अलं वैराग्यादिभिरिति।

**सिद्धान्तस्तु** — गच्छन्त्येव भूतानिजीवेन सह, भूतानिजीवेनसहगतिमंति, तत्सहगंतृप्राणव्यापकत्वादिति अनुमानसद्भावात्। नच — व्याप्त्यभावः। 'यत्रवाभूतानी'ति श्रुत्या भूतानां, प्राणानांच परस्परं व्याप्यव्यापकभावाऽभिधानात्। अतः समस्तभूतानां जीवपरिष्वङ्गसिद्धेर्नमरणमात्रेण मोक्षः अतोऽपेक्षितं वैराग्यादीतिसिद्धम् ॥ (३)



( ४ -- अधिकरणम्. )

## ॐ अग्न्यादिगति श्रुतेरितिचेन्नभाक्तत्वात् ॐ [ सू. ४ ]

**अनिर्णयइति** ॥ 'प्राणैर्वावनवियुज्यत'इति श्रुत्यर्थाऽनिर्णयः संदेहबीजमित्यर्थः। जीवनदशायां प्राणै र्नवियुज्यत इत्यप्यर्थसंभवात् श्रुत्यर्थाऽनिर्णयइतिभावः। **अतोऽस्तिप्राणानामिति** ॥ ननु — न प्राणगत्या भूतगतिसमर्थनं युज्यते मुक्तावपि प्राणगतिसद्भावेन भूतगतिप्रसंगात्। नच — मुक्तौ न प्राणगतिरिति शक्यते वक्तुम्। मुक्तावपींद्रियसद्भाव श्रवणात् अन्यथा — दर्शनाद्यभावप्रसंगेन मुक्तेरपुरुषार्थत्वप्रसंगइतिचेत्, सत्यं संत्येव मुक्तावपीन्द्रियाणि किंनाम चित्स्वरूपाण्येव तानीन्द्रियाणि अस्माभिस्तुप्राकृतेन्द्रियाणामेव भूतैर्व्याप्तिरुक्तेति न कश्चिद्दोषः। ननु — प्रळयकाले भूतानि जीवसंबद्धानि, नवा,

१. प्रश्नपरिहारवाक्ययोः।

नेतिपक्षे — तस्यैवमुक्तित्वप्राप्त्या वैराग्यादिवैयर्थ्यम् आद्ये प्रळयत्वव्याघातः, भूतभौतिकादि विळयस्य प्रळयशद्बार्थत्वादितिचेत्, न — जीवबन्धकभूतेन्द्रियव्यतिरिक्तानामेवलयः, नतु — तद्बंधकानामित्यङ्गीकारात्। तदुक्तं — ब्रह्मतर्के — 'सर्वसंहारकंविष्णुर्देवींजीवांस्तथैवच। कालं त्रिगुणसाम्यंच कर्माणिप्राणमिन्द्रियम् [१] संस्कारंचैव वेदांश्च नर्ते किंचिल्लये त्वभू'दिति। नच — प्राणे भूतसद्भावानुक्तिः, इन्द्रियाणांसद्भावोक्त्या तदविनाभावबलेन तस्यापिसिद्धेः।

**पूर्वपक्षस्तु** — न प्राणाः जीवेनसह गच्छन्ति 'तत्रास्य पुरुषस्य मृतस्य अग्निंवागप्येती'त्यदिना प्राणानामग्न्यादौ गतिश्रवणात् तथाच — प्राणानां गत्यभावेन साधकाभावात् भूतानामपि न सह गतिरिति मरणमेवमोक्षइतिव्यर्थं वैराग्यादीति।

**सिद्धान्तस्तु** — प्राणा जीवेन सह गच्छन्ति 'एतैर्वावनवियुज्यत' इतिश्रुतेः। नचा 'ऽग्निंवागप्येती'ति विशेषश्रुतिविरोधः — प्राणानांभागेन अग्न्यादौ गत्यङ्गीकारेण श्रुतेस्तत्परत्वात्। तदुक्तं — पुरुषस्यमृतौ ब्रह्मन् प्राणा भागत एवतु। अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति त' मिति (१) ननु — प्रतिमरणं भागापगमे कालतः सर्वापगमः स्यादितिचेन्न — पुनः शरीरसंप्राप्तिसमये अग्न्यादौ प्रविष्टानां भागानां जीवसहगत भागेषु प्रवेशाङ्गीकारात्। एवंभूतानामपि मरणकाले भागेन जीवेन सह गतिः भागेन अग्न्यादिगतिर्भवति। पुनः शरीरप्राप्तौ जीवेनसहगतेषु भूतभागेषु अग्न्यादीन्प्रति गतानां भूतभागानां प्रवेशोभवतीतिबोध्यम्। अतोऽस्ति प्राणानांसहगतिः, ततोभूतानामपीति न मरणमात्रेण मोक्षः, अतोऽनुष्ठेयं साधनमिति सिद्धम्। (४)



[ ५ - अधिकरणम् ]

## ॐ प्रथमेश्रवणादितिचेन्नताएवत्युपपत्तेः ॐ ( सू . ५ )

उभयविधवस्तुदर्शनमिति ॥ संयुक्तेषु अनेकेषुधूमाग्निपाषाणेषु अग्निगतौ धूमस्यगतिः पाषाणस्यागतिरिति उभयविधवस्तुदर्शनं संदेह-

बीजमित्यर्थः । यद्यपि — पूर्वाधिकरणोक्त मत्र यथासंभवादिकमेवेहापिसंदेहबीजं संभवतीति तदेववक्तव्यम्, तथापि — अधिकारिभेदेनेमान्यधिकरणानि प्रवृत्तानीति ज्ञापनाय संदेहबीजान्तरमुक्तम् । अतएव — पूर्वाधिकरणेषु निर्णायकानामुक्तत्वेन संदेहानुत्पदो न मन्तव्यः ।
**मरणस्यैवमोक्षत्वादिति** । ननु — भूतानां सह गत्यभावेऽपि न मरणमात्रस्य मोक्षत्वं युज्यते, 'तस्मिन्नेतस्मिन्नग्नौदेवाः श्रद्धांजुह्वती' (छा०.५-४-२) ति सृष्ट्यर्थं होमश्रवणात् । "आपः पुरुषवचसोभवंन्ती'ति सृष्टिश्रवणाच्च, तदन्यथानुपपत्त्यैव भूतगत्यभावेपि मुक्त्यभावसिद्धेः । ततश्च — कर्तव्यमेववैराग्यादीतिचेत् नत्रमेवयं वस्तुतः मरणमेवमुक्तिरिति, । येनोक्तदोषःस्यात्, किंनाम 'भूतबंधोहिबंधःस्यात् मुक्ति स्तेभ्यो विमोचन'मितिवदतः सिद्धांततोमरणमेवमोक्षः स्यात् , ततश्च – व्यर्थवैराग्यादीति। **सोमोराजासंभवतीति**।। जीवः सोमोराजा चंद्रः तदंन्तर्गतो भवतीति यावत्।

**पूर्वपक्षस्तु** — भूतानिनजीवेनसहगच्छान्ति, 'तास्मिनेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वती'त्युपक्रमे श्रद्धासहितस्यैव होमाभिधानात् । भूतानामपि सहगतौ उपक्रमे तथोक्तिप्रसंङ्गात् । अतो भूतानांसहगत्यभावेन भूतानां विनिवृत्तिरेव मोक्ष इतिवदतो मरणस्यैव मोक्षत्वप्रसङ्गात् व्यर्थं वैराग्यादीति ।

**सिद्धान्तस्तु** – प्रथमाग्नौ भूतसहितस्य होमाश्रवणात् न भूतानामसहगतिर्वक्तव्या श्रद्धाशब्दस्याऽजहत्स्वार्थलक्षणया ऽप्श्रद्धाविशिष्टजीववाचित्वात् । उपसंहारे अपांजीवेन सह गतिश्रवणात् उपसंहारानुसारेणैव उपक्रमस्य नेयत्वात् । नचाऽऽगमनमात्रविषयत्वमुपसंहारस्येतिवाच्यम् मरणकाले तत्परित्यागानुक्तेः । मध्येसंयोगमनभिधाय 'आपःपुरुषवचसोभवन्ती'त्यनुवादेन सहगमनस्यैव कल्प्यत्वात् । अतो भूतानांजीवेनसहगतिसद्भावात् . मरणस्य मुक्तित्वाभावेनाऽपेक्षितं वैराग्यादिसाधनमिति सिद्धम् । ( ५ )



( ६ – अधिकरणम्. )

## ॐ अश्रुतत्वादितिचेन्नेष्टादिकारिणां प्रतीतेः ॐ [ सू. ६ ]

ननु — 'तदन्तरप्रतिपत्तौ' ( ब्र. सू०. ३ · १ - १ ) इत्यनेनैव भूतानां जीवेनसहगतेस्समर्थितत्वेन भूतानि गच्छन्ति न वेति संदेहस्यैवाऽनुत्पादात् कथंसंदेहोद्घाटनमित्यतआह — **पृथक्पृथग्विचारत्वादिति** ॥ अस्यविचारस्य पृथक्पृथगधिकारिकत्वात् संदेहानुत्पादो न मंतव्यइत्यर्थः एकस्यैव संशयस्य निरासाय बहूनिसमाधानानि इतिसंदेहानुत्पादो न मंतव्यइति वा ऽर्थः। **अयंभावः**— अस्त्येकएवाऽधिकारीसर्वेष्वधिकरणेषु तथापि— पूर्वपक्षरूपमिथ्याज्ञानबाहुल्यात् तन्निरासाय प्रवृत्तान्येतान्यधिकरणानि प्रथमाधिकरणनिवृत्तसंशयस्यापि विरोधित्वान्निवर्त्तकानीति दर्शयितुमेव अस्माभिः प्रत्यधिकरणं संदेहः प्रदर्श्यते, ननु — पूर्वाधिकरणप्रवृत्त्युत्तरकालमपि संदेहोभवतीत्याशयेन, दृश्यन्तेहि पर्वतेवह्निसंदेहनिवृत्तये धूमवत्त्वात्प्रकाशविशेषवत्त्वाच्चेति हेतुद्वयमाचक्षाणा लौकिकाः परीक्षकाश्च । तत्र यथा — लिङ्गद्वयमपि एकस्यैव संशयस्य निवर्त्तकं भवति, एवमिहापि इमान्यधिकरणानि एकस्यैव संशयस्य निवर्त्तकानिभवंतीति । अस्तु — तथाश्रुत्यभावः, आर्थिकश्रवणात्तु भूतगतिसिद्धिरित्यतआह । **आर्थिकश्रवणादपीति** ॥ सएवहि श्रुतेरार्थिकोर्थः, यो नियमेन क्वचित्प्रत्यक्षश्रुतिबोधितः, यस्तुक्वापि न प्रत्यक्षश्रुतिबोधितः नाऽसौश्रुतेरार्थिकोर्थइतिभावः । माभूत् आर्थिकश्रवणाद्भूतगतिसिद्धिः प्राणगतियुक्त्यातु सिध्यतीत्यतआह — **सतिहीति** ॥ वैदिकेर्थे युक्तयोपि प्रवर्तन्ते, यादिसोऽर्थः यत्र क्वचित् विशेषेणश्रुतःस्यात् नाऽन्यथेतिभावः । भाष्यस्थाऽतःशब्दं व्याचष्टे — **अतःशब्दइति** ॥ **उभयार्थेचेति** ॥ पुष्पवंतावित्यादिशब्दवत् एकयोक्त्या अर्थद्वयोपस्थापकोभवतीत्यर्थः । **नप्रत्यक्षेति** ॥ प्रत्यक्षाऽश्रवणादश्रवणमेवाऽङ्गीकृत्य भूतानामसहगति र्नवक्तव्येत्यर्थः । **आर्थिकश्रवणस्येति** । आर्थिकश्रवणसद्भावे श्रवणसामान्याभावायोगादितिभावः। तदेवोपपादयति — **नहीति**। नहि केनापि सदर्शनाभावंदृष्ट्वाकदर्शनमेवापोद्यते येनेहाऽऽर्थिकश्रवणाऽपवादः

स्यात्। किंतु – प्रतीतंकदशनत्व मङ्गीकृत्य अनशनत्वमेवाऽपोद्यतेइतिभावः। युक्त्याप्येतमर्थंसाधयति – **युक्तेरपीति** ॥ नन्वार्थिकश्रवणेन सिद्धान्तकरणमयुक्तं सूत्रकृताविशेषश्रुतेरेवाभिहितत्वेन तदनभिप्रेतत्वादित्यतआह – **यदाचैवमिति** ॥

**पूर्वपक्षस्तु** — न भूतानि जीवेनसहगच्छन्ति तथा श्रुत्यभावात। नचाऽपां प्राणानांच सहगतिः श्रूयते ऽतोऽर्था द्भूतगतिरपि श्रुता भवतीति वाच्यम्–साक्षाच्छ्रवणाभावेनाऽऽर्थिकश्रुतेरपालनीयत्वात् वैदिकेऽर्थे साक्षाच्छ्रवणसद्भावएव युक्तीनांप्रवृत्ते र्युक्त्यापि न तत्सिद्धिः। ततश्च – मरणस्यैव त्वन्मते मोक्षत्वप्रसङ्गात् अननुष्ठेयमेव वैराग्यादीनि।

**सिद्धान्तस्तु** — न प्रत्यक्षश्रुत्यभावेनाश्रवणमङ्गीकृत्य भूतानामसहगतिर्मंतव्या, आर्थिकश्रवणस्याप्यश्रवण बाधकत्वात् यजमानमरणे भूतानां सहगतेः विस्पष्टमभिहितत्वेन तद्दृष्टान्तेन सर्वत्रापि भूतगतिसिद्धेश्च अतोऽस्त्येव भूतानां जीवेन सह गतिरिति मरणेमोक्षाभावात् अनुष्ठेयमेववैराग्यादीति सिद्धम् (अ०.६)



[ ७ – अधिकरणम्. ]

## ॐ भाक्तंवाऽनात्मवित्त्वात्तथाहि दर्शयति ॐ (सू. ७)

ननु – सोमयागवत् वैराग्यादेरपि साधनत्वात्, तत्र यस्य रुचिः तं प्रति तच्छास्त्रमप्युपादेयमेव नहि सर्वाधिकारिकं किमपिशास्त्रमस्तीत्यतआह – **अतइति** ॥ **वैराग्यादिनाकृत्याभावादिति** ॥ तत्फलस्याऽन्यतएवसिद्धत्वेन कृत्याऽभावादितिभावः। **व्यर्थमिदंतदर्थशास्त्रमिति** ॥ पिपासितंप्रति गीर्वाणतरंगिणीसमीपे कूपखननप्रकारोपदेशवत् व्यर्थमित्यर्थः। ननु – 'अपामसोमे'तिश्रुते रन्यार्थत्वाभिधानमयुक्तं सोमयागस्यापि मुख्यामृतत्वसाधनत्वात् मुख्यासंभवे ऽमुख्यस्यप्राह्यत्वादित्यतआह – **कर्मेति** ॥ ननु — 'भाक्त' मिति

१. इन्द्रियाणाम्। २. अबादीनां सहगतिवादिनोमते। ३. मोक्षत्वप्राप्तेरित्यर्थः। ४. तत्र = वैराग्यादौ,। ५. कर्मणः सकाशात्,। ६. अन्येति ॥ परंपरयासाधनत्वादिरूपाऽर्थत्रयपरेत्यर्थः।

भाक्तार्थत्वमुक्त्वा, 'वे'ति मुख्यार्थत्वकथनमयुक्तं, वस्तुनो द्वैरूप्याऽसंभवादित्य तोवाभाह — **कर्मेति** ॥

**पूर्वपक्षस्तु** – न मुमुक्षुणाऽनुष्ठेयं वैराग्यादि कर्मणैवमोक्षसिद्धेः। अपाम सोममसृताअभूमे' (ऋ. ८-४८-३) ति श्रवणात्। नच—उभयोरपि साधनत्वात् वैराग्यादिक मनुष्ठेयमितिवाच्यम् – सतिहि लघायस्युपाये गुरूपायस्याऽनादर्त्तव्यत्वात्। अतः सुशकेन कर्मणा मोक्षसिद्धौ वैराग्यादिना कृत्याभावात् व्यर्थमिदं तदर्थं शास्त्रमिति।

**सिद्धान्तस्तु** – अवश्यानुष्ठेयमेव मुमुक्षुणा वैराग्यादि तद्विनामोक्षाऽसिद्धेः। नचैवं – श्रुतिविरोधः। द्विविधं हि कर्म – काम्य, मकाम्यञ्च। अकाम्यमपि द्विविधम् – ज्ञानात्पूर्वभावि, पश्चद्भाविचेति। तत्सर्वमपि श्रुत्यर्थ-एव अधिकारिभेदात्। तद्यदा काम्यकर्मपराश्रुतिः, न तदामुख्यामृतत्वमाह – किंतु – बहुकालजीवनरूपंभाक्तमर्थमाह, यदातुज्ञानात् पूर्वभाव्यकाम्यकर्मपरा, तदा मुख्याऽमृतत्वसाधनत्वमेवाह, किंनाम नसाक्षात् किंतु कर्मणा शुद्धसत्वस्य वैराग्यादिद्वारा मोक्षसाधनत्वमाह, यदातु — ज्ञानोत्तरकर्मपरा तदा ज्ञानेन सिध्यतिमोक्षे ऽतिशयाधायकत्वमेवाऽऽहेति कथमपि कर्मणां साक्षान्मुख्यमोक्षसाधनत्वाऽनभिधायकत्वात्। अतो वैराग्याद्यनुष्ठानमन्तरेण मोक्षाऽसिद्धेः न तत्प्रतिपादकशास्त्र वैयर्थ्यमिति सिद्धम् (अ०. ७)



( ८ – अधिकरणम् )

## ॐ कृताऽत्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् ॐ (सू. ८)

**स्वर्गादिष्वेवेति** ॥ ननु — कर्माणि नानाविधानि, कानिचदिहलोके

१. 'यावदिन्द्रोयावन्मनु'रित्येतदधिकरणभाष्योक्तदिशाचतुर्दशमन्वन्तरकालिकत्वेन बहुकालजीवनत्वं न श्वरमितियावत् अतएव अस्तटीकायां किंचित्कालीनत्वमित्युक्तंसंगच्छते-किंचित्कालीनत्वमपि – मन्वन्तरवृत्तित्वमेवेति नास्यटीकोक्त्याविरोधः। २. मुख्यामृतसाधनत्वमेवोपपादयति – किंनामेत्यादिना ॥ किंनामेति निपातसमुदायः कथमित्यर्थः। तमेवप्रकारमाह – नेत्यादि ॥ ३. साधनत्वमितिशेषः। ४. शुद्धान्तः करणस्य। ५. शत्रन्तात्सप्तमी निष्पन्नेइत्यर्थः।

कालविशेषे भोगसाधनानि, कानिचित्स्वर्गे कालविशेषे, कानिचिन्नरके, यान्यपि इहलोके फलसाधनानि न तान्येकदेशैककालावच्छेदेन; किंनाम प्रदेशभेदेन, कालभेदेनैव, नहि यो हि भवतिस्वप्नेराजा स भवति पाटलिपुत्रे, नापि यइदानीं भवतिराजा सभवतिकालान्तरे इति अवश्यंदेशकालविशेष सहकृतानामेव कर्मणां भोगहेतुत्व मभ्युपेयम् सतिचैवं न स्वर्गादावेव सर्वकर्मक्षयः सहकारिविरहात्, ततश्चेहलोके भोगकाले पुनरनन्तकर्मानुष्ठानेनाऽसमाप्तिरेव कर्मणइति स्वर्गादौ-भोगेन क्षयाभिधानमयुक्तमितिचेत्, सत्यम् – भिन्नदेशकालविपाकान्येव कर्माणि, तथापि — कर्मणाऽऽराधितो भगवान् भिन्नदेशकालविपाकान्यपि कर्माणि स्वर्गादावेव युगपदेव फलोन्मुखानिकुर्यात्, । तद्यथा — महाराजः पाटलिपुत्र-एवब्राह्मणान्संस्थाप्य, अन्नपानादिकं दद्यामिति संकल्पयितापि, ब्राह्मणैराशिषाऽऽराधितः त्वयादीयमानमेव अन्नपानादिकं काश्यादिसुक्षेत्रेषु देहि तत्रस्थित्वा-भगवन्तमाराधयाम इति प्रार्थितः तथैवकरोति, उक्तम् – विशिष्टोद्गातृलाभे कामितलाभः 'तस्माद् तेषु वरंवृणीय यं कामंकामयेत-तंसएषएवंविदुद्गाता आत्मने, यजमानाय वा यं कामंकामयतेतमगायते' ( बृ०. उ०. १-३-२८) ति। एवच स्वर्गादावेव सर्वकर्मभोगोऽस्त्विति कामनायां सोपि भवेदिति युक्तं स्वर्गादौ भोगेन क्षयाभिधानमिति । **कर्मशेषयुततयैवेति** । स्वर्गापादकस्यैवकर्मणो न सामस्त्येनक्षयः, किमुसर्वेषांकर्मणांक्षयोनभवतीति वक्तव्यमितिभावः । ब्रह्मपदयोग्याअपि उद्गातारो यजमानस्य योग्यमेव कामं प्रापयन्ति वैराग्यादिसाधनशून्यस्य यजमानस्य सर्वकर्मक्षयो ऽयोग्यएवेति तंकामं न ते प्रयन्तीतिबोध्यम् । तथेश्वरोपि अयोग्यानामाराधनेन प्रसन्नो न भवतीतिज्ञेयम् ।

**पूर्वपक्षस्तु** — न वैराग्यादिकमावश्यकं, कृतस्यकर्मणो भोगेनैवक्षये बीजाभावेन संसाराऽभावसंभवात् नच — भोगकाले पुन कर्मान्तरानुष्ठान संभवेन संसारानिवृत्तिरिति वाच्यम् — इहलोके भोगसमये कर्मानुष्ठाननियमेपि स्वर्गादौ तदभावात् । तत्रैव सर्वकर्मणांभोगेन क्षये संसारनिवृत्तिसंभवात्,

१. सतीतिशेषः । निमित्तसप्तमी क्षयादित्यर्थः ।

कर्मणां भिन्नदेशकालविपाकत्वेऽपि यज्ञाद्याराधितभगवत्प्रसादेन भवन्मते सौभर्यादिवत् स्वर्गादावेव सर्वकर्मक्षयोनाऽनुपपन्नः, ततश्च — वैराग्यादेरनावश्यकत्वात् व्यर्थमिदं शास्त्रमिति ।

**सिद्धान्तस्तु** — अपेक्षितमेव वैराग्यादि, 'ततःशेषेणेमं लोकमायाती'ति श्रुतेः, 'भुक्तशेषानुशयवा'निति स्मृतेश्च स्वर्गाद्यापादककर्मणएव सामस्त्येनक्षयाभावेन सुतरांसर्वक्षयाऽसंभवात् । नच — द्वित्राऽऽवर्तनेषु सर्वक्षयो भविष्यतीतिवाच्यम् — एकस्य कर्मणो भोगावसरे पुनरनन्तकर्मानुष्ठानेन भोगेनाऽसमाप्तेः । तदुक्तम् — 'आचतुर्दशमाद्वर्षात् कर्माणि नियमेनतु । दशावराणां देहानां कारणानि करोत्ययम्' (१) अतः कर्मक्षयान्मुक्तिः कुतएव भविष्यती'ति । अतो वैराग्यादिसाधनमन्तरेण मोक्षाभावात् वैराग्यादिविधायकशास्त्रस्य न वैयर्थ्यमिति सिद्धम् (अ०.८)

(९ - अधिकरणम्, )

## ॐ यथेतमनेवंच ॐ (सू. ९)

**यद्यागमनस्येति** ।। नन्वागमनस्यक्लिष्टत्वाभावेऽपि आगतस्य गर्भवासायतिक्लेशसद्भावात् स्यादेवातिशयेन वैराग्यमिति व्यर्थमागमनस्य क्लिष्टताप्रतिपादनमिति चेत् — उच्यते — गर्भवासादेः स्वर्गापादककर्मफलत्वाभावेन स्वर्गानन्तर्भावात् तत्क्लेशदर्शनं न स्वर्गेवैराग्यहेतुः, अपितु — गमनागमनयोः स्वर्गापादककर्मफलत्वेन स्वर्गान्तर्भावात् तत्क्लेशव्युत्पादनं स्वर्गवैराग्यहेतुरिति तत्प्रतिपादनमावश्यकमिति । श्रुतिंव्याख्याति — **यथास्वर्गादिति** ।। यस्तु-स्वर्गादागमनंवेत्ति नतु गमनं, तंप्रति आगमनदृष्टान्तेन गमनमुच्यते, यस्तु-स्वर्गगमनंवेत्ति नत्वागमनप्रकारंवेत्ति, तंप्रति गमनदृष्टान्तेन आगमनमुच्यत-इतिभावः । एतेन — आगमनज्ञाने तद्दृष्टान्तेन गमनज्ञानं, तज्ज्ञानेच तद्दृष्टान्तेनाऽऽगमनज्ञानमित्यन्योन्याश्रय इतिपरास्तम्, अधिकारिभेदेन श्रुतेः प्रवृत्त्यङ्गीकारात् । याज्ञवल्क्यवत्प्रतिज्ञामात्रेणैव सिद्धान्तसिद्धेः सूत्रे प्रमाणाऽनुपन्या-

सेपि शिष्यहितैषिणा भाष्यकृता श्रुत्युपन्यासः कृतइतिबोध्यम् । **विशेषश्रुतेरिति** । आकाशपर्यन्तं गत्यनुसारेणाऽऽगमनमुक्त्वा, तदनन्तरमन्यथागमनप्रतिपादकविशेषश्रुतेरेवेत्यर्थः ॥

**पूर्वपक्षस्तु** — गमनप्रकारेणैवाऽऽगमनं, 'यथेतमागच्छती'ति श्रुतेः येन पथा स्वर्गंप्रति जीवोगतः स मार्गस्तावत् जीवस्य स्मृतिविषयः, नच स्मृतमार्गपरित्यागेन मार्गांतरेणाऽऽगमने कारणमस्तीति तेनैवाऽऽयातीतिवक्तव्यम् । ततश्चाऽतिक्लेशाऽभावान्नस्वर्गे वैराग्यमापादनीयमिति ।

**सिद्धान्तस्तु** — नजीवो यथागतस्तथाऽऽयाति किंत्वन्यथा, 'धूमादभ्र'मितिविशेषश्रुतेः । नच — प्राचीनश्रुतिविरोधः आकाशपर्यंतं गत्यनुसारेणाऽऽगमनस्याङ्गीकारेण श्रुतेस्तत्परत्वात्, नापि युक्तिविरोधः - आगमने जीवस्य स्वातन्त्र्याभावेन युक्तेरप्रयोजकत्वात् । तस्मादागमनादावतिक्लेशयुक्तत्वेन स्वर्गफलेपि विरक्तेन भवितव्यमिति सिद्धम् ( अ०. ९ )



( १० — अधिकरणम् )

## ॐ चरणादितिचेन्न तदुपलक्षणार्थेति काष्र्णाजिनिः ॐ [ सू . १० ]

**तन्निमित्तानिमित्तयोरिति** ॥ कर्तुस्तावत्कुलालादेः निमित्तेन दंडादिना अनिमित्तेनरासभादिना सहभावो दृश्यते, प्रकृतेच गमनागमनकर्तुर्जीवस्य कर्मादिना सहभावो दृश्यत इति तद्दर्शनं निमित्तत्वात् कर्ता कर्मसहभूत,उताऽवर्जनीयतयेति संदेहजननद्वारा, गतागतं कर्मफलं, नवेति संदेहबीजमितिभावः। तद्यइहरमणीयेति॥ ननु 'तद्यइह'(छा०.५-१०-७) इति श्रुतिबलात्रमणीयादियो-

१. संपादनीयमित्यर्थः । २. यथेतिश्रुतर्थ्यथः । ३. गमनमार्गेणैवाऽऽयातिजीवः गमनमार्गस्य स्मृतिविषयत्वात् अन्यमार्गेणाऽऽगमने फलाभावादिति अनुमानविरोधइत्यर्थः।
४. अत्राऽधिकरणे त्रीणिसूत्राणि । ५. तादित्यनेनगतागतपरामर्शः ।
६. अयंहेत्वर्थकः । ७. सहभावदर्शनम् । इदंसन्देहबीजमित्यत्रान्वेति ।

निप्राप्तेः चरणफलत्वसिद्धावपि न गतागतस्य तत्फलत्वं सिध्यतीति नैतत्प्रत्युदाहरणयुक्तम्। अस्तुवा — आगमनस्य चरणफलत्वं तत्फलयोनिप्राप्त्यनुबन्धित्वात्, नतु गमनस्य कर्मफलस्वर्गप्राप्त्यनुबन्धित्वेनयोनिप्राप्त्यननुबन्धित्वात् इतिचेत्, न — भावानवबोधात् नत्वस्माभिः केवलयोर्गमनागमनयो श्चरणफलत्वसाधनाय एतच्छ्रुत्युदाहरणंक्रियते येनोक्तदोषःस्यात्, किंनाम स्वर्गलोकगमनमारभ्य योनिप्राप्त्यन्तस्य सर्वस्यापि चरणफलत्वसाधनाय एतच्छ्रुत्युदाहरणं क्रियते, 'तद्यइहरमणीय चरणा रमणीयांयोनिमापद्यन्त'इतिश्रुत्याच योनिप्राप्त्यन्तस्य गमनस्वर्गभोग पुनरागमनादेः सर्वस्यापि चरणफलत्वप्रतिपादनंक्रियते गत्यादेः सर्वस्ययोनिप्राप्त्यनुबन्धित्वात्। तद्यथा 'पूर्णाहुत्या सर्वान्कामानवाप्नोति' इति श्रुतिबलात् पूर्णाहुतिसंज्ञकस्ययागस्य स्तोकस्तोकंसर्वफलकत्वं, यथावा — 'तरतिमृत्युं, तरतिपाप्मानं, तरति ब्रह्महत्यां योऽश्वमेधेनयजते, यउचैनमेवंवेदे' ति श्रुतिबलात्, अश्वमेधफलत्वेन श्रुतमपि मृत्युतरणादिकं सांगोपांगाऽश्वमेधज्ञानफलम्। तथा चरणस्यापि स्तोकस्वर्गफलकत्वात् गतिस्वर्गभोगपुनरागमनानां योनिप्राप्त्यनुबंधित्वम्। **अयमत्रविवेकः** — सांगज्योतिष्टोमानुष्ठानेआदौ चरणफलंभवति, तच्च स्वर्गप्रतिगमनं, स्वर्गेवासः, पुनरागमनं, योनिप्राप्तिश्चेति। कर्मफलंतु—अपुनरावर्तिस्वर्गगमनम्, तत्रनिवासश्चेति। चरणफलस्वर्गप्राप्त्यनन्तरभाविनमर्थमाह — **यावत्संपातमुषित्वेत्यादिनेति॥ तत्रापि गतागतस्येति॥** अत्र एवं पूर्वपक्षिमते श्रुतियोजना द्रष्टव्या — अथ येधिकारिणः

१. एतत्प्रतीति ॥ गतागतंप्रति तद्विषयइतियावत्, उदाहरणम् – प्रमाणतयोपन्यासः। २. चरणफलत्व, मितिशेषः। ३. 'पूर्णाहुतिमुत्तमांजुहोति सर्ववैपूर्णाहुतिः। सर्वमेवाप्नोति। अथोइयंवैपूर्णाहुतिः। अस्यामेवप्रति तिष्ठति') तै०. ब्रा८. अ० ६ - प्र०. ८ - अ० १० दशनं ४.) इतिवाक्यस्याऽर्थतोऽनुवादोऽयम्। ४. 'सर्वस्यवाएषाप्रायश्चित्तिः, सर्वस्यभेषजम्, सर्वंवाएतेन पाप्मानंदेवाअतरन्, अपिवाएते न ब्रह्महत्यामतरन्, सर्वं पाप्मानंतरति, तरतिब्रह्महत्याम्' (कां ५-प्र०. ३-अनु० ११) इत्यादि श्रुतिवाक्यमर्थतोऽनुवदति-तरतीत्यादिना ॥ ५. चरणं - कर्माङ्गशुभाशुभाचारः, तत्रशुभाचारफलमित्यर्थः। ६. 'अथयइमेग्राम' इति श्रुतावपीत्यर्थः। ७. अत्र पूर्वपक्षिमत एवंयोजनेतिसंबन्धः। ८. 'अथयइमे' इतिश्रुतीत्यर्थः।

ग्रामे = गृहस्थाश्रमे स्थिताः, इष्टापूर्ते = इष्टंयजनं पूर्तं — कूपखननादि दत्तं दानमितिएतत्त्रयं तन्निकटवर्त्याचरणंचासते = अनुतिष्ठन्ति, ते धूममभिसंभवन्ति = ततो रात्र्यादिद्वारेण नित्याऽनित्यस्वर्गप्राप्तिमन्तो भवन्तिइति। **पुनरावृत्तिशून्यस्वर्ग सिद्धेरि ति ॥** चरणफलभोगोत्तरभाव्यपुनरावृत्तिस्वर्ग सिद्धेरित्यर्थः । एतेन – सांगकर्मणएव फलसाधनत्वात् चरणस्यच यज्ञांगत्वात् चरणाभावे कर्मणः स्वर्गएव न स्यात् अंगविकलत्वात् सतिचतस्मिन्पुनरावृत्तिः स्यात् साधनसद्भावादित्युभयथापि न कर्मणः सकाशात् अपुनरावृत्तिस्वर्गसिद्धिरितिपरास्तम् । ननु — 'नान्यःपन्था'इत्यादिश्रुतिबलेन निर्णयोयुज्यते, निरवकाशचरणश्रुति विरोधादित्याशंक्यनिषेधति — **नचेत्यादिना ॥ रमणीयकपूयपदाभ्यामिति॥** रमणीयत्वकपूयत्व विशिष्टाऽधिकारिवाचिभ्यां पदाभ्यांलक्षणया यज्ञादिविशिष्ट ग्रहणसंभवादित्यर्थः । न यज्ञादय उपलक्षणत्वेनोपात्तुंशक्यन्ते, अधिकारिणामयज्ञादिकारित्वादित्यतआह — **यज्ञादिकारिणामिति ॥** यज्ञादिकारिणां प्रकृतत्वेन संभवात् येयज्ञादिकारिणो रमणीयाः, कपूयाश्चेति तदुपलक्षणस्य संभवादितिपूर्वेणाऽन्वयः । **तथापीति ॥** न चरणशब्दस्याऽऽनर्थक्यमितिशेषः । कुतस्तस्यकर्मवाचकत्वमित्यतआह — **यथाखल्विति ॥** अस्तितावत्कर्मणि चरणशब्दप्रयोगइति तस्यवृत्तिरंगीकर्तव्या चर्यतइतियोगेन वाचकत्वसंभवे लक्षणाऽसंभवात् वाचकत्वमेवेतिभावः । **प्रयोगादिति ।** प्रयोगसंभवादित्यर्थः। प्रयोगासंभवंसूचयितुं प्रकृतेरेकस्मिन्नर्थेप्रयोगं दर्शयति — **प्रयुज्यतेहीति ॥** प्रकृतिद्वयं पर्यायेणप्रयुज्यतइत्यर्थः । अयंभावः — धर्मंकुरुतेत्यर्थे 'धर्मंचरिते'ति प्रयोगात् धर्ममाकुरुतेत्यर्थे 'माचरते'ति प्रयोगात् करोतिचरत्योः पर्यायत्वम् । ततश्च कृतिविषयाणां यज्ञादीनां कर्मव्युत्पन्नकृतशब्दवाच्यत्वमिव 'कृत्यल्युटोबहुळ'मितिवचनात् कर्मणिव्युत्पन्न चरणशब्दवाच्यत्वमपि सिद्धमेवेति कर्मण्यपि चरणशब्दप्रयोगः संभावितएवेति । एतेन कुरुतेत्यर्थे चरतेतिप्रयो-

---

१. श्रुतौ ग्रामाइतिप्रथमान्तपाठःक्वचित् ग्रामस्थाइतितदर्थः । २, ३,४ 'आनर्थक्य' (३-१-११) मितिसूत्रीयटी०. प्र०. धा०. ५, ६ ७. 'सुकृते' (३-१-१२) ति सूत्रटीकाप्र०. धा०.

गेण करोतिचरत्योः पर्यायत्वसिद्धावपि चरणशब्दस्य यज्ञादिवाचकत्वाऽसिद्धिरिति परास्तम् । **साधारणश्रुतेरिति** ॥ 'तद्यइहरमणीय चरणा' (छा०. ५-१०-७) इतिसाधारणश्रुतेः सांगकर्माभिधायकत्वमभ्युपेयम्, यज्ञांगमात्रपरत्वे बाधकस्योक्तत्वा दितिभावः ।

**पूर्वपक्षस्तु** — चरणफलमेव गतागतं न यज्ञादिकर्मणः 'तद्यइह-रमणीयचरणा'इतिश्रुतेः, चरणस्यच 'सयथाकारीयथाचारी तथाभवती'तिश्रुतेः, 'आचारइतिसंप्रोक्त'इतिस्मृतेश्च कर्मणोऽन्यत्वात् । नच– 'अथयइमेग्रामइष्टापूर्तेदत्त-मित्युपासत' (छा०. ५ · १०) इतिश्रुतेः, गतागतं यज्ञफलमेव न चरणफलमिति-वाच्यम्–'इष्टापूर्तेदत्तमित्युपशब्देन यज्ञसमीपवर्तिवाचिना चरणमभिधाय 'इष्टापूर्ते' इत्य-नेन यज्ञंचाभिधाय उभयफलस्य 'तेधूममभिसंभवन्ती'त्यादिना द्विविधस्वर्गस्या ऽभिधानात् । अयमत्रविवेकः–एकस्तावत् पुनरावर्तियुक्तः स्वर्गः, अपरस्तु अपु-नरावृत्तियुक्तः । तत्र आद्यः – चरणफलं, तद्भोगानन्तरं यज्ञफलस्यपुनरावर्ति-वर्जितस्य स्वर्गस्यप्राप्तिर्भवति । प्रायश्चित्तेन पापानां संसारापादकानामनन्तकर्मणाम् अपुनरावृत्तिस्वर्गसाधनज्योतिष्टोमादिमहिम्ना विनाशोवा, पंडतैवा, भवतीति । अतो गतागतस्याऽन्यफलत्वात् कर्मणा पुनरावर्तिशून्यस्वर्ग सिद्धेर्नतत्र वैराग्यादिना कृत्यमिति ।

**सिद्धान्तस्तु** — न गतागतस्य कर्मफलत्वाभावः 'नान्यः पन्था'इति-गतागतशून्यफलस्य कर्मसाध्यताया निषिद्धत्वात् । 'इष्टापूर्तंमन्यमाना'इतिश्रुत्या, 'त्रैविद्यामा'(गी०.९-२०) मितिस्मृत्याच गतागतस्यकर्मफलत्वोक्तेश्च। नच–'तद्य-इहरमणियचरणा'इतिश्रुतिविरोधः – तस्या उदाहृतश्रुत्याद्यनुरोधेनाऽजहत्स्वार्थ-लक्षणया यज्ञाद्यर्थत्वोपपत्तेः । अथ 'यज्ञेनदानेन तपसालोकान् जनयन्ती'ति विस्पष्टश्रुतेश्च, अपिचैवं कार्ष्णाजनिराचार्योमन्यते, ननु – 'रमणीयचरणा'इति श्रुतेः लक्षणया यज्ञाद्यर्थत्वमिति न युक्तं, रमणीयाइत्यनेनैव यज्ञाद्युपलक्षणसंभ-वेन चरणशब्द वैयर्थ्यप्रसंगादितिचेत् -- अत्रवक्तव्यम् -- किं चरणशब्दवैयर्थ्य

१. 'सुकृते' (३-१-१२) तिसूत्रटीकाप्र०.धा०. २. पंडम्यन्तम् । ३. कार्याजनकता । (पा. ने. ३. )

प्रसंगात् यज्ञाद्युपलक्षणत्वमेव नेत्युच्यते, आहोस्वित् यज्ञाद्युपलक्षणत्वमंगीकृत्य चरणपदकृत्यमात्रं पृच्छसीति । नाद्यः — श्रुत्यादिविरोधस्योक्तत्वात् । द्वितीयेतु — यज्ञादिकारिणां साध्वसाधुचरणाभ्यामेव रमणीयत्वं कपूयत्वंच भवतीति ज्ञापनाय चरणपदमितिब्रूमः । अथवा — पुनरस्तु चरणपदं यज्ञादिवाचकमेव, धर्मंकुरुतेत्यर्थे चरतेति प्रयोगात् करोतिचरत्योः पर्यायत्वेन धर्मशद्वाभिधेये पुण्यसाधने यज्ञादिसर्वकर्मणि कर्मणिक्ते निष्पन्नकृतशद्वाभिधेयत्वस्य सर्वसिद्धत्वेन तत्पर्यायस्य कर्मणिल्युडन्तस्य चरणशद्वस्याऽपि शैक्तेरवर्जनीयत्वात् अपिच एवमेव बादरिराचार्योपि मन्यते । अतो गतागतस्य कर्मफलत्वात् क्लेशसाधनेतस्मिन्, तत्साध्येच विरक्तेन भवितव्यमिति सिद्धम् ( अ० १०. )

[ ११ – अधिकरणम् ]

## ॐ अनिष्टादिकारिणामपिच श्रुतम् ॐ [ सू. १३ ]

**नहिकामोस्तीति**।। फलजनकस्यकर्मणः कामना अङ्गम् अनिष्टादिकारिणश्च न फलोद्देशेन इष्टादिकारिवत् कर्मकुर्वन्ति । ततश्च – व्यंगत्वात् न तत्कृतं कर्म दुःखजनकम् । ँअन्यथाब्रह्मवधहेतूनांमुद्गरादीनामपि तज्जन्यदुःखस्यादितिभावः। **कामान्यःकमयतइति**।। मन्यमानोयजमानः यज्ञाद्यनुष्ठानसमये तज्जन्य कामान् विषयान् कामयमानःसन् यज्ञाद्यनुतिष्ठति। सएव सकामभिः = कामसहकृत यज्ञादिभिः तत्रतत्र सुरनरतिर्यगादिषु भोगाय जायते । पर्याप्तकामस्य त्यक्तैषणस्य, मत्तस्य, कृतात्मनश्च, कृतकृत्यस्य, विरक्तस्यच, सर्वेकामाः विषयसाधनानि सर्वाणिकर्माणि, प्रतिमुच्यन्ति = तद्बंधकानि न भवन्तीति पूर्वपक्षिमतेश्रुत्यर्थः । **पुण्यकृतामेवेति** ।। बाहुल्येन पुण्यंकृत्वा ये पापभयपूर्वकमनुतिष्ठन्ति तेषामेव गमनादिसर्वमपिदुःखम् , इतरेषां विधिनिषेधभयमपहाय स्वेच्छाचारि-

---

१. सर्वसंमतत्वेनेतिभावः । २. यज्ञादिसर्वकर्मणिशक्तेरित्यर्थः । ३. गताऽऽगतेत्यर्थः । ४. अत्राऽधिकरणे त्रीणिसूत्राणि । ५. कामनारहितेनकृतमित्यर्थः । ६. कामनाऽभावेपि कर्मणःफलदत्वे । ७. त्यक्ताईषणायेनेति बहुव्रीहिः । ईषगतिहिंसादर्शनेष्विति पाठतस्यईषधातोः धातूना मनेकार्थत्वादिच्छार्थकतामाश्रित्यततोभावे अघ्यन्तादपि बहुलग्रहणात् युचिईषणेतिसिध्यति । ८. आथर्वणश्रुत्यर्थः ।

णां मत्तानां मोक्षएवेत्यर्थः । एतेन नरकादिदुःखस्य यज्ञफलत्वाभावात् इष्टादिकारिणामेव दुःखमित्यप्ययुक्तमिति परास्तम् । **इष्टादिकारिणामेवेति** ॥ विधिनिषेधभयवतामेवेत्यर्थः। **श्रुतत्वादिति**॥ येशुभकृतो येचाऽशुभकृतइति पुण्यकृद्वत् केवलपापकर्त्तुरपि ग्रहणादितिभावः । नन्वनिष्टादिकारिणां गतागतक्लेशस्य भयाप्यङ्गीकृतत्वादित्यतआह — **अनिष्टादिकारिणइतीति** ॥ धर्मसमुच्चये चैशब्दः। 'अनिष्टादिकारिण'इति सौत्रपदेन ये त्वया मुक्ति भागित्वेनोक्ताः विधिनिषेधभयशून्यत्वेन दुःखैसाधनं व्यर्थं, विधिनिषेधभयवता मनिष्टादिकारिणांगतागते, इष्टाद्यकारित्वेसति तद्विरुद्धकारिणोमत्ता, स्तउच्यंतइत्यर्थः । एतेन 'नहिकश्चित्क्षणमपि जातुतिष्ठत्यकर्मकृ' [ गी०. ३ - ५ ]दितिवचनात् इष्टाद्यकारिणः तद्विरुद्धकारित्वं नियतमेवेति तद्विरुद्धकारिणो गतागतक्लेशसमर्थनेन कृतत्वात् इष्टाद्यकारिग्रहणंव्यर्थमिति परास्तम् , मत्तत्वसूचनाय तद्ग्रहणस्यावश्यकत्वात् ॥

**पूर्वपक्षस्तु** — इष्टादिपुण्यकृतामेव गतागतादिक्लेशाः तेषां विधिनिषेधभीतियुक्तत्वात् 'बिभ्यत्पततिपादपा'दितिन्यायात् । किंच — कामनाहि कर्माङ्गं, सांगमेवच कर्म फलहेतुः नतु व्यङ्गम् । कामनावन्तश्चते, उक्तंच — 'कामान्यः कामयतेमन्यमानः सकामभिर्जायते तत्रतत्रे'ति। इष्टादिकारिणस्तु स्वयमेवस्वात्मानं विधिनिषेधाभ्यां बध्नन्ति, उपनीतस्यैव विधिनिषेध विषयत्वात् । अनुपनीतास्तुमत्ताः । नह्यनुपनीतंप्रति 'अहरहः संध्यामुपासीते' त्यादिशास्त्रंप्रवर्ततइतिशक्यतेवक्तुम् , शूद्रादीनां तत्प्रसंगात् । अतः — पुण्यपापकृतामेव गमनागमनादिदुःखं नतु पापमात्ररतानांमत्तानाम् । किंतु मोक्षएवेति पुण्येतत्फलेच विरक्तयाभवितव्यं, नतु पापमात्रानुष्ठानइति ।

**सिद्धान्तस्तु** — न पुण्यपापे संकल्प्या ऽनुतिष्ठतामेव गतागतादिक्लेशः किंनाम पापमात्रानुरक्तानां मत्तानामपि 'तद्यइहशुभकृतो येचाऽशुभकृत'इति प्रत्येकं गतागतक्लेशाभिधानात् , न केवलं पापमात्रानुरक्तानां सर्जवत् गता-

१. पूर्वपक्षिणा । २. 'तद्विरुद्धकारिणश्चे'तिटीकास्थचशब्दइत्यर्थः । ३. तेषामिल्यादिः । ४. 'नियते' । तर्हिकेऽत्रविवक्षिताइतिचे'दितिशेषः । ५. येइतिशेषः ।

गतक्लेशएव किंनाम संयमनेत्वनुभूय नित्यनरके पातोभवति । येतु सज्जीवाःसन्तः पापमनुतिष्ठन्ति तेषामारोहो भवति । 'सर्वेवाएतेशुभकृत'इतिकौठरव्यश्रतौ तथादर्शनात् । 'गच्छन्तिपापिनःसर्वे नरकंनात्रसंशयः। ततभुक्त्वा पतन्त्येव येद्विषन्तिजनार्दन' मित्यादिस्मृतेश्च । नचभयकामनाद्यभावविरोधइतिवाच्यम् — अबिभ्यता फलकामनाशून्येनापि उपभुक्तस्य विषस्य मरणहेतुत्वदर्शनात् । अतोऽनिष्टादिकारिणामपि महानर्थत्वेन मोक्षाशाया दूरोत्सारितत्वात् भवितव्यं तत्रापि विरक्तेनेतिसिद्धम् ( अ०. ११ )



( १२ — अधिकरणम्, )

## ॐ अपिसप्त ॐ ( सू. १४ )

ननु — सूत्रमिदमयुक्त नरकभोगस्य नित्यत्वं समर्थनीयमसमर्थयित्वा, नरकसंख्यामात्राभिधानात्, भाष्यंचाऽयुक्तं नरकभोगस्यानित्यताऽसमर्थनादित्यत सूत्रभाष्ययो स्तात्पर्यमाह — **नरकभोगोभवत्येवेत्यादिना, इतिस्मृतेरित्यन्तेन** ॥ क्वचित्तु 'इतिस्मृतेरित्यर्थ'इतिपाठः, तस्यतात्पर्यार्थइत्यर्थोबोध्यः । ननु — रौरवादिपंचम्यएवाऽऽरोहावरोहौ नतु तामिस्राऽन्धतामिस्राभ्यां, तथाच — 'एतानिक्रमशोगत्वे'ति कथं सप्तानां परामर्शइत्यतआह — **एतानिपंचेति** ॥ पंचानामेव 'एतानी'ति परामर्शः कृतौ न सप्तानामितिभावः॥ **अतिशयेनतत्रवैराग्येण भवितव्यमिति** ॥ नान्विदमयुक्तं वैराग्येअतिशयाऽभावात् । तथाहि — वैराग्यंनामविरागता, रागाऽभावइतियावत् । नचा ऽभावेतारतम्यमस्ति, । येन ब्रह्महननवैराग्यात् भगवद्विद्वेषे वैराग्यस्याऽतिशयइतिचेत् —

१. अतः-भयकामनादेरकारणत्वात् । अनिष्टेति ॥ सूत्रादोवर्तमानैतत्पदे नञ् निषेधविरुद्धोभयार्थकः, इष्टादिकमकुर्वताम् इष्टादिविरुद्धपापंकुर्वतांचेत्यर्थः । २. पापेपि ।

३. समर्थनार्थकसमर्थशब्दात् ण्यन्तप्रकृतिकैरजन्तात् करोतिण्यन्तात् क्त्वाप्रत्यये । ज्ञापकसिद्धत्वात्पृथक्करणस्यक्वाचित्कत्वेन अत्रसमःपृथक्करणाभावात् समर्थयित्वेत्येनेन नञ्समासे 'अनञ्समास'इति निषेधात्नल्यप् । असमर्थ्येति सांप्रदायिकः पाठः ।

४. परामर्शकैतानीतिशद्बप्रयोगः कथमुपपद्यतइत्यर्थः । ५. कृतः — विवक्षितइत्यर्थः । सर्वनाम्नांबुद्धिस्थयावदर्थकत्व स्वभावादितिभावः ।

सत्यम् — अभावे न तारतम्यम्, तथापि हरिद्वेषादिविरागतायां महताप्रयत्नेन महादरेण भाव्यावित्यभिप्रायेण तथोक्तमित्यदोषः ॥

**पूर्वपक्षस्तु** — नरकं न नित्यदुःखसाधनं, 'यावदिंद्राश्चतुर्दशे'त्यादौ अवधिमत्त्वश्रवणात् । नचोभयंयुक्तं, विरोधात् । नच — पुरुषभेदेनव्यवस्था 'चकारनरकंशून्य'मिति शून्यताऽभिधानात् । ततश्च — संयमनेत्वनुभूयकेषांचिदवरोहइति प्रागुक्तमयुक्तमिति नेतरपापेभ्यो भगवद्विद्वेषेऽतिशयितेन वैराग्येणा ऽभाव्यमिति ॥

**सिद्धान्तस्तु** — भवेदेवं यद्येकमेवनरकंस्यात् नचैवम् किंनाम 'रौरवोऽथ महांश्चैव वह्नि वैतरणी तथा । कुंभीपाक इतिप्रोक्तान्यनित्यनरकाणितु । तामिस्रश्चाऽन्धतामिस्रौ द्वौ नित्यौ संप्रकीर्तितावि'ति वचनात् सप्तनरकाणि । 'चकारनरकंशून्य'मित्यादीनि रौरवादिपंचनरकविषयाणि । 'नैवोत्तिष्ठंती'त्यादीनितु तामिस्राऽन्धतामिस्राविषयाणि, अन्यानिच बहूनि क्षुद्रनरकाणिसन्ति तान्यपि अनित्यफलदानि । अतो भगवद्द्वेषादिफलस्य नित्यनरकत्वात् इतरपापेभ्यो ऽतिशयेन तत्र वैराग्यैण भवितव्यमिति सिद्धम् (अ०. १२)

[ १३ - अधिकरणम् ]

## ॐ तत्राऽपिच तद्व्यापारादविरोधः ॐ ( सू. १७ )

**उभयविधस्थानेति** ॥ वैकुंठभूलोकदर्शनं संदेहबीजमित्यर्थः । नरके दुःखांगीकारे ईश्वरस्य दुःखस्यादित्यनिष्टमापादयितुं नरके ईश्वराभावात् न तस्यदुःखापादनं युक्तमित्याशङ्कानिरासाय पृच्छति — **किंतत्रेति** ॥ **आद्यंदूषयतीति** ॥ नरके ईश्वरमंगीकृत्य, तत्रदुःखमस्तीतिवदन्तं वादिनंदूषयतीत्यर्थः । एतेन — नरके दुःखस्यैव दूषणीयत्वात्, तत्रेश्वरोस्तीत्याद्यपक्षदूषणमयुक्तमितिपरस्तम् । **यदिनरकस्येति**॥ अत्र यदिनरकस्य सदुःखतांऽगीक्रियतेइत्येतत्, आपादकं तर्हि — ईश्वरस्यदुःखभोगप्राप्तिः स्यादित्येवमापाद्यम्, नरकस्यसदुःखत्वं नेश्वरदुःखभोगाऽऽपादकं नियामकाभावादित्यतउक्तम् — **दुःखिसहावस्थाना-**

१. अङ्गीकरणमित्यर्थः ।

**दिति ॥** दुःखिसहावस्थानमसिद्धमित्याशङ्कापरिहाराय तत्रस्थानां 'प्रेरकतया ईश्वरोऽभ्युपगम्यत'इत्यनेन पराऽभ्युपगमप्रदर्शनं कृतमितिबोध्यम् । एतेन — यदिनरकस्यसदुःखतांऽगीक्रियते, तर्हि ईश्वरस्य दुःखभोगप्राप्तिः स्यादित्येताव-तैव पूर्णत्वात् अधिकं व्यर्थमिति परास्तम् । विपर्ययेपर्यवसानमाह — **ईश्व-रस्येति ॥** भूलोके दुःखिसहावस्थितस्यापि ईश्वरस्यशक्तिवैशेष्यात्दुःखाऽभोगवत् नरकेपि दुःखाऽभोगोऽस्त्वित्याशंक्य निषेधति — **न चेति** ॥ कुतोनेत्यतआह - **दुःखाननुभवइति ॥** युज्यते दुःखिना सहावस्थितस्यापि ईश्वरस्य भूलोके स्वीयतयादुःखानुभवाऽभावः, भूलोकस्य सर्वेषां स्वस्थितानां दुःखजननस्वभावा-भावेन ईश्वरीयदुःखाभावात् , अस्वकीयस्यदुःखस्य स्वकीयतया ऽननुभवस्य गुण-त्वेन सावज्ञाऽविघातकत्वात् , नरकस्थस्यतु ईश्वरस्य न स्वीयतया दुःखस्या ऽननु-भवाभावोयुज्यते, नरकस्य स्वस्थितानां सर्वेषांदुःखजननस्वभाववत्त्वेन स्वकीयदुःख-प्राप्त्या तदनुभवाभावस्य सार्वज्ञविरोधित्वादितिभावः । **द्वितीयमिति ॥** द्वितीय-वादिनं निराचष्टइत्यर्थः । **प्रकारद्वयेपीति ॥** नरकेईश्वरांगीकारे ईश्वरस्यदुःख-प्राप्त्या न नरकस्यदुःखजननस्वभावः, तदनंगीकारेतु 'सर्वंविसृजती'तिश्रुत्या तस्य कार्यमात्रं प्रति कारणत्वात् तद्रहितप्रदेशे दुःखसंभवेन प्रकारद्वयेपि नरकस्य-सदुःखत्वानुपपत्तिरितिभावः । **नचोक्तदोषइति** ॥ ईश्वरंविना नरकेदुःखांगी-कारे तस्य सर्वकारणताग्राहकश्रुतिविरोधः स्यादित्युक्तदोषः स्यादितिनवाच्य-मित्यर्थः । **असार्वज्ञतामाशङ्क्येति** ॥ 'नासौदुःखभु'गित्युक्त्यासर्वथादुःख-ज्ञानमेव नास्तीति मन्यमानस्य शंकामाशंक्येत्यर्थः ।

**पूर्वपक्षस्तु** — नरकं न सदुःखं ईश्वरस्यापिदुःखप्रसंगात् । नचसहा वस्थितयोः जीवेश्वरयोः जीवस्यैवदुःखं नेश्वरस्येति संभवति । नच — भूलोके सहावस्थितयोः जीवेश्वरयोःजीवस्यैवदुःखं नेश्वरस्य शक्तिवैशेष्यादितिवत् नरकेपि वैषम्यंस्यादितिवाच्यम् — भूलोकस्य स्वस्थितानांसर्वेषांदुःखजननस्वभावाभावेन

१. 'संभोगप्राप्ति ( ब्र. १-२ )'रि तिसूत्रोक्तदिशाविशेषसामर्थ्यवत्त्वा'दित्यर्थः ।
२. प्रकारद्वयेनापीति क्वचिट्टाकायांपाठः ।

तत्र तथासंभवेपि, नरकस्य स्वास्थितानां सर्वेषां दुःखजननस्वभाववत्त्वेन वैषम्याऽयोगात् । नच — तत्रेश्वराभावान्न दुःखप्रसंगः — सर्वसृजतीर्गतिश्रुत्या ईश्वरस्य कार्यमात्रंप्रति कारणत्वेन तत्रेश्वराभावे सुनरांदुःखायोगात् । ततश्चोभयथापि-दुःखासंभवात् न तत्र वैराग्येण भाव्यमिति ॥

**सिद्धान्तस्तु** — भवत्येवनरकंसदुःखम्, तत्रापि ईश्वरव्यापारांगीकारेण अकारणकत्वदोषाभावात् नचेश्वरस्य दुःखप्राप्तिः — नरकस्यापि तद्वशत्वेन अदुःखानुभवेनैव तत्प्रेरकत्वात् । नच — तत्र प्रमाणाभाव. — 'सखर्गेसभूमौसनरक'इतिश्रुतेः, 'नरकेपिवमन्नीश'इतिस्मृतेश्च । ततश्च — नरकस्यसदुःखत्वात् तत्र वैराग्येण भाव्यमिति सिद्धम् । ( अ०. १३ )

( १४ - अधिकरणम् . )

## ॐ त्रिद्याकर्मणोरितितु प्रकृतत्वात् ॐ ( सू . १८ )

**लौकिकमार्गदर्शनमिति** ॥ लौकिकमार्गे स्वातन्त्र्येण गम्यत्वदर्शनमित्यर्थः । **अयंभावः** — लौकिकमार्गस्तावत्स्वातंत्र्येणगम्योदृष्टः प्रकृतौच मार्गावलौकिकौ, अतो लोकवैलक्षण्येनभाव्यम् नच वैलक्षण्यंसर्वात्मनाभवतीति केनचिद्रूपेण वाच्यमितिसंदेह उपजायते, किमनयोर्मार्गयोः स्वातंत्र्येण गम्यत्वाभावेनवैलक्षण्यं उत स्वातंत्र्येणगम्यत्वेपि प्रकारांतरेण वैलक्षण्यमिति। यद्यप्यलौकिकत्वमेव संदेहबीजं, तथापि — संदेहं जनयतोऽलौकिकत्वस्य लौकिकदर्शनं साचिव्यमाचरतीति भावेन लौकिकमार्गदर्शन, मलौकिकत्वंच, संदेहबीजमित्युक्तम्, नतु समकक्षयत्वाभिप्रायेणेतिबोध्यम् । एतेन — लौकिकदर्शनं नाऽलौकिकसंदेहापादकं, संदेहधर्मिसंबंधित्वाभावात्, अन्यथा ऽतिप्रसंगइतिपरास्तम् । **तादृशस्याप्यभावइति** । सत्यपिज्ञापके फले न तादृशस्वातन्त्र्यमभ्युपगम्यते, तर्हि साधनेपि न स्यादविशेषात् । ततश्च वैराग्याद्यनुष्ठानमपि न स्यादितिभावः । एतेन — तादृशस्वातन्त्र्यस्यफलेऽभावे साधनानुष्ठानाऽभावापादनमयुक्तं, व्यधि-

१. साधनेनसहपाठरूपे । २. तदधीनस्वातन्त्र्याभावे ।

करणत्वादिति परास्तम् । ' जायस्वम्रियस्वेत्येतत्त्याचष्टे — पुनः **पुनर्जायन्त-इति** ॥ ' क्रियासमभिव्याहारे लोट्लोटोहिस्वौवाचतध्वमो' ( पा. सू०. ३-४-२ ) रिति स्मरणात् जायस्वम्रियस्वेत्युपपन्नम् ।

**पूर्वपक्षस्तु** — भवन्त्येवजीवा गत्यादिफलेस्वतन्त्राः, ' अथैतयो नैंकत-रेण गच्छन्ती' ( छा०. ५ - १० - ८ ) ति वचनात् । नहि — स्वातन्त्र्याभावे गच्छन्ति नगच्छन्तीति व्यपदेशो युज्यते। नच जीवानामस्वातंत्र्यं प्रतिपादितमिति-वाच्यम् — साधनवत्स्वे ईश्वरदत्तस्वातंत्र्यांगीकारात् । अतो 'मूलेलब्धफलेनैव-शाखाग्रं गंतुमिच्छति' इतिन्यायात् फलएवस्वातंत्र्यात् किं वैराग्यादिसाधनेनेति ।

**सिद्धान्तस्तु** — न जीवाः गत्यादौ स्वतन्त्राः, प्रमाणाऽभावात् । ' अथै-तयो' ( छा०. ५-१०-८. ) रितिश्रुतिगतै' तच्छद्बस्य ' तयइत्थं विदु र्येचारण्ये श्रद्धातपइत्युपासते' तेर्चिषमभिसंभवन्ति, ' अथयइमेग्रामइष्टापूर्तेदत्तमित्युपासते ते धूममभिसंभवन्ती' ( छा०. ५ - १० )ति विद्याकर्ममार्गयोरपि प्रकृतत्वात् तत्परा-मर्शकत्वेन, अस्य वाक्यस्य साधने स्वातन्त्र्यनिर्देशात्मकत्वात् । नच — विद्या-कर्ममार्गवत् देवयान पितृयान (ण)योरपि प्रकृतत्वात् कस्यायंपरामर्शइति संदेह-एव स्यात् न निश्चंय इतिवाच्याम् ' विद्यापथः कर्मपथो द्वौपंथानौ प्रकीर्तितौ ।

---

१. ' पाणिनीयसूत्रात् , तेनसर्वपुरुषसर्ववचनानांस्थाने हिस्वौविहितौ, अतोऽत्रज्ञस्य-स्थाने स्वः, आर्षत्वात् ' यथाविध्यनुप्रयोग ' इति अनुप्रयोगोन, पौनःपुन्यद्योतकं ' क्रिया-समाभिव्याहार ' इतिवार्तिकविहितं द्वित्वंतु न भवति, पौनः पुन्यस्य ' असकृदावृत्तीर्ना'ति-पदसमभिव्याहारात्प्रतीतेः । यद्वा — 'क्रियासमभिव्याहार'इति पदवर्जं सूत्रमनुवर्त्य ' समुच्चयेऽन्यतरस्या'मितिसूत्रेणस्वः, पौनःपुन्यं समभिव्याहारगम्यमिति टीकादितात्पर्यम्।
२. उपपन्नम् जायन्तइत्याद्यर्थे 'जायस्वे' त्यादि साधुभवतीति' । ३. 'नैकतरेणच-तार्नी'त्येव श्रुतिपाठः, 'गच्छन्ती'त्यध्याहृतं व्यासतीर्थभावबोधवेदेशतीर्थादिभिः, झटिति अर्थबोधाय अध्याहृतपदाविशिष्टा श्रुति रुदाहृता। श्रुतिरेव एवमानुपूर्वीकेति केचिन्मन्यन्ते । ४. 'स्वात्मनाचोत्तरयो' ( ब्र. २-३- ) रित्यत्राविशिष्यगत्यादौ, असन्ततेश्चाऽव्यतिकर' ( ब्र. २-३-५० ) इत्यादौ सामान्येन तदधीनव्यापारवत्त्वमाधनात् . अस्वातन्त्र्यं प्रति-पादितमित्यर्थः । ५. स्वातन्त्र्यस्वभावादित्यर्थः ।

तद्वर्जितास्त्रिधा याति तिर्यग्वा नरकं तम'इति वचनात् निर्णयोपपत्तेः । अतः फले स्वातन्त्र्याऽभावात् अपेक्षितं वैराग्यादिसाधनमिति सिद्धम् (अ०.१४)



( १५ – अधिकरणम् . )

## ॐ न तृतीये तथोपलब्धेः ॐ [ सू. १९ ]

**लोकदृष्टिरलौकिकत्वंचेति।।** इहापि अलौकिकत्वमेवसंदेहवर्जि लौकिकदृष्टिस्तु प्रागुक्तदिशा तस्यसाचिव्यमाचरतीति तथोक्तमितिवेद्यम् । एतेन लोकदृष्टे लौकिके सुखवत्वरूपकोटि प्रापकत्वेऽपि अलौकिके तदप्रापकत्वात् संदेहबीजत्ववर्णनमयुक्तमितिपरास्तम् । एव मेवंजातीयके सर्वत्रद्रष्टव्यम् । अतिवैराग्यमिति ॥ नरकाऽपेक्षयेत्यर्थः । अप्रियत्वादिति ॥ अभिव्यक्ताऽप्रीति विषयत्वादित्यर्थः । एतेन – एतेषामेव संसारदशायां सुखित्वेनेश्वरेष्टत्वदर्शनाव्यभिचारइति परास्तम्। तत्राऽप्रियत्वसद्भवेपि हेतुकृताऽभिव्यक्ताऽप्रीति विषयत्वस्य तत्राऽभावात् । भाष्यस्थ 'लोकसिद्धि'रितिपदमनूद्यव्याचष्टे – **लोकसिद्धिरिति** । लोकसिद्धदृष्टांतेन तमसः सुखराहित्यसाधकमनुमानं स्मृतिसिद्धमितिभावः । **अनेनव्यतिरेकान्वयाविति** ॥ 'विमता न सुखवत्वेनेश्वरेष्टाः तदप्रियत्वा'दितिप्रयोगे 'अतिप्रिये यथाराजा न दुःखं सहते क्वचि'दित्यनेना ऽर्थात् यो यस्यसुखित्वेनेष्टः नाऽसौ तस्याऽप्रिय इतिव्यतिरेकः सूचितः, । 'अत्यप्रिये सुखमपी'त्यनेन यो यस्या ऽप्रियः, नाऽसौ तस्य सुखित्वेनेष्टइत्यन्वयो दर्शित इत्यर्थः । अतः परं श्रूयमाणं 'सदसज्जनानां वाप्रकृति'रितिवाक्यं न टीकावाक्यं किंतुप्रक्षिप्तम्, अवश्यं चैतदेवंविज्ञेयं, 'चशब्दाल्लोकसिद्धिरपि स्मार्तेत्याहे'ति भाष्यविरुद्धत्वात् । अस्मिन्भाष्ये लोकसिद्धदृष्टांतकानुमानस्य स्मार्तत्वाभिधानेन स्मृतेः अनुमानांगव्याप्तिनिरूपणपरत्वस्यैव भाष्याऽभिमतत्वात्, अस्यवाक्यस्य पूर्वे-

१.विद्याकर्ममार्गयोरेवपरामर्श इतिनिर्णयेत्यर्थः । २.अत्राऽधिकरणेपञ्चसूत्राणि। ३. अतिशयेनवैराग्यमितिक्वाचित् टीकायांपाठः । ४, ५, ६. 'स्मर्यंत' (३-१-२०) इति सूत्रीयटीका प्र०. धा०.

णान्वयाभावाच्च । नच — सदसज्जनानां वा प्रकृतिः अनेन दर्शिते[1] त्यन्वय-इतिवाच्यम् – सदसज्जनस्वभावनिरूपणस्याऽसंगगतत्वात्, स्मृतौतदनुपलंभाच्च। **मोहान्यथानुपपत्तेरिति ॥** ननु मोहस्यदुःखविशेषकार्यत्वात् मोहान्यथानुपपत्त्या दुःखातिशय एव तत्र सिध्येत्, न सुखाभावः तत्कथमुच्यते मोहान्यथा-ऽनुपपत्ते र्न तत्रसुखलेश इतिचेत् – सत्यम्– मोहान्यथाऽनुपपत्त्या दुःखएवाति-शयः सिध्यति अतिशयश्चनिरवधिकत्वमिव सुखलेशाऽसमानाधिकरणत्वमपीति तथोक्तम्। ननु – भाष्ये–'तृतीयतमसः श्रवणात् संशोकजमोहप्राप्ति' रित्ये-तावतैव पूर्णत्वात् भाष्ये 'शद्वानुसारा'दितिपदं व्यर्थमित्यतआह – **शद्वानु-सारादितीति ॥** इत्यादीत्यतःपरं सूचयतीतिशेषः। ततश्चैवंयोजना – शद्वानु-सारादितिपदं तृतीयतमसः सम्यग्व्याख्याने अतिमूर्च्छा,अतिसम्यग्व्याख्यानेततो-ऽप्यतिमूर्च्छेत्यादि सूचयतीति । यथायथा व्याख्यानं विशिष्यते, तथातथा दुःखं विशिष्यत इतिसूचनाय तत्पदं प्रयुक्तमितिभावः

**पूर्वपक्षस्तु** — अन्धंतमोऽपि सुखयुक्तमेव दुःखयुक्तत्वात्, दुःखंहि सुखाविनाभूतम् 'यत्रदुःखं सुखं तत्रे'ति वचनात्। अतोऽन्धेतमस्यपि सुखस-द्भावात् न तत्र वैराग्यमपेक्षितमिति ।

**सिद्धान्तस्तु** – नांऽधेतमसि सुखलेशो वक्तव्यः 'अथाऽविद्वानकर्मा ऽवाग्गच्छति 'त्रिधाह्यवाग्गतिःतिर्यग्यातनातम'इति, द्वेवासुखानुवृत्ते, न तमः सुखानुवृत्तमितिश्रुतेः, 'तिर्यक्षुनरकेचैव सुखलेशो विधीयते । नांऽधे तमसि मग्नानां सुखलेशोपि कश्चने'ति स्मृतेश्च । 'विमताः न सुखवन्तः, ईश्वरेण-तथाऽनिष्टत्वात् यो यथा नेश्वरेणेष्टः नासौ तथा, तथा – शृङ्गित्वेनाऽनिष्टः शशो नशृंगी'त्यनुमानाच्च । ईश्वरेणतथानिष्टत्वंच तदप्रियत्वहेतुसिद्धम्, नत्र सुखाभावस्य चतुर्मुखप्रत्यक्षसिद्धत्वाच्च । अधरतमःश्रवणमात्रेण तच्छ्राविणां

१. दर्शितावितिपदस्यानुवृत्त्यास्त्रीलिंग प्रथमान्ततयाविपरिणामेनाऽन्वयइत्यर्थः ।
२. 'तृतीयेशद्वे' (३-१-२२) सूत्रटी. प्र०. धा०. । ३ तृतीयेतिसूत्रभाष्येइत्यर्थः ।
४. तत्सूत्रीय टी०.प्र०.धा०. ५. निरूपणे ।

मोहप्राप्त्यन्यथाऽनुपपत्त्या तत्रत्यदुःखस्य निरवधिकत्वात् सुखलेशाऽसामानाधिकरण्याऽतिशयसिद्धेश्च । नच श्रवणमात्रेण तच्छ्राविणां मोहप्राप्तिरसिद्धेति-वाच्यम् । 'महातम स्त्रिधा प्रोक्त मूर्च्छं मध्यं तथाधरम् । श्रवणेनैव मूर्च्छादि रधरस्य यतोभवे'दितिस्मरणात् । अतोऽन्धेतमसि सुखलेशाभावात् भवितव्यं तत्र तत्साधनेच विरक्तेनेति सिद्धम् (अ०. १५)



( १६ - अधिकरणम् , )

## ॐ तत्स्वाभाव्यापत्तिरुपपत्तेः ॐ ( सू . २४ )

**धूमादिदेवताभिरिति** ।। यद्यपि धूमादिपदमाकल्पस्थायि, तथापि अन्यस्य तत्पदप्राप्तिर्युज्यते, तद्यथा — आमरणभाव्यपि राजपदं किंचित्[1]कालं-स्वयमनुभूय पुत्रस्नेहवशात् पुत्रायदत्वा, महाराज स्तपसे वनंगच्छति, तथा — धूमादिदेवता अपि स्वपदं स्नेहात् कर्मिणे दत्वा, स्वयमन्यत्रगच्छन्तीत्यङ्गीकारे बाधकाभावादितिभावः । **नचैतावतेति** ।। तत्स्वभावप्राप्त्युक्त्या तत्पदप्राप्तिरेव शब्दान्तरेणोक्तेति न मंतव्यमित्यर्थः

**पूर्वपक्षस्तु** — कर्मिणो धूमादिपदप्राप्तिर्वा, तदैक्यं[2]वा भवतीत्यभ्यु-पेयम् । 'धूमोभूत्वाऽभ्रंभवती'ति वचनात् । अनेनवाक्येन सामानाधिकरण्य-बलात् धूमादिभा[3]वतत्पदप्राप्त्योः प्रतीतेः । स्नेहवशात् राजपुत्रस्य राजपदप्राप्ति-वत् अर्जुनस्येन्द्रतादात्म्यवच्च, उभयोरप्युपपन्नत्वात् । अतः प्रकारद्वयेपि सकृदनुष्ठितयज्ञाना माकल्पसमाप्ति परमसुखसंभवात् व्यर्थं कर्मणि तत्फलेच वैराग्यमिति ।

**सिद्धान्तस्तु** — न कर्मिणः तत्तादात्म्यं तत्पदप्राप्तिर्वा संभवति अन्य-स्याऽन्यभावासंभवात्, तत्पदस्य नियताधिकारिभिः ज्ञानेनैव प्राप्यत्वात् , युगपदनेक कर्मिसमवाये ऽनेकेषामेक पदप्राप्त्ययोगाच्च। तस्मात् तद्गतौ गतिः तत्स्थितौ-

१. किंचिदिति निपातसमुदायोऽल्पार्थकः । २. धूमादिदेवतैक्यमित्यर्थः ।
३. तद्भावः - तदैक्यम् ।

स्थितिरित्यादिरूपतत्स्वाभाव्यापत्तिरेव श्रुत्यर्थः। अतो धूमाद्यैक्याद्यभावात् युक्तं-कर्मतत्फलयोर्वैराग्यमिति सिद्धम् (अ० १६)

[१७ – अधिकरणम्.]

ॐ नाऽतिचिरेण विशेषात् ॐ (सू. २५)

**अतिसुखस्यभावादिति** ॥ समानाधिकरणदुःखापेक्षया ऽतिसुखस्य-भावादित्यर्थः। एतेन वैराग्यार्थं गतागतक्लेशस्य प्राक्समर्थितत्वात् तत्राऽति-सुखाऽङ्गीकारे तद्विरोध इतिपरास्तम् दुःखादतिशयस्यैवाऽङ्गीकृतत्वेन दुःखाऽसं-भिन्नत्वाऽनङ्गीकारात्। **आगमनेप्रयोजनाभावादिति** ॥ ननु — सुखमप-हाय आगमनेप्रयोजनाभावात् चिरेणाऽऽयातीत्ययुक्तम्, जीवस्याऽस्वतन्त्रत्वात्, स्वतन्त्रस्यहि प्रवृत्तिनिवृत्ती प्रयोजनाधीने नाऽस्वतन्त्रस्य, प्रयोजनाभावेपि सुख-मपहायैव विष्टिगृहीतानां प्रवृत्तिदर्शनात्। जीवाऽस्वातन्त्र्यं 'यथेतमनेवंचे' (ब. ३-१-१२) त्यत्रोक्तं। किंच यदि जीवस्य प्रयोजनवशात् प्रवृत्तिः तदभावेच निवृत्तिः तर्हि — स्वर्गादागमनमेव न स्यात्, अथ प्रयोजनाऽभावेप्यस्वातन्त्र्यात् स्वर्गान्निवृत्तिः तर्हि ततएव मार्गेऽप्यस्तु अविशेषादितिचेत् सत्यम्-जीवोऽस्वतंन्त्रः, तथापि मार्गेतत्तत्स्वाभाव्यं प्राप्तः तत्रदेवताराधनेन तत्प्रसादात् तत्रतत्र बहु-कालं तिष्ठेदेव, देवताप्रसादस्य सुखाऽवाप्तिहेतुत्वात्। अन्यथा ज्योतिष्टोमा-दपि स्वर्गादिप्राप्तिर्नस्यात्, नहि प्रेक्षावान् सुप्रसन्नदेवतामवाप्यापि स्वेष्टं न लभतइतियुक्तम्। नच – स्वर्गात् आगमनानुपपत्तिः मार्गेवत्तद्देवतास्वाभाव्या-भावेन कर्मसमाप्त्यनंतरं पुनःप्रसादाऽऽर्जनाऽयोगेन तत्र स्थातुमशक्यत्वात् नहि महाराजपुरे निवसन्नपि प्रेक्षावान् राजदर्शनवर्जितो राजभृत्येषु निवारयत्सु स्थातुमीष्टइतिदृष्टम्। येनाऽसौ कर्माऽवसाने स्वर्गएव तिष्ठेत्, कल्पावसानेतु देवानां मुक्तत्वात् तत्सांनिध्याभावेन पुनःप्रसादाऽऽर्जनाऽसंभवात् मातृशरीर-

१. तद्गतधर्मसदृशधर्मवत्त्वम्। एवंच – सादृश्यात्सामानाधिकरण्योपपत्तिरितिभावः। २. सत्त्वादित्यर्थः। क्वचिन्टीकायांलाभादितिपाठः। ३. भृतिंविना कर्मणिनियुक्तोविष्टि-गृहितपदवाच्यः।

प्राप्नुयादिति । **अधिकावस्थाने कारणाभावादिति** । अधिककालावस्थानेकारंणस्य देवताप्रसादस्य कर्मभूमौ ईश्वरप्रेरणादौ सत्येव संपाद्यत्वेन तत्रसंपादनासंभवादितिभावः ।

**पूर्वपक्षस्तु** — कर्मी स्वर्गान्निर्गतः कल्पान्ते देहंप्राप्नोति, 'यथेतमाकाश'मित्यादौ आगमनेवेळायां बहुस्थानप्राप्तिश्रवणात्, बहुस्थानगमनंच नाऽचिरेणसंभवति तत्रतत्र तत्तत्स्वाभाव्येन अतिमहासुखे संभवति तद्विहायाऽऽगमने प्रयोजनाऽभावात् । नच पुण्यस्याऽल्पत्वात् बहुकालावस्थानानुपपत्तिः, देवतासान्निध्यसद्भावेन तत्रावस्थानकारणदेवताप्रसादाऽर्जनोपपत्तेः । नहि प्रेक्षावान् वदोन्यमहाप्रभुसान्निध्ये सति अनाराध्य स्वाभीष्टं न प्राप्नोतीति संभवति । नच तथासति कल्पान्तेपि न मातृशरीरप्राप्ति रिति वाच्यम् — कल्पान्ते स्वपरिचितदेवताया मुक्तत्वेन देवतान्तरस्यच परिचयाऽभावेनाऽऽराधनायोगात् । ततश्च कर्मानुष्ठानेनैव आकल्पंसुखसद्भावात् किं कर्मणि तत्फलेच वैराग्येणेति ।

**सिद्धान्तस्तु** — अचिरेणैव संवत्सरादर्वाक् देहंप्राप्नोति, । 'तद्यइहरमणीयचरणा अभ्याशोहयत्ते रमणीयां योनिमपद्येरं'(छा०.५-१०- )इतिश्रुतेः, 'स्वर्गाल्लोकादवाक्प्राप्तो वत्सरात्पूर्वमेवतु । मातुःशरीरमाप्नोति पर्यटन् तत्रतत्रचे'ति स्मृतेश्च । कर्मफलस्य[1]कृतकालत्वेन अधिकावस्थानानुपपत्तेश्च । इहलोकएव पुण्यार्जनमिति भगवता[2]क्लृप्तत्वेन तत्रैव[3] पुनर्देवताऽऽराधनाऽनुपपत्तेश्च । अतः कर्मिणोऽचिरेणैव गर्भवासादिदुःखसद्भावात् भवितव्यं कर्मादौ विरक्तेनेति सिद्धम् ( अ०. १७ )

( १८ – अधिकरणम्. )

## ॐ अन्याधिष्ठिते पूर्ववदभिलापात् ॐ ( सू. २६ )

**वैराग्यायेति** ॥ ननु कर्मिणोव्रीह्यादिभावनिरासेनाऽदुःखित्वाभिधाने न कर्मणिविरज्येत किंत्वनुरज्येत दुःखाभावात्, किंचैवंसति प्राचीनं गतागतके[4]

१. फलत्वेननिमित्तस्य । २. बहुप्रदः । ३, धूमादिलोकेष्वेव । ४. अत्राधिकरणेद्वेसूत्रे ।

शस्य कर्मफलत्वसाधनमयुक्तंस्यात् , अपिच 'तद्य इह रमणीयचरणा रमणीयां योनि-मापद्यन्त' इति श्रुत्युक्तरमणीय चरणफलस्यापि अतिदुःखरूपत्वेन तत्फलत्वं निषेध्यं स्यात्, अन्यथा — श्रुत्युक्तसुखसाधनस्यापि दुःखहेतुत्वे श्रुत्युक्तवैराग्येपि तच्छङ्कास्यात् , अथ गतागतादिक्लेशस्य कर्मफलत्वं, वैराग्योपयोगीति, प्राचीनं तत्समर्थनमुपपन्नं हन्ततर्हि व्रीह्यादिभावस्यापि कर्मफलत्वंवैराग्योपयोगीति तन्निषेधो व्यर्थः स्यात् अविशेषादितिचेत्, न, वैषम्यात्, युक्तंगतागतक्लेशस्य कर्मफलत्वव्युत्पादनम् तस्यक्लेशस्य सुखोत्पत्तिनान्तरीयकत्वेन वेदोक्तकर्मजन्यत्वे वेदाप्रामाण्य-प्रसक्त्यभावेन वैराग्यविधायकशास्त्राऽऽश्वासाऽविघातात् । नहि ज्योतिष्टोमादि-कर्मण इष्टोत्पत्तिनान्तरीयक दुःखजनकत्वमात्रेण इष्टसाधनत्वं विहन्यते, नापि तच्छास्त्रप्रामाण्यं विहन्यते, शास्त्रार्थस्य बलवदनिष्टाननुबन्धीष्टसाधनत्वस्य सत्त्वात् । व्रीह्यादिभावस्य कर्मफलत्वेतु ज्योतिष्टोमादिशास्त्राऽप्रामाण्य मापतति, व्रीह्यादिभावापादितस्य दुःखस्य बलवत्त्वात् । ततश्च — वैराग्य-विधायकशास्त्राऽप्रामाण्यशंकया वैराग्याऽनुष्ठानमपि नस्यादिति निरसनीयमेव व्रीह्यादिभावस्य कर्मफलत्वम् । यदत्रोक्तम् — योनिप्राप्ते रमणीयचरणफलत्वं निवारणीयमिति, इष्टमेवैतत् ! अस्माभिरपिदुष्कर्मसाध्ययोनिप्राप्तौ रमणीयत्व-मात्रस्य रमणीयचरणफलत्वाङ्गीकारात् । ' तद्य इह रमणीयचरणा'इति श्रुतिरपि रमणीयचरणस्या ऽन्यतोजायमानायां योनिप्राप्तौ रमणीयत्वाधायकत्वमात्रमाचष्टे न पुनस्तद्धेतुत्वमिति । **दुःखवन्तोनवेति** ।। इष्टोत्पत्तिनांतरीयकदुःखाधिकदुःख-वन्तो नवेति संदेह इत्यर्थः । एतेन — गतागतक्लेशस्य समर्थितत्वात् संदेहानुप-पत्तिरिति परास्तम् । **दुःखिनासहावस्थानेपीति** ।। दुःखिनाएकदेहावस्था-नेपीत्यर्थः ।। एतेन — ताड्यताडकयोः सहावस्थितत्वेपि ताडकस्य दुःखा-भावात् अयुक्तमिदमितिपरास्तम् । ' व्रीहियवा, ओषधिवनस्पतयः, तिला, माषा, जायन्त'इत्येतावतैव पूर्णत्वात् इतिशब्दो व्यर्थइत्यत आह — **इतिशब्दइति** ।। व्रीह्यादिशब्दा न स्वार्थमात्रपराः, अपितु — प्रियङ्ग्वाद्युपलक्षकाइति सूचनार्थ-इत्यर्थः । एतेन — व्रीह्यादिशब्देनैव उपलक्षणसंभवात् प्रियंग्वादीनामितिशब्द-

शक्यसंबंधाऽभावाच्च न तेन लक्षणायुक्तेतिपरास्तम् । दृष्टहिंसात्वेनेति ॥ ब्रह्महिंसायाः पापहेतुत्वं हिंसात्वेनोपाधिना 'ब्राह्मणोनहन्तव्य'इत्यादौश्रुतमित्यर्थः, हरिणा दृष्टत्वेन श्रुतीनां दृष्टशब्दवाच्यत्वात् । तेदुक्तम् – 'यतस्ता हरिणा दृष्टाः श्रुताएव परैर्जनैः । श्रुतयोदृष्टयश्चेति तेनोच्यन्ते पुरातनै'रिति । अतोहेतुत्वाभावादिति ॥ हिंसात्वेनहेतुना यागीयहिंसायाअपि पापसाधनत्वसिध्या-दुःखहेतुत्वसद्भावादित्यर्थः ।

**पूर्वपक्षस्तु** — अस्त्येवकर्मिणामिष्टोत्पत्तिनांतरीयक दुःखातिरिक्तबलवद्दुःखं तेषां 'तइहव्रीहियवा'इतिव्रीत्यादिभावश्रवणात् । तद्भावेच छेदनादिना दुःखावश्यंभावात् । नचेयंश्रुतिः व्रीत्यादिप्रवेशमात्रपरा न तद्भावपरेति वाच्यम् – बाधकाभावे मुख्यार्थत्यागाऽयोगात्, व्रीत्यादिप्रवेशमात्रांगीकारेपि दुःखाऽनिवारणात् । नहि दुःखिसहावस्थानेपि दुःखाऽभोगे कारण मीश्वरवत्स्वातन्त्र्यमस्ति, येन दुःखभोगो न स्यात् । तच्चदुःखं यज्ञादिकर्मफलमेव, अतः सुखसाधनतया वेदोपदिष्टकर्मणो दुःखजनकत्वे मोक्षहेतुत्वेनोपदिष्टवैराग्यादावपि आश्वासाऽभावात् अननुष्ठेयताऽस्येति ॥

**सिद्धान्तस्तु** – न कर्मिणां व्रीत्यादिभावेन दुःखं मन्तव्यम्, । तत्रैव मानाभावात् । अस्यांश्रुतौ कर्मिणो व्रीत्यादिशरीरप्रवेशमात्राऽभिधानात् । नच दुःखिसहाऽवस्थानात् दुःखप्राप्तिः – सहावस्थानस्याऽप्रयोजकत्वात्, तत्प्रयोजकस्य पापस्याऽभावात् । ननु – व्रीत्यादिशरीरप्रवेशएवश्रुत्यर्थः, ननु तद्भाव-इति कुतो निश्चेयमितिचेत्, 'सोऽवाग्गत स्थावरान् प्रविश्य ऽभोगेनैव व्रजन् स्थूलं शरीर मेती'ति समाख्यानादितिगृहाण । ननु ज्योतिष्टोमादे हिंसाविशिष्टत्वेन पापमिश्रत्वात् व्रीत्यादिभावेन दुःखमवर्जनीयमितिचेत्, न – व्रीत्यादिहिंसायाः पापहेतुत्वेपि 'वायव्यंश्वेतमालभेत भूतिकाम' (तै०.सं.का०, २-१) इत्यादिना विहितहिंसायाः पुण्यहेतुत्वेन यज्ञादेः पापमिश्रत्वाऽभावात्, तदुक्तम् –

१. 'अशुद्ध' (३-१-२७) मिति सूत्रीयटी०. प्र०. धा०. ।

२. तत्त्वनिर्णयउक्तमित्यर्थः । ३. अशुद्धमिति सू०. टी०. प्र०. धा०. ।

'हिंसात्वैदिकी यातु तयाऽनर्थोध्रुवंभवेत् । वेदोक्तया हिंसयातु नैवाऽनर्थः कथंचने'ति । अतो यज्ञादेः सुखसाधनतया उपदिष्टस्यदुःखकारणत्वाऽभावात् युक्तं वैराग्याद्यनुष्ठानमिति सिद्धम् (अ०. १८)



( १९ – अधिकरणम् )

## ॐ रेतः सिग्योगोऽथ ॐ (सू. २८)

**नाऽतिविरक्तिःस्यादिति** ॥ इष्टोत्पत्तिनान्तरीयकदुःखस्याऽल्पत्वादिति-भावः । **श्रुतिः, प्रयोजनाऽदर्शनंच, संदेहबीजमिति** ॥ श्रुत्यातावत् पितृ-प्रवेशउच्यते, तत्प्रवेशस्यच प्रयोजनं नोपलभ्यते, ततश्च श्रुतिः प्रतीतार्थ-प्रमाणं, नवे, ति संदेहः, संदेहबीजमितिभावः । एतेन — श्रुतिप्रयोजनाऽदर्श-नयोः श्रुतेः प्रबलत्वेन निर्णयसंभवात् न संन्देहइतिनिरस्तम् । **किमर्थेतिवक्त-व्यमिति** ॥ किमःअर्थोयस्याःसा किमर्था, काकुस्वरेण पितृप्रवेशाक्षेपार्था श्रुति-रितिवक्तव्यमित्यर्थः । एतेन श्रुतेरर्थान्तरस्यैव वक्तव्यत्वेन तद्विहाय किमर्थेति प्रश्नकरणमयुक्तमिति परास्तम् । **किमुत्पत्ताविति** ॥ किंपितुरेवानुपयोगात् तत्प्र-वेश आक्षिप्यते, उत पितुरुपयोगमङ्गीकृत्यप्रयोजनाभावात् प्रवेशो नेत्याक्षिप्य-तइतिभावः । **तत्प्रवेशस्यईशकॢप्तत्वादिति** ॥ पितृप्रवेशो बीजानां दावदहनमिव जीवानां संस्कारतया ईश्वरेण कॢप्तत्वात्, प्रयोजनाभावोऽसिद्धइतिभावः । **रेतः सिग्योगाऽनन्तरमपीति** ॥ साधारणजीवानां रेतःसिग्योगानन्तरं नियमेन मातृशरीरप्रवेशसद्भावान्न वचनस्याऽप्रामाण्यमितिभावः । **एवकारस्त्वयोगव्याव र्तकइति** । पितृप्रवेशानन्तरं मातृप्रावेशिजीवपरतादशायामेवकारोऽयोगव्या-वर्तकः । गर्भस्थितसिद्धदेहप्रवेशिजीवपरतादशायांतु अन्ययोगव्यवच्छेदार्थइत्यपि द्रष्टव्यम् । 'देहंगर्भस्थितंक्वापि प्रविशेत्स्वर्गतोगत' इतिवचनात् । उक्तंचसुधा-याम् — 'क्वचित् बीजादिसंबंधाभावस्यापि विद्यमानत्वेन तद्विषयत्वादिति ।

**पूर्वपक्षस्तु** — न जीवस्य पितृप्रवेशोऽस्ति 'मातुरेवोदरंव्रजे'दिति-

१. एतेन - टीकास्थं श्रुतिपदं तद्विषयकप्रामाण्याऽप्राण्यसन्देहपरमित्युक्तं भवति॥

वचनात् । नच 'यएव गृहीभवति'इति पितृप्रवेशवचनविरोधः — प्रयोजनाभावयुक्तियुक्ततया बलवदेतच्छ्रुतिविरुद्धत्वेन तच्छ्रुतेः काकुस्वरेण पितृप्रवेशनिषेधपरत्वात् ततश्च अल्पायासाभावेन नाऽतिवैराग्यं कर्मादावपेक्षितमिति ।

**सिद्धान्तस्तु** — अस्त्येवपितरिप्रवेशो जीवस्य 'ततोरेतः सिचमेवाऽनुप्रविशत्यथमातर'मितिश्रुतेः । नच — पितृप्रवेशोऽव्यर्थः, पितृप्रवेशस्य उत्पत्स्यमानसाधारणजीवसंस्कारतया ईशक्लृप्त्या तस्य संस्कारार्थत्वात् । नच — मातुरेवोदरंव्रजे'दितिस्मृत्यप्रमाण्यम् — पितृप्रवेशानन्तरं मातृप्रवेशस्याप्यंगीकारात् । नच — 'मातुरेव' त्यवधारणानुपपत्तिः — स्मृतेः साधारणजीवपरतादशायाम् अवधारणस्य अयोगव्यवच्छेदार्थत्वांगीकारात् । गर्भस्थितसिद्धशरीरप्रवेशिजीवपरतादशायांतु अन्ययोगव्यवच्छेदस्यापि भावात् । अतः पितृप्राप्ते र्विद्यमानत्वात् भवितव्यं कर्मादा वतिवैराग्येणेति सिद्धम् ।



( २० — अधिकरणम्, )

## ॐ योनेः शरीरम् ॐ ( सू. २९ )

**जीवस्यपितृद्वारेति** ॥ अत्र स्वर्गादागतजीवस्य पितृप्रवेश, स्ततोयोनिप्रवेशः, अथ मातृप्रवेशः, ततःकललत्वं, ततो बुद्बुदादिक्रमेण असिद्धदेहप्राप्तिरिति एतावन्ति प्रमेयानि साध्यानि इति ध्येयम् , **सिद्धदेहप्रवेशाद्येवेति** ॥ आदिशब्देन अन्नद्वारेण मातृप्रवेशः, पितर्येवदेहप्राप्तिः, बहिर्वा पितुः सकाशात् देहप्राप्तिः, स्थानान्तरे पितृनिरपेक्षेण देहप्राप्तिरित्यादयो ग्राह्याः, 'पश्चादेवप्रविशती'तिभाष्यमुपलक्षणमितिभावेनाह — **पितृशरीरादिति** ॥ पितृशरीरात् मातृयोनिमनुप्रविश्य, शरीरप्राप्तिरिति विशिष्टं नाऽस्तीत्यर्थः । स्वर्गादागतेषु कस्यचित् योनिप्रवेशो नास्ति, अन्यत्सर्वं विद्यते, अन्यस्यतु पितृशरीरप्रवेशएव-

१. तदर्थकैवकारेत्यर्थः । २. अयोगेति ॥ स्वसमभिव्याहृतमातृपदार्थसंबन्धाभावव्यवच्छेदेत्यर्थः । अस्मिन्नर्थेपितृप्रवेशोऽप्यस्ति । ३. अन्ययोगेति ॥ स्वसमभिव्याहृतमातृपदार्थातिरिक्तार्थसंबन्धव्यवच्छेदेत्यर्थः । अत्रार्थेपितृप्रवेशोनास्ति, अन्ययोगव्यवच्छेदकत्वमितिशङ्काभिप्रायः विषयभेदेनोभयाश्रयणमिति परिहाराशयः ।

नाऽस्ति, अपरस्य गर्भस्थसिद्धशरीरप्राप्तिः, अन्यस्यतु बहिर्निःसृतशरीरप्राप्तिः, न तु स्वर्गादागतमात्रस्य सर्वमितिभावः । **योनिप्रवेशस्तावदिति** ॥ स्वर्गादागतानां केषांचिज्जीवानामितिशेषः । **नच — विशेषप्रमाणमिति** ॥ सर्वेषांयोनिप्रवेशइत्यत्र विशेषप्रमाणं नेत्यर्थः । **तस्मिन्निति** ॥ पितरीत्यर्थः । मातृप्रवेशिनां योनिप्रवेशाऽभावमाह — **मातृप्राप्तेरिति** । केषांचित् मातृप्राप्तेरपेक्षितत्वेऽपि संस्पर्शद्वारेण मातृप्राप्त्युपपत्तेः योनिप्रवेशो न विद्यतइति पूर्वेणसंबंधः । **पितृप्रवेशोऽपीति** ॥ केषांचित अपेक्षितोपि पितृप्रवेशोऽन्येषामयुक्तइत्यर्थः तत्रहेतुमाह – **उक्तवचनादेवेति** ॥ 'देहंगर्भस्थितंक्वापि' इतिवचनात् । पितृप्रवेशमंतरा सिद्धदेहप्रवेशः कस्यचिद्वक्तव्यः, अन्यथा — पितृप्रवेशमनुक्त्वा सिद्धदेहप्रवेशोक्ति रनुपपन्ना स्यादितिभावः । **नचेशक्लृप्तीति** ॥ पितृप्रवेशानङ्गीकारईशक्लृप्त्यैव पितरंप्रविशत्यथ मातरमिति वचनेन बाधइति नच वाच्यमित्यर्थः । **वैपरीत्यस्येति** ॥ 'देहंगर्भस्थित'मितिवचनस्य विशेषवचनत्वेन अनेन बाधइतिभावः । केषांचिदुत्पत्तौ पितुरेवाऽनुपयोगात् न तेषां पितृप्रवेशादीत्यत्र हेतुमाह — **मातृस्थेति** ॥ केषांचित् कललबुद्बुदादिक्रमेण शरीरप्राप्तिरप्यनुपपन्नेत्याह — **शरीरप्राप्तिरपीति** ॥ ननु — मातुरुदरस्थ सिद्धदेहप्रवेशइत्युपपन्नं, 'देहंगर्भस्थित'मिति प्रमाणसद्भावात्, बहिरेव निर्गते प्रवेशइत्यनुपपन्नं, प्रमाणाभावादित्यत उक्तम् — **क्वापीत्युक्तत्वादिति** ॥ तस्मिन्वचने क्वापीत्युक्तिबलात् बहिस्थितदेहप्रवेशो लभ्यतइतिभावः । स्मृतिं व्याख्याय, सिंहावलोकनन्यायेन 'पितुर्मातुरन्तरेवे'ति श्रुतिव्याख्यानं सूचयति — **एतदेवेति** ॥ अनेन श्रुतेः स्थास्नुभ्योजायते, पितुर्जायते, अन्तरे स्थानान्तरेजायत, इतिव्याख्यानं सूचितमिति बोध्यम् । 'पितुर्मातु रेवे'ति श्रुत्यंशंप्रकारान्तरेणव्याचष्टे — **मातापित्रोर्मध्येति** ॥

**पूर्वपक्षस्तु** — स्वर्गादागतस्य पापिवत् पितरंप्रविश्य, योनिद्वारा मातरंप्रविश्य, कललबुद्बुदादिक्रमेण देहप्राप्तिर्नास्ति, किंतु कस्यचित्स्वर्गादागतस्य पितरंप्रविष्टस्य पुण्यवशेन योनिप्रवेशमंतरा संस्पर्शद्वारेण मातृप्रवेशेन

१. मात्रपदंकात्स्न्यार्थकं योऽयआगतः तस्यसर्वस्येत्यर्थः । २. सर्वस्येतिशेषः ।

देहलाभः, अपरस्यतु पितृप्रवेशं विनैवा ऽन्नादिद्वारा मातृप्रवेशेन देहलाभः, ततोऽप्यतिशयिनपुण्यवत्त्वात्; पक्षद्वयेपि आदौ कलल्प्राप्तिः, ततोबुद्बुदस्य-ततोदेहस्येतिक्रमः, अपरस्य मातृप्रवेशमंतरा पितृदेहमध्ये देहप्राप्तिः, अन्यस्य-कललबुद्बुदादिक्रममपहाय, मातृदेहस्थ जरायुगतसिद्धदेहप्राप्तिः, अन्यस्यतु बहिर्निगतसिद्धदेहप्राप्तिः, परंतु कस्यापि स्वर्गादागतस्य पावित्रपितृशरीरात् योनिद्वारा मातृशरीरंप्राप्य, कललबुद्बुदादिक्रमेण देहप्राप्तिरिति नियमो नास्ति। ततश्चाऽत्यायासाभावात् नातिवैराग्येण कृत्यमिति।

**सिद्धान्तस्तु** – अस्त्येवस्वर्गादागतस्यापि पितृप्रवेशः, अथ योनिद्वारा-मातृप्रवेशः, ततःकललबुद्बुदादिक्रमेण देहप्राप्तिश्च; 'दिवस्थस्तूनगच्छति स्थास्नुभ्यः पितरं, पितुर्मातरं, मातुः शरीरं, शरीरेण जायत'इतिवचनात्। नच– 'देहंगर्भस्थितं क्वापि प्रविशेत् स्वर्गतोगत'इत्यादिवचनविरोधः — केषांचित् तथाभावस्यापिसत्त्वेन तद्वचनानां तन्मात्रविषयत्वेन यावत्स्वर्गिविषयत्वाऽभावात्। तदुक्तम् – 'स्थावराणि दिवः प्राप्तः स्थावरेभ्य श्च पूरुषं। पुरुषात् स्त्रियमापन्न स्ततोदेहंयथाक्रमम्। देहेन जायते जन्तु रिति सामान्यतो जनिः। विशेषजननंचापि प्रोच्यमानं निबोधमे। स्थास्नुष्वथापिपुरुषे प्रमदायामथापिवा। गर्भेवाबहिरेवाथ क्वचित् स्थानान्तरेषुचे'ति। अतः सामान्यजन्मनि पित्रादिप्रवेशस्य नियमेन, अपवर्गादितरत्र सर्वत्रापि महादुःखाऽविनाभावात् तत्र विरक्तेन भगवान् भजनीय इति सिद्धम् (अ०. २०.)

इति श्रीसत्यनिधितीर्थ श्रीचरण चरणाराधक-
श्रीमत्सत्यनाथयति विरचितायां
श्रीमत्तत्त्वप्रकाशिकाव्याख्याऽभिनवचन्द्रिकायां

**तृतीयाध्यायस्य**

**प्रथमःपादः समाप्तः.**

---

१. संस्पर्शेनमातृप्रवेशः, अन्नादिद्वारेणमातृप्रवेश इतिपक्षद्वयइत्यर्थः। २. इयंच सप्ताहात्परं प्रथमेमासि गर्भस्य जायमानाप्रथमाऽवस्था, ३ द्वितीयेमासिजायमाना गर्भस्य द्वितीयावस्थाचेयम्। स्पष्टमिदमष्टाङ्ग हृदयादौ वैद्यके शारीरस्थने। तत्र- 'अथवाऽर्बुद'मिति पाठोदृश्यते।

# अथ द्वितीयः पादः

### श्री गुरुभ्योनमः



( १ – अधिकरणम्. )

## ॐ संध्येसृष्टिराह हि ॐ ( सू. १ )

**एतत्पादप्रतिपाद्यमिति** ॥ 'तर्हि अध्यायस्यैकार्थत्वा त्पादभेदः किं निबन्धन इत्यतः साधनेष्ववान्तर भेदेनेति भावने'ति वर्तते । तस्य 'एतत्पाद-प्रतिपाद्यं दर्शयती'त्यनेन संबन्धः । **श्रुतमाहात्म्येपीति** ॥ श्रुतमाहात्म्येऽपि दृश्यमानस्नेहानुत्पत्तिः माहात्म्यश्रवणस्य स्नेहऽकारणत्वं न साधयति साधनशक्ते मत्सरादिना निरुद्धत्वादितिभावः । **स्वप्नविषयतत्प्रतीत्योरिति** ॥ स्वप्नशब्दार्थयोः विषयतत्प्रतीत्योरित्यर्थः यद्यपि – अत्रटीकायां विषयाऽसत्त्वमेवाऽऽशङ्क्य तदुत्तरत्वेनाऽधिकरणं व्याख्यायते, तथापि — सुधोक्तरीत्या ज्ञानाऽसत्त्वशङ्कापि अनेनाऽधिकरणेन निवर्त्यत इत्यभिप्रायेण 'स्वप्नविषयतत्प्रतीत्यो'रित्युक्तम् । **सर्वभगवदधीनमिति** 'यतोवाइमानिभूतानिजायन्ते, [ तै०. उ०. ३ - १ -] अथ रथान् रथयोगान् पथः सृजत' ( बृ०, ६-३-१ ० ) इत्यादिश्रुतीनां समन्वयद्वारा तच्छ्रुतौ सृज्यत्वेनोक्तानां सर्वेषांभगवदधीनत्व मुक्तमित्यर्थः । **स्वप्नतत्प्रतीत्योरिति** ॥ सृज्यत्वेन श्रुत्युक्तयोरपि स्वप्नतत्प्रतीत्यो रीश्वरानधीनत्वे अविशेषात्प्रागुक्तं सर्वस्य तदधीनत्व मयुक्तं स्यादिति तद्वर्णनीयमित्यर्थः । सत्त्वस्य नित्यत्वाऽनित्यत्वाऽन्यतरव्याप्तत्वात् व्यापकनिवृत्त्या व्याप्यनिवृत्तिं साधयितुं पृच्छति – **सत्त्वे वक्तव्यमिति** ॥ **उभयथापीति** ॥ नित्यत्वपक्षे प्रागूर्ध्वमुपलंभः स्फुटः, स्वप्नावस्थायामुपलब्धत्वेन अयोग्यत्वाऽभावात् । अनित्यत्वपक्षेतु

---

१. अत्राऽधिकरणे चत्वारि (४) सूत्राणि। २. एतदध्यायप्रथमपादस्यादावनुवृत्तमत्रानुवर्तत इत्यर्थः । ३. श्रुतंमाहात्म्यंयेन तस्मिन्निति बहुव्रीहिः । ४. दृश्यमानत्वमनुत्पत्तिविशेषणम् । ५. स्वप्नशब्दवाच्ययोरित्यर्थः । ६. घटपटादिपदार्थाः । ७. असत्त्वमत्राऽविद्यमानवस्तुविषयकत्वेन । ८. सपादाऽध्यायद्वयेन साक्षात्परंपरयावोक्तमित्यर्थः ।

तर्त्कालोत्पत्तिविनाशयोरसंभवात् स्थायित्वमेव वाच्यमितिभावेन प्रागूर्ध्वमुपलंभप्रसंगो निरूपितोबोध्यः । **अतइति** ॥ अतोऽसन्नेवेति संबन्धः । ननु — नित्यत्वाऽनित्यत्वयो र्निवृत्त्या नाऽसत्त्वं निर्धारयितुंशक्यं, घटादिवत्प्रतीति विषयत्वाऽन्यथाऽनुपपत्त्या सत्त्वासिद्धेरित्यतउक्तम् — **प्रातीतिकत्वादिति** ॥ युक्तमेव नित्यत्वाऽनित्यत्वाभावेना ऽसत्त्वसाधनम् शुक्तिरजतादौ सत्त्वेनविनापि दृष्टस्य प्रतीति विषयत्वस्य सत्त्वाऽसाधकत्वेन बाधकाऽभावादितिभावः । अनेन — अतोऽसन्नित्येतावतैव पूर्णत्वात् 'प्रातीतिकत्वा'दिति 'शुक्तिरजतादिव'दितिच व्यर्थमितिपरास्तम् । बाधकनिरासार्थं तदुपादानस्याऽऽवश्यकत्वादिति । ननु — सत्या-एवस्वप्नविषयाः, यदवोक्तम् किंनित्या, उताऽनित्याइति, तत्र केचन नित्याः केचनाऽनित्या इतिब्रूमः; यदवोक्तं प्रागुत्तरकालं दृश्येरन्निति, तन्न — इष्टत्वात् दृश्यन्तेहि घटपटादयः सर्वैः पूर्वोत्तरकालयोरित्यतो जाग्रदवस्थापन्नै र्दृश्यमानानां घटपटादीनां स्वप्नविषयत्वेबाधकमाह — **किंचेति** ॥ प्रागूर्ध्वमन्यैर्दृश्यमानं स्वप्नविषयं, किं शरीरे स्थित्वा पश्यति बहिर्निर्गत्य, वेत्यर्थः । **मेरुमन्दरादीति** ॥ व्यवहितत्वादितिभावः । शरीरेस्थित्वा पश्यति, बहि र्निर्गत्य, पश्यतीति पक्षद्वयेपि बाधकान्तरमाह — **किंचहेमन्तइति** ॥ 'नच वसन्तसत्तादर्स्ती'त्यतः परं 'येनशरीरेस्थित्वा, बहिर्निर्गत्यवा पश्ये'दितिशेषः । **नच — प्रतीतिकारणंवास्तीति** । बाह्यानां मेरुमंदरादीनां प्रतीतिकारणं वा नास्तीत्यर्थः । मनसएव तत्करणत्वमस्त्वित्यतआह — **मनसइति** ॥ स्वप्नविषयाः, किं द्रष्टृभिन्ना उत नेति विकल्पं मनसिनिधाय, आद्यपक्षं दूषयति — **यदिचेति** ॥ द्रष्टृभिन्नत्वेपि समीपस्थै र्दृश्यमानत्वंकुतः, आन्तरत्वेनाऽदर्शनसंभवादित्यतआह — **बाह्यार्थत्वादिति** ॥ द्रष्टृभिन्नानां महापरिमाणानां शरीरान्तस्थत्वाऽनुपपत्तेरितिभावः । द्वितीयमाशङ्क्य इष्टसिद्धिमाह — **अथेति** ॥ **कल्पितत्वमिति** ॥ भ्रमविषयत्वमित्यर्थः । ननु — द्रष्टृ भिन्नत्वाभावे कल्पितत्वं कुतः, तदात्मकत्वेन पारमार्थिकत्वसंभवादित्यतआह — **परमार्थतोऽस्येति** ॥ अतःप्रा-

१. प्रतीतिकाले उत्पत्तिनाशयोरसंभवः तयोः पूर्वोत्तरक्षणवृत्तित्वनियमात् ।
२. अभावेन । ३. स्वप्नद्रष्टृजीवस्य ।

**तीतिकत्वादिति ।।** सत्त्वायोगेनाऽसत्त्वादित्यर्थः । **नतस्यमहामहिमेत्व मिति ।।** श्रुत्या सृज्यत्वेनोक्तस्यापि स्वाप्नार्थस्याऽस्थिरत्वेन भगवदनधीनत्वे श्रुत्यप्रमाण्या न तस्य श्रुत्युक्तं महामहिमत्वमितिभावः । **तदधीनइत्यर्थइति ।।** अनेन — ' नस्वप्नोपि तंविना प्रतीयत'इतिभाष्यम् स्वप्नोऽपि स्वप्नगजादिरपि तंविना तदनधीनत्वेन नप्रतीयते, किंतु — तदधीनत्वेनैव मीमांसाऽभिज्ञानांप्रतीयतइति व्याख्यातामितिबोध्यम् , अनेन भाष्ये ' नस्वप्नोऽपि तंविना प्रतीयत'इति स्वप्नप्रतीतेः भगवदधीनत्वंप्रतिज्ञाय, स्वाप्नपदार्थस्य भगवदधीनत्वे ' न तत्र रथा ' ( बृ०. उ०. ६-३-१० ) इति श्रुत्युदाहरणमयुक्तमितिपरास्तम् । **तस्यसुप्तत्वादिति ।।** [३]तत्तदपहृतचक्षुरादीन्द्रियशक्तित्वादित्यर्थः । एवमुत्तरत्रापिद्रष्टव्यम् । एतेन — स्वप्नावस्थागतत्वेन सुप्तत्वाऽभावात् सुप्तत्वाभिधानमयुक्त मितिपरास्तम् । **तत्प्रमाणाभावादिति ।।** ' नतत्ररथा ' इतिश्रुते रीश्वरपरत्वनिर्णायक समाख्याप्रमाणाऽभावादित्यर्थः । एतेन ' रथान् रथयोगान् पथः सृजत 'इति प्रमाणस्योदाहृतत्वात् प्रमाणाभावादित्ययुक्तमितिपरास्तम् । श्रौतसृष्ट्यनुपपत्त्या जीवोवा ईश्वरोवा कर्ता भविष्यति इत्यतआह — **नचपक्षद्वयइति ।। जीवस्यकुलालवदिति ।।** चक्रचीवरा(चीवरा)दिसाधनशून्यस्येतिशेषः । **प्रकरणप्राप्तत्वादिति ।।** यथा— 'भुंजानोनोत्सृजेद्वाच'मित्यत्र भोजनप्रकरणात् वाङ्नियमस्य भोजनसमानकालतागम्यते, तथेहापि 'सुप्तेषुजागर्ती'ति सुप्तिप्रकरणात् निर्माणस्य तत्समानकालता गम्यतइत्यर्थः । **असत्त्वनिरासायेति ।।** स्वशिरश्छेदादीनामननुभूतत्वेन उपादानीभूतसंस्काराऽभावात् स्वप्ने तत्सृष्टययोगेन प्राप्तस्याऽसत्त्वस्य निरासायेत्यर्थः । **जाग्रत्पदार्थत्वमेवेति ।।** ननु — कुतो जाग्रत्त्वस्याऽसत्त्वमंगीक्रियते, गजतुरगादिवत् जाग्रत्त्वस्यापि संस्काररूपोपादानसंभवेन उत्पत्तिसंभवादितिचेत् , न ब्रूमो वय मुपादानादिसंभवमात्रेण स्वाप्नार्थस्य सत्यत्वमिति, किंनाम बाधाभावेचसति, नचेह बाधाभावोऽस्ति, स्वप्नएवासौनजाग्रत्पदार्थ इतिजाग्रत्त्वस्य-

१. वाच्यत्वेन । २. सतिसप्तमी भगवदनधीनत्वेननिमित्तेनेत्यर्थः । ३. 'निर्मातारं' ( ३-२-२ ) मिति सूत्रीयटी०. प्र०. धा०. । ४. सुषुप्त्यवस्थाविशिष्टस्येव प्रतिबद्धेत्यार्थः । ५. जीवानांमुप्तत्वेऽपि, सुप्तेषुजागर्तीत्यादौ, सुप्तपदस्यैवमर्थोवाच्यइत्यर्थः ।

बाधदर्शनात्। **सत्त्वंनप्राप्नोतीति** ॥ 'स्वप्नार्था न सन्त नित्यविलक्षणत्वेसति संभावितकारणाऽजन्यत्वात्, शुक्तिरजतव'दि त्यनुमानविरोधादितिभावः। **शुभाऽशुभसूचकत्वेनेति** ॥ सूचकशब्देनाऽप्रधान कारणमुच्यते। ततश्च अर्थ क्रियाकारित्वेन तत्सत्तायानिश्चितत्वात् बाधितविषयंप्राचीनानुमानमितिभावः।

ननु — स्वाप्नार्थस्य ज्ञापकत्वमेव किंनोच्यते स्वारस्येन प्रतीत ज्ञापकत्वपक्षमपहाय कारकत्वाऽङ्गीकारे कारणाऽभावात्, एवं शाकुनस्याऽपि ज्ञापकत्वमेव वाच्यम् नतु कारकत्वमितिचेत् न — ज्ञापकत्वस्य कथमप्यसंभवात्, तथाहि — किं स्वाप्नार्थाः स्वप्नाऽवस्थायामेव भाविशुभाशुभज्ञापकाः, उत प्रबोधानन्तरम्, नाद्यः — अनुभवविरोधात्। द्वितीयेतु — नस्वाप्नार्थानां ज्ञापकत्वम, अपितु तत्स्मरणस्य, स्वप्नार्थस्य जागरेऽभावात्, अविद्यमानस्य ज्ञापकत्वाऽयोगात्। यदपि शाकुनं ज्ञापकमेवेति, तदपि न शपथाऽऽप्तवाक्यादिना निश्चितभाविकार्यस्य शाकुनप्रतीक्षाऽभावप्रसंगात्। शाकुनस्यज्ञापकत्वंतु न प्रतिषेधामः, किंतु कारकत्वमपीतिब्रूमः, कारकत्वंतु उभयोरपि दधिदर्शनदूर्वास्पर्शनस्येवाऽदृष्टद्वारा उपपद्यते। 'यदाकर्मसुकाम्ये' (छा०. ५ - २ - ९) ष्विति श्रुतिरपिस्वाप्नार्थस्य भाविशुभहेतुत्वं श्रावयति। 'सुवृष्टिश्चेत् सुभिक्षंजानीया'दित्युक्ते वृष्टिसुभिक्षयोः कार्यकारणभावाऽवगमात्। स्वाप्नार्थस्याऽदृष्टजनकत्वादेवहि दुःस्वप्नदर्शने तज्जन्यदुरदृष्टनिवृत्तये 'उपोष्य-पायसंस्थालीपाकंश्रपयित्वा रात्रिसूक्तेन प्रत्यृचं हुत्वे'त्यादिना प्रायश्चित्तमुपदिश्यते, भागवतेच — 'स्वर्ग्यंयशस्यं कलिकल्मषापहं दुःस्वप्ननाशं कुरुवर्य शृण्वताम्। 'श्रुचयः प्रातरुत्थाय दुःस्वप्नाद्युपशान्तये'इतिचोक्तम्। नहि एतस्य-कारकत्वाऽभावे तन्निवृत्तये प्रायश्चित्तोपदेशउपपद्यते, प्रबोधे तस्य निवृत्तत्वात्।

१, २. 'सूचकश्चे' (३-२-४) तिसूत्रीयटी०. प्र०. धा०.। ३. पूर्वपक्षिणोऽनुमानम्। ४. शुभादिसूचकंपुष्पादिकम्। ५. ननिषेधामइत्यर्थः ६. स्वाप्नशकुनयोः।

७. (८ - स्क०. ४ - अ०. गजेन्द्रमोक्षणे) स्वर्ग्यमिति ॥ 'एवंमहाराजतवेरितोमया-कृष्णाऽनुभावोगजराजमोक्षण'मितिपूर्वार्धम्। ८. शुचयइति ॥ 'अथाऽनुकीर्तयन्त्ये-तच्छ्रेयस्कामा द्विजातय'इति पूर्वार्धम्। ९. दुःखादिप्रदर्शनस्य।

अदृष्टहेतुत्वेतु तन्नाशाय सर्वमुपपद्यते। भाष्ये 'भावाभावसूचकत्वेनेश्वरोदर्शयती'ति प्रतिज्ञाय भावशब्दवाच्यशुभसूचकत्वएव 'यदाकर्मसु' इति श्रुतिरुदाहृता नत्व-भावशब्दवाच्याऽशुभसूचकत्वे, अतः स्वयमाह — **एवंपुरुषमिति**। भाष्ये 'हिश-ब्दात् दर्शनाच्चे' त्यतः परम , अध्याहार्यमाह — **इतिसूचितमितिशेष-इति** ॥ सूत्रे हिशब्देन दर्शनादित्येतत् सूचितम् 'शब्दाधिक्येऽर्थाधिक्य' मितिन्यायादितिभावः। कारकत्वहेतोः श्रुत्यवष्टंभेन सत्त्वव्यभिचारमाशङ्क्य निषेधति — **नचमन्तव्यमिति** ॥ अस्तुतर्हि तद्वदेव अन्यथाज्ञातस्याऽधिष्ठा-नस्यैव सूचकत्वं न स्वप्नार्थस्येत्यतआह — **नैचैवमिति** ॥ 'चन्द्रमाइवा-ऽऽदित्योदृश्यत' इत्युक्तिसद्भावात् चन्द्रत्वेन ज्ञातस्याऽऽदित्यस्याऽनिष्टहेतुत्व-मभ्युपगम्यते, स्वप्नेतु नैवमुक्तिरस्ति, किंनाम 'स्त्रियंस्वप्नेऽभिपश्यती'ति स्वाप्नः-र्थस्यैव सूचकत्वाभिधानात् तथैवाभ्युपगन्तव्यमितिभावः। अधिष्ठानाऽभावाच्च स्वाप्नार्थस्यैव कारकत्वमभ्युपगन्तव्यमित्याह — **नचेति** ॥

**पूर्वपक्षस्तु** — स्वप्नविषयो नेश्वराधीनः असत्त्वात् नचाऽसिद्धोहेतुः — प्रागूर्ध्वमनुपलंभात्। नच - तत्कालसृष्टिनिरोधाऽगीकारात् प्रागूर्ध्वमुपलंभाभावो न दोषायेतिवाच्यम् — प्रमाणाभावात्, कर्त्रुपादाननिमित्तानामभावाच्च। ननु— बाह्यार्था एव स्वप्नउपलभ्यंते, तेच प्रागूर्ध्वमुपलभ्यन्तएवेतिचेत् अत्रवक्तव्यम् — किंबाह्यार्थान् शरीरेस्थित्वापश्यति, उत बहिर्निर्गत्येति। नाद्यः — व्यवहित-मेरुमन्दरादिदर्शनाऽभावप्रसंगात्। नद्वितीयः — कुरुषुसुप्तस्य पांचालान्प्रपश्यतः प्रबोधे शरीरप्रवेशोऽस्य पश्चादेवेतिप्राप्तेः। किंच — हेमन्ते सुप्तस्य वसंतप्रतीति स्तावदस्ति, नच—वसंतसत्ता तदाऽस्ति, येन शरीरेस्थित्वा बहिर्निर्गत्यवा पश्येत्। नापिबाह्यार्थप्रतीति कारणमस्ति इंद्रियाणामुपरतत्वात् मनसोबाह्यार्थेष्वस्वातन्त्र्यात्। किंच — एते विषया द्रष्टृभिन्ना उत न, आद्ये पार्श्वस्थैरुपलभ्येरन्। द्रष्टृभिन्नानां महापरिमाणानां आन्तरत्वाऽसंभवेन बाह्यत्वात्। द्वितीयेतु — आगतंकल्पि-तत्वम्, नच जीवात्मकत्वेन सत्यत्वं किं न स्यादितिवाच्यम्। परमार्थतोऽस्य

---

१, २, ३, ४, ५. 'सूचकश्चेति सूत्रीयटीका प्र०. धा०।

करितुरगादिभावाभावात् । तत्कालसृष्टिनिरोधपक्षेच प्रागूर्ध्वं मृत्पिंडकपालादीनि दृश्येरन्, नच दृश्यन्ते, अतोऽसत्वेन परमेश्वराधीनत्वाऽभावा न तस्य महामहिमत्वमिति ।

**सिद्धान्तस्तु** – ईश्वराधीनएव स्वप्नविषयः सत्यत्वात् । नच प्रागुत्तरकालमुपलंभप्रसंगः तत्कालएवसृष्टिनिरोधांगीकारात् । नच तत्रप्रमाणाभावः— 'अथ रथान् रथयोगान् पथः सृजत' इतिश्रुतेः । नच कर्तुरभावात्सृष्ट्ययोगः— 'यएषु सुप्तेषु जागर्ति (का०. ५-८) एतस्माच्चेव पुत्रो जायते'इतिश्रुतिभ्यामीश्वरस्यैव कर्तृत्वांगीकारात् । नचोपादाननिमित्ताभावः — 'मनोगतांश्चसंस्कारा'निति स्मृतिबलेन वासनाया उपादानत्वेन ईश्वरेच्छायाश्च निमित्तत्वेनाङ्गीकारात् । एतेन उक्तकंठकोलाहला:[1] प्रत्युक्ताः । वासनामयानां[2] मेर्वादीनां मनसैव दर्शनसंभवात् । बाह्यकारणाभावात, प्राक्मृत्पिंडादीनाम्, ऊर्ध्वंकपालादीनांच, प्रतीतेरप्रसंगात् । ननु यदि न स्वप्नविषया बाह्यार्थजन्याः, तर्हि सत्त्वं न प्राप्नोति शुक्तिरजतादिवत् इतिचेत्, न – शुभाशुभकारणत्वेन सत्त्वस्यैव निश्चितत्वात् । 'यदाकर्मसुकाम्येषु' इति, 'पुरुषंकृष्णं कृष्णदन्तं पश्यती'(ऐ०.आ०. ३-२-४) ति श्रुतिभ्याम्, अन्वयव्यतिरेकसध्रीचीनप्रत्यक्षेणच, कारणत्वस्यसिद्धेः। अपिच एवं व्यासादयोमन्यन्ते 'यद्वापि ब्राह्मणो ब्रूयात् देवताद्द (ऋ) षभोपिवा। स्वप्नस्थ मघवाराजा तत्तथैवभविष्यती'ति । अतः स्वप्नविषयस्य भगवदधीनत्वसिद्धेर्महामाहात्म्यं तस्येति युक्ता तद्भक्तिरिति सिद्धम् (अ०. १.)



( २ – अधिकरणम् . )

ॐ पराऽभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ ॐ

(सू. ५.)

बन्धग्रहणं शक्यमकर्तुं 'पराऽभिध्यानात्तु तिरोहितं ततोह्यस्यमोक्ष' इत्येव

१. कोलाहलाः महापरिमाणमेर्वादीनांकथमन्तर्दर्शनसंभवइत्याद्यऐच्छिकवादाइत्यर्थः ।

२. एतेनेत्यस्यार्थमाह – वासनेति ॥

(पा. ने ६.)

कर्तुं शक्यत्वात्, लघुचैवंसूत्रंभवति, अवश्यज्ञापनीयस्य ज्ञानाऽस्वातन्त्र्यस्य मोक्षग्रहणेनैवसिद्धेः, बन्धस्यतु ज्ञानकार्यत्वाऽभावेन तद्ग्रहणस्य प्रकृताऽसंगतत्वादितिचेत्, सत्यं बन्धग्रहणं न प्रकृतोपयोगि तथापि लोके पितुरन्यस्यैव मारकत्वदर्शनात् स्वाप्नपुत्रादीनां भगवानेव कर्तेति न तेषां निरोधकः, ततश्च न तेन स्वप्ननिवृत्तिरितिशङ्कानिरासाय लौकिकानां रागिणां तथात्वाऽसंभवेऽपि रागादिदोषरहितस्य भगवतो देहयोगरूपबन्धस्य, तद्वियोगरूपमोक्षस्यच हेतुत्वं दृष्टमेवेति न स्वप्ननिरोधकत्व मनुपपन्नमितिद्योतनाय बन्धग्रहणम् । **स्वप्नस्यतिरोभावइति** । स्वप्नज्ञानसंतातिविच्छेद इत्यर्थः । **तथा ज्ञानाऽज्ञानेति** ॥ अल्पाचूतरत्वेन ज्ञानशब्दस्य पूर्वनिपातात् यथायोगमेवनिमित्तत्वं नतु यथाक्रममिति द्रष्टव्यम् । **नेदंदृष्टान्तमात्रमिति** ॥ दृष्टान्तशब्देन दृष्टान्तयुक्त मनुमानमुच्यते, ततश्च – नेदंधूमाद्यनुमानवत् अनुमानमात्रम् अपितु स्मार्तमितिभावेन स्मृतिमाहेत्यर्थः ।

---

१. 'अल्पाच्तर' (पा०. २-२-३४) मिति सूत्रेणेत्यादिः । २. अनुमानमिति ॥ हेतुरित्यर्थः 'ततोह्यस्यबन्धविपर्ययौ' वितिसांत्रभागस्य हेतु समर्पकत्वमभिप्रेत्य-बन्धमोक्षप्रदत्वादिति हेतुस्वरूपस्यभाष्योक्तेः, तस्यदृष्टान्तपरत्वमभिप्रेत्य 'नेदंदृष्टान्तमात्र' मिति टीकोक्तिर्नयुज्यत इतिचोद्यनिरासकं – दृष्टान्तेति ॥ दृष्टान्तपदंलक्षणया हेतुपरम् अतोनोक्तचोद्यावकाशः, शक्यसंबन्धबोधनाययुक्तमितिविशेषणम् . इदंज्ञेयम्–अयंनसाक्षात् स्वप्नतिरस्कर्तृत्वसाधकः, किंतु – अनन्यसाधारणाऽनादिकालाऽनुवृत्तबन्धमोचकत्वसामर्थ्यवतः किमुवक्तव्यं स्वल्पकालाऽनुवृत्तस्वप्नतिरस्कारकत्वमस्तीतिकैमुत्येन प्रकृतार्थसाधकः ततोबन्धमोक्षप्रदत्वादिति हेतोर्व्याप्यभावशङ्कानवकाशः कैमुत्येनार्थसाधनेव्याप्तेरनपेक्षणादिति । नच – इत्थंटीकाऽभिप्रायवर्णनंयुक्तं 'तथाज्ञानाज्ञाने' त्यादि टीकातः 'ततोह्यस्ये' त्यस्य दृष्टान्तपरत्व एवतदभिप्राय इत्यवगमादितिवाच्यम् – तस्यहेतुपरत्वेऽपि यथा हरिः बन्धमोक्षयोः कर्ता, तथास्वप्नतिरोभावयोरपिकर्ता इति पर्यवसानेन पर्यवसितार्थ परत्वात् टीकायाः । ३. 'ततोह्यस्ये' त्यादिकथनम् । ४. क्वचित् टीकायां 'स्मृतिं चोदाहरती'तिपाठः । एतेन – सूत्रे हिशब्द्योतइत्यर्थः, इदंचाऽनुमानं प्रमाणाऽनुसारीतिसूचितम् ।

**पूर्वपक्षस्तु** — न स्वप्नतिरोभाव ईश्वराधीनः, तस्य बाह्याऽज्ञानजन्यत्वेन अज्ञाननाशे संतत्यनुत्पादसंभवात्। तथाच ज्ञानेनाऽज्ञानविनाशद्वारा स्वप्नतिरोभावसंभवात् न तस्य ईश्वराधीनत्वमिति न तस्य महामहिमत्वमिति

**सिद्धान्तस्तु** – ज्ञानाऽज्ञानयो र चेतनत्वेन स्वातन्त्र्याऽभावात् ज्ञानाऽज्ञानाधीनयोरपि बन्धमोक्षयोरीश्वराधीनत्वात् स्वप्नतिरोधस्यापि तदधीनत्वेन तस्य महामहिमत्वात् युक्ता तत्र भक्तिरिति सिद्धम् ( अ०. २. )

[ ३ – अधिकरणम्. ]

## ॐ देहयोगाद्वासोपि ॐ ( सू . ६ )

ननु — हेत्वनुपन्यासात् न्यूनमिदसूत्रम् नच — याज्ञवल्क्यप्रसंगे 'त्रयस्त्रिंशदिति ॐ इतिहोवाचे' ( बृ. ५-९-१ ) त्यादाविव प्रतिज्ञामात्रेणाऽर्थ सिद्धिसंभवात् तदनुपन्यासो 'न दोषायेतिवाच्यम् — न्यायसूत्रत्वाऽभावप्रसंगादितिचेत्, स्यादयंदोषो यद्यत्र हेतु र्न सूचितः स्यात्, नचैवं — किंनाम 'देहयोगाद्वासोपी'त्यपिशब्देन न केवलं स्वप्नावस्था, अपितु जाग्रदवस्थापीति समुच्चायकेन स्वप्नावस्थाया भगवदधीनत्वे प्रमाणतयोपन्यस्तस्य[1] 'आहही' त्यस्य इहापिज्ञेयतया सूचनात्[2]। अतएव - भाष्यकार एतत्सिद्धये 'सएवजागरित' इति श्रुतिमुदाहरतीति। **निमित्तमात्रविषयमिति** ॥ यत्प्रत्यक्षं निमित्तमात्रविषयं तदेव प्रमाणम्, 'अन्यत्तु[3] — श्रुतिविरोधात् अप्रमाणमित्यर्थः। एतेन प्रतीते व्याख्यानाऽनर्हत्वात् प्रतीते निमित्तमात्रविषयत्वाभिधानमयुक्तमितिपरास्तम्।

**पूर्वपक्षस्तु** — न जागरणं भगवदधीनं तस्य कालाधीनत्वात्। नचाऽचेतनत्वात् तदधीनत्वाऽनुपपत्तिः — कालाधीनत्वस्य अनुभवसिद्धत्वेन अचेतनत्वानुमानस्य बाधित विषयत्वात्। नचाऽनुभवो भ्रमः — बाधकाभावात्। अतो जाग्रदवस्थाया भगवदधीनत्वाऽभावात् न तस्य महामहिमत्वमिति।

---

१. 'संध्येसृष्टि' रित्यत्रोपन्यस्तस्य. २. अनुक्त्याहेतोः सूचनादित्यर्थः। सूचितंचेदं-भाष्यकृता 'ततएवे' तिवदता। ३. प्रवर्तकत्वविषयप्रत्यक्षन्तु इत्यर्थः।

**सिद्धान्तस्तु**— जाग्रदवस्थापि भगवदधीनैव, 'सएवजागरिते स्थापयति स स्वप्ने स प्रभुस्तुराषाट्' इतिश्रुतेः। अतएव—अचेतनत्वानुमानमपि कालाधीनत्वानिवर्त्तकं, श्रुतिविरोधेन प्रत्यक्षस्याऽप्रामाण्यात्। कालस्य निमित्ततामात्रविषयकं प्रत्यक्षं बाधाभावात् प्रामाणमेव। अतो हरे र्जाग्रत्प्रवर्तकत्वेन महामहिमत्वात् युक्ता तत्र भक्तिरिति सिद्धम् (अ०. ३.)

( - ४ अधिकरणम् .)

## ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॐ (सू. ७)

**सुप्तप्राप्यत्वमहिम्नइति** ॥ नाडीस्थस्येतिशेषः। **परमात्मनि, नाडीषुवेति** ॥ ननु — परमात्मनि स्वापस्य वादि प्रतिवादि संमतत्वात् नैवं संदेहो युक्तः, किं तर्हि किं नाडीस्थे परमात्मनि, उत केवल इति संदेहो दर्शनीयः, तत्रैव विवादात्, अतएव वक्ष्यमाणं संदेहबीजमपि नोपपद्यत इतिचेत् सत्यम्, नाऽयं पूर्वपक्षि सिद्धान्तिमताऽवलंबी तद्विप्रतिपत्तिजः संशयः, किंनाम श्रुतिविप्रतिपत्तिजः संशयः,। अतएव — विप्रतिपत्तिः संदेहबीजामित्यनुक्त्वाश्रुति विगानमेवोक्तम्। नायमस्तिनियमः -- पूर्वपक्षसिद्धान्तकोट्यवलंबी संशयएव सिद्धान्तैर्निरस्यइति, शुक्तिकायां नागदंतत्वकोटिकस्यापि संशयस्य शुक्तित्वनिर्णयेन निरासदर्शनात्। एवंच — अस्यापि संशयस्य 'नाडीस्थेपरमात्मनि स्वाप' इति सिद्धान्तनिरस्यत्वात् तत्प्रदर्शनं नानुपपन्नम्। **परमात्मन्येवेति** ॥ नाड्यादिस्थानमपहाय स्वाधारतयैव स्थिते परमात्मनि इत्यर्थः। को दोषोनाडीसंपर्के येन तत्परित्याग इत्यतआह — **परमात्मनोऽन्यत्रेति** ॥ सर्वदापरमात्माऽवस्थितस्यापि जीवस्य जाग्रत्स्वप्नयो रक्ष्यादिसंबंधेन दुःखदर्शनात् नाडीसंबंध सुप्तस्य दुःखप्रसङ्गइतिभावः। **नच — मुक्तवदिति** ॥ सुप्तस्य दुःखं

१. परमात्मनिसुप्तिबोधकः 'सतासोम्ये'ति नाडीषुसुप्तिबोधक 'तदानाडीष्वि'ति श्रुतिद्वयरूपबीजमित्यर्थः। २ एतेन–टीकास्थश्रुतिपदस्यश्रुति विगानमित्यर्थः सूचितः।

३. सिद्धान्तेन निरस्यइत्यर्थः। ४. नाडीषु सुप्तिरित्यस्यापीत्यर्थः।

५. नाडीसंबन्धेनसुप्तस्य।

नास्ति मुक्तवदित्यर्थः । **तदासुखमात्राऽनुभवादिति** ॥ यदि स्वापे दुःखं[1] स्यात्, संभृतसामग्रीकत्वात् सुखवदनुभूयेत, नत्वाऽनुभूयते, तस्मान्नास्त्ये-वेतिदितिभावः । एतेन दुखाननुभवस्यैव वक्तव्यत्वेन सुखानुभवकथनमयुक्त-मितिपरास्तम् । तटस्थशङ्कां निषेधति—**नचतत्रेति** ॥ तटस्थशंकां निषेधति — **नच वाच्यं दुःखाभाव इति** ॥ तटस्थएवशंकते — **दुःखाभावोऽनुमीयत-इति ॥ नचैवमिति** ॥ जीवस्य नाडीसंबंधांगीकारे दुःखप्राप्तिरितिनेत्यर्थः । **परमात्मनीति** ॥ परमात्मसंबन्धात् दुःखप्राप्तिपरिहारसंभवादितिभावः । सिद्धा-न्त्यंगीकृता उभयत्र[3]श्रुतिः दुःखाभावांगीकारेण निरुद्धा, देहसंबन्धे जाग्रदादा-विव दुःखस्याऽवर्जनीयत्वादित्याशङ्कते — **नचैकस्येति** ॥ दुःखाभावांगीकारेण निरुद्धेत्यर्थः। न हि संभवति दुःखकारणनाडीसंबन्धो विद्यते,न विद्यतेच दुःखमिती तिभावः । **उभयोपपत्तेरिति** ॥ ना ऽस्माभिर्नाडीसंबन्धो जीवस्याऽगीक्रियते, अपितु नाडीसंबन्धः परमात्मनएव, जीवस्यतु परमात्मनैव संबन्धइति । एवंच-गृहस्थितमंचोपरि सुप्तो यथा गृहेसुप्तः, तथा नाडीस्थपरमात्मनिसुप्तो नाडी-सुप्तोपिभवतीति नाडीषुस्वापो, दुःखाऽभावश्चेत्युभयमभ्युपपन्नम् । दुःखकारणस्य नाडीसंबन्[4]धस्याभावादितिभावः । एतेन — एकस्यैव व्यासज्योभयत्र स्वापसंभवे-ना ऽनुपपत्तेरेवाऽभावात् नाडीस्थपरमात्मनि स्वापांगीकारेण समाधानं व्यर्थ-मितिपरास्तम् । ननु — नोभयविधप्रमाणाऽन्यथाऽनुपपत्त्या नाडीस्थे परमात्मनि स्वापःकल्प्यः, एवमपि 'आसु तदा नाडीषु सुप्तो भवती' (छा०.८-६-३) त्यस्य यथाश्रुतार्थे प्रामाण्यानुपपादनादित्यतआह — **एवंचाभ्युपगमेनेति** ॥ उपपन्नेन एवमभ्युपगमेन प्रमाणभूत श्रुतिव्यवस्थोपपत्तौ सत्यामपि नाडीस्वाप-श्रुते र्मुख्यार्थाऽनुपपादकत्वात् नाडीस्थेपरमात्मनि स्वापानंगीकारे 'कर्मणैव हि संसिद्धि मास्थिता जनकादयः (गी०. ३ - २०) तमेवं विद्वानमृतइह-

---

१. अनुभवसामग्रीमत्त्वात् । २. दुःखम् । ३. नाड्यां परमात्मनिच । ४. साक्षा-त्तत्संबन्धमात्रस्य । ५. किंचिदुभयावच्छेदेन । ६. श्रुतिद्वयेत्यर्थः । ७. अयमनङ्गी-कारेहेतुः, परमात्मनिस्वापइत्यंषोऽर्थः श्रुति वाच्यार्थोपपादकोनेत्यतोहेतोरित्यर्थः ।

भवति' (तै०. आ०. ४.अ०:) इति प्रमाणद्वयाऽन्यथाऽनुपपत्त्या कल्प्यमानं कर्मजन्यज्ञानस्य मोक्षसाधनत्वमपि न स्यात्, अविशेषादितिभावः ।

**पूर्वपक्षस्तु** — केवले परमात्मन्येव स्वापो न नाड्यवस्थानविशिष्टे, नाडीसंबन्धे दुःखप्रसंगात्, जाग्रदाद्यवस्थासु चक्षुरादिस्थित भगवद्गतस्यापि जीवस्य देहसंबन्धेन दुःखदर्शनात् ! नचेष्टापत्तिः — सुप्तिकालेसुखैकाऽनुभवस्य उत्तरकालीनाऽनुस्मृति सिद्धत्वात् ।

**सिद्धान्तस्तु** — नाडीस्थित एव परमात्मनि सुप्तिः, अन्यथा 'आसुतदानाडीषुसुप्तोभवति' (छा०. ८-६-३) सतासोम्यतदासंपन्नोभवती' (छा०. ६-८-१) ति श्रुत्योरन्यतराऽप्रामाण्यप्रसंगात् । नच दुःखप्राप्तिः — परमात्मनएव नाडीसंबन्धाङ्गीकारेण जीवस्य तदनङ्गीकारात् । अतः परमात्मनो नाडीस्थस्य सुप्तप्राप्यत्वमाहात्म्यवत्त्वात् युक्ता तत्रभक्तिरिति सिद्धम (अ०. ४)

( ५ – अधिकरणम् )

## ॐ अतः प्रबोधोऽस्मात् ॐ ( सू. ८ )

**नेश्वरैकाधीनइति** ॥ न सर्वोपि प्रबोध ईश्वराऽधीनः, किंनाम — अकस्माज्जात एवेश्वराधीनः, अन्यस्तु भेरीताडनादि कारणान्तरजन्यइत्यर्थः । **प्रबोधकत्वाभावादिति** ॥ सर्वसुप्तप्रबोधकत्वाऽभावादित्यर्थः । **निमित्तमात्राविषयमिति** ॥ यातु भेरीताडनादीनां स्वतन्त्रकारणत्वावगाहिनी प्रतीतिरुत्पद्यते, सा भ्रमः, सावधारणश्रुति विरुद्धत्वात्; यातु निमित्तत्वमात्राऽवगाहिनी सा प्रमेतिभावः । एतेन — प्रतीतेर्व्याख्यानाऽनर्हत्वात् निमित्तमात्रविषयतया व्याख्यानमयुक्तमिति परास्तम् ।

**पूर्वपक्षस्तु** — न सर्वोपि सुप्तप्रबोधः ईश्वराधीनः, क्वचित् भेरीताड-

१. सर्वेषांसुप्तानामित्यादिरर्थः, एतेन 'एषएवसुप्तंप्रबोधयती'ति भाष्योदाहृतश्रुतौ सुप्तमिति जात्येकवचनमिति सूचितम् । २. 'एषएवे'ति दर्शितश्रुत्यर्थः । ३. एतादृशीति निरूपयितुमशोगात् । ४. प्रबोधस्यसर्वसंबन्धित्वमेव सर्वत्वम् ।

नादीनां कारणत्वदर्शनात्, अतः सर्वप्रबोधकत्वाभावात् न महैश्वर्यमिति ।

**सिद्धान्तस्तु** – ईश्वराधीनएव सर्वसुप्तप्रबोधः, तत्रैव जीवानांसुप्तत्वेन तदाज्ञया विना प्रबोधायोगात्, भेरीताडनादीनां स्वतंत्रकारणताग्राहिप्रतीतेः 'एषएवसुप्तंप्रबोधयतीति श्रुतिविरुद्धत्वेनाऽप्रमाणत्वात् । अतः – तस्यैव सर्वप्रबोधहेतुत्वात् महामहिम्नि युक्ता निरतिशया भक्तिरिति सिद्धम् (अ०.५)

( ६ – अधिकरणम्. )

## ॐ स एव च कर्माऽनुस्मृतिशब्दविधिभ्यः ॐ (सू. ९)

**अवस्थाभगवदधीना इत्युक्तवाक्यस्येति** ॥ अवस्थानां भगवदधीनत्वमित्यस्मिन्नर्थे उक्तानां 'एषएवसुप्तंप्रबोधयती, त्यादि वाक्यानाम् उभयथा ऽर्थसंभवइत्यर्थः । **राजादीनामिति** ॥ अत्र 'ईश्वरः खंडेशोभवितुमर्हति, अधिपतित्वात् राजादिव'दितिप्रयोगो द्रष्टव्यः । **अभ्युपगन्तुं शक्यतइति** ॥ 'एषएवसुप्तंबोधयती' त्याद्यर्थतयेत्यर्थः । **नचात्र प्रमाणमिति** ॥ समाख्यारूपमितिशेषः । **अदृष्टमपीति** ॥ दृष्टयननुगुणमपि सर्वेशत्वं श्रुत्यर्थत्वेन कल्पयामइत्यर्थः । एतेन – प्रमाणसद्भावे तद्बलेनैव सिद्धत्वेन कल्पनाभावात् प्रमाणसद्भावएव अदृष्टकल्पना कार्या नान्यथेति वचनमयुक्तमितिपरास्तम् । ननु 'एषस्वप्नान् दर्शयती'तिश्रुतौ स्वप्नादिदर्शकत्वमनवधारणेनोक्त्वा 'एवएवपरमआनन्द'इति सावधारणं परमानंदत्वाभिधानात् तदेवेश्वरैकनिष्ठम् स्वप्नादिदर्शकत्वंतु कालान्तरे ऽन्यनिष्ठमिति खंडेशत्वमेवेश्वरस्येत्यतआह – **अवधारणस्य सर्वत्रेति** ॥ ननु– सौत्रश्चशब्दः किमर्थ, समुच्चयार्थत्वस्याऽवधारणविरुद्धत्वादित्यतआह – **चशब्द-**

---

१. हरेरित्यादिशेषः । २. हराविति शेषः । ३. 'सएवजागरितेस्थापयति, स्वप्नादिबुद्धिकर्ता' चेत्यादिवाक्यमादिपदेनग्राह्यम् । ४. उक्तवाक्येसर्वपामितिपदाश्रवणात् - सर्वजीवानां, केषांचिदित्यादिटीकोक्तोभयविधेत्यर्थः । ५. इत्यादिवाक्यानां वाच्यतयेत्यर्थः । ६. 'एषएवसुप्त' मित्यादिश्रुत्यर्थतयेत्यर्थः । ७. वचनम्-इत्यर्थकं 'नचप्रमाणमस्ती'त्यादिटीकाकृदुक्तिः । ८. कोऽर्थोऽभिधेयोयस्येति बहुव्रीहिः ।

इति ॥ पूर्वपक्षनिरासार्थइत्यर्थः । अतएव भाष्ये — ' नचकेषांचित्स्वप्नादि-कर्ता, न तु सर्वेषामिती'ति पूर्वपक्षनिषेधः कृतः

**पूर्वपक्षस्तु** — न ईश्वरः सर्वेषां सर्वकालीन सर्वाऽवस्थाप्रवर्तकः अधिपतित्वात् राजवत् । नच — 'एषएवसुप्तंप्रबोधयति' इत्यादिश्रुतिविरोधः — यत्किंचिन्नियामकपरत्वेनाऽपि योजयितुं शक्यत्वात्, नच विस्पष्टसमाद्‍याश्रुत्यभावे युक्तिविरुद्धं सर्वनियामकत्वं श्रुत्यर्थतया प्रतिपत्तुं शक्यते; अतः सर्वाऽवस्थाप्रेरकत्वाऽभावेन न सर्वैश्वर्यं हरेरिति ।

**सिद्धान्तस्तु** — ईश्वरएव सर्वकालीनसुप्त्यादिनियामकः सर्वकर्मनियामकत्वात्, सुप्त्यादीनांचतदन्तर्भावात्, नच — तत्रप्रमाणाऽभावः — 'एषह्येव साधुकर्मकारयती' (कौ०६-८) ति सावधारणश्रुतेः, 'प्रदर्शकस्तु सर्वेषां स्वप्नादे रेक एवतु । परमः पुरुषो विष्णु स्तता ऽन्यो ना ऽस्ति कश्चने' तिस्मृतेः, 'एषस्वप्नान्दर्शयति एषप्रबोधयति, एषएव परमआनन्द' इति श्रुतेः, 'आत्मानमेवलोकमुपासीते' [बृ०.३.४-१५] तिविधेश्च । नह्यन्यस्य स्वप्नादिप्रवर्तकत्वे, परमात्मनएवोपास्यत्वं संभवति । अतः सर्वाऽवस्थाप्रेरके महामहिम्नि ईश्वरे भक्तिर्युक्तेतिसिद्धम् (अ०. ६)

( ७ – अधिकरणम्. )

## ॐ मुग्धे ऽर्धसंपत्तिः परिशेषात् ॐ ( सू . १० )

**अन्यथेति** ॥ ननु — जाग्रदवस्था संस्थितजीवप्राप्यत्वाभावेऽपि यथा— न निरतिशयैश्वर्यभङ्गः, तथा मोहावस्थायां स्थितजीवप्राप्यत्वाऽभावेऽपि अभङ्गसंभवेन तत्रभक्तिसंभवात् व्यर्थमिदमधिकरणमितिचेत्, न — वैषम्यात्, युक्तं जाग्रदाद्यवस्था संस्थितजीवप्राप्यत्वाऽभावेऽपि परमैश्वर्यम्, तत्प्रमाणाऽभावेन तदभावस्य प्रमाणसिद्ध परमैश्वर्याऽपलापहेतुत्वाऽभावात्, मुग्धजीवप्राप्यत्वाऽभावस्तु तदपलापहेतुः, अर्धप्राप्तिरूपमोहस्य 'अर्धप्राप्तिरि तिज्ञेय' इति

१. जाग्रत्स्वप्नावस्थास्थितजीवप्राप्योर्हरि रि तिविषये ।

प्रमाणसिद्धत्वात्, नहि प्रमाणत्वाऽविशेषेऽपि एतत्प्रमाणोक्तं नाऽस्ति, प्रमाणान्तरोक्तमस्तीति संभवतीति । एवम् एवंजातीयके सर्वत्र द्रष्टव्यम् । **जाग्रत्स्वप्नयोरिति** ॥ जाग्रत्स्वप्नाऽतिरिक्ताऽवस्थात्वादित्यर्थः । **अन्यथेति** ॥ भगवदितरत्नमोह इत्यङ्गीकारे जाग्रत्स्वप्नैकदेशत्वं स्यादित्यर्थः । **नचैवमिति** ॥ भगवत्येवमोहइत्यङ्गीकारे मोहस्य सुप्त्येकदेशत्वं स्यादिति नवाच्यमित्यर्थः । **समानधर्मतयेति** ॥ आत्माऽतिरिक्तविषयाऽदर्शनेन समानधर्मतयेत्यर्थः । **दुःखात्मेति** ॥ जाग्रत्स्वप्नयोर्दुःखाऽऽत्मकात्वाऽतिरिक्तविषयत्वस्वाभाव्या दितिभावः । ननु —' अवस्थाविचारप्रसक्तो मोहोऽत्रविषय' इति प्राचीनाऽधिकरणेन संगतिरुक्ता, सा नयुक्ता प्रतिदिनभावित्वेन चिरभाविजाग्रदाद्यवस्थानिरूपणकाले कादाचित्कमोहस्य प्रसङ्गाऽयोगादित्याशङ्क्य सिंहावलोकनन्यायेन परिहरति — **नातिदूरसामीप्यमिति** ॥ देहारम्भक कर्मनाशोत्तरभावित्वात् मरणमतिदूरशब्देनोच्यते, तत्समीपभावित्वात् अतिदूरसामीप्यमिति मोह उच्यते, स चिरमहरहर्नास्तीति अप्रसंगो न मन्तव्यः, उपेक्षाऽनर्हत्वस्मृतेरेव प्रसक्तत्वादितिभावः । एतेन 'नलोपोनञ' ( पा०. सू०. ६-३-७३ ) इति नलोपे नुडागमेच सति अनतिदूरसामीप्यमितिभाव्य मितिपरास्तम् । अप्रसंगपदेन नञोऽन्वितत्वेन समासाभावात् ॥ **प्रकारान्तर प्रदर्शनमिति** ॥ पूर्वंतु दूरस्थत्व, समीपस्थत्व, प्रवेशा, ऽर्धप्रवेशान् प्रसज्य पक्षत्रयं निराकृत्या, ऽर्धप्रवेशो ऽङ्गीकृतः, इदानींतु — प्राप्य

---

१. जाग्रत्स्वप्नयोरितिषष्ठी प्रतियोगितायाः संबन्धत्व विवक्षया सबन्धसामान्यइतिमत्वा, स्वप्नयोरित्युत्तरं ' सकाशा'दितिशेषं मत्वावा एवमुक्तम् । मोहस्येत्यादिशेषः । यद्वा - जाग्रत्स्वप्नयोर्मोहाद्भेदे ताभ्यां मोहस्यपार्थक्यंफलतीत्यभिप्रायेणेत्थमुक्तिः । भाववोधेप्रकारान्तरेणयोजनोक्ता । २. एतत्पादीयाऽधिकरणेनेत्यर्थः । ३. अनेन - चिरभावित्वमेवंरूपमितिदर्शितम् । ४. इदंज्ञेयम् -- अत्र -- समीपपदं पूर्वसमीपकालवृत्तिपरंततः ब्राह्मणादित्वात् 'गुणवचन ब्राह्मणे' (पा०. सू०. ५-१०-१२४) ति भावेष्यञ् अतिदूरस्य सामीप्यं यस्येति बहुव्रीहिः, मरणावस्थासमीपपूर्वकालवृत्तिरवस्था मोहएव, सत्यां मूर्च्छायां पुनः प्रज्ञाऽलाभेमरणमेवजातमिति लोके निर्णयात् मोहस्यैव मरणसमीप पूर्वकालवृत्तित्वमितिभाव इति । ५. एतेनेत्युक्तं विवृणोतिअप्रसङ्गेति । ६. अतिदूरेत्यादिपदेन समासाभावादित्यर्थः ।

प्राप्त्यर्धप्राप्ती: प्रसज्य प्राप्त्यप्राप्ती निराकृत्य, अर्धप्राप्तिरवशेषितेतिभेदः । **अर्धप्राप्तिरिति** !! ननु — इदमयुक्तम्, भगवत्प्राप्तेः सुखहेतुत्वेन दुःखाभावप्रसंगात्, अन्यथा – मुग्धादपि सुप्तस्य दुःखातिशयः स्यात् समग्रप्राप्तिसद्भावात् इतिचेत्, स्यादयं दोषः – यदिमुग्धस्यप्राज्ञप्राप्तिप्रयुक्तं दुःखमितिब्रूमः नचैवं किंनाम — मुग्धस्य मरणनाडीसंबन्धप्रयुक्तमेव दुःखं ब्रूमः । त्रयइतिपुल्लिंगस्य अवस्थेत्यनेनाऽन्वयायोगात् त्रयइत्यनूद्य लिंगव्यत्ययः कार्यइतिभावेनाह – **त्रयस्तित्वइति॥** अवस्थेत्येकवचनान्तं नित्यस्त्रीलिंगं मोहइतिनित्यपुल्लिंगे नाऽन्वेति त्रिशब्दस्तु प्रकारवाची एवमित्यनेनान्वेतीत्याशयवान् 'यतएवं त्रयोवस्थे'तिभाष्यं प्रकारान्तरेण व्याचष्टे — **दूरस्थत्वादिति ॥** एवमित्यनूद्य 'अवस्थात्रये विनियुक्ता'इति व्याख्यानम् ।

**पूर्वपक्षस्तु** – न मोहो जीवस्य भगवदितरत्र ।किंतु — परमात्मन्येव, जाग्रत्स्वप्नावस्थाविलक्षणत्वात्, अन्यथा — तत्संकीर्णतापत्तात् नच — परमात्मनि मोहाङ्गीकारे सुप्त्यैकदेशत्वप्रसङ्गः –- बाह्यार्थाऽविषयत्वेन तदेकदेशत्वस्येष्टत्वात् । अतः परमात्मन्येव मोहोजीवस्येति ।

**सिद्धान्तस्तु** – भगवति अर्धप्रवेशएव जीवस्य मोहे न समग्रप्रवेशः, परिशेषात् । तथाहि — मोहे तावत् परमात्मविदूरत्व, सामीप्य, प्रवेश, ऽर्धप्रवेशाः प्रसक्ताः, न तावत्त्रयः कल्पाः संभवन्ति, तेषां जाग्रदाद्यवस्थाधर्मत्वात् । एवंच — प्रसक्तप्रतिषेधे ऽन्यस्याऽप्रसंगात् परिशिष्टोऽर्धप्रवेशो मोहो जीवस्य-मोहस्याऽवस्थात्रयातिरेकित्वे भवेदेतत्, तदेव कुत इतिचेत्, अत्रवक्तव्यम् — किंमोहस्य सुप्तावंतर्भावउच्यते, उत जाग्रत्स्वप्नयोः, नतावदाद्यः — वैलक्षण्यात्, तथाहि – मुग्धः कदाचिदविनोच्छ्वसिति, सवेपथुश्चास्यदेहोभवति, भयानकंचाऽस्यवदनंभवति, विस्फारितेचा ऽस्यनेत्रेभवतः, सुप्तस्तु — प्रसन्नवदनः, तुल्यकालंपुन रुच्छ्वसिति, निमीलिते अस्य नेत्रे भवतः, नचाऽस्य देहोवेपते, पाणिपेषमात्रेणच सुप्तमुत्थापयन्ति, नतु – मुग्धं मुद्गरघातेनापि । निमित्तभेदश्चभवति मोहस्वापयोः, मुसलाभिघाताऽऽदि[२]निमित्तत्वात् मोहस्य,

१. कारणभेदः । २. आदिना अपस्माररोगादीनांग्रहः ।

सुच्छायादि निमित्तत्वात्स्वापस्य, नचवदन्ति मुग्धंसुप्तमिति। ना ऽपि जाग्रत्स्वप्नयोरन्तर्भावः, दुःखाऽऽत्मकाद्यतिरिक्तविषयाऽदर्शनात् अतो मोहोऽवस्थांतरमेव ततश्च मुग्धप्राप्यत्वेन महामाहात्म्यवत्वाद्भगवतिभक्तिर्युक्तेति सिद्धम् (अ०. ७)



( ८ - अधिकरणम्, )

## ॐ न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि ॐ (सू. ११)

**सर्वत्राऽशेषगुणत्वसमर्थनादिति** ॥ यद्यपि अत्राऽधिकरणे न सर्वत्राऽशेषगुणत्वं समर्थ्यते, किंतु — भेदोनिराक्रियते, तथापि — भेदकनिराकरणस्य सर्वत्र गुणपूर्णतासिध्यर्थत्वात् अधिकरणफलाऽभिप्रायेण गुणपूर्णतासमर्थनादित्युक्तम्। **स्वगततारतम्यइति** ॥ ईश्वरात्मकानां विश्वादीनां परस्परभेदे ततएवचतारतम्ये ईश्वरस्याऽनन्तरूपेण गुणपूर्णत्वरूपमहामहिमत्वाऽभावात् पूर्णत्वप्रयुक्तभक्तिसंभवेपि न निरतिशया भक्तिः स्यादित्यर्थः। **घटादीनामिति** ॥ घटादीनां भिन्नस्थानस्थितानां भेददर्शनम्, आकाशादीनां स्थानभेदेपि अभेददर्शनं संदेहबीजमित्यर्थः। साध्यं विनापि हेतोः सिद्धिमाशङ्क्य निषेधति — **नचेति** ॥ इतः परं टीकायां श्रूयमाणं 'किमीश्वरोऽवयवी पाणिपादाद्यवयवैरनेकस्थान, उत समग्ररूपेण, नाद्यः—विश्वादीनां 'सप्तांगएकोनविंशतिमुख'(मा.२-१) इत्यादिना प्रत्येकं रूपश्रवणात्। द्वितीये'इत्यन्तं वाक्यं प्रक्षिप्तम् अवश्यंचैतदेवं विज्ञेयम् भावाऽनभिज्ञेन हेतोरन्यथासिद्धिशङ्कायां कृतायां, स्वाऽभिप्रेतहेतोराविष्करणीयत्वेन तत्प्रतिविकल्पकरणायोगात्। कुतो न वाच्यमित्यतआह—**असङ्गतइति** ॥ यतइतिशेषः, सामस्त्येन भिन्नस्थानत्वस्य हेतुत्वेन विवक्षितत्वात् असंगतोदृष्टांत इतिभावः। उपसंहरति — **अतइति** ॥ ननु — श्रुते विश्वादीनां मूलरूपाऽभेदप्रतिपादकत्वेपि विश्वादीनां परस्परभेद प्रतिपादकत्वाभावात् कथमेतच्छ्रुत्युदाहरणमित्यतः श्रुत्यर्थमाह — **सर्वेषुभूतेष्विति** ॥ सर्वेषुभूतेषु

---

१. आदिपदंमशकाद्य भावग्राहकम्। २. मोहस्येतिशेषः। ३. अत्राऽधिकरणेत्रीणि सूत्राणि। ४. आकाशादिवदिति दृष्टान्तइत्यर्थः।

सर्वेषांचक्षुरादिषु एतं विश्वादिरूपिणं एकमेवाऽऽचक्षते तथा चक्षुस्थितंविश्वंकण्ठादिस्थिततैजसादिना एकम् = अभिन्नं पूर्णगुणंचाऽऽचक्षतइति श्रुत्यर्थ इतिभावः। इतः परं टीकायांश्रूयमाणं 'एकैकदेशतोऽनेकस्थानत्वं परस्याऽसिद्धं श्रुतिविरुद्धंचेतिभावेनोभयत्वमनुक्तं'त्यन्तं प्रक्षिप्तम् 'उक्तमितिच प्रक्षिप्तम्। तच्छेदश्च प्रक्षिप्तः। अस्येवैच्छिन्नम्। ततश्चएवंटीकावाक्यपाठः — 'उभयलिंगमित्यस्यव्याख्यानं भिन्नरूपमिती'ति। अवश्यंचैतदेवं विज्ञेयम् — सामस्त्येनाऽनेकस्थानस्थित्यभिप्रायकेण 'स्थानत' इतिपदेन भावानभिज्ञस्यैकैकदेशतोऽनेकस्थानास्थितत्वभ्रमसंभवेपि तस्योभयत्वमितिपदोच्चरणप्रयुक्तत्वाऽभावात्, तदनुत्पादायोभयत्वमित्यनुक्तेत्युक्तययोगात्। न हि यदुच्चारणप्रयुक्तो भ्रमो भवति तत्परित्यागमनुक्त्वा, यदुच्चारणप्रयुक्तो भ्रमो न भवति तत्परित्यागकथनंयुक्तमत्। भाष्ये — एकरूप इति ॥ सर्वत्र = अक्ष्यादिस्थानेषु सामस्त्येन विद्यमानो विश्वादिरूपो विष्णुः एकरूपः = एकएव अभिन्नएव नाऽत्रसंशयः कार्यः, कथमेकस्य नानास्थानेषु सामस्त्येनाऽवस्थान मन्यत्राऽदृष्टत्वेना ऽसंभावितत्वादित्यतउक्तम् — ऐश्वर्यादिति ॥ एकंच = एकमपितद्रूपम् ऐश्वर्यात् बहुधा = नानास्थानेषु सामस्त्येन वर्तते, — सूर्यवदीयते = सूर्यदृष्टान्तकेनाऽनुमानेन ज्ञायतइत्यर्थः। भाष्ये—विधूतभेदमोहइति॥ ईश्वराऽवतारेषु इदंच विधूतभेदमोहः - निरस्तभेदभ्रमइत्यर्थः। टीकायां 'समाधिगतोऽस्मी'त्यर्थइत्यतः परं 'मां प्रति मां प्रतीतिबहुधास्थितमितिवे'ति वाक्यं प्रक्षिप्तम्। अवश्यंचैतदेवं विज्ञेयम् — अस्यव्याख्यानस्य नास्त्येवेश्वरस्याऽनेकं रूपं किंतु — सूर्यमण्डलवत्प्रतीतिमात्रमितिविरुद्धार्थप्रतिपादकत्वात्, जाग्रदवस्थाया अविद्याकार्यत्वाभावात्।

---

१. 'उभयलिङ्गमिती'तीतिपदोत्तरं श्रूयमाणमुक्तमितिपदम्। २. 'तद्याख्यान' मित्यत्र श्रूयमाणस्तच्छद्वः। ३. 'उभयलिङ्गमिती' त्यत्र इति पदोत्तरमस्येतिपदं पाठाद्भ्रष्ट मित्यर्थः। ४. सैवेणानेनपदेन। ५, ६. 'नस्थानतोपी'त्येतत्सूत्रभाष्ये। ७. नस्थानत इति सूत्रभाष्ये। अस्य पूर्वार्धन्तु-'तमिममहमजंशरीरभाजां हृदिहृदिधिष्ठितमात्मकल्पितानां' मिति। ( भाग०. प्र०. ९-४९ ) भीष्मकृतकृष्णस्तवेऽयंश्लोकः।

तत्प्रवर्तकस्य विश्वस्य कार्यबद्धत्वकथनमयुक्त मित्यतआह — **कार्यभ्रमेति** ॥ अत्र जाग्रच्छब्देन जाग्रदवस्थागतज्ञानमुच्यते, ज्ञानमात्रस्या ऽविद्याकार्यत्वाऽभावेऽपि तद्विशेषस्या ऽविद्याकार्यत्वा त्तद्वद् उच्यतइतिभावः । तैजसस्य कार्यबद्धत्व-मुपपादयति — **तत्कारणेति** ॥ सः जाग्रत्कालीनो भ्रमः कारणं यस्यभ्रम-स्येति विग्रहः, तथाच जाग्रत्कालीनभ्रमकार्यस्वाप्नभ्रमवद्वस्तैजसः कार्यबद्ध (इति) उच्यत इतिभावः । उभावपि अविद्यारूपकारणेन बन्धकत्वात् 'कारणबद्धौ' उच्यते इतिप्राह्यम् । एतेन विश्वतैजसयोर्द्विविधबन्धवत्त्वं प्रतिज्ञाय, एकैकबन्धकथनमयुक्तमिति परास्तम् । **तत्कारणाज्ञानेति** ॥ द्विविधभ्रमकारणा-ऽज्ञानरूपसुप्तिबद्धइत्यर्थः। शङ्कते — **नैतच्छ्रुतिबाध इति** ॥ एतच्छ्रुत्या 'एषत-आत्माऽन्तर्यान्यमृत' (बृ०. ५-७-३) इत्यादिश्रुत्या 'कार्यकारणबद्धौता' (मा०. २ - १६) विति भेदश्रुते र्विषयापहारो नत्यर्थः । **तासामिति** ॥ अभेदश्रुतीनां कतिपयविषयत्वेन भिन्नविषयत्व संभवादितिभावः । 'अयमात्मे' त्यन्तिमश्रुतेर्विषयसंकोचोऽपि नकार्य इतिभावेनाह — **अन्तिमश्रुतौचेति** ॥ **विश्वाद्यनन्तरूपाणामिति** ॥ विश्वाद्यनन्तरूपाणामभेदेन विशिष्य पठितत्वा-दित्यर्थः । ननु — अनन्तरूपत्वमेव 'अनन्तमात्र' इत्यनेन पठ्यते नतु परस्परा ऽभेदवैशिष्ट्येन तत्कथमुच्यते विश्वादीनामभेदेनैव पठितत्वादितीत्याशङ्कां परि-हरन् 'चशब्दादनन्तरूपत्वं चैके शाखिनः पठन्ती' ति भाष्यं शेषपूरणेन समीकरोति — **च शब्दात्समुचितमितिशेषइति** ॥ अनेना ऽनन्तरूपत्वन्तु अनन्तमात्रंचेति चशब्दादभेदेन समुचितं कृत्वा पठन्ती' तिभाष्यं व्याख्यातं भवति, एतेन श्रुतौ 'अमात्रोऽनन्तमात्रश्चे' ति पदाभ्यां विश्वादीनां मूलरूपेणाऽभेदप्राप्तावपि विश्वादीनां परस्परमभेदाऽप्रतीते 'रभेदेनैवाऽनन्त-रूपत्वं पठन्ती'त्ययुक्तमिति परास्तम् । 'अभेदेनैवचशब्दा' दितिभाष्यस्य योजनान्तरमभिप्रेत्याह — **अभेदेन सहैवेति** ॥ अनेन 'एकेशाखिनः चश-

---

१, २, ३. 'नभेदादिती' (३-२-१२) ति सूत्रीय टी०. प्र०. धा०. ।

४, ५, ६, ७, ८, ९. 'अपिचैवमेके' (३-२-१३) त्युत्तरसूत्रीय टी०.प्र०.धा०.

द्वात् चशद्बसहितात् अनन्तमात्रशद्बात् अभेदेनैवसह अत्यन्ताऽभेदेनैवसह ईश्वरस्या ऽनन्तरूपत्वं पठन्तीति भाष्ययोजनोक्ता भवति, पूर्वयोजनायां चश-द्बादित्यतः परं समुचितमितिशेषोऽभिमतः, इहतुनेतिविशेषः । **कागतिरिति ॥** भेदकबद्धत्वादिव्यपदेशस्य कागतिरित्यर्थः । भेदकधर्मा भेदनिर्वाह्याभवन्ति, नचेदीश्वररूपेषुभेदः, तर्हि — केनभेदेन ते निर्वाह्या इतिभावः । अत्रटीका-याम् — " अभेदेऽपिभेदव्यपदेशोऽचिन्त्यैश्वर्या'दित्युक्तम् , अनन्योऽप्यन्यशद्बेन" ति वाक्यं प्रक्षिप्तमितिध्येयम्, अवश्यंचैतदेवं विज्ञेयम्, ' अभेदेऽपिभेदव्यप-देश' इति भाष्ये भेदव्यपदेशेस्थानभेदमात्रस्य हेतुत्वेनोक्तावपि ऐश्वर्यस्यतद्धेतुत्वेना-ऽनुक्तेः, ऐश्वर्ययोगादित्यत्र चशद्बाऽभावात् । अतएव — टीकाकृता ' अक्षया-दिस्थितोबद्धोऽन्यत्रात्रबद्धउच्यत इतिभाव' इत्येवव्याख्यातम् । अन्यथा — ' ऐश्वर्य-योगाच्चबद्धोऽबद्धइत्युच्यत' इत्यवक्ष्यत् । अतएवच — अभिन्नस्यस्थानभेदः कुत इत्यतआहेति ' ऐश्वर्या'दित्येतत् स्थानभेदोपपादकतयाऽवतारितम् , ' अनन्योप्यन्य शद्बेन' ति प्रमाणस्य ऐश्वर्ययोगादनन्योऽप्यन्यशद्बवाच्योभवतीत्यर्थकत्वेन ऐश्वर्य-योगाद्भेदकधर्मव्यपदेश इत्यर्थकत्वाऽभावाच्च । भाववोधेतु — गङ्गाजलाऽनु प्रवि-ष्टयामुनोदकवत्तदपिवाक्यं सेव्यमेवेतिभावेन व्याख्यातम् ।

**पूर्वपक्षस्तु** — सर्वशरीरस्थितो विश्वादिरूपो हरिः परस्परं भिन्नएव, भिन्नस्थानत्वात् घटादिवत् । नच — अभेदेपि आकाशवद्भिन्नस्थानत्वोपपत्ति रितिवाच्यम् — कार्त्स्न्येन भिन्नस्थानत्वस्य हेतुत्वेन विवक्षितत्वात् । अतोऽस्त्येव विश्वादीनांभेदः । ततश्च ऽनुग्राह्याऽनुग्राहकभावस्या ऽवर्जनीयत्वात् निरति-शयैश्वर्याभावेन न तत्र भक्तिर्युक्तेति ।

**सिद्धान्तस्तु** — विश्वादिरूपी हरिः भिन्नस्थानोऽप्यभिन्नएव प्रतिपत्तव्यः, भेदसाधक भिन्नस्थानत्वाऽनुमानस्य 'सर्वेषुभूतेष्वेतमेवे' (ऐ०.आ०. ३-२-३) ति श्रुति बाधितत्वात् । ननु — न विश्वादीनामभेदो युक्तः ' कार्यकारणबद्धौता-विष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु द्वौतु तुर्ये नसिध्यत' ( मा०.

१. 'अग्निर्वैकमेके' (३-२-१३) इत्युत्तरसूत्रीयटी०. प्र०. प०..

२-१६ ) इति भेदकधर्मव्यपदेशादितिचेत्, न — 'एषतुआत्माऽन्तर्याम्यमृतः, अयमेवसः, (बृ०. ४ ५-१) अयंवैहरयः अयमात्माब्रह्मे' (बृ०.४-५-१९) ति प्रत्येकमभेदवचनात् । अपिच — 'अमात्रो ऽनन्तमात्रश्च द्वैतस्ययोपशमः शिवः। ॐकारोविदितो येन समुनि र्नेतरो जन' [मा० ४-७] इति विश्वाद्यनन्तरूपाणां परस्परं मूलरूपेणच अभेदमेके शाखिनः पठन्ति, अतो हरेः स्वगतभेदशून्यस्य सर्वगुणपूर्णत्वात् युक्ता तत्रभक्तिरिति सिद्धम् (अ०. ८.)

( ९ – अधिकरणम, )

## ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ ( सू. १४ )

**भक्त्यर्थमिति** ॥ 'तस्ये' त्यतः परं प्राकृतरूपनिरासपूर्वकमितिशेषः । **अन्यथेति** ॥ प्राकृतरूपनिरासपूर्वकमप्राकृतरूपसमर्थनाऽभावइत्यर्थः । **भक्तिरेवात्रविषय इति** ॥ ननु -- परमात्मा विषयः, प्राकृतरूपवान् नवेति संदेहः प्राकृतरूपवानेवेति पूर्वपक्ष इतिवक्तव्यम्, सिद्धान्ते परमात्मनः प्राकृतरूपाऽभावस्यैव समर्थनात् नतु भक्तिरेवात्रेत्यादि, भक्तेरधिकरणफलत्वेना ऽधिकरणाऽर्थत्वाऽभावात् इतिचेत्, सत्यम् — भक्तिर्ना ऽधिकरणप्रतिपाद्या, तथापि — ना ऽस्याऽधिकरणस्या ऽत्राऽन्तर्भावो युक्तः, किन्नाम युक्तिपादएव, तथाहि — उक्तंतावत् 'रूपोपन्यासा' (ब्र०. १-२ २३) दिति भगवतोरूपं, 'पुरुषविधमविचैनमधीयत' (ब्र०. १-२-२६) इतिच, तदयुक्तम्, अनित्यत्वप्रसंगादितियुक्तिविरोधे प्राप्ते प्राकृतरूपनिरासेन युक्तिविरोधस्य निराक्रियमाणत्वादित्याशङ्कानिरासाय, यथा – अस्याऽधिकरणस्य युक्तिविरोधनिरासफलत्वम्, तथा — भक्तिकर्तव्यताफलकत्वमप्यस्तीति अत्राऽन्तर्भावो नाऽयुक्त इतिद्योतनाय 'भक्तिर्विषय' इत्याद्युक्तम, एवमुत्तरत्राऽपिद्रष्टव्यम् । भाष्ये — 'रूपवत्त्वादनित्यत्व' मिति पूर्वपक्षप्रदर्शनमुपलक्षणत्वाऽभिप्रायेणेतिभावेन पूर्वपक्षफलं प्रतिज्ञापूर्वकमाह — **नयुक्तैवेत्यादिना** ॥ **नाद्यइति** ॥ न सिद्धान्तिना रूपवत्त्वपक्षोऽभ्युप-

---

१. एतासांश्रुतीनांमर्थःटीकायांव्यक्तः । २. हरिनामानः । ३. अत्राऽधिकरणे चत्वारिसूत्राणि ।

गन्तुं शक्य इत्यर्थः । **रूपवत्त्वादिति** ॥ रूपवत्त्वस्याऽनित्यत्वापादकत्वादिति भावः । एतेन — 'रूपवत्त्वा'दितिव्यर्थ मितिपरास्तम् । अनित्यत्वमित्युपलक्षण-मितिभावेनाह — **अरूपमिति** ॥ अत्रापि अरूपित्वश्रुत्यप्रामाण्ये ऽवि-शेषाच्छ्रुत्यन्तरेप्यनाश्वासप्रसङ्गेन गुणाऽसिध्या भक्तिर्नोपपद्यतइति भक्त्ययो-गोबाध्यः । एतेन — **प्रकाशवच्चे'** [ब्र० ३-२-१५] त्यादिसूत्रेणा ऽप्राकृत-रूपाङ्गीकारेणा ऽनित्यत्वदोषस्य परिहृतत्वात् अरूपत्वप्रतिपादकं सूत्रं व्यर्थमिति-परास्तम् । अरूपत्वश्रुत्यप्रामाण्यपरिहाराय अरूपत्वस्याऽपि वक्तव्यत्वात् । **नद्वितीयइति** ॥ द्वितीयोऽपि ना ऽभ्युपगन्तुंशक्यइत्यर्थः । एतेन — 'ना द्य' इत्याद्यपक्षं दूषयता द्वितीयपक्षस्या ऽङ्गीकृतत्वात् पुनस्तस्याऽपि दूषणेऽयावात इतिपरास्तम् । **श्रुतिवैयर्थ्यापातादिति** ॥ अनेन — 'प्रकाशवच्चे [ब्र० ३-२-१५] त्यादि सूत्राणां सौन्दर्याद्युपपादनवत् श्रुत्यप्रामाण्यनिरासोऽपि प्रयो-जनमिति सूचितम् ! सिद्धान्तफलंप्रतिजानीते — **कर्तव्यैवेति** ॥ **अरूपत्वेति**॥ अरूपत्व श्रुतिवैयर्थ्यप्रयुक्तश्रुतिमात्राऽनाश्वसाऽभावाच्च भक्तिरुपपन्नेतिभावः । **कंमु-त्यंचेति** ॥ अस्मिन्व्याख्याने तत् भौतिकं रूपम् अव्यक्ततः परे केतियोजनाद्र-ष्टव्या । **नचैवंरूपशब्दस्येति** ॥ रूपशब्दस्य प्राकृतादावेवव्युत्पन्नत्वा त् व्युत्पत्त्यनु सारेण शब्दस्यबोधकत्वात् रुग्मवर्णादि श्रुतेः(अ० ५-३)प्राकृतादिरूपबोधकत्वात् अनित्यत्व प्रसंगभिया अरूपत्वश्रुत्यवष्टम्भेन प्राकृतरूपनिषेधे तच्छ्रुत्यप्रामाण्यमेव-स्यादिति न वाच्यमित्यर्थः । कुतोनवाच्यमित्यतआह — **अप्रसिद्धप्रकाशे-पीति** ॥ न रूपादिशब्दानां प्राकृतादिरूपेषु शक्तिग्रहः कल्प्यः, किन्तु प्राकृ-तत्वादिपरित्यागेन रूपएव, अन्यथा — प्रकाशादिशब्दानामपि तथात्वापत्त्या अप्र-सिद्धप्रकाशे भगवति 'आत्मैवाऽस्यज्योतिर्भवती' [बृ० ६-६-६] त्यादि व्यवहारविलोपप्रसङ्गइतिभावः । एतेन — रूपशब्दस्यप्राकृतादावेवव्युत्पन्नत्वश-

१० २, 'प्रकाशवच्चे' (ब्र० सू० ३-२-१५) ति सूत्र टी० प्र० धा० ३. आदिना-भौतिकग्रहणम् । ४. एवशब्दोमात्रार्थकः रूपमात्र इत्यर्थः । ५. प्राकृतादिप्रकाशग्राहकत्वाप-त्त्या । ६. अप्राकृतेत्याद्यर्थः ।७. ज्योतिः पदस्याऽपि प्राकृतज्योतिः परत्वस्यवक्तव्यतया भगवति तस्याऽभावेन - तत्र - तत्प्रयोगाभावप्रसङ्गः ।

ङ्काया निरासाय अप्राकृतरूपेऽपि रूपशब्दस्य व्युत्पत्तेः व्युत्पादनीयत्वेन तद्विहाय अप्रसिद्धप्रकाशे परमात्मनि प्रकाशशब्दप्रवृत्तिप्रदर्शनमयुक्तमसङ्गतत्वादिति निरस्तम्। रूपादिशब्दानां रूपमात्रे व्युत्पत्त्यनङ्गीकारे ऽनिष्टप्रदर्शनार्थत्वात्। **कथंब्रह्मणइति** ॥ येना ऽङ्गीकृतेन ब्रह्मणोऽनित्यत्वाभावः 'रुग्म (रुम) वर्ण' मितिश्रुतेश्चाऽप्रामाण्याऽभावः, तद्विलक्षणंरूपं ब्रह्मणः कथं, न कथमपि, विलक्षण-रूपस्य क्वाप्यनुक्तत्वेन सर्वरूपाणां प्रकृत्यायात्मकत्वनियमादितिभावः। ननु— 'विज्ञानाऽऽनन्दमात्रत्व'मितिभाष्ये कथंपूर्वोऽप्रकृतविज्ञानानन्दपरतया†सौत्रतच्छब्दो व्याख्यात इत्यतआह—**तद्गुणसारत्वादिति ॥ नत्वानन्दादेर्ब्रह्मरूपत्वमिति ॥** विस्पष्टमितिशेषः। एतेन — एतत्सूत्रविषयवाक्यस्य पूर्वसूत्रएवोदाहृतंशक्यत्वात् एतत्सूत्रं व्यर्थमितिपरास्तम्। सामान्येनोक्त्या, विशेषाकारेणोक्तेः विशिष्याऽनुग्रहार्थत्वात्।

**पूर्वपक्षस्तु** — ना ऽङ्गीकर्तव्या निरतिशया भगवति भक्तिः, तथाहि— किं भगवतो रूपमङ्गीक्रियते, उताऽरूपित्वम्, नतावदाद्यः कल्पोऽङ्गीकर्तुमुचितः अनित्यत्वप्रसंगात्, 'तदरूपमनामय'मित्यादिश्रुत्यप्रामाण्यप्रसङ्गाच्च, ततश्च भक्ति-विलोपः नह्यनित्यशरीरे निरतिशया भक्तिरुपपद्यते, नापि अरूपित्वश्रुत्यप्रामाण्ये भक्तिरुपपद्यते, अरूपत्वश्रुत्यप्रामाण्ये ऽविशेषात् श्रुतिमात्राऽप्रामाण्यापत्त्या भक्ति-प्रयोजकगुणाऽसिद्धेः। नापि द्वितीयः — 'रुग्मवर्ण' [ब्रा०. ३-१-३] मित्यादि श्रुत्यप्रामाण्याऽऽपातात्, सौन्दर्याद्यभावापाताच्च, ततश्च न भक्तिः, तदेवमुभयथापि भक्तेरनुपपन्नत्वाद्व्यर्थो ऽयं पाद इति।

**सिद्धान्तस्तु** — उपपन्नैवभगवद्भक्तिः तस्या ऽरूपित्वेन अनित्यत्वा-भावात्, अरूपित्वश्रुत्यप्रामाण्यलक्षणदोषराहित्यात्, नच—अरूपित्वमसिद्धम् —

१ प्रकाशार्थकज्योतिश्शब्दप्रयोगेत्यर्थः। २. एतेनेत्यस्यार्थमाह रूपेति ॥ आदिना-रसादेर्ग्रहः। ३. 'आहत्ते'(ब्र०.३-२-१६) त्युत्तरसूत्रीय टी०.प्र०.धा०, ४. 'आहच-तन्मात्र'मिति सूत्रभाष्ये। † 'आहचे'ति सूत्रगततच्छब्दइत्यर्थः। ५. आहचेति सू०.टी०. प्र०. धा०. ६ 'दर्शयती (३-२-१७) त्युत्तरसू०. टी०. प्र०. धा०.। ७. अनि-त्येति ॥ बहुव्रीहिरयं पुरुषइतिशेषः। ८. गुणबोधकश्रुतेरपि अप्राण्यापत्त्यातदासिद्धि-रितिभावः। ९. रूपित्वेऽरूपित्वेचेत्यर्थः।

प्रकृत्युक्तमत्वेन प्राकृतरूपवैधुर्यसिद्धेः । नच ' रुग्मवर्णं ' मित्यादि श्रुतिवैयर्थ्यम् , सौन्दर्याऽभावश्च – अप्राकृतरूपाऽङ्गीकारात् । नच – तत्रप्रमाणाऽभावः — ' ऐकात्म्यप्रत्ययसारम ( मा०. २ - ७ ) आनन्दमात्रम्' इति श्रुति सिद्धत्वात् । नच — विस्पष्टप्रमाणाऽभावः – ' आनन्दरूपममृत' ( आ०. २-२-८ ) मिति श्रुतेः, ' शुद्धस्फटिकसंकाश' मितिस्मृतेश्च सत्त्वात् । तदेवंभक्तेरुपपन्नत्वात्सार्थको ऽयंपाद इति सिद्धम् ( अ०. ९ )

( १० – अधिकरणम्. )

## ॐ अतएवचोपमा सूर्यकादिवत् ॐ ( सू . १८ )

भेदाऽभेदमतमत्रनिराक्रियते, तथाहि — जीवब्रह्मणोर्भेदस्तावत्सिद्धान्ति नाऽङ्गीक्रियते श्रुत्यादिसिद्धश्च, अभेदस्तु ' जीवो ब्रह्माऽभिन्नः चेतनत्वात् , तदंशत्वाच, मत्स्यादिव' दित्यनुमानसिद्धः, अतः उत्तरं पठति ' सूर्यकादिवच्चे' ति सूत्रखण्डेन । अनेन — जीवो न परमात्माऽभिन्नः तदाभासत्वात् सूर्यकादिव' दिति प्रयोगः सूचितः । तत्रेयमाशङ्का — उपाध्यायत्तोह्याभास उच्यते, यथासूर्यकादिः, नचाऽसावुपाध्यायत्तः अनित्यत्वप्रसंगात् , ततश्चाऽसिद्धमाभासत्वम् , सूर्यकाद्युपमाचा ऽनुपपन्नेति, तां परिहर्तुं स्वाऽभिप्रायं व्यनक्ति— 'अत एवचोपमे'ति सूत्रखण्डेन । अत एव ' संध्येसृष्टिराहही' (३-२-१) त्यादौप्रकृताभ्यांतद धीनत्वतत्सदृशत्वाभ्यामेवा ऽभेदो निराक्रियते, सूर्यकादिदृष्टान्तेन तादृशाऽऽभासत्वस्यैव हेतुत्वेन सूचितत्वात् तदधीनत्वतत्सादृश्ययोरेव विवक्षितत्वेनोपमाचोपपन्ना

१. 'आहचे'ति सूत्रोदाहृतश्रुतीत्यर्थः । २. वक्ष्यमाणदिशाश्रुत्यनुमानसिद्धभेदाऽभेदमतंनिराक्रियतइत्यर्थः । ३. श्रुतीति॥ द्वासुपर्णेत्यादिश्रुतिः । आदिनाऽनुमानम् , ४. एतच्छब्दात् पष्टयन्तात् आद्यादित्वात्तासिः, तस्य 'तसेश्चे'ति तासिलिअत इतिरूपम् एतस्येत्यर्थः,उक्तदिशासिद्धभेदाऽभेदस्येति । यावत् । यद्वा–उक्तभेदाऽभेदपरिहारायेत्यर्थः अत्रपक्षे – उक्तवचनेन चतुर्थ्यन्तात्तासिः । ५. सूत्रकारइतिशेषः । ६. इवार्थककन्नन्तसूर्यकेति दृष्टान्तपदेनायंहेतुर्लब्धः । आभासत्वंच–प्रतिविम्बत्वम् । ७. सूर्यकाद्युपमेति ॥ सूर्यकादि दृष्टान्तोक्तिश्चेत्यर्थः । ८. सूत्रकारोऽत्रकर्ता । ९. तदधीनत्वतत्सदृशत्वविशिष्टाऽऽभासत्वस्यैवेत्यर्थः ।

भवति, उक्तंचसुधायाम, 'अनेन अतएव = प्रकृताभ्यां तदधीनत्वतत्सदृशत्वाभ्यामेव आभासत्वं सूर्यकाद्युपमाचोक्तेति स्वाऽभिप्रायप्रकटनं सूत्रार्थइत्युक्तं भवति' इति । **भक्तययोगादिति** ॥ दोषिणा ऐक्ये दोषाणामवर्जनीयत्वादितिभावः । **भक्तिरेवविषय इति** ॥ यद्यपि — अत्रपरमात्माविषयः, जीवाऽभिन्नो नवेति सन्देहः, अभिन्नइतिपूर्वपक्ष इत्येव वक्तव्यम्, तथापि — जन्माधिकरणोक्तगुणपूर्णत्वे जीवाऽभिन्नत्वयुक्ति विरोधपरिहारात्मकत्वादस्या ऽधिकरणस्य युक्तिपादे निवेशोयुक्त इति शङ्कानिरासायाऽस्याधिकरणस्य युक्तिविरोध निरासफलकत्वमिव भक्तिसिद्धिफलकत्वमप्यस्तीति विवक्षावशादत्रा ऽन्तर्भावो युक्तइति ज्ञापनाय तथोक्तम् । एवमुत्तरत्राऽपि द्रष्टव्यम् । **नहीति** ॥ नहि-स्वाधिकत्वेन स्वात्मनि भक्तिरुपपद्यतइत्यर्थः । **परमात्मनोनभिद्यतइति** ॥ अत्यन्तभेदशून्यः अभिन्नइतियावत् । एतेन — पूर्वपक्षिणो भेदाऽभेदवादित्वाद्भेदनिराकरणमयुक्त मितिप्[१]रास्तम् । **नभेदइतीति** ॥ अभेदइति-प्रागेवसिद्धमित्यर्थः । **दृष्टान्तकथनेनोक्तेति** ॥ ननु — दृष्टान्तकथनस्य परकालत्वेन[२] चशद्वात्पूर्वकालत्वाऽभावात्क्त्वाप्रत्ययो ऽनुपपन्न[३] इतिचेत्—न ब्रूमोवयम् 'अतएवचे'ति श्रुत चशब्देन साध्यभेदं[४] समुच्चिनोतीति येनोक्तदोषःस्यात् किंनाम सूर्यकादिवदित्यतःपरमनुवृत्तेन[५] चशद्वेनेति एवंचकृत्वा सदोषः परिहृतो भवति, अनुवृत्तचशब्दात्दृष्टान्तवचनस्य पूर्वकालत्वात्, तदिदमुक्तम्—**सूर्यकादिवच्चेति पदेऽन्याचष्ट इति** ॥ अन्यथा — च सूर्यकादिवदितिपदे व्याचष्टइत्यवक्ष्यत् । श्रूयमाणश्चशद्वो[६] नकेवलं तदधीनत्वतत्सदृशत्वयोर्हेतुतया विवक्षितत्वात् हेतुर्नासिद्धः, अपितु — अतएवोपमाचोपपन्नेति समुच्चयार्थः, अनुवृत्तस्तु — साध्यसमुच्चयार्थ इतिविवेकः । **अतएवोपमेति पदैरुक्तेति** ॥ मत्स्यादिवत् ज्ञानैश्वर्या

१. 'नस्थानतो' ( ३ - २ - ८ ) पील्यधिकरणे एव । २. परकालत्वेनेति ॥ सूत्रपाठक्रमे च शब्दोत्तरं सूर्यकादिवदिति दृष्टान्तस्यपाठात् परकालत्वम् । ३. ' समानकर्तृकयोः पूर्वकाल' (पा०.सू०. ३-३-२१) इतिसूत्रेण पूर्वकालिकक्रियावाचकाद्धातोः क्त्वाविधानादत्र अनुपपत्तिः । ४. साध्यभूतभेदमित्यर्थः । ५. 'दर्शयतिचे'ति पूर्वसूत्रादनुवृत्तेनेत्यर्थः । ६. यदिचशब्दस्यानुवृत्तिः तदा सौत्रश्चशद्वो व्यर्थ इतिशङ्कांवारयति – श्रूयमाणइति ॥

यविशेषप्रसंगात् उपमैव भगवत्प्रतिबिम्बत्वमेव न मत्स्यादिवदंशत्वमिति अत-एवोपमेतिपदैरुक्ता तद्धेतुना अतएवोपमेतिपदलब्धहेतुना सह सूर्यकादिदृष्टान्तेन लब्धभेदं चशब्देनसमुच्चिनोतीत्यर्थः, साधनस्य साध्येनसमुच्चयार्थएव चशब्दः, नत हेतुसमुच्चयार्थ इतिभावः । ननु — पूर्वपक्षिणा भेदस्याऽङ्गीकृतत्वाद्भेदसाधनं व्यर्थमित्यतआह — **अभेदांशएवेति** ॥ अभेदएव विवादात्तन्निराकरणमेव सूत्रार्थः; नतु भेदसाधनमितिभावः । **ब्रह्मस्वरूपाऽनुगतेरावश्यकत्त्वादिति** ॥ स्वरूपानुगतेरैक्यव्यापकत्वेन ऐक्यंप्रतिजानैत स्तत्स्वरूपाऽनुगतेरावश्यकत्वात् भेदबलेन ऐश्वर्यादिनिषेधो नकार्य इतिभावः । ननु — अस्तुनहिं ब्रह्मस्वरूपा-ऽनुगतिर्जीवेषु, तथापि ऐश्वर्यनिषेधः कुतो न युक्तइत्यतआह — **ऐश्वर्यादे-श्चेति** ॥ चो ऽवधारणार्थः । अनेन जीवो यदि ब्रह्माऽभिन्नः स्यात् तर्हि ऐश्व-र्याद्यनुगतिमान् स्यात् मत्स्यादिवत् घटवच्चेति तर्कः सूचितोभवति । विशेष-व्याप्तौ मत्स्यादिदृष्टान्तः, सामान्यव्याप्तौतु अनुक्तसमुच्चयार्थेन चकारेण सूचितो घटादिदृष्टान्तइति विवेकः । एतेन — मत्स्यादिवदित्येतावतैव पूर्णत्वाच्चकारोऽव्यर्थ-इतिपरास्तम् । ननु — अस्यां योजनायां युक्तितएव प्रतिबिंबत्वहेतुसिद्धेः 'रूपंरूप' मित्यादि श्रुत्युदाहरणं किमर्थमित्यतआह — **युक्तिदृष्टार्थएवेति** ॥ **दृष्टान्तदार्ष्टान्तिकयोरस्तीति** ॥ दृष्टान्तस्य साध्यसाधनवत्त्वं निश्चितमेव विव-क्षितम्, दार्ष्टान्तिकस्यतु साधनवत्त्वं नाम तत्त्वेननिश्चितत्वम् साध्यवत्त्वंतु — तत्त्वेनविवक्षितत्वमात्रं नतु तत्त्वेननिश्चितत्वमितिबोध्यम् । एतेन — दार्ष्टान्तिकस्य साध्यवत्तया निश्चितत्वे ऽनुमानवैयर्थ्यमितिनिरस्तम् । अतएवसाध्यसाधनंचा ऽस्तीत्युक्तम्, अन्यथा — व्याप्यंव्यापकंचा ऽस्तीत्यवक्ष्यत् ।

**पूर्वपक्षस्तु** — जीवस्तावत्परमात्मनो भिद्यते इति श्रुत्यादिसिद्धम् अनुमतं च भवताम् एवंसति प्रयुज्यते 'जीवः परमात्माऽभिन्नः चेतनत्वात् तदंशत्वात् मत्स्यादिवत्' एवंच ईश्वरस्य जीवेनभिन्नत्वेऽपि अभेदस्याऽपिभावात् दोषिणा ऐक्येच दुष्टत्वाऽवश्यंभावात् न परमात्मनि भक्तिर्युक्तेति ।

१. कर्मधारयः तेनहेतुनेत्यर्थइतिमत्वा तत्रतच्छब्दार्थमाह अतएवोपमेतिपदलब्धेति । २. सौत्रेण चशब्देन । ३. सोत्कण्ठंध्यायतइत्यर्थः, अतो न आत्मनेपदसंज्ञकः शानच् 'संप्रतिभ्याम-नाध्याने' इति आध्याने आत्मनेपदनिषेधात् । ४. अनुगतिज्ञानस्याप्यावश्यकत्वादित्यर्थः ।

**सिद्धान्तस्तु** – जीवो न परमात्माऽभिन्नः तत्प्रतिबिम्बत्वात् यो यत्प्रतिबिम्बः नाऽसौ तदभिन्नः यथा सूर्यकादिः । ननु – उपाध्यायत्तः प्रतिबिम्बउच्यते नचाऽसा[1]वुपाध्यायत्तः तथात्वे ऽनित्यत्वप्रसंगात् , ततश्च — असिद्धं प्रतिबिम्बत्वम् , अथ परमात्माधीनत्वेसति चेतनत्वेन तत्सादृश्यं हेतुतया विवक्षितम् , तर्हि – अनुपपन्नो दृष्टान्तः प्राप्नोतीतिचेत् , न — चेतनत्वादि विशेषरूपस्या ऽविवक्षितत्वात् , तदधीनत्वतत्सदृशत्वयोरेव हेतुतया विवक्षितत्वात् अतएवोपमाप्युपपन्ना बिम्बाधीनत्वमिव बिम्बसादृश्यस्याऽपि तत्रसत्त्वात् । नन्वेवमपि — पक्षे सर्वदृष्टान्तधर्माभावात् 'तथाचाऽय'मित्युपनयो न संभवतीतिचेत् , न — यथा दृष्टांतः साध्यव्याप्यसाधनवान् तथा पक्षोपीत्येतावन्मात्रस्य उपनये विवक्षितत्वेन यावत्साधर्म्यस्याऽविवक्षितत्वात् । अन्यथा — अनुमानमात्रोच्छेदप्रसंग इति । अतो जीवपरमात्मनोरभेदाभावात् युक्ता भगवति भक्तिरिति तन्महिमवर्णनमुपपन्नमिति सिद्धम् (अ०. १० )



( - ११ अधिकरणम् . )

## ॐ अम्बुवदग्रहणात्तु न तथात्वम् ॐ (सू. १९)

अं[2]बुतावत्प्रियतमेष्वभ्यर्हिततमं 'काममपः पिब आपोमयःप्राणः न पिबतो विच्छेत्स्यत' (छा०. ६ - ७ - १) इति वचनात् । ततश्च — अंबु यथा[3] स्नेहेनगृह्यते तथा स्नेहपूर्वकं परमात्मनोऽग्रहणा[4]त् ज्ञानाभावे तथात्वं परमात्मवत् आ[5]विर्भूत ज्ञानानंदादिमत्त्वं न[6]भवतीत्यर्थः । **तत्वप्रदीपकायांतु** -- स्नेहात्मकत्वादंबुनः ते[7]नमानसंस्नेहं लक्षयति, ग्रहणंज्ञानम् अंबुवद्ग्रहणं स्ने[8]हसहित ज्ञानमित्यर्थ इत्युक्तम् । **तत्फलनिरूपणादिति** ॥ भक्तिव्यतिरेके आनंदाविर्भाव-

---

१. असौ-जीवः । २. आदौसूत्रार्थमाह – अम्बुतावदिति ॥ ३. एतेन - अम्बुवदितिभिन्नंपदं 'तत्रतस्येवे' (पा०. ५-१-११६)ति षष्ठ्यन्तात् सादृश्यार्थकवतिप्रत्ययान्तमितिसूचितम् । गृह्यते – ज्ञायतइत्यर्थः । ४. माहात्म्याऽज्ञानात् । ५. अभिव्यक्तेत्यर्थः । ६. जीवस्येतिशेषः । ७. तेन – अम्बुशब्देन । ८. लक्षणयाबोधयति सूत्रकृदित्यर्थः । ९. एतेन - अम्बुवत्पदं मतुवन्तमस्यवकारआर्षः ततोग्रहणपदेन कर्मधारयः ततोनञ्समासे राजदन्तादित्वात् नञोमध्येप्रयोगः अम्बुवदग्रहणादित्येकंपदमिति तद्भावः सूचितः ।

रूपफलव्यातिरेकोक्तया तस्य भक्तिफलत्वमुक्तंभवतीतिभावः । ज्ञानंतु न मुख्यं प्रयोजन मितिसिद्धमेव प्रयोजनानुबंधित्वादपि प्रयोजनं नेत्याह — **तेनापीति ॥** **तथासतीति ॥** विनैवकारणं ज्ञानानन्दादेः सम्यगाविर्भावश्चेत् इतःपूर्वमेव तत्प्रसंगेन अनादिसंसारस्य एतत्कालपर्यन्तं प्रवाहो नस्यादित्यर्थः । अनादिकालमारभ्य अनुवृत्तस्यसंसारस्यविच्छेदो न महताकारणेनविनोपपद्यते इति द्योतनायाऽनादित्वविशेषणम् ।

**पूर्वपक्षस्तु** — न मोक्षो भक्तिफलम्, अनादिसिद्धत्वात्, नित्यानंदज्ञानादिमत्वं हि मोक्षः; तच्च स्वरूपमेव, नच स्वरूपमागंतुकं चेति संभवति । ततश्च — मोक्षस्य भक्तिफलत्वाऽभावात् न तदर्थं भक्तिः कर्तव्या, नापिप्रयोजनान्तरमस्तीत्यकर्तव्यैव भक्तिरि ति ।

**सिद्धान्तस्तु** – भक्तिफलमेवमोक्षः, ज्ञानानंदादेर्जीवस्वरूपत्वेन नित्यसिद्धत्वेऽपि तदाविर्भावस्य भक्तिसाध्यत्वात्, भक्तयमात्रे तदभावनियमात् । नच -- भक्तयभावे सुप्तौ ज्ञानानंदाद्याविर्भावो दृष्टइतिवाच्यम् — आविर्भावमात्रसद्भावेऽपि सम्यगाविर्भावाभावात् । सम्यगाविर्भावएवहि मोक्षशब्दार्थो भक्तया साध्यः नाविर्भावमात्रम् । ' यमेवैषवृणते ' ( आ०.६. ख०.३. ) इति श्रुतेः । ' महत्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाऽभिधीयते । तयैव व्यज्यते सम्यग्जीवरूपं सुखादिकं ' मितिस्मृतेश्च। ततश्च–मोक्षस्य भक्तिसाध्यत्वा त्कर्तव्यैव तदर्थं भक्तिः तदर्थत्वात्तन्महिमवर्णनंच सार्थकमितिसिद्धम् ( अ०. ११ )

( १२ – अधिकरणम्. )

ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॐ(सू. २०)

**तस्येति ॥** परमात्मनो भक्तयनुसारिफलदाने तत्र भक्तिः स्यात्, अन्यथा

---

१. अत्र ' यंवृणुते ' इत्यनेन व्रियमाणस्यभक्तत्वं प्रतीयत इतिभक्तिर्मोक्षसाधनमिति - गम्यत इतिकृत्वाभक्तेः साधनत्वेप्रमाणतयाश्रुतिरियमुदाहृता । उक्तंच - टीकायां जिज्ञासाऽधिकरणे ' वृणुतेइत्यनेनभक्तत्वं सूचितमिति । २. अत्राऽधिकरणेद्वे (२) सूत्रे ।

वैषम्यादिदोषवर्ति विश्वासाभावात् भक्तिर्नस्यादितिभावः। नन्वत्रसूत्रे भक्त्यादि-तारतम्यमेव प्रतिपाद्यं दृश्यते, नतु भगवतो भक्त्यनुसारिफलदातृत्व मित्यतआह — **अर्थतोनिरूप्यत इति ॥** यद्यपि — साक्षाद्भक्तितारतम्यमेवेह प्रतिपाद्यते, तथापि अर्थाद्भगवतो भक्त्यनुसारिफलदातृत्वमनेनासिध्यतीतिभावः। ननु आर्थि-कार्थेन भक्त्यनुसारिफलदानेनाऽस्य पादसङ्गतिः किमर्थमुच्यते, वाचनिकार्थेन भक्तितारतम्येनैव पादान्तर्भावः किं नोच्यत इतिचेत्, न —भक्त्युत्पादार्थं भगव-न्महिमोक्तेरेव पादार्थत्वेन भक्तिस्वरूपनिरूपणमात्रस्याऽपादार्थत्वात्। **एकप्रका-रेवेति ॥** ब्रह्मादीनां, मनुष्योत्तमानांच, एकप्रकारेत्यर्थः। **तत्फलस्येति ॥** साक्षात् तत्फलस्य मुक्तत्वस्य, तत्प्रयुक्तानन्दाद्याविर्भावस्यच, सर्वेषु साम्यादि-त्यर्थः। भक्तिफलंतावदावरणनिवृत्तिरेव साच सर्वेषु समा अभावे तारतम्या ऽभावात्। आनन्दतारतम्येपि न तदभिव्यक्त्यर्थं भक्तितारतम्यमपेक्षितम्, आनन्दा-भिव्यक्तेर तत्कार्यत्वात्। तद्यथा—समाभ्यां प्रदीपाभ्यां गृहद्वयवृत्त्यन्धकारविनाशे यत्र यावदस्ति तत्र तावत्स्वयमेवोपलभ्यते नतु अधिकपदार्थदर्शनाय प्रदीप-तारतम्यमपेक्षितमितिभावः। **अन्यथेति ॥** फलसाम्येऽपि=आवरणनिवृत्तिरूपस्य फलस्य साम्येपि, यदि साधनतारतम्यमङ्गीक्रियते, तदा वक्तव्यम् — मनुष्योत्त-मेषु विद्यमाना भक्तिः सम्यगावरणनिवृत्तौ समर्थावा, नवा, आद्ये — ब्रह्मादिषु भक्तिभागवैयर्थ्यम्, इतरांशेनैव फलसंभवात्। द्वितीये — मनुष्यादीना मसम्य-ङ्मुक्तिः स्यादित्यर्थः। वाशब्दो [१]व्यवस्थितविकल्पार्थो बोध्यः। **तेषांचोत्तम-फलत्वादिति ॥** मोक्षस्य अधमैः साम्येऽपि आनन्दरूपभक्तिफलस्याऽत्युत्तम-त्वादित्यर्थः। आनंदस्य मोक्ष[२]वत् साक्षाद्भक्तिफलत्वमेव, नतु — आवरणनिवृत्तौ स्वयमेवानन्दाऽभिव्यक्तिर्भवति, 'साधनस्योत्तमत्वेन साध्यंचोत्तममाप्नुयु' रिति-वचनादितिभावः। [३]ननु आनन्दसाधनमपि भक्तिः न प्रधानसाधनम्, अपितु—भगवानेव। ततश्च — भक्तिसाम्येऽपि स्वतंत्रत्वात्प्रसन्नः परमात्मा महदल्पंचफलं पुरु[४]षवदेव दद्यात्। तद्यथा महाराजो ऽमात्यादिभिः सेवितोऽपि केषांचिदल्पम्,

१. मनुष्याणामसम्यङ्मुक्तिः, ब्रह्मादिगतभक्त्येकदेशवैयर्थ्यमिति व्यवस्थितेत्यार्थः।
२. मोक्षस्येवेत्यर्थः। ३. उत्तरग्रन्थमवतारयति–नन्विति ॥ ४. देवदत्तादिपुरुषइवेत्यर्थः।

अन्येषां महत्फलं, ददातीति शङ्कते — महदल्पफलत्वेपीति ॥ एतेन फलतारतम्यस्य साधनतारतम्याऽधीनत्वा त्फलतारतम्यमङ्गीकृत्य, साधनतारतम्याक्षेपो न युक्तइतिपरास्तम् । वैषम्यादिदोषाभावः स्यादिति ॥ अप्रामाणिक वैषम्याद्यप्रसक्तिः स्यादित्यर्थः । एतेन इतरेषां नरकादिहेतुत्वेन वैषम्यादे दोषत्वे ऽपि न परमात्मनस्ते दोषाः तदहेतुत्वात्, अन्यथा सर्वसंहर्तुर्भगवतः ब्रह्महत्यादयोपि दोषाः स्युरितिपरास्तम् । अप्रामाणिकत्वेनैव तेषां दोषत्वाऽङ्गीकारात् । प्रसिद्धंहि प्रामाणिकपरित्यागवत् अप्रामाणिकस्वीकारोऽपि दोष इति !

**पूर्वपक्षस्तु** — ब्रम्हादीनां मनुष्योत्तमानांच भक्तिरेकप्रकारैव, मोक्षरूपैकफलभागित्वात् । नहि यावत्या भक्तयामनुष्योत्तमानां मोक्षोभवति तावत्या ब्रह्मादीनां मोक्षसंभवे अधिकानुष्ठानाय प्रेक्षावतां प्रवृत्तिः संभवति । अथ न तावती भक्तिः तेषां मोक्षसाधनायालम् । हन्त तर्हि मुनुष्योत्तमानामपि मुक्ति र्न स्यात्, पर्याप्तसाधनाभावात् । नहि दुःखाभावरूपे मोक्षे तारतम्यमस्ति, येन भक्तितारतम्युपपन्नं स्यात् । अतोभक्तिरेकप्रकारैवेति ।

**सिद्धान्तस्तु** — नैकप्रकारा सर्वेषां भक्तिः, किंतु वृद्धिह्रासवती, अन्यथा — प्रमाणसिद्धं सर्वभक्तान्प्रति परमेश्वरस्यसामञ्जस्यं न स्यात् । 'साधनस्योत्तमत्वेन साध्यंचोत्तममाप्नुयुः । ब्रह्मादयः क्रमेणैव यथाऽऽनन्दःश्रुतौ श्रुत इतिस्मृतेश्च । ननु भवेत्साधनतारतम्यं यदानन्दतारतम्यं स्यात् तदेवकुत इति चेत् — 'अथात आनंदस्यमीमांसाभवती' (तै०. उ०. २ - ८) त्यादि श्रुति सिध्दत्वात् । 'यथाभक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे । तथामुक्तिविशेषोऽपि ज्ञानिनां लिंगभेदन' इतिस्मृतेश्च । अतो भक्तेः फलानुसारेण तारतम्यसद्भावेन ईश्वरस्य विषमत्वाभावात् युक्ता तत्र भक्तिरिति सिध्दम् (अ०. १२)



१. द्वन्द्वगर्भित बहुव्रीहेस्त्वप्रत्ययः ब्रह्मादीनामन्येषांचेतिसमुदायेऽन्वयः; ततः क्रमसंबन्धो बुध्द्याविवेक्तव्यः । २. भगवतः स्वातन्त्र्यसत्त्वेनेत्यर्थः । ३. साधनाऽनुसारि-विषमफलदानस्य प्रमाणासिद्धत्व निरूपणेन । ४. वैषम्यादिदोषाऽभाववत्त्वम् । ५. 'अथाऽत आनन्दस्ये' त्यादिश्रुतौ ।

[ १३ – अधिकरणम्. ]

## ॐ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ

(सू०. २२)

**सृष्टिसंहारकर्तृत्वादिति** ॥ ननु किमिदं हेतुद्वयं सृष्टिकर्तृत्वात्, संहारकर्तृत्वादिति, आहोस्वित्सृष्टिसंहारकर्तृत्वादिति विशिष्टं हेतुः । नाद्यः — सृष्टिकर्तुरपि पालकत्वस्य, तथा वनस्पत्यादि संहारकस्यापि प्रागुदकदानादिना पालकत्वस्य, दर्शनेन व्यभिचारात् । अतएव न द्वितीयः — कृषीवलादौ सस्योत्पत्तिविनाशकर्तृत्वेऽपि पालकत्वदर्शनात् । नच नासौ पालक इति शक्यमेवक्तुम् — गोगवयादिभ्यस्तद्रक्षणस्याऽनुभवसिद्धत्वादितिचेत्, न ब्रूमो वयं पालकत्वाभावे सृष्टिसंहारकर्तृत्वं हेतुरिति, येनोक्तदोषः स्यात्, किंनाम ' जगत्स्थितेः स्वतएव सिद्धे ' रिति वक्ष्यमाणहेतोरुपपादकमिति । **स्वतएव-सिद्धेरिति** ॥ उत्पत्त्युत्तरभाविनाशात्प्राग्भाविकाल संबंधस्यैव स्थितित्वेन तस्य कालमहिम्नैव सिद्धेरित्यर्थः ॥ **अन्यस्यसृष्ट्यादिकर्तृत्व इति** ॥ आदिशब्देन संहारग्रहणं । अन्यस्य = उत्पन्नपदार्थविनाशहेतुभूतार्थांतरसर्जकत्वे, साक्षाद्विनाशकत्वेवा, तन्निवारणाय व्यापारोऽन्यस्य संभवति, स्वस्यैव तथात्वेतु न निवारणव्यापारः संभवतीतिभावः । एतेन – अन्यस्य संहारकर्तृत्वे, संभवति निवारणादिव्यापार इतिवक्तव्यम् । संहारनिवारणस्यैव स्थित्युपयोगित्वात्, ननु सृष्टिग्रहणं तन्निवारणस्य स्थित्यनुपयोगादितिपरास्तम् । बिभर्तीत्येतद्व्याचष्टे – **धत्ते पुष्णातिचेति** । भृञ्धातो ' डुभृञ्धारणपोषणयो' रित्यर्थद्वय श्रवणादितिभावः । **अनेनेति** ॥ ' उक्षा स द्यावापृथिवी बिभर्ती' ति श्रुति ग्रहणेनेत्यर्थः ।

**पूर्वपक्षस्तु**— नेश्वरः पालकः जगत्सृष्ट्वा स्थितस्येश्वरस्य विनाशप्रवृत्त्यभावमात्रेण कालविशेषसंबंधरूपस्थितिसंभवेन पालनरूपतद्व्यापारानपेक्षणात् ।

---

१. व्यभिचारदोषादेव । २. कर्तृत्वसत्त्वेपीत्यर्थः, सतीतिशेषोवा । ३. अनेनविशिष्टस्याऽपि हेतोःव्यभिचारदोषउक्तो भवति । ४. अन्यस्यसृष्टीति ॥ कुचित् टीकापुस्तके अन्यस्यतुसृष्टीतिपाठः । ५. नाशकत्वेतु । ६. नाशहेतुपदार्थान्तरसर्जकत्व इतिअर्थवर्णनेन ।

(पा. ने ९.)

नचावांतरोपद्रवनिरासाय ईश्वरव्यापारो ऽपेक्षित इतिवाच्यम् – ईश्वरस्यैवाऽवान्तरोपद्रवकर्तृत्वेन तदकरणमात्रेण समीहितसिद्धेः। अन्यस्य हि उपद्रवादिकर्तृत्वे तन्निवारणादि व्यापारवत्त्वरूपं पालकत्व मन्यस्य संभवति। नचेश्वरादन्यः संहारकर्ता, येन तन्निवारणेनेश्वरस्य पालकत्वं स्यात्। विरोधाभावेन स्वस्य स्वनिवारकत्वायोगात्। ततश्च पालकत्वाभावेन महामहिमत्वाभावात् न तत्र भक्तिरिति।

**सिद्धान्तस्तु** – भवत्येवेश्वरः पालकः 'नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति' (ऋ०. १०-३१-८) ति श्रुत्या सृष्टिसंहारमात्रकर्तृत्वं प्रतिषिध्य पालकत्वस्याप्यभिधानात्। 'सृष्टिंचपालनंचैव संहारं नियमं तथा। एकएव करोतीशः सर्वस्य जगतो हरि' रितिस्मृतेश्च। नचोपद्रवसंहारविलंबमात्रेणैव स्थितिसिद्धेः न तदर्थमीश्वरापेक्षेतिवाच्यम् – सर्वस्य धारणार्थं चेतनानामन्नपानाद्यर्थ मीश्वरव्यापारस्याऽऽवश्यकत्वात्। अतः पालनादिमहामहिम्नि हरौ भक्तिर्युक्तेति सिद्धम् (अ०. १३)



( १४ - अधिकरणम्, )

## ॐ तदव्यक्तमाह हि ॐ ( सू. २३ )

**भक्त्यर्थमिति** ॥ भक्तेरावश्यकत्वसिद्ध्यर्थं पुरुषप्रयत्नाधीनोपलब्ध्ययोग्यत्वसमर्थनादित्यर्थः। **उपलब्धियोग्यत्व इति** ॥ भक्त्यभावेऽपि उपलब्धि योग्यत्वे भक्तेरनावश्यकत्वप्रसङ्गात् समर्थनीयमित्यर्थः। एतेन[1] भक्तेरुपलब्ध्यर्थत्वात् उपलब्धियोग्यत्व एव भक्तः सार्थक्यात् उपलब्धियोग्यत्वमेव समर्थनीयम् नत्वयोग्यत्वं भक्तिवैयर्थ्यप्रसङ्गादिति निरस्तम्। ननु – अव्यक्तमेव ब्रह्म सहकारिसमवधाना त्प्रत्यक्षं भवति, समाराधनमेवच सहकारि न भक्तिः, अव्यक्त यक्षसाक्षात्कारे तस्य सहकारित्वदर्शनात्। क्लृप्तसहकारिभावेन समाराधनेनैव

१. अत्राऽधिकरणेपञ्च (५) सूत्राणि। २. भक्त्यभावेपीत्याद्यर्थवर्णनेन। ३. पूजा। ४. आराधनस्य। ५. क्लृप्तःसहकारिभावः सहकारित्वंयस्येतिबहुव्रीहिः।

तत्साक्षात्कारोपपत्तौ भक्तिकल्पनस्याऽनुपपन्नत्वादितिशङ्कते — **अस्त्विति**[1] ॥ **आराधने**[2]**प्यव्यक्तत्वस्येति** ॥ आराधनसहकृतेंद्रियायोग्यत्वस्य ज्ञानिप्रत्यक्षसिद्धत्वादित्यर्थः । **अव्यक्तत्वं**[3]**प्रत्यक्षसिद्धमिति** । अव्यक्तशब्दस्य प्रत्यक्षाऽयोग्यत्वार्थकत्वात् 'अव्यक्तत्वं प्रत्यक्षसिध्द'मितिव्याहतम्, धर्मिणोऽयोग्यत्वेऽव्यक्तत्वरूपधर्मस्य तत्र[4] प्रत्यक्षेण सिध्ययोगादित्याशङ्का 'प्रकाशश्च[5] कर्मण्यभ्यासा' (ब्र०. सू०. ३-२-२६) दित्यत्र श्रवणाद्यभावदशायाम् अयोग्यस्यापि श्रवणाद्यभ्यासे योग्यत्वाभिधानेन गर्भः[6]स्रावेणेव नङ्क्ष्यतीत्यर्थः । **नहिस्व**[7]**गतविशेषशून्य इति** ॥ ननु — स्वगतविशेषशून्यत्वाभिधानमयुक्तं, प्राक्[8]स्वेनैवोत्पत्त्यनुत्पत्त्योर्व्यक्तत्वाव्यक्तत्वयोश्चाभिधानादितिचेत्, सत्यम्-- अस्त्येवव्यक्तरूपे जननं ततएव व्यक्तत्वंच । नच तावता मूलरूपाद्विशेषः, जननस्य स्वेच्छागृहीतत्वात्, नहि स्वेच्छया दंडमवष्टभ्य गच्छन् राजा शुद्रात्, क्षीणशक्तिर्भवति, किंनाम स्वगत विशेषशून्यएवोच्यते, दंडस्य स्वेच्छागृहीतत्वात् । एवमीश्वरोपि स्वेच्छागृहीतजन्मादिरपि पुरुषार्थप्रदानादि विषये स्वगतविशेषशून्यएवेतिभावः । **नचैवं ब्रह्मणी**[9]**ति** ॥ ननु – कथं ब्रह्मणिस्थूलत्वंनास्ति, रामकृष्णादिरूपाणां स्थूलत्वात्, नहि घटादिदर्शनात्[10] अधिकसाधनसाध्यत्वं तत्काल[11]भवानां रामकृष्णादिदर्शनस्य, येन[12] तस्य स्थूलत्वंनेति प्रतीम इतिचेत्, नवयं ब्रह्मणः सर्वथा प्रत्यक्षविषयत्वं व्यासेधामः, किंनाम भक्त्यभावे स्वस्वरूपभूतेन ज्ञानानन्दाद्यात्मना इन्द्रियग्राह्यत्वं व्यासेधामः, अस्तिच तेनरूपेण रामकृष्णादीना-

---

१, २, ३, 'अपिसंराधन' इत्युत्तर सूत्रीयटी०. प्र०. धा०. । ४. अयोग्ये-धर्मिणि । ५. 'उत्तरत्रे'ति टीकागतपदस्यार्थः प्रकाशइति । ६. स्रावेणेवेति ॥ गर्भः स्रावेण-यथानष्टोभवति तथा - श्रवणादिनाब्रह्मप्रत्यक्षं भवतीतिसूत्रकृदुक्त्या ब्रह्मणः प्रत्यक्षत्वेतद्गताऽव्यक्तत्वस्यापि प्रत्यक्षत्वंसिध्यतीतिहेतोः व्याहति शङ्का यत्नान्तरांविना नाशमेष्यतीतिभावः। ७, 'प्रकाशवच्चे' (३-२-२५) ति सूत्रीयटी०. प्र०. धा०. । ८. कारणत्वेनच (१-४-१५) असंभवस्तु ( २ - १ - ९ ) इत्यादौ उत्पत्त्यनुत्पत्त्योः, आनुमानिकनयादौ (१ - ४ - १) अव्यक्तत्वादेश्चाभिधानादित्यर्थः । ९. 'प्रकाशवच्चे' ति सूत्र टी०. प्र०. धा०. ।
१०. दर्शनसाधनात् । ११. तत्कालभवानां दर्शनस्येतिसंबन्धःतात्कालिकपुरुषीय दर्शनस्येतियावत् । १२. येन – अधिकसाधनसाध्यत्वेनेत्यर्थः ।

मपि इंद्रियाग्राह्यत्वम् अतएव तद्दर्शिनां मुक्त्यभावोऽपि। श्रुत्यैव स्थौल्यस्येव सूक्ष्मत्वस्यापि निषिद्धत्वात् सूक्ष्मत्वांगीकारो ऽयुक्तइत्यतः श्रुत्यर्थमाह — **केनचिद्रूपेणेति** ॥ श्रुत्या सूक्ष्मत्वं रूपांतरात् रूपांतरस्य विशेषो नेत्येव निषिद्धम्, नतु — सर्वात्मनानिषिद्धमितिभावः । **ननुकथंनित्याव्यक्तस्येति** ॥ सर्वात्मना-साधनशक्यविषयस्येत्यर्थः । **नहि साधनशतेनेति** ॥ इंद्रियस्य ग्रहणशक्त्यभावे उपनेत्रादि सहस्रसामग्रीसमवधानेपि ज्ञानादर्शनादिनिभावः । अन्यथा परमाण्वादीनां दर्शनप्रसंगः ।

**पूर्वपक्षस्तु**—व्यक्तएवायमीश्वरः, महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वात् । 'यदापश्यः पश्यत' (आ०. ५-३) इति श्रुतेश्च । नहि अव्यक्तस्वभावत्वे साधनशतेनापि दर्शनमुपपद्यते, स्वभावस्याऽनपायात् । ततश्च स्तंभादिवत् पुरुषप्रयत्नेनैव प्रत्यक्षसंभवात् व्यर्थैव तद्भक्तिरिति तन्महिमवर्णनमपिव्यर्थमेवेति ।

**सिद्धान्तस्तु** — अव्यक्तएवायमीश्वरः, 'अरूपमक्षरं ब्रह्म सदाऽव्यक्तंच निष्कलम्, इति श्रुतेः, अतएव प्रत्यक्षताप्रयोजकप्राकृतरूपवत्त्वमसिद्धम् । ननु — अस्तुस्वतोऽव्यक्तं ब्रह्म तथापि समाराधनेन यक्षादिवद्व्यक्तं भविष्यतीतिचेत्, न — भक्त्यभावे सत्यपिसमाराधने ब्रह्माऽप्रत्यक्षत्वस्य ज्ञानिप्रत्यक्षसिद्धत्वेन समाराधनस्य ब्रह्मप्रत्यक्षहेतुत्वाऽभावात्, यक्षस्यातिसूक्ष्मत्वाभावेन समाराधन सहकृतेंद्रियग्राह्यत्वेऽपि अतिसूक्ष्मत्वेन ब्रह्मणस्तदयोगाच्च । ननु — अस्तु मूलरूपेणाऽव्यक्तं ब्रह्म, अनुत्पन्नत्वात्; अवताररूपेणतु व्यक्तीभविष्यति उत्पन्नत्वात्; मूलरूपेणाऽव्यक्तानामपि अनलजलभुवा मुत्पन्नरूपेण व्यक्तत्वदर्शनात् । नच मूलरूपमेव दृष्टं मोक्षसाधनं नाऽवताररूपमिति शक्यतेवक्तुम्, लीलया विग्रहस्य गृहीतत्वेन उत्पत्त्यादेर्दोषत्वाभावात् मूलरूपेण समशक्तित्वात्, 'पूर्णमदः पूर्णमिद' (बृ०. १-१)

१. 'अस्थूलमनणु' (बृ०. ५-८-८) इति श्रुत्या, 'नाऽसौसूक्ष्मोनस्थूल' इति 'प्रकाशवच्चे'ति सूत्रभाष्येदाहृतश्रुत्यैवेत्यर्थः । २, ३, ४. 'अतोनन्तेन' (३-१-२७) तिं सूत्रीय टी०. प्र०. धा०. । ५. ईश्वरविषयकप्रत्यक्षेत्यर्थः । ६. अग्न्युदकपृथिवीनामित्यर्थः । उत्पत्तिक्रमेणनिर्देशात् भूशब्दस्याऽल्पाच्त्वेन तस्यपूर्वनिपातेनभाव्यमिति शङ्कानकार्या ।

मितिवचनाच्च । ततो व्यर्था भक्तिरितिचेत्, न – मूलरूपावताररूपयोरपि अव्यक्तत्वेन व्यक्ताव्यक्तत्व विशेषाभावात् । 'स्थूलसूक्ष्मविशेषोऽत्र नक्वचित्परमेश्वरे । सर्वत्रैकप्रकारो ऽसौ सर्वरूपेष्वजो यत' इतिवचनात् । ननु – यदि नित्याव्यक्तं तद्ब्रह्म व्यर्थैवतद्भक्तिः, अव्यक्तस्वभावस्य साधनशतेनापि व्यक्तं कर्तुमशक्यत्वादितिचेत्, न – भक्तिपूर्वकं श्रवणाद्यभ्यासेन तत्प्रसादे जाते तदापरोक्ष्यांगीकारात् । ननु – अव्यक्तस्वभावस्य श्रवणाद्यभ्यासेनापि आपरोक्ष्यांगीकारो न युक्तः, अव्यक्तस्वभावत्वरूपयुक्ति विरोधापरिहारादितिचेत्, न – अव्यक्तस्वभावस्य साधनसामर्थ्येन ग्रहणाऽसंभवेऽपि तत्प्रसादेनाऽऽपरोक्ष्यांगीकारे बाधकाभावात् । ईशस्याऽघटितघटकत्वेनसिद्धत्वात् । तदुक्तम् – यद्वियुक्तया विरुध्येत तदीशकृतमेव हीति । 'भगवत्प्रसादः तदपरोक्षसाधनं, मोक्षहेतुत्वा' दित्यनुमानसिद्धत्वाच्च । अतो भक्तेः सफलत्वात् तदर्थं तन्महिमवर्णनं सार्थकमिति सिद्धम् (अ०. १४.)

( १५ – अधिकरणम्, )

## ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ ( सू. २८ )

**अथापीति ॥** समवायनिराकरणानुपपत्तिरूपदूषणसद्भावेऽपि गुणित्वांगीकारे गुणानां तत्स्वरूपत्वं त्याज्यं स्यात्, नच तदिष्टम् — तत्प्रतिपादक वेदाप्रामाण्य प्रसङ्गात् । ततश्च वेदविहितायाअपि भक्तेरकर्तव्यत्वप्रसङ्ग इतिभावः । **भाष्येऽहिकुण्डलवदेवेति** ॥ तावदितिशेषः । अहिकुंडलवदेवतावद्युज्यते, अहिकुंडलदृष्टान्तमात्रेणैव अभिन्नयोर्धर्मधर्मिभावानुपपत्तिशंकापरिहाराय अहिकुंडलदृष्टान्तउपात्तः, तावतैवच स्थूलमतीनां शंकानिवर्तते, अत्यंताभिन्नयोर्धर्मधर्मिभावो ऽसंभावित इति शंकोदयेच दृष्टान्तान्तरं वक्ष्यतीति ।

१. तत्वनिर्णये तृतीयपरिच्छेदे, 'कृत्स्नप्रसक्ति' (ब्र०. २-१-२७) रिति सूत्रभाष्येच, उक्तमित्यर्थः । २. अनेन 'एतच्चमोक्षस्य प्रसादसाध्यत्व' मित्यादिटीकार्थउक्तोभवति । ३. अत्राऽधिकरणे चत्वारि ( ४ ) सूत्राणि । ४. अध्याहृततावच्छद्बस्यान्वयंप्रदर्श्य धर्मधर्मिभावशङ्कानिवर्तनंयुज्यत इतिभाष्यार्थः स्पष्ट इतिकृत्वा तदभिप्रायमाह - अहीति । ५. सूत्रकृतेतिशेषः । ६. 'प्रकाशाऽऽश्रयवत्, पूर्ववद्वा' इत्युत्तर सूत्राभ्यामादित्यकालरूपदृष्टान्तान्तरं सूत्रकारोवक्ष्यतीत्यर्थः ।

मपि इंद्रियाग्राह्यत्वम् अतएव तद्दर्शिनां मुक्त्यभावोऽपि। श्रुत्यैव स्थौल्यस्येव सूक्ष्मत्वस्यापि निषिद्धत्वात् सूक्ष्मत्वांगीकारो ऽयुक्तइत्यतः श्रुत्यर्थमाह — **केनचिद्रूपेणेति** ॥ श्रुत्या सूक्ष्मत्वं रूपांतरात् रूपांतरस्य विशेषो नेत्येव निषिद्धम्, नतु — सर्वात्मनानिषिद्धमितिभावः। **ननुकथंनित्याव्यक्तस्येति** ॥ सर्वात्मनासाधनशक्त्यविषयस्येत्यर्थः। **नहि साधनशतेनेति** ॥ इंद्रियस्य ग्रहणशक्त्यभावे उपनेत्रादि सहस्रसामग्रीसमवधानेपि ज्ञानादर्शनादितिभावः। अन्यथा परमाण्वादीनां दर्शनप्रसंगः।

**पूर्वपक्षस्तु**—व्यक्तएवायमीश्वरः, महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वात्। 'यदापश्यः पश्यत' (आ०. ५-३) इति श्रुतेश्च। नहि अव्यक्तस्वभावत्वे साधनशतेनापि दर्शनमुपपद्यते, स्वभावस्याऽनपायात्। ततश्च स्तंभादिवत् पुरुषप्रयत्नेनैव प्रत्यक्षसंभवात् व्यर्थैव तद्भक्तिरिति तन्महिमवर्णनमपिव्यर्थमेवेति।

**सिद्धान्तस्तु** — अव्यक्तएवायमीश्वरः, 'अरूपमक्षरं ब्रह्म सदाऽव्यक्तंच निष्कलम्, इति श्रुतेः, अतएव प्रत्यक्षताप्रयोजकप्राकृतरूपवत्त्वमसिद्धम्। ननु — अस्तुस्वतोऽव्यक्तं ब्रह्म तथापि समाराधनेन यक्षादिवद्व्यक्तं भविष्यतीतिचेत्, न — भक्त्यभावे सत्यपिसमाराधने ब्रह्माऽप्रत्यक्षत्वस्य ज्ञानिप्रत्यक्षसिद्धत्वेन समाराधनस्य ब्रह्मप्रत्यक्षहेतुत्वाऽभावात्, यक्षस्यातिसूक्ष्मत्वाभावेन समाराधन सहकृतेंद्रियग्राह्यत्वेऽपि अतिसूक्ष्मत्वेन ब्रह्मणस्तदयोगाच्च। ननु — अस्तु मूलरूपेणाऽव्यक्तं ब्रह्म, अनुत्पन्नत्वात्; अवताररूपेणतु व्यक्तीभविष्यति उत्पन्नत्वात्; मूलरूपेणाऽव्यक्तानामपि अनलजलभुवा मुत्पन्नरूपेण व्यक्तत्वदर्शनात्। नच मूलरूपमेव दृष्टं मोक्षसाधनं नाऽवताररूपमिति शक्यतेवक्तुम्, लीळया विग्रहस्य गृहीतत्वेन उत्पत्त्यादेर्दोषस्याभावात् मूलरूपेण समशक्तित्वात्, 'पूर्णमदः पूर्णमिद' (बृ०. १-१)

१. 'अस्थूलमनणु' (बृ०. ५-८-८) इति श्रुत्या, 'नाऽसौसूक्ष्मोनस्थूलः' इति 'प्रकाशवच्चे'ति सूत्रभाष्येदाहृतश्रुत्यैवेत्यर्थः। २, ३, ४. 'अतोनन्तेने' (३-१-२७) तिं सूत्रीय टी०. प्र०. घा०.। ५. ईश्वरविषयकप्रत्यक्षेत्यर्थः। ६. अग्न्युदकपृथिवीनामित्यर्थः। उत्पत्तिक्रमेणनिर्देशात् भूशब्दस्याऽल्पाच्त्वेन तस्यपूर्वनिपातेनभाव्यमिति शङ्कानकार्या।

मितिवचनाच्च । ततो व्यर्था भक्तिरितिचेत्, न — मूलरूपावताररूपयोरपि अव्यक्तत्वेन व्यक्ताव्यक्तत्व विशेषाभावात् । 'स्थूलसूक्ष्मविशेषोऽत्र नक्वचित्परमेश्वरे । सर्वत्रैकप्रकारो ऽसौ सर्वरूपेष्वजो यत' इतिवचनात्। ननु — यदि नित्याव्यक्तं तद्ब्रह्म व्यर्थैवतद्भक्तिः, अव्यक्तस्वभावस्य साधनशतेनापि व्यक्तं कर्तुमशक्यत्वादितिचेत्, न — भक्तिपूर्वकं श्रवणाद्यभ्यासेन तत्प्रसादे जाते तदापरोक्ष्यांगीकारात् । ननु — अव्यक्तस्वभावस्य श्रवणाद्यभ्यासेनापि आपरोक्ष्यांगीकारो न युक्तः, अव्यक्तस्वभावत्वरूपयुक्ति विरोधापरिहारादितिचेत्, न — अव्यक्तस्वभावस्य साधनसामर्थ्येन ग्रहणाऽसंभवेऽपि तत्प्रसादेनाऽऽपरोक्ष्यांगीकारे बाधकाभावात् । ईशस्याऽघटितघटकत्वेनसिद्धत्वात् । तदुक्तम् — यद्वियुक्तया-विरुध्येत तदीशकृतमेव हीति । 'भगवत्प्रसादः तदपरोक्षसाधनं, मोक्षहेतुत्वा' दित्यनुमानसिद्धत्वाच्च । अतो भक्तेः सफलत्वात् तदर्थं तन्महिमवर्णनं सार्थकमिति सिद्धम् (अ०. १४.)

( १५ — अधिकरणम्, )

## ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ ( सू. २८ )

**अथापीति** ।। समवायनिराकरणानुपपत्तिरूपदूषणसद्भावेऽपि गुणित्वांगीकारे गुणानां तत्स्वरूपत्वं त्याज्यं स्यात्, नच तदिष्टम् — तत्प्रतिपादक वेदाप्रामाण्य प्रसङ्गात् । ततश्च वेदविहितायाअपि भक्तेरकर्तव्यत्वप्रसङ्ग-इतिभावः । **भाष्येऽहिकुण्डलवदेवेति** ॥ तावदितिशेषः । अहिकुंडलवदेवतावद्युज्यते, अहिकुंडलदृष्टान्तमात्रेणैव अभिन्नयोर्धर्मधर्मिभावानुपपत्तिशंकापरिहाराय अहिकुंडलदृष्टान्तउपात्तः, तावतैवच स्थूलमतीनां शंकानिवर्तते, अत्यंताभिन्नयोर्धर्मधर्मिभावो ऽसंभावित इति शंकोदयेच दृष्टान्तान्तरं वक्ष्यतीति ।

---

१. तत्वनिर्णये तृतीयपरिच्छेदे, 'कृत्स्नप्रसक्ति' (ब्र०. ३-१-२७) रिति सूत्रभाष्येच, उक्तमित्यर्थः । २. अनेन 'एतच्चमोक्षस्य प्रसादसाध्यत्व' मित्यादिटीकार्थउक्तोभवति । ३. अत्राऽधिकरणे चत्वारि ( ४ ) सूत्राणि । ४. अध्याहृततावच्छब्दस्यान्वयंप्रदर्श्य धर्मधर्मिभावशङ्कानिवर्तनंयुज्यत इतिभाष्यार्थः स्पष्ट इतिकृत्वा तदभिप्रायमाह - अहीति । ५. सूत्रकृतेतिशेषः । ६. 'प्रकाशाऽऽश्रयवत्, पूर्ववद्वा' इत्युत्तर सूत्राभ्यामादित्यकालरूप-दृष्टान्तान्तरं सूत्रकारोवक्ष्यतीत्यर्थः ।

एतेन दृष्टान्तान्तरस्य वक्ष्यमाणत्वात् अहिकुंडलवदेवेत्यवधारण मनुपपन्नमिति परास्तम् । *स्थूलमतीनां तावन्मात्रेणैव शंकानिवर्तत इत्याशयेन तदुपादानमित्यंगीकारात् । **यथाकुंडलात्मकस्यापीति** ॥ अत्रविशेषशब्दो भेदपरः । ततश्च यथा कुंडलस्य सत्यप्यभेदे भेदमात्रेण[1] धर्मधर्मिभावः, तथा ब्रह्मधर्माणां सत्यप्यभेदे भेदप्रतिनिधिना विशेषेणैव धर्मधर्मिभाव इत्यर्थः । ⑥एतेन कुंडलस्या ऽयावद्द्रव्यभावित्वेन भेदाभेदसद्भावात् विशेषेण धर्मधर्मिभाव वर्णनमयुक्तमिति परास्तम् । **दृष्टांतांतरेणेति**[2] ॥ अहिकुंडलदृष्टान्तस्याऽत्यंताभिन्ने धर्मधर्मिभावानुप पादकत्वात् दृष्टान्तान्तरेण श्रौतस्य धर्मधर्मिभावस्याऽसंभावनापरिहारेण उक्तमर्थमुपपादयत्सूत्रमित्यर्थः । **भाष्येऽ[3]एवं वा दाष्टान्त इति** ॥ यथा प्रकाशाश्रयस्य प्रकाशाभेदेऽपि प्रकाशित्वम्, एवं ब्रह्मणोऽपि प्रकाशाभेदेऽपि प्रकाशित्वमित्यस्मिन्नर्थे ऽयंदृष्टान्तइत्यर्थः । सूर्यादिदृष्टान्तेन प्रकाशगुणाभेदेऽपि तद्गुणित्वेसिध्दे तन्न्यायेन आनंदाद्यात्मकत्वेऽपि आनंदित्वादिकं सिध्यतीतिभावः । इममेवाभिप्रायं मनसिनिधायाह — टीकायाम् — **एवं ब्रह्मणो[4]गुणात्मकस्यापीति** ॥ एतेन भाष्ये 'एवंवादृष्टान्त' इत्यभिधानं व्यर्थम्, दृष्टान्तत्वस्य स्फुटंप्रतिभासत्वादितिपरास्तम्। प्रकाशगुणाभेदेऽपि प्रकाशित्वमित्यर्थविशेषएवाऽयं दृष्टान्तइतिद्योतनार्थत्वात् । ननु योयदात्मको नासौ तद्गुण[5] इति परकीयसामान्य व्याप्तिखंडनस्य आदित्यदृष्टांतेनेव घटादिदृष्टांतेनापिसंभवात् किं विशिष्य आदित्यग्रहणेनेतिभावेन सिद्धान्त्याशयमविद्वान् शंकते टीकायां — **ननु[6] — घटादीनामिति** ॥ **भाष्ये[7] तेजोरूपत्वाद्ब्रह्मण इति** ॥ ब्रह्मणः प्रकाशरूपत्वात्तद्गुणित्वसाधनाय यः प्रकाशात्मकः नासौ प्रकाशगुण[8] इति विशेषव्याप्ति निरासायैवाऽयं

---

* एतेनेत्यस्यार्थमाह — स्थूलेति । १. भेदमात्रेणेति ॥ अयंभावः - कुण्डलस्या - यावद्द्रव्यभावित्वेन 'पूर्ववद्वा' इतिसूत्रे 'किंभेदाऽभेदविषयेणाऽहि कुण्डलदृष्टान्तेन, इति टीकोक्तदिशा अहिकुण्डलयोर्भेदाऽभेदसद्भावात् तद्गतभेदमात्रमादाय धर्मधर्मिभाव इति । मात्रेणेति तृतीयायाः प्रयोज्यत्वमर्थः । ⑥ विशेषपदस्यभेदपरत्वांगीकारेण ।

२. 'प्रकाशाश्रयत्वाद्वे'ति उत्तरसूत्रटीका०. प्र०. धा० । ३, 'प्रकाशे' ति सू०. भाष्ये । ४. 'प्रकाशे'ति सू०.टी०.प्र० । ५. सगुणोयस्येतिबहुव्रीहिः । ६. 'प्रकाशे'ति सूत्रीयटी०. प्र०. धा० । ७. प्रकाशेति सूत्रीयभाष्ये । ८. प्रकाशः गुणः यस्येतिबहुव्रीहिः ।

दृष्टान्तउपात्तः, नतु – सामान्यव्याप्ति निरासायेतिभावः । † एतेन विवक्षितसाध्यसाधनभावसाम्यस्यैव दृष्टांतदार्ष्टान्तिकयोरपेक्षितत्वेन तेजस्त्वाभिधानमयुक्तमितिपरास्तम् । सूत्रयोजनातु – ब्रह्मणस्तेजोरूपत्वस्य प्रामाणिकत्वात् प्रकाशाश्रयवत् = सूर्यादिवत् विशेषबलेनैव तद्गुणित्वं नतु भेदेनेति । एतेन 'पूर्ववद्वे' त्युत्तर सूत्र'प्रकाशाश्रयवद्वे'त्येतावतैव पूर्णत्वा 'तेजस्त्वा'दिति व्यर्थमितिपरास्तम् । * प्रकाशरूपत्वस्य प्रामाणिकत्वात् विशेषबलेनैव प्रकाशित्वं निर्वाह्यम्, नतु भेदेनेति ज्ञापनाय तद्ग्रहणस्याऽऽवश्यकत्वात् ॥ एतत्समर्थयदिति ॥ अत्यन्ताऽभेदेपि गुणगुणिभावं समर्थयत्सूत्रमित्यर्थः । व्यर्थोक्तेरिति ॥ समर्थनीयस्याऽत्यन्ताभिन्नयोर्गुणगुणिभावस्य प्रकाशाश्रयदृष्टान्तेनैव समर्थितत्वात् 'पूर्वव'दिति दृष्टान्तस्य नेदंप्रयोजनं वृथोक्तेरपर्यवसानेनाऽयोगात् प्रयोजनान्तरमस्तीतितावद्गम्यते, किं तत्प्रयोजनं यदर्थं सूत्रकारो दृष्टान्तान्तरं वक्ति तद्वक्तव्यमित्यतआहेत्यर्थः । *एतेन पूर्ववद्वेतिदृष्टान्तस्य व्यर्थत्वनिश्चये 'किमर्थोऽयं दृष्टान्त' इति प्रश्नायोगः, नेतिपक्षे 'व्यर्थोक्तेरपर्यवसाना'दिति व्यर्थमितिपरास्तम् । भाष्येऽति सूक्ष्मत्वापेक्षयेति ॥ ब्रह्मणोऽतिगहनत्वेन दुर्ज्ञेयत्वात् नैकेनदृष्टान्तेन तद्बोधनंशक्यमिति दृष्टान्तान्तरोपादानमित्यर्थः । टीकायां अलमनेनेति ॥ अनेन दृष्टांतद्वयेन अलम्, अत्यंताभिन्नयोर्गुणगुणिभावसाधकत्वात्, तदसाधकेन किमाद्येन दृष्टांतेनेत्यर्थः । एतेन प्रथम तृतीय दृष्टान्तयोः प्रयोजनमुक्त्वा द्वितीयदृष्टान्तस्य तदनभिधानात् स व्यर्थइति प्राप्तमिति परास्तम् । शयनशब्दस्य निद्रापरत्वस्य प्रकृतेऽनुपयोगात् अयोगाच्च आह — शयनमिति ॥ अत्रापि स्मृतौ 'यथागेशयनादिक' मिति दृष्टान्तद्वयं सूत्रेऽहि कुंडलदृष्टान्तवत् स्थूलबुध्यपेक्षयेतिबोध्यम् । एतेन अवस्थाविशेषादेरगाव द्रव्यभावित्वेन भिन्नाऽभिन्नत्वात् अत्यंताभिन्नयोर्धर्मधर्मिभावोपपादनाय तदुदा-

---

† विशेषव्याप्ति निरासकत्वकथनेन । * एतेनेत्युक्तं विवृणोति प्रकाशेति ॥ १, २. 'पूर्वव' (३-२-३) दिति सू०. टी०. प्र०. धा०. । ३. अयुक्तत्वादित्यर्थः, अतहेतुरपर्यवसानम् । ४. वाक्यालङ्कारेऽयम् । * शङ्कायाः प्रयोजन विषयकत्व कथनेन । ५. व्यर्थत्वनिश्चयाऽभावपक्षे । ६. 'पूर्ववद्वे'ति सूत्रभाष्ये। ७. पूर्व-वद्वेति सूत्रटी०.प्र०.धा०. । ८. पर्याप्तम् । ९. पूर्ववद्वेति सूत्र टी. प्र. धा. ।

हरणमयुक्तमिति परास्तम् । **आदिपदेनेति**[१] ॥ ‘शयनादिकं’ मित्यादिपदेन[२] ‘अङ्गंशेतइत्यत्र’ यो ऽङ्गस्य शयनरूपाक्रिययासह क्रियाकर्तृभावः, स ग्राह्यः । तथाच यथा अवस्थाविशेषस्यांगाऽभिन्नस्याऽङ्गक्रियात्वं[३] भवति, तथा ब्रह्माभिन्नोप्यानंदः[४][५] ब्रह्मविशेषेणं भवतीत्यर्थः । पूर्वं[६] शयनस्याङ्गाऽभिन्नस्य सामान्येनांग[७]-विशेषणत्वमात्रमुक्तम्[८], इहतु[९] अंगक्रियात्वमुक्तमितिभेदः[१०] । **घंटादिवदिति**[११] ॥ यथा घटस्य स्वावयवैरभेदमात्रं नात्यंताभेदः, तथा ब्रह्मणोऽपीतिप्रतीति निरासाय ‘एकमेवे’ ति सावधारणमेकत्व[१२] मुक्तमितिभावः ।

**पूर्वपक्षस्तु** – न भगवद्भक्तिर्युक्ता, तस्यानंदाद्यात्मकत्वेनानन्दित्वादि-शून्यत्वात् । नच आनंदादि भोक्तृत्वंविना तत्स्वरूपत्वं महिमा[१३] ! अतो गुणित्वाभावेन तत्र[१४] भक्तययोगाच्चयर्थं तन्माहात्म्यवर्णनमिति ।

**सिद्धान्तस्तु** – युक्तैव भगवद्भक्तिः, उभयव्यपदेशबलेन गुणात्मकस्यापि अहिकुंडलवत्, प्रकाशवत् , पूर्वकालवच्च विशेषणविशेष्यभावांगीकारेण गुणित्व-संभवात्, किमनेन गुणगुणिनोरभेदमङ्गीकृत्य गुणगुणिभावाङ्गीकारेण भेदएव

---

१. पूर्ववद्वेति सूत्र टी०. प्र०. धा०. ।

२. इतीति ॥ इतिस्मृतावादिपदेनेत्यर्थः । ३. अङ्गसंबन्धिक्रियात्वमित्यर्थः । क्रियाया-विशेष्यत्वेनविशेषणत्वेनवाऽङ्गसंबन्धभानम् । अङ्गंशेतेइत्यस्य अङ्गकर्तृकंशयनमित्यर्थेआद्यम् शयनाश्रयोऽङ्गमित्यर्थेद्वितीयम् । ४. आनन्दादिरित्यर्थः आदिनाइच्छादिग्रहः । ५. ‘तद्विज्ञानेन परिपश्यन्तिधीरा आनन्दरूपममृतं यद्विभाती’ (अ०. ४ - ख०. ९. म) त्यादौ आनन्दरूपमित्यत्रआनन्दः ब्रह्मणोविशेषणतयानिर्दिष्टः तत्र-आनन्दःरूपंस्वरूपंयस्येति बहुव्रीहिः इदमुपलक्षणंतेन ‘आनन्दंब्रह्मणोविद्वा’नित्यादा वानन्दस्यविशेष्यतयानिर्देशस्यच । मुक्तविषयेतु - ‘रसंह्येवाऽयंलब्ध्वा आनन्दीभवति’ इत्यादावानन्दस्यविशेषणत्वम् , सएकोब्रह्मण आनन्दइत्यादावानन्दस्यविशेष्यत्वस्यचग्रहणम् । ६. अङ्गेशयनादिकमित्यत्र ।
७. अवस्थात्वेनरूपेण । ८. अङ्गनिष्ठविशेषणतानिरूपकत्वमित्यर्थः अङ्गविशेष्यत्वमिति-यावत् । ९. इहतु - अङ्गशेतेइत्यत्रतु । १०. अङ्गकर्तृकव्यापारत्वमित्यर्थः । तिङ्समभि-व्याहृतधातुवाच्यत्वेन क्रियात्वमितितात्पर्यम् । ११. ‘प्रतिषेधाच्चे’ (३-३-३१) ति सूत्र-टी. प्र. धा. । १२. अवधारणेन अत्यन्ताऽभेद इतिलभ्यत इतिज्ञेयं ‘भेदनिवृत्त्यर्थमेव-शब्दोऽवधारक’ इतिछान्दोग्यभाष्योक्तेः । १३. भवतीतिशेषः । १४. तत्र - हरौ ।

किन्नस्यादितिचेत्, न 'एकमेवाद्वितीयं ब्रह्म[1], (छा०. ६ - २ - १) नेहनानास्तिकिंचने' (का०. २ - ४ - ११) त्यादिना भेदस्य निषिद्धत्वात्। अतो गुणिनि हरौ भक्तिसंभवायुक्तं माहात्म्यवर्णनमिति सिद्धम् (अ०. १५)



( १६ - अधिकरणम् )

ॐ परमतः[2] सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॐ ( सू. ३२ )

**लौकिकमलौकिकंवेति ॥** लोकसदृशं नवेत्यर्थः । **लोके[3]सदृशमिति॥** ननु किं लोकसादृश्यंसाध्यते, उत वैलक्षण्याभावः । नाद्यः – वैलक्षण्यमंगीकुर्वता सिध्दान्तिना सा[4]लक्षण्यस्यापि अंगीकृतत्वेन सिद्धसाधनत्वात् । नद्वितीयः – कदळीफल[5]जन्यानंदस्य आनंदशब्दवाच्यत्वेऽपि, बदरीफल[6]जन्यानंदवैलक्षण्यवत्, ईश्वरानंदस्यापि आनंदशब्दवाच्यत्वेऽपि लौकिकानंदवैलक्षण्य संभवेनाऽप्रयो[7]जकत्वादितिचेत्, न – आनंदस्य ज्ञानाद्यात्मकत्वं, ज्ञानादेश्च आनंदात्मकत्वं, नास्ती[8]त्यर्थस्य साध्यतयेह विवक्षितत्वात् । नच – एवंसति सिध्दसाधनता, नाऽप्यप्रयोजकता । आ[9]नंदज्ञानयोरत्यंताभेदे तच्छ[10]ब्दयोः पर्या[11]यताप्रसंगेन अपर्यायानंदादिशब्दवाच्यत्वरूप[12]हेतूच्छित्तिप्रसंगात् । इममेवार्थंमनसिनिधाय बाधकान्तरमाह — **अन्यथेति ॥** लौकिकानंद[13]वत् ज्ञानादिभेद[14]ानंगीकार इत्यर्थः । ननु — ज्ञा[15]नाद्यात्मकत्वेऽपि आ[16]नन्दत्वस्यापि भा[17]वात् आनंदशब्दप्रयोग इत्यतआह – **नहीति ॥** नहि घटविलक्षणार्थे घटत्वमङ्गीकृत्य घट-

---

१. अत्रब्रह्मेति विशेष्यमितिबोधनाय ग्रन्थकृतोक्तं नतु श्रुतिघटकम् । २. अत्राऽधिकरणेत्रीणि ( ३ ) सूत्राणि । ३. लौकिकमित्यस्यार्थः – लोकेति । अलौकिकमित्यस्याऽर्थः नवेति । ४. सादृश्यम् । ५. तत्फलभक्षणेत्यर्थः । ६. फलभक्षणेत्यर्थः । ७. आनन्दादिशब्दवाच्यत्व हेतोर्वैलक्षण्याभावरूप साध्यासाधकत्वापत्तेरित्यर्थः । ८. परस्परतादात्म्याऽभावरूपार्थस्येत्यर्थः । ९. तादात्म्याभावस्यासाधनेदोषमाह – आनन्दज्ञानयोरित्यादिना । १०. ज्ञानानन्दशब्दयोः । ११. एकार्थबोधकता । १२. हेतुविलयप्रसङ्गादित्यर्थः । ततश्च – ईश्वरस्याऽनेकगुणत्वंनासिध्येत् । १३. आनन्दस्येव । १४. ज्ञानादिप्रतियोगिकभेदाऽनङ्गीकारे । १५. ईश्वरीयानन्दस्येति आदौशेषः। १६. तत्वेत्यादिः। १७.सत्त्वादित्यर्थः।

शब्दः प्रामाणिकैः प्रयुज्यते, येन ज्ञानाद्यात्मके वस्तुनि आनन्दत्वमङ्गीकृत्य-आनन्दशब्दः प्रयुज्यतेतिभावः । ¹एतेन – घटविलक्षणे घटशब्दप्रयोगाभावेऽपि भगवदानन्दे आनन्दशब्दो युज्यते, तस्य लौकिकानन्दविलक्षणत्वेऽपि आनन्द-विलक्षणत्वाभावात् । न हि सुवर्णघटो मृद्घटविलक्षण इत्येतावता न घटशब्द-वाच्यो भवतीति निरस्तम् । **लोकानन्दादिवदिति** ॥ मनोवृत्त्यानन्दवत् ज्ञानादिभिन्नऐश्वरानन्द इत्यर्थः । **विलक्षणमेवेति** ॥ ज्ञानाद्यात्मकतयेवेत्यर्थः । **कस्मादिति** ॥ लौकिकत्वसाधकानन्दशब्दवाच्यत्वादिहेतोः किं तद्बाधकंप्रमाणं यद्बलादलौकिकत्वं प्रतिपत्तव्यमित्यर्थः । ननु – 'अतोलौकिकत्वात् परमेव-ब्रह्मानन्दादिक' मितिभाष्ये 'अतोलौकिक' मित्येतावदुपपन्नम्, 'अलौकि-कत्वात्पर' मितितु साध्यावैशिष्ट्यादनुपपन्न मित्यतआह – **अलौकिकत्वात्पर-मिति** ॥ **नन्वेवमानंदादेरिति** ॥ आनन्दशब्दस्यतावत् ज्ञानादिभिन्नेआनंदे शक्तिर्गृह्यते, शक्तिग्रहवशाच्च तमेवार्थं शब्दो बोधयेत्, नतु ज्ञानाद्यात्मकम्, ततश्च श्रुतिस्मृत्यादिषु भगवदानन्दादिबोधनाय आनन्दादिशब्दप्रयोगो व्यर्थः स्यादित्यर्थः । भाष्ये 'अप्रसिध्दस्ये'त्यनन्तरं 'बोधनाये'तिशेषः । **यथा-खल्विति** ॥ पादशब्दस्य शरीरावयवे, स्वरूपांशेच, सैन्धवशब्दवत् पृथक्-पृथक्शक्तिग्रहमात्रेण भिन्नांशे शक्तिग्रहाभावेऽपि जीवेश्वरयो रंशांशिभावरूप संब-न्धज्ञापनार्थं 'पादोस्यविश्वाभूतानी' (तै० अ० ४.) ति पादशब्दः प्रयुज्यत-इत्यर्थः । ननु – जीवोऽपि स्वरूपांशत्वाच्छक्तिग्रहविषयो ऽभ्युपगन्तव्यः, अन्यथा मिथ्याज्ञानोत्पादेनाऽनर्थप्रसङ्गइत्यतआह– **ज्ञातांशभावस्त्विति** ॥ भेद-श्रुतिपर्यालोचनया भिन्नांशत्वंप्रत्येति, तस्यशब्दस्य तत्र शक्तिंच पश्चात्प्रत्येती-त्यर्थः । **अलौकिकत्वबुद्धिश्चेति** ॥ तस्य शब्दस्य तत्र शक्तिग्रहश्चभवती-त्यपि द्रष्टव्यम् ।

**इदमत्राकूतम्** – भवत्येव भगवदानन्दादि लोकविलक्षणः, आनन्दादि-

---

१. ईश्वरीयानन्दे । ¹ लौकिकानन्दत्वानंगीकारेण । २. 'परमत' इति सूत्रभाष्ये ।
३. 'बुध्यर्थः' इति सूत्रीय टी.प्र.धा. । ४. 'बुध्यर्थ' (३-२-३४)इति सूत्रभाष्यइत्यर्थः ।
५, ६, ७. 'बुध्यर्थ' इति सूत्र टी. प्र. धा.

शब्दास्तु लौकिकानन्दभगवदानन्दाभ्यां सैन्धवशब्दवन्नानार्थाः, प्रथमंव्युत्प, त्तिस्तु लौकिकानन्दएव वाच्यार्थस्य प्रत्यक्षसिद्धत्वेन शक्तिग्रहोपायसद्भावात् - न भगवदानन्दे उपायाभावात्, श्रौतव्यवहारानुसारेण भगवदानन्दस्यापि अनुकूलवेद्यत्वे ऽवगते प्रमाणान्तरवशाच्च तस्य ज्ञानाद्यात्मकत्वे चाऽवगते लौकिकानन्दवैलक्षण्यं प्रतिपद्य, तत्र शब्दस्यपरममुख्यवृत्तिंच प्रतिपद्यते, अनन्तरंतु शब्दश्रवणमात्रादेव झटिति परममुख्यार्थं प्रतिपद्यते तद्बाधेतु मुख्यार्थं लौकिकानन्दम्, तस्यापिबाधे गौणाद्यर्थं, विशेषसद्भावादपर्यायत्वंचेति । एतेन – लौकिकानन्दस्य आनन्दशब्दवाच्यत्वात् ईश्वरानन्दस्य तदभावेनाऽनानन्दत्वात् ईश्वरस्याऽऽनन्दित्वगुणाभाव इति परास्तम् । भाष्ये – अलौकिकोपीति ॥ लौकिकज्ञानादि विलक्षणत्वात् लोकव्युत्पत्त्यविषयोऽपि ज्ञानादिः लोकस्यसामान्यव्युत्पत्तिद्वारा विशेषतच्छब्दवाच्यत्वज्ञापनाय ज्ञानादिशब्दैरेवभण्यते यथा-देवराट् राजशब्दमुख्यवाच्यत्वज्ञापनाय आदौ राजवदेव राजशब्देनभण्यते तथेत्यर्थः । टीकायाम् – आनंदोनेदृशानंद इति ॥ श्रुत्यैवेश्वरधर्मस्य क्वचिदानन्द इति क्वचिन्नेदृशानन्द इत्युक्ते महतामबाधित प्रत्ययानुसारेण लोकतःपरं लौकिकानन्दात् अतिशयवदित्येव ईश्वरानन्दजातं प्रतिभाति, न पुनर्यथावदर्शनंविना महतां प्रत्यक्षमतिक्रम्याऽनुकूलवेद्यादन्य एव आनन्दादिशब्दवाच्य इतिभातीत्यर्थः । प्रमाणविरोधाभावाद्धि 'सैन्धवोऽयं नेदृशसैंधव' इत्युक्ते लवणविजातीयोऽश्वः प्रतीयते, प्रकृतेतु ईश्वरानन्दस्यानुकूलवेद्यताग्राहकमहदनुभवस्य विद्यमानत्वात् 'आनन्दो नेदृशानन्द' इत्युक्तया अतिशयएवगम्यते न वैजात्यमितिभावः ।

१. 'प्रकृत्यादिभ्यउपसंख्यान' मिति कात्यायनवचनेन तृतीया अभेदस्तदर्थः अस्यनानार्थेत्यत्रार्थशब्दार्थेऽन्वयः । २. व्युत्पत्तिरित्यनुषज्यते । ३. 'एवंधर्मान् पृथक्पश्यन्तानेवानुविधावति' (का०. २-३-१४) इत्यादि प्रमाणेत्यर्थः । तत परमात्मतद्धर्माणां तद्धर्माणां च परस्परं भेददर्शिनो दोषोक्तेः परमात्मतद्गुणानन्दादीनाम्, आनन्दादीनांच परस्परंभेदनिषेधसिध्या ऽभेदः सिद्धः । ४. ईश्वरानन्दस्याऽपि आनन्दशब्दवाच्यत्वनिरूपणेन, । ५. आनन्दशब्दवाच्यत्वाऽभावेन । ६. तद्रूपेणाऽनुपस्थितत्वात् । ७. 'वुध्यर्थ' इति सूत्रभाष्ये । ८. स्मृत्यर्थइत्यर्थः । ९. 'वुध्यर्थे' ति सूत्र टीकायामित्यर्थः ।
१०. महतामनुभवस्येत्यर्थः ।

**पूर्वपक्षस्तु** — ईश्वरानन्दादिः लौकिकानन्दादिवत् आनन्दादिरेव, न पुन †ज्ञानादिरपि, आनन्दशब्दवाच्यत्वात् । नहि ज्ञानात्मके आनन्दशब्दो-युज्यते। पटेऽपि घटशब्दप्रयोग प्रसङ्गात् । ततश्च ईश्वरानन्दस्य लोक-विलक्षणत्वाभावात् न तत्र निरतिशया भक्तिरिति ।

**सिद्धान्तस्तु** — विलक्षणमेव लौकिकानन्दात् ब्रह्मानन्दादि, सेतुत्व-पूर्णत्वबिम्बत्वानां वैलक्षण्यस्यच 'एषसेतु' (बृ.) रित्यादिनोक्तत्वात् । किंच लौकि-कानन्दादिकंहि दर्शनयोग्यं ईश्वरानन्दादितु 'अदृष्ट मव्यवहार्य' मित्यादिना-दर्शनायोग्यमुच्यते । ततश्च तत् लोकविलक्षणमेव मन्तव्यम् । ननु — यदि ईश्वरानन्दादि र्लोकानन्द विलक्षणः, कथंतर्हि लोकानन्दादौ गृहीतसंगतिकस्य आनन्दादिशब्दस्य तत्र प्रयोगः,नहिलवणे, गृहीतसंगतिकः सैन्धवशब्ददो ऽश्वे पृथक्संगतिग्रहंविना प्रयुज्यते । येनेहापि तत्र संगतिग्रहाभावेऽपि लौकि-केषुसङ्गतिग्रहणमात्रेण तत्र प्रयुज्येत इतिचेत् , न — लौकिकपादस्वरूपांशाभ्यां विलक्षणेषु भिन्नांशेषु जीवेषु 'पादोऽस्यविश्वाभूतानी'ति पादशब्दप्रयोगवत् लौकि कानांवुध्यर्थमेव लोके गृहीतसंगतिकस्याऽऽनन्दादिशब्दस्य किंचित्सादृश्यमात्रेण भगवदानन्दादौ प्रयोगोपपत्तेः । ज्ञाततावन्मात्रस्य प्रमाणान्तरवशात् वैलक्षण्ये ज्ञाते शब्दानां तत्र परममुख्यवृत्तिग्रहोऽपि भवति । अतोऽलौकिकैगुणेहरौ भक्तिःकर्तव्येति सिद्धम् ( अ०. १६ )



( १७ — अधिकरणम्. )

## ॐ स्थानविशेषात्प्रकाशादिवत् ॐ ( सू. ३५ )

**प्रतिबिंबत्वसमर्थनादिति** ॥ भगवदानन्दादिभिन्नांशत्व समर्थनादि-त्यर्थः । एतेन प्रतिबिंबत्वस्य सादृश्यघटितत्वात् तस्यच भगवदानन्दाद्यलौकि-

† ज्ञानाद्यात्मकः । १. विलक्षणानन्दे । २. अलौकिको गुणोयस्यतस्मिन्निति बहुव्रीहिः । ३. अत्राऽधिकारणेद्वे (२) सूत्रे । ४. भिन्नांशत्वसमर्थनेन । ५. प्रतिबिम्बानन्दादीनां विचित्रतया, तेषां बिम्बसादृश्यनिर्वाहाय बिम्बानन्दादौ विचित्रतायाः स्वीकार्यत्वेन-बिम्बानन्दादेर्लौकिकविलक्षणत्वानापत्त्या सादृश्यघटित प्रतिबिंबत्वमलौकिकत्वविरोधीतिभावः।

कत्वविरोधित्वात् तत्समर्थनमयुक्तमितिपरास्तम् । भि[1]न्नांशत्वस्येहसमर्थनेन अलौकिकत्वविरोध्यतिसादृश्यासमर्थनात् । **तदभाव इति** ॥ ब्रह्माद्यानंदादीनां भगवदानंदादि प्रतिबिंबत्वाभावे 'परमत' (३-२-३२) इति पूर्वसूत्रोक्तालौकिकत्वं न स्यात् । तत्र संबन्धपदोक्त बिम्ब प्रतिबिम्बभावस्याऽसिध्दत्वेन तत्रोक्तहेत्वंतरेप्यनाश्वासप्रसङ्गादितिभावः । **प्रतिबिंबत्वमुक्तमिति** ॥ पूर्व[2]सूत्रे संबन्ध पदेनोक्तमित्यर्थः । **उक्तेद्वैविध्यदर्शनमिति** ॥ वचनस्य प्रामाण्याप्रामाण्यद[3]र्शन मित्यर्थः । **तथात्वं इति** ॥

ननु — भगवदानन्द प्रतिबिंबत्वे मिथो वैचित्र्यायोग इत्यनुपपन्नम्, सूर्यप्रतिबिंबयोः सूर्येंद्रचापयो र्महावैलक्षण्य प्रदर्शनेन व्याप्यभावात् । इंद्रचापस्य पक्ष[6]तुल्यत्वा न्न तत्र व्यभिचारचोदनं युक्तमितिचेत्, माभू त्तत्र व्यभिचारः । जलाऽऽदर्शाद्युपाधिषु प्रतीयमानतटस्थवृक्षाणां प्रतिबिंबोहि सरसि ऊर्ध्वमूलो ऽवाकूशाखः प्रतीयते, आदर्शेतु अवाङ्मूल ऊर्ध्वशाखः प्रतीयते, नचा ऽनयोर्नैक प्रतिबिंबत्वमिति सांप्रतम् — बिंबैक्यस्य सर्वानुभवसिध्दत्वात् । अ[8]तएव प्रतिबिंबवैचित्र्यांगीकारे बिंबरूपे भगवदानंदादौ वैचित्र्यापादनमप्ययुक्तम् । प्रतिबिंबवैचित्र्येऽपि तटस्थवृक्षे वैचित्र्याभावेन [9]व्यभिचारात् । नच

---

१. एतेनेत्यस्यार्थमाह – भिन्नांशेति ॥ २. 'परमत' इति पूर्वाधिकरणप्रधानसूत्रे । ३. प्रतिबिम्बत्ववचनस्यवा, परमात्मानन्दादेरलौकिकत्ववचनस्यवा, ऽप्रामाण्य प्रामाण्येत्यर्थः। ४. प्रतिबिम्बत्वइत्यर्थः । ५. स्पष्टदर्शनेनेत्यर्थः, उक्तस्थलद्वये अप्रतिबिम्बत्व रूपसाध्याभाववति वैचित्र्यरूपहेतोः सत्त्वेन तत्र व्यभिचार इतिभावः व्याप्यभावादित्यस्य साध्येनहेतोः संबन्धाभावादित्यर्थः । सूर्य प्रतिबिम्बे बिम्बात् विशेषवैलक्षण्यस्यस्पष्टमदर्शनात् इन्द्रचापेतिस्थलान्तरं प्रदर्श्य ॥ इन्द्रधनु रपि नीरदमेघ प्रतिफलित सूर्यकिरणसंनिवेश विशेषरूपमेवेति तस्यापि सूर्यप्रतिबिम्बत्व व्यवहारइतिकृत्वा तत्र वैलक्षण्यस्यस्पष्टं प्रतिभानात् व्यभिचारउक्तः । ६. इन्द्रचापो न सूर्यप्रतिबिम्बः सर्वथा विलक्षणत्वादिति अनुमातुं शक्यत्वेन तस्य पक्षतुल्यत्वम् । ७. प्रतिफलिततीरस्थेत्यर्थः । ८. अतएव – प्रतिबिम्बे वैचित्र्येपीत्यादिनावक्ष्यमाणहेतोरेव । ९. अयुक्तमितिसंबन्धः ।

निर्मूलाशंका योगारंभं प्रयोजयतीति[1] अनारंभणीयमेवेदमधिकरणमितिचेत् — उच्यते — युक्तं वृक्ष[2]प्रतिबिंबयोः बिंबवैचित्र्याभावेऽपि वैचि[3]त्र्यमुपाधिधर्मस्यवैचित्र्यकारणस्य विद्यमानत्वात् । तथाहि — जलोपाधेरुत्ता[4]नत्वेन [5]तत्प्रतिबिंबस्योर्ध्वमूलत्वमवाक्शाखत्वम्, आदर्श[5]स्यतु संमुखत्वेन तत्रत्य प्रतिबिंबस्य बिंबानुसारित्वंभवति, यदात्वादर्शोप्युत्तानो भवति तदाबिंबविपरीतएव प्रति[6]बिंबो भवत्युपाधिगुणात् । नचेह तथा संभवति — उपाधिभूतानां ब्रह्मरुद्रादीनामानन्दवैचित्र्यापादक बिम्बानधीनधर्मशून्यत्वात् । ततो ब्रह्मादिषु प्रतीयमानानन्दस्य विचित्रस्य भगवदानन्दप्रतिबिंबत्वाभावोवा, भगवदानन्दतारतम्यंवाऽ[7]भ्युपेयमितिशं[8]कासंभवादारम्भणीयमेवेद मधिकरणमिति ।

तर्क[9]स्याप्रयोजकत्वं परिहरति — **मिथोविचित्राणामिति** ॥ वैचित्र्यरूपकारणविधुराणामितिशेषः । प्रतिविम्बवैचित्र्येहि उपाधिवैचित्र्यं, विम्बवैचित्र्यंवा कारणम्, प्रकृते उपाधिवैचित्र्या[10]भावेनिश्चिते बिम्बवैचित्र्यमवर्जनीयमितिभावः । भगवतिगुणतारतम्यस्येष्टत्वं परिहरति — **न तत्र भक्तिरिति** ॥ भगवतिनिरतिशय भक्तिसिध्यर्थंहि ब्रह्माद्यानन्दस्य तत्प्रतिबिम्बत्वमिहोच्यते, भगवति तारतम्यांगीकारेतु न सा सिध्यतीति, ब्रह्माद्यानन्दस्य तत्प्रतिबिम्बत्ववर्णनं व्यर्थमेव स्यादितिभावः । **प्रतिफलितोभवतीति** ॥ स्वसदृशवस्तुव्यवस्थापकोभवतीत्यर्थः ॥ **स्या[11]देतदिति** ॥ उपपत्तेश्चेतिसूत्रे एतद्दूषणंस्यादित्यर्थः । किमेतद्दूषणमित्यतआह — **[12]स्थानगुणेनेति** ॥ **न विम्बसा[13]मर्थ्यमुपयुज्यत इति** ॥ एतद्दूषणंस्यादितिपूर्वेणसम्बन्धः ।

---

१. इतिः हेतौ सफलयतीतिहेतोरित्यर्थः । २. वृक्षतत्प्रति-विम्बयोर्मध्ये । ३. प्रतिविम्वस्येतिशेषः । ४. ऊर्ध्वाऽभिमुखतयाऽियं गवस्थानरूपत्वमुत्तानत्वम् । ५ तास्मिन्-प्रतिफलित वृक्षप्रतिविम्बस्य । ५. अत्रापिसत्येतरत्वादि वैलक्षण्यमस्तितदाविवक्षयाएवमुक्तम् । ६. वृक्षप्रतिविम्बः । ७. 'नपुंसकमनुपसकेने' (पा०. सू०.) ति अभ्युपेयश्चाभ्युपेयं-चेतिसहोक्तौ नपुंसकस्यैकशेषएकत्वंच । ८. सयुक्तिकशङ्कासंभवादित्यर्थः । ९. तर्कस्य = अनुमानस्य, अप्रयोजकत्वम् = अस्तुवैचित्र्यं, मास्तु प्रतिविम्बत्वाभावरूपंसाध्यम इति सिद्धान्तिशङ्कितं साध्याऽसाधकत्वं परिहरतिपूर्वपक्षीत्यर्थः । १०. ब्रह्मादीनां विम्बाऽनधीन-वैचित्र्यापादक धर्मशून्यत्वेनिश्चितेइत्यर्थः । ११, १२, १३. 'उपपत्तेश्चे' त्युत्तरसूत्र टी. प्र. धा.

**पूर्वपक्षस्तु** – न ब्रह्माद्यानन्दादयो भगवदानन्दादिप्रतिबिम्बभूताः, तथात्वे वैचित्र्याभावप्रसङ्गात् । प्रतिबिम्बवैचित्र्येहि कारणद्वयं, बिम्बवैचित्र्यंवा, स्थानवैचित्र्यंवेति । नचात्र ब्रह्मादिस्थानवैचित्र्यं प्रतिबिम्बवैचित्र्योपपादकं संभवति, तस्यापिभगवद्धर्म प्रतिबिम्बत्वेन वैचित्र्यसिध्दये स्थानगुणांतरवैचित्र्यानुसरणे ऽनवस्थानात् । नापि बिम्बानन्दादिवैचित्र्यम् , भक्त्यभावप्रसङ्गात् । ततश्च कारणाभावेन वैचित्र्यासंभवात् न तत्र ब्रह्मानन्दादिर्भगवदानन्दादिप्रतिबिम्ब इति तस्यलौकिकत्वाभावा न्न तत्र निरतिशया भक्तिरिति ।

**सिद्धान्तस्तु**— प्रतिबिम्बएव ब्रह्माद्यानन्दादिः भगवदानन्दादेः, ब्रह्मादीनामनादिकालीन भक्त्यादिगुणवैचित्र्य, परमेश्वरैश्वर्याभ्यां सूर्यप्रतिबिम्बवैचित्र्यवदानन्दादि वैचित्र्य संभवात् । नच भक्त्यादिवैचित्र्याऽनुपपत्तिः — तस्य परमेश्वरैश्वर्यवशादेवोपपत्तेः । परमेश्वरोहि वेदाऽप्रामाण्यकारण वैषम्यादिपरिहाराय भक्त्यादिवैचित्र्यमपेक्ष्यैव विचित्रानंदादीन्ददाति, अनादिकालीनभक्त्यादि विचित्रगुणांस्तु स्वेच्छयैवैश्वर्यवशाद्ददाति । तत्र वैषम्यादेरदोषत्वात् । तदुक्तम् — 'ऐश्वर्यात्परमाद्विष्णो भक्त्यादीना मनादितः । ब्रह्मादीनां सूपपन्ना ह्यानन्दादे र्विचित्रते'ति ५। अतो ब्रह्मादिगुणबिम्बालौकिकगुणे हरौ युक्तैव भक्तिरिति सिद्धम् (अ०. १७)



( १८ – अधिकरणम्. )

## ॐ तथान्यत्प्रतिषेधात् ॐ ( सू. ३७ )

**पुनस्तस्येति** ॥ 'तदव्यक्तमाहही' (ब्र०. सू०. ३-२-२३) त्यादौ समर्थितत्वात्पुनरित्युक्तम् । पुनस्समर्थनंचं तस्याऽव्यक्तत्वे अनुभवविरोध इत्यभ्यधिकाशङ्कानिरासायेतिबोध्यम । **ध्यातृबहुत्वेनेति** ॥ ध्यातारस्तावदेकस्मिन्काले, नानादेशस्थाबहवः ध्यायन्तिच स्वहृदये सामस्त्येन । नच — एक-

१. स्थानवैचित्र्यस्यापि । २. उपपत्तेश्चेति सूत्रभाष्ये । ३. अनादित्वात् - अनादिकालिक भक्त्यादितइत्यर्थः । ४. ब्रह्मादिगुणानां बिम्बभूतालौकिकगुणविशिष्टइत्यर्थः । ५. त्वर्थेचः । ६. साक्षात्काराभावः । ७. विशिष्टरूपेण ।

स्यवस्तुनः सामस्त्येनैकदैवाऽनेकदेशस्थता संभवतीत्यनेकमेवध्येयम्! तस्यच ब्रह्मत्वे ब्रह्मणोप्यनेकत्वापत्त्या भेदःस्यादितिभावः। **स्वरूपभेदाभावेपीति** ॥ स्वरूपभेदाभावेऽपि विशेषबलेनैव रामकृष्णादिरूपबहुत्वस्य प्रमाणसिद्धत्वेन तद्वत् ध्येयेऽपि विशेषबलेनैव तत्सिद्धे भेदसाधकत्वाभावात् ध्येयानेकत्वं, नाऽनिष्टमितिभावः। **अन्यथेति** ॥ ध्येयस्याऽब्रह्मत्वइत्यर्थः। **भाष्ये – यन्मनसेति** ॥ पुरुषः यद्वस्तु मनसा न मनुते, येन परमात्मना मनो विज्ञातमाहुः, तदेव ब्रह्मत्वंविद्धि। जना यदिदमुपासते = चित्ते प्रतिबिम्बितमुपासते, तद्ब्रह्म-नेत्यर्थः। **भाष्ये – पश्यन्तिपरमंब्रह्मेति** ॥ यस्यप्रतिबिम्बं चित्ते ध्याननिष्ठाः पश्यन्ति। तद्बिम्बरूपमेव परमंब्रह्म नतु ध्यानकाले प्रतीतम्। कथं तर्हि अब्रह्मणः प्रतिबिम्बस्य फलदत्वमित्यतउक्तम् – ब्रह्मैव प्रतिबिम्ब इति ॥ प्रतिबिम्बे ब्रह्मणः सत्वात्तदेवफलप्रदमित्यर्थः। **टीकायांप्रतिबिंबोपासनमिति-संबध्यत इति** ॥ अनेन यथा प्रतिमोपासनं न केवलं प्रतिमायाः, अपितु ब्रह्मणोप्युपासनं भवति, तथा प्रतिबिंबोपासनमपि न केवलं प्रतिबिंबोपासनम् अपितु तदुपासनंच भवतीति मूलवाक्यं योजितंभवति। **भाष्येदृश्यत-इति** ॥ परंपदं परब्रह्मस्वरूपं ध्यानसंज्ञाविधुरेणाऽपरोक्षज्ञानेनैव दृश्यते। इदंतु ध्यानसंज्ञकेनाऽपरोक्षेण दृश्यते, अतो न तयोरैक्यमितिभावः।

**पूर्वपक्षस्तु** — व्यक्तमेव ब्रह्म, ध्यानकाले प्रतीयमानत्वात्। नच – ध्येयानांबहुत्वेन ब्रह्मभेदापत्तिः – विशेषबलेनैव बहुत्वोपपत्तेः। ध्येयस्याब्रह्मत्वेच ब्रह्मध्यानाभावेन फलं न स्यात्। अतोध्यानकाले प्रतीतस्य ब्रह्मत्वेनाऽव्यक्तत्वाभावाद्व्यर्था भक्तिरिति।

**सिद्धान्तस्तु** – अव्यक्तमेवब्रह्म जीवानन्दाद्ब्रह्मानन्दस्य भिन्नत्ववत् ध्ये-

१. ध्यानविषयस्य। २. बहुत्वसिद्धेः। ३. श्रुत्यर्थमाह - पुरुषइत्यादिना। ४. स्मृत्यर्थमाह - यस्येत्यादिना ॥ 'यत्प्रतिबिम्बित' मित्यस्यषष्ठीसमासत्वमितिकृत्वा तदर्थउक्तःयस्य प्रतिबिम्बमिति ॥ ५. ब्रह्मोपासनंचेत्यर्थः। ६. भाष्योदाहृतस्मृतिवाक्यमित्यर्थः। ७. स्मृत्यर्थमाह – परमिति ॥ ८. स्मृतौ आपरोक्ष्येति स्वार्थेष्यञ्तदर्थः - अपरोक्षेति ॥ ९. आपरोक्ष्यमित्यस्यार्थः – इदंत्विति ॥

यस्य दुर्लक्षणत्वेन ब्रह्मणस्तदन्यत्वात् । 'तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासत' ( तल. १ - ५ ) इति ध्येयस्य ब्रह्मत्वनिषेधाच्च । नच ध्यानफलानुपपत्तिः — प्रतिमोपासनवत् प्रतिबिंबोपासनस्यापि ब्रह्मोपासनत्वात् । अतोध्यानकाले प्रतीतस्याऽब्रह्मत्वेनाऽव्यक्तत्वात् , कर्तव्यैव तद्भक्तिरिति सिद्धम् (अ०.१८)



( - १९ अधिकरणम् .)

## ॐ अनेन सर्वगतत्वमायामयशब्दादिभ्यः ॐ (सू. ३८. )

**जगत्कर्तृत्वादिसमर्थनादिति** ॥ 'सइदंसर्वमसृजते' (तै०.उ०. २-५) त्यादीनाम्, इदंशब्दश्रवणेन व[३]र्तमानकालीन जगत्कारणतापरत्वस्यैवोचितत्वात्, कालान्तरे पुनरस्यैव जगत्कारणत्वे प्रमाणाभावेन न कालान्तरीयजगत्कारणत्वमस्येत्यभ्यधिकाशङ्कानिरासेने'तिशेषः । **प्राचीनोक्तेरिति** ॥ 'यतोवा इमानिभूतानिजायंत' ( तै०. उ०. ३ - १ ) इत्याद्युक्ते वर्तमानैतद्देशीय जगत्कारणतापरत्वेनेव सर्वदेशीय सर्वकालिक जगत्कारणतापरत्वेनापि संभवः संदेहबीजमित्यर्थः । न सर्वदा ब्रह्मणएवजगत्कारणत्वम् अपितु कल्पान्तरेषु अन्येषाम्, तथाहि — कालान्तरे विष्णोर्जगत्कारणत्वे प्रमाणाभावात्, 'यतोवाइमानिभूतानी' ( तै. उ. ३ - १ ) त्यादेश्च इमानीतिविशेषणबलेन वर्तमानैतद्देशीय जगत्कारणतावादित्वात् । अन्यथा — 'यतोवाभूतानिजायन्त' इत्येतावता पूर्णत्वात् इमानीति विशेषणं व्यर्थंस्यात् । किंच — अस्तितावत्सोमादीनामपि जगत्कारणत्वे 'सोमः पवते जनितामतीनां जनितादिवो जनितापृथिव्या जनिताऽग्ने र्जनितासूर्यस्य जनितेन्द्रस्य जनितो त विष्णो' ( ऋ०. ७ अ. ४.अ. व ६ )

---

१. तदभावेनेतिशेषः । दुर्लक्षणत्वाभावेनेतितदर्थः । २. फलसिद्धेरितिशेषः ।
३. 'इदमस्तुसंनिकृष्ट' मितिवचनेन इदंशब्दस्य सन्निकृष्टपुरोवृत्तिपदार्थबोधकत्वस्वाभाव्यात् भूतभाविजगद्बोधकत्वाभावेन वर्तमानेत्याद्युक्तार्थलाभः । ४. हरेरेव । ५. 'गहादिभ्यश्चे' ( पा०. सू०. ४-२ १३८ ) ति छः गहादिराकृतिगणः । ६. जन्मादिसूत्रोक्तेरित्यर्थः । ७. सन्दिहानस्याशयमाह - नेत्यादिना ।

रित्यादिवाक्यम् । अस्तिच विष्णोर्जगत्कारणत्वे 'यतोवाइमानिभूतानी' त्यादिवाक्यम् । नच अन्यतरबाधो युक्तइति व्रीहियवन्यायेन सर्वेषां-कल्पभेदेन कारणत्वं युक्तम् । अपिच — कालभेदेन राजानो विभिन्ना एव-दृश्यन्ते । ततश्च कल्पभेदेन कर्तृभेद एव युक्त इतिगूढाभिसंधिः । पूर्वपक्षयति — **न सर्वसृष्ट्यादीति** ॥ ननु इदानीमीश्वरस्य सर्वकारणत्वमभ्युपगच्छता ईश्व-रस्वातंत्र्यम् अन्येषां तदधीनत्वमित्यभ्युपगंतव्यम्, अन्यथा तन्नियमनाद्ययोग-प्रसंगात् । नच — अस्वतंत्र स्वभावस्य कालांतरे स्वातंत्र्यमुपपद्यते, नच स्वा-तंत्र्याभावे जगत्काणत्वमुपपद्यत इत्याशङ्क्य निषेधति — **नच विष्णोरिति** ॥ **अवतारेष्विति** ॥ कृष्णाद्यवतारेषु उग्रसेनादीनां राज्यंदत्वा स्वस्य तदाज्ञा-धारित्वादिलीलादर्शनादित्यर्थः । नन्वीश्वरदत्तस्वातंत्र्येणाऽन्येषां जगत्कारणत्वं नाऽनिष्टम्, ईश्वर जगत्कारणत्वाऽनपायादितिचेत्, नब्रूमो वयमीश्वरः स्वस्वातंत्र्य मवशिष्य परस्मैददातीति, येनोक्तदोषःस्यात्, किंनाम अपहायैवस्वस्वातंत्र्यं परस्मैददातीति । दृश्यन्तेहि कृपालवो दधीच्याद्याः परार्थे स्वात्मानमपि त्यजंतः । नचाऽस्मिन्पक्षे विष्णोरपि जगत्कारणत्वं संभवति त्यक्तस्वातंत्र्यत्वात् । पूर्वपक्षिणोगूढाभिसंधित्वाद्विकल्पेन पृच्छति — **किं विष्णोरिति** ॥ **तदभा-वादिति** ॥ 'सोमः पवत' इत्यादीनां विष्णुपरत्वादितिभावः । ननु — न संभावनामात्रादेतत्कल्प्यते, किंनाम रामकृष्णाद्यवतारेषु स्वस्वातंत्र्यदानस्य प्रमाण-दृष्टत्वेन तद्दानस्य तत्स्वभावत्वात् योयत्स्वभावस्सतत्करोत्येवेति नियमबलेनैव तत्कल्प्यत इत्यतआह — **नचेति** ॥ सूत्रेसर्वगतत्वोपन्यासो व्यर्थ इत्यतआह — **सर्वगतत्वमिति** ।

१. नयुक्त इति संबन्धः । २. यथा - कश्चित्व्रीहीन् गृह्णाति, कश्चिद्यवान् तथा क्वचित् हरिः सृष्टिं करोति, क्वचिदन्य इति व्यवस्थोपपत्तिरितिभावः । ३. संबन्धसामान्येषष्ठी । ४. किंचिदवशिष्टं कृत्वेत्यर्थः । एवंच - नसर्वस्वातन्त्र्यंददातीतिज्ञेयम् । ५. श्रुतौ — सोम-पदं तद्रूतेश्वरपरम्, तस्यैव मत्यादि सर्वजनयितृत्वमुच्यते इति मन्त्रस्यविष्णुपरत्वमिति-भावः । मंत्रगतं विष्णोरिति तु यागवाचकम्, प्रकृतयागस्यापिजनयितासोमगतः सोमना-मकोहरि रित्यर्थः । ततश्च — ईश्वरस्यहरेर्जन्यत्वशङ्कैवन । विद्यारण्यभाष्येतु — विष्णोः = व्यापकस्येत्युक्तम्, अधिकंजन्मादिनयसुधादौ ।

**पूर्वपक्षस्तु**[1] — अभिसंधिवर्णनव्याजेन प्रागेवदर्शितः ।

**सिद्धान्तस्तु** —भगवतैव सर्वदेशकालीनं सृष्ट्यादि, 'अनुप्रविश्य-नामरूपेव्याकरो' (छा०. ६ - ३ - ३) दिति श्रुतिसिद्ध सृष्ट्युपयोगि सर्वगतत्वस्य, 'एषसर्व एषसर्वगत' इति भाल्लवेयश्रुतौ विष्णोरभिधानात् ; मायामय-शब्दव्याख्यानरूप 'सर्वत्रसर्वेमेतस्मा' दिति चतुर्वेदशिखोक्तेश्च; कालांतरे ऽन्यस्य जगत्कारणत्वे प्रमाणाभावाच्च, प्रमाणाभावे संभावनामात्रस्याऽप्रयोजकत्वात्। अतः सर्वजगज्जन्मादिकर्तरि ब्रह्मणि भक्तिः कार्येति सिद्धम् ( अ०. १९ )



[ २० – अधिकरणम् ]

## ॐ फलमत उपपत्तेः[3] ॐ ( सू. ३९ )

भाष्ये — 'कर्मापेक्षत्वात्फलदानस्ये'[4] ति सापेक्षफलदातृत्वं हेतूकृत्य तदेवै[5] फलं ददातीती[6] श्वरस्य फलदातृत्वाभावसाधनमयुक्तं व्याहतत्वादित्यतआह — **येरिति** ॥ लाघवात्कर्मणएव फलदातृत्वं नतु कर्मसापेक्षस्येश्वरस्य गौरवादिति-भावः । एतेन[10] — व्याहतिः परास्ता । पूर्वपक्षिणा[11] लाघवप्रदर्शनाय परोक्तसा-पेक्षफलदातृत्वानुवादमात्रस्यकृतत्वात् । ननु न मया कर्मसापेक्षस्येश्वरस्य फलदातृत्वमुच्यते येन लाघवात्कर्मणएव फलदातृत्वं स्यात् , ईश्वरएव सुखदुःखा-दिकं ददाति तच्च न कर्मफलमित्यतआह — **अन्यथेति** ॥ **नेश्वर इति** ॥ अन्यथा[12]सिद्धत्वादितिभावः । **इतरस्याचेतनत्वेनेति** ॥ अवश्यकॢप्तनियत पूर्व-

---

१. 'नसर्वदेत्यादि' ना प्राक्तनेनग्रन्थेन दर्शितइत्यर्थः । २. क्रियतइति शेषः । ३. अत्राऽधिकरणे चत्वारि ( ४ ) सूत्राणि । ४. ईश्वरकर्तृकेत्यादौशेषः । ५. कर्मैव । अत्रएवकारोऽन्ययोगव्यवच्छेदे । ६. इति वाक्येन । ७. तदेवेत्येवशब्देन दातृत्वा-भावः साधितोभवतीतिज्ञेयम् । ८. हेतुवाक्येन दातृत्वमुक्त्वाउत्तरवाक्येन तदभावसाधनं स्वोक्तिविरोधात् व्याहतमितिभावः । ९. कर्मसापेक्षत्वादित्यादिवाक्यं न साक्षादुक्तहेतु-बोधकं किन्तु – ईश्वरस्यफलदातृत्वाङ्गीकारेगौरवबोधकमितिउक्तंभवति । १०. सापे-क्षफलदातृत्वस्यहेतुत्वाभावेन । ११. एतेनेत्यस्यार्थमाह – पूर्वपक्षीत्यादिना । १२. कर्म-णैवफल सिद्धेरीश्वरस्यान्यथासिद्धत्वम् ।

वर्निनैव कार्यसंभवेहि ईश्वरस्याऽन्यथासिद्धत्वं स्यात्, तदेव नास्तीतिभावः। **यतएवमिति** ॥ यतः कर्मणैव फलसंभवो नास्ति, अतो ऽन्यथासिद्धत्वरूप-हेतोरसिद्धत्वादीश्वरो न फलदातेति नवाच्यमित्यर्थः 'तिष्ठमानस्य तद्विद' (बृ. ५-९-२८) इति वाक्यशेषगत 'तिष्ठमानस्ये' ति पदमनूद्य व्याचष्टे — **तिष्ठमानस्येति** ॥ **द्विधाव्याख्यातमिति** ॥ अतः = ईश्वराद्धर्ममेवेति, अतः = 'एषह्येवे' ति श्रुतेरेवेति, द्विधा व्याख्यातमित्यर्थः। ननु फलकारणं कर्म ईश्वराद्भवतीतिवदता जैमिनिना ईश्वरस्य फलकारणत्वाभावउक्तः, भगवता बादरायणेनतु ईश्वरस्यैव फलदातृत्वमुक्तं, ततश्च विरोधइत्यतआह — **सामान्यतइति** ॥ कर्मणः सामान्यतः दण्डादिसाधारण्येन कर्तृप्रयोज्यतयाकारणत्वं जैमिनेरभिप्रेतं, नत्वीश्वरस्याकारणत्वं; कर्तृप्रयोज्यताज्ञापनायैव 'यतः कर्मणः सकाशात् फलंभवति, तत्कर्म ईश्वराद्भवती' त्यभिहितं, नत्वीश्वरस्य फलहेतुत्वाभावाभिप्रायेण श्रुतिविरुद्धस्य मुनिमतत्वायोगात्; एतत्सर्वं बादरायणेनाभ्युपगतमेवेति न विरोध इतिभावः ॥

**पूर्वपक्षस्तु** — ईश्वरो न फलदाता अवश्यकॢप्तनियत पूर्ववर्तिना-कर्मणैव फलसंभवेनाऽन्यथासिद्धत्वात्। ततश्च न तद्भक्तिः कार्येति।

**सिद्धान्तस्तु** — अचेतनत्वात्कर्मणैव फलसंभवाभावेन अन्यथासिद्धत्व-हेतोरसिद्धत्वेन बाधकाभावात्, 'विज्ञानमानंदंब्रह्म रातिर्दातुः परायण' [बृ०.५-९-२८] मिति फलदातृत्वस्य श्रुतत्वाच्च, ईश्वरएवफलदाता। ननु —

१, २. 'धर्मंजैमिनि' ( ३ - २ - ४१ रितिसूत्र टी०. प्र०. धा०.।

३. 'पूर्वन्तुबादरायण' इति सूत्र टी०. प्र०. धा०.। ४. टीकास्थपदानुवादोऽयम्। ५. तस्यार्थः दण्डादीति ॥ आदिनाविप्रेभ्योगांददातीत्यादौविप्रादेर्ग्रहणम्। ६. कर्त्रधीन-प्रधानधात्वर्थफल निष्पादकाऽवान्तरव्यापारवत्तयेत्यर्थः। इदंच - कर्तृभिन्नकारकमात्रसाधारणं करणभूतेकर्मण्यप्यस्तीति तस्यकारकत्वमितिभावः। ७. इदं - 'धर्मंजैमिनि' रिति सूत्रस्थंभाष्यम्, उक्तोऽर्थोभाष्यारूढइति बोधनायअनूद्यते, यतइत्यस्याऽर्थः — कर्मणः सकाशादिति ॥ ८. भाष्यकृतेतिशेषः। ९. कर्ममात्रेणेत्यर्थः।

नैतच्छ्रुति बलेनेश्वरस्य फलदातृत्वमभ्युपगन्तुंशक्यम्, फलकारणस्यकर्मण ईश्वरजन्यत्वेन श्रुतावीश्वरस्य फलदातृत्वस्योपचारेणैवोक्तत्वात् । किंच – एवमाप्ततमो जैमिनिर्भ्रम्यते इतिचेत्, स्यादेतच्छ्रुतेरौपचारिकत्वकल्पनम्, यदीश्वरंविना केवलेनकर्मणा फलंभवेत्, नच तत्संभवति – अचेतनस्य स्वतः प्रवृत्त्ययोगात् । एवंच श्रुत्यैन्वयव्यतिरेक बलादुभयोरपि कारणत्वेसिद्धे कर्मैवेश्वरप्रयोज्यमित्यभ्युपगंतव्यम्, 'पुण्येनपुण्यं लोकं नयति पापेनपाप' (प्र०. प्र८. ३-७) मिति हेतुव्यपदेशात् । जैमिनेरपि कर्मादेरीश्वराधीन कारणत्वमभिमतमिति न तन्मतमप्रमाणम् । अतः परमेश्वरस्यैव कर्मफलदातृत्वात् निरतिशयमहिम्नि तस्मिन् भक्तिः कर्तव्येति सिद्धम् (अ. २०)

इति श्रीसत्यनिधितीर्थ श्रीचरण चरणाराधकश्रीमत्सत्यनाथयति विरचितायां

श्रीमत्तत्त्वप्रकाशिकाव्याख्याऽभिनवचन्द्रिकायां

## तृतीयाध्यायस्य द्वितीयः

## पादः समाप्तः



१. परंपरया । २. ईश्वरादुत्पन्नकर्मणः फलंभवतीति आदोषः । ३. श्रुत्यन्वयव्यतिरेकयोर्बलादित्यर्थः । ४. ब्रह्मकर्मणोः । ५. बहुव्रीहिः ।

# अथ तृतीयः पादः

## श्री गुरुभ्योनमः



( १ – अधिकरणम् )

## ॐ सर्ववेदान्तप्रत्ययं[1] चोदनाद्यविशेषात् ॐ ( सू. १ )

**एतत्पादप्रतिपाद्यमिति**[2] ॥ 'तर्ह्यध्यायस्यैकार्थत्वात्पादभेदः किंनिबंधन-इत्यतः साधनेप्यवान्तरभेदेने'ति भावेनेतिवर्तते[3] । तस्य 'एतत्पाद प्रतिपाद्यं-दर्शयती'त्यनेन संबंधः । **भाष्येउपासनाऽस्मिन्पाद इति** ॥ प्रायेणेतिशेषः । एतेन 'छंदत' (ब्र॰ ३-३-२९) इति कर्मनियमाऽभावाधिकरण उपासना ऽनभि-धानात् 'उपासनास्मिन्पादउच्यत' इत्युक्तमयुक्तमितिपरास्तम् । **अतएवेति** ॥ श्रवणमननयोरुपासनारूपत्वादेवेत्यर्थः । **प्रतिशाखमिति** ॥ उपास्यतयास्त्री-कृतात् स्वशाखोक्ताद्ब्रह्मणः शाखान्तरोक्त[4]स्यभिन्नत्वान्नतदु[5]पासनार्थं प्रतिपत्तव्यम् , स्वशाखोक्तब्रह्मद्रोहापत्तेरितिभावः । **अन्यथेति** ॥ भेदाभाव इत्यर्थः । **विधय-श्चेति** ॥ यद्यपि – अत्र 'श्रोतव्योमन्तव्य' ( बृ०. ४-४-५ ) इति विधय-उदाहर्तव्याः, श्रवणविधीनामेव साधारण्यस्य सर्वेषां सर्वशाखाज्ञानाधिकार साध-कत्वात्, नतूपासनाविधयः 'आत्मे' त्युपासनाविधेः सर्वसाधारण्येपि मध्वा-द्युपासनाविधीनां सर्वसाधा[6]रण्याभावात् । तथापि – उपासनाविधीनामपि केषांचित्सर्वसाधा[7]रण्यम् , किंमुज्ञानविधीनां सर्वसाधारण्य[8]मिति कैमुत्यज्ञापना-योपासनाविध्युदाहरणमितिबोध्यम् । अथवा – यद्यपि – सर्वोपासनाविधयो

---

१. अत्राऽधिकरणे पञ्च (५) सूत्राणि । २. एतत्पादार्थमिति क्वचित्पाठः । ३. एत-दध्यायपादद्वयादावनुवृत्तमत्राप्यनुवर्ततइत्यर्थः । ४. ब्रह्मण इतिशेषः । ५. शाखान्त-रोक्तं उपासनायैव न प्रतिपत्तव्यमितिसंबन्धः । अत्रटीकायाम अर्थानामिति बहुवचनन्तु – शाखानां बहुत्वाभिप्रायेण । ६.'सयएतदमृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनाऽमृतं-दृष्ट्वातृप्यति' (छा०.३-६-३) इत्यादिना वस्वादिपद योग्यानामेवमधुविद्योपासनाविधानात् सर्वसाधारण्याऽभाव इतिभावः। ७. अस्तीतिशेषः। ८. वक्तव्यमितिशेषः। ९. अस्तीतिशेषः।

न सर्वाधिकारिसाधारणाः, तथापि — सर्वशाखि साधारणाएव, नहि वस्वादिपदयोग्या ब्रह्मचेषूत्पन्ना इति छंदोगोक्तमधुविद्योपासनासु नाधिक्रियंत इतिसांप्रतम्, ततश्चोपासनावाक्योदाहरणमुपपन्नम् । **युक्तयश्चेति** ॥ आत्मत्वगुणस्य केनचिदुपास्यत्वे सर्वगुणान्तर्भावत्वेनाऽभ्यर्हितत्वादयो युक्तयः, ताश्चैकाधिकारिणंप्रतीव सर्वान् प्रत्यप्यविशिष्टाएव । नहि आत्मत्वादीनां सर्वोपासनाफलदातृत्वेनाऽभ्यर्हितत्वं कंचित्प्रत्यस्ति अन्यंप्रति तु नेति विभागोऽस्तीतिभावः । **एकंहीति** ॥ एकमेववस्तु मोक्षा ऽर्थिनाश्रवणमनननिदिध्यासनादिना भक्तिपूर्वमुपास्यम्, अन्यथा ऽनेकप्राघुणिकन्यायेन मोक्षासिद्धिस्स्यादितिभावः ।

**पूर्वपक्षस्तु** — स्वस्वशाखोक्तमेव तेनतेन ज्ञेयं न सर्वशाखोक्तम्, शाखाप्रतिपाद्यानां नानात्वात्, एकस्यां हि शाखायां 'सत्यंज्ञानमनन्तं ब्रह्मे' (तै० उ०. २-१) त्युच्यते, अपरस्यांतु 'विज्ञानमानंदंब्रह्मे' (बृ०.५-९-२८) ति सत्यत्व परित्यागेनोच्यते, सत्यत्वभावाऽभावाभ्यां प्रतिपाद्यंभिद्यते । किंच — वस्त्वैक्ये ऽशे पौनरुक्त्य स्यात् । शाखान्तरोक्तस्यैव ज्ञानरूपत्वादेः शाखांतरेऽभिधानात् । नच नानात्वेपि सर्वेषामेकोपास्यता, अनेक प्राघुणिकन्यायेन मोक्षाऽसिद्धिप्रसंगात् । ततश्च सर्वशाखानिर्णायकं ब्रह्ममीमांसाशास्त्रमनुपादेयमेवेति।

**सिद्धान्तस्तु** — सर्ववेदश्रवणमननाद्युत्पाद्यज्ञानमेव ब्रह्म सर्वैरुपास्यम्,

---

१. मधुविद्या इतिशेषः । २. ऋक्शाखिन इत्यर्थः । ३. अधिकारिणेत्यर्थः । ४. अन्तर्भावावशिष्टत्वेनेत्यर्थः 'विशिष्टाद्भावप्रत्ययोविशेषणमभिसंयत्ते इति न्यायेन सर्वेषांगुणानामन्तर्भावेणेतिफलति 'अत्रह्येते सर्वएकीभवन्ति (बृ०. ३-४-७) इति श्रुतेः पूर्वप्रसक्तप्राणत्ववक्तृत्वादयोगुणाः सर्वेआत्मशब्दार्थगुणेऽन्तर्भवन्ति । इदमभ्यर्हितत्वेहेतुः । अभ्यर्हितत्वंचाऽवश्योपादेयताप्रयोजक धर्मविशेषः, आदिना 'आत्मानमेव लोकमुपासीत नहास्यकर्मक्षीयते' (बृ०. ३-४) इत्यादि श्रुतिबोधिताऽक्षय्यफलहेतुत्वरूपयुक्ति संग्रहः । ५. साधारणाः । ६. 'भेदान्नेतिचे' दित्युत्तरसूत्र टी०. प्र०. धा०. ७. अनेकप्राघुणिकेति । प्राघुणिकोऽतिथिः, सयथा – अनेकानाश्रयमाणः सर्वेषु आश्रियमाणेषु सद दाति आतिथ्यंसददाति आतिथ्यमिति आतिथ्यमकुर्वाणेषु भोजनरूपं फलं नलभते, तथा अनेकानुपासीनोऽपि सददातिफलं सददाति फलमितिसर्वेषु उपास्येषु तूष्णीमासीनेषु फलं नलभते इतिभावः । ८. सर्वेत्यादिः । ९. सर्ववेदोक्तगुणविशिष्टब्रह्मणः एककर्तृकोपासनाविषयता । बहुवचनंतुशाखानां, तत्प्रतिपाद्यरूपाणांवा बहुत्वमाश्रित्य ।

'श्रोतव्योमन्तव्य' (बृ०. ४-४-५) इत्यादिविधीनां सर्वसाधारणत्वात् । नहि काण्वादिशाखासु तैरेवेदंज्ञेयं नान्यैरित्युच्यते, येन साधारण्यं न स्यात् । यदत्रोक्तं 'उपदेशभेदात् वस्तुभिद्यत' इति, तन्न — एकत्वेन त्वयाऽभ्युपगते एकशाखाप्रतिपाद्येऽपि उपदेशभेददर्शनेन व्यभिचारात् । यदपि 'वस्त्वैक्येऽशे पौनरुक्त्यं स्या' दिति, तदपि एकस्यामपिशाखायां उक्ताना-मेव गुणानां पुनरभिधानेन समानम्; यदि तत्र धर्म्यनुवादेन धर्मविधानात् नोपदेशभेदः, नापिपौनरुक्त्यं, [१]प्रसंगभेदादनुवादकत्वाद्वेत्युच्यते तच्छाखांतरेऽपि समानम्, किंच — 'स्वाध्यायोऽध्येतव्य' (तै०. आ०. १५) इत्यध्ययनविधेः सामान्यत्वात् अध्ययनस्यच ज्ञानार्थत्वात् सर्वेषां सर्ववेदोक्तज्ञानेऽधिकारः, अपिच — सर्वेषां सर्ववेदोक्तकर्माधिकारस्तावद्दृश्यते, ततो ज्ञानाधिकारोपि मंतव्यो विशेषाऽभावात् । यानिचेमानि विरुद्धकर्माणि 'सामगोवटुर्मुंडः, अन्यः शिखी' त्यादीनि तानिच एकशाखागतविरुद्धकर्मवद्विकल्पेन भवन्ति । नच — मन्दानां ध्यानाभाव इतिवाच्यम्, 'सर्वासामपां समुद्रएकायन' (बृ०. २-४-११) मित्यादिवाक्यानां बाधकाभावे समुद्रायनत्वनियमतात्पर्यवत्, श्रवणादिविधीनामपि यथाशक्ति सर्वश्रवणविधौ तात्पर्यांगीकारात् । 'सर्वैश्चवेदैः परमोहिदेवो जिज्ञास्योसौ नाल्पवेदैः प्रसिध्ये' दितिश्रुतेश्च [२] । अतो भगवद्ध्यानार्थं सर्ववेदोक्तं ज्ञेयमिति सर्वोपादेयं शास्त्रमिति सिद्धम् (अ०. १.)



( २ – अधिकरणम्. )

## ॐ [३]उपसंहारो ऽर्थाभेदाद्विधिशेषवत्समानेच ॐ ( सू. ६. )

**सार्वत्रिकगुणेति** ॥ सार्वत्रिकगुणोपसंहारस्य ऽसंभावनां निराकृत्य समर्थनादित्यर्थः । एतेनास्मिन्नधिकरणे ऽनुपसंहारस्यापि वक्ष्यमाणत्वात् विशिष्य

१. प्रकरणभेदात् । २. एतदधिकरणीय 'दर्शयतिचे' ति सूत्रभाष्योक्तश्रुतेः । ३. अत्राऽधिकरणेचत्वारि (४) सूत्राणि । ४. सर्वशाखासुभवत्वमेव सार्वत्रिकत्वम्. 'अध्यात्मादेष्ठञिष्यत' (४-३) इतिकात्यायनवचनेन सर्वत्रशब्दाद्भवार्थेठञ् । अध्यात्मादिराकृतिगणः ।

गुणोपसंहारसमर्थनादितिकथनमयुक्तमितिपरास्तम् । **तदभाव इति ॥** [1]सम-र्थनाभावे सर्वज्ञा[2]नस्य वैयर्थ्यप्रसंगात् उपसंहारलक्षणप्रयो[3]जनेन यत्सफलत्वं तद-भावप्रसंगादित्यर्थः । तेनसर्वपरिज्ञानस्य संशयविपर्ययनिरासेन स्वयोग्यध्यानाधि-कारार्थत्वात्, 'वैयर्थ्यप्रसंगा' दित्ययुक्तमितिपरास्तम् । ननु — दोषाभावा-नामपि गुणत्वा त्कथं पृथग्ग्रहणमित्यतः 'कुरुपांडव' [4]न्यायेनेतिभावेनाह — **अत्रगुणा इति ॥ तदपवादमाहेति ॥** ननु — इदमपवादाभिधानमयुक्तम्, प्राप्त्यभावात् । तथाहि — वेदोक्तगुणा उपास्या इतिह्युक्तम्, नच रोदनादयो-वेदोक्ताः, तेषांदोषत्वेन वेदतात्पर्याऽविषयत्वात् । तदुक्तम् — 'तात्पर्थं-नैवदूषण' इति । ततश्चापवादोऽव्यर्थ इतिचेत्, सत्यम्, वेदोक्तस्यार्थस्योपसं-हारवचने रोदनादीनामुपसंहारस्याऽनुक्तत्वादपवादोऽ[5]व्यर्थः । तथापि वेदतात्पर्य-विषयीभूतस्यैवोपसंहार इति इममर्थं दृढीकर्तुं सूत्रकारः 'उपसंहारोर्थभेदा-द्विधिशेषव' दिति सूत्रखंडेन वेदप्रतीतार्थस्य सामान्येनोपसंहारमुक्त्वा 'समा-नेचे' ति खंडेनोपस्थित[6]ापवादमाह । नचास्मिन्पक्षे रोदनादीनामुपसंहाराप्राप्ति-रस्ति, तत्प्रापकस्यवेदप्रतीत[7]त्वस्याऽऽनन्दादि गुणेष्विवाऽत्रापिभावात् । [8]भाष्ये **गुणैरपिनतूपास्य इति ॥** येऽन्येषांगुणाः तज्जातीयैरपि भगवान्नोपास्यः, के ते यैर्नोपास्य इत्यत उक्तम् — **येपूर्णत्वविरोधिन इति ॥** रजत[9]जनक-रोदनं रुद्रस्यगुणोऽपि ईश्वरस्य दोषत्वान्नोपासनायोग्यमिति[10]भावः । **टीकायाम्**—

---

१. सर्वगुणोपसंहारसमर्थनाऽभावइत्यर्थः । २. सर्ववेदोत्पन्नज्ञानस्य । ३. प्रकृत्या-दित्वात् अभेदेतृतीयाप्रयोजनाऽभिन्नंयत्फलं तद्वत्त्वमित्यर्थः । ४. यथा 'सन्तानवीजं कुरुपाण्डवाना'मित्यादौ पाण्डवानां कुरुत्वेऽपि कंचिद्विशेषंकल्पयित्वा पृथक्प्रयोगः, तथा अत्रापिगुणानांदोषाभावस्यच विशेषकल्पनेन पृथक्प्रयोगः, गीतातात्पर्यन्यायदीपिकायां पंचमेइदंस्पष्टीकृतम् । ५. इतियदितिशेषः । व्यर्थइतियत् तत्सत्यमिति संबन्धः । ६. सामान्योक्तयोपस्थितस्यापवादमाहेत्यर्थः । ७. आपाततः प्रतीतत्वस्य । ८. 'उप-संहार' इत्यादिमूलभाष्ये । ९. रजतजनकेति॥ 'यदरोदीत्तद्रुद्रस्य रुद्रत्वम्, यदश्रवशीयत तत् (१) रजतंहिरण्यमभवत्' (तै०. सं १-५-१-१, २ पं) इति रुद्ररोदनजन्याश्रु रजतात्मनाऽभूदित्युक्तेः रोदनस्य रजतजनकत्वं बोध्यम् । १०. सूत्रादीनांतात्पर्य मित्यर्थः ।

(पा.ने. १२.)

**अचेतनेति** ॥ अचेतनंच पाषाणादि, असत्यं शशविषाणादि, तथा उपास्याऽयोग्योगुणश्चेत्येतानि अनुपास्यानि । अचेतनाऽसत्योपासनयोरफलत्वात्, तृतीयस्यानर्थहेतुत्वादिति सांकर्षणसूत्रार्थः । **अनुपसंहारस्यापिविहितत्वादिति** ॥ कतिपयमात्रगुणोपसंहारस्यापि विहितत्वादित्यर्थः । **विहितक्रियालोप प्रसंगादिति** ॥ विहितायाः आत्मत्वमात्रगुणोपे संहारलक्षणक्रियायाः, लोपप्रसंगात्= त्यागप्रसंगादित्यर्थः । **किमसाविति** ॥ यद्यपि — अनुपसंहारस्य प्रामाणिकत्वं परेणोक्तमिति प्रश्नायोगः, तथापि — परोक्तस्यप्रमाणस्याऽनुपसंहारार्थत्वाभावात् तद्वाक्यं परोक्तार्थे प्रमाणमेव न भवतीति द्योतनाय प्रश्नः कृतः । **नायंसर्वगुणोपसंहारोयुक्त इति** ॥ केनापि सर्वथा न सर्वगुणोपसंहारः कर्तव्यः, अशक्यत्वादित्याशङ्कां येषां न सर्वगुणोपसंहारे शक्तिः नास्त्येव, तेषां सर्वगुणोपसंहार इति केषांचिदधिकारिणामनुपसंहार मभ्युपगम्य, शक्तानांतु संभवत्येव सर्वगुणोपसंहार इति गूढाशयेन परिहरत्सूत्रमुपन्यस्येत्यर्थः । एतेन — यद्यभ्युपगमः न तर्हि परिहारः, यदिपरिहारः न तर्ह्यभ्युपगम इति, अभ्युपगमश्च परिहारश्चेति मातावंध्येतिवद्व्याहतमिति परास्तम् । अभ्युपगमपरिहारयो

१. 'अन्यथात्वंचे' त्युत्तरसूत्र टी०. प्र०.धा०. ।

२. कतिपयेति ॥ अयंभावः – 'आत्मेत्येवोपासी' तेति श्रौताऽऽत्मशब्द प्रतिपाद्यगुणे कतिपयत्वस्य विद्यमानत्वात् कतिपयगुणमात्रोपसंहारे श्रुति तात्पर्य नतु आत्मत्वमात्रोपासन इति पूर्वपक्षिहृदयमिति एवमर्थउक्तः । ३. 'अन्यथात्वंच' ति सूत्र टी०. प्र०. धा०. । ४. विधिविषयभूतायाः । ५. आत्मत्वेति ॥ अभिधावृत्त्योपास्थितात्मत्वगुणोपसंहारस्य विधिविषयत्वकल्पनंन्याय्यं नतुलक्षणयोपस्थितस्य. ततश्चप्रकृतेलक्षणाश्रयणं नयुक्तमितिभावः । ६. 'कतिपये' त्यादिनोक्तदिशायस्यकस्यापिगुणस्योपसंहारेणापिशास्त्रार्थः कृतोभवतीति आत्मत्वोपसंहारस्यकर्तव्यतानियमाभावेन तस्यत्यागप्रसङ्ग इतिभावः । ७. 'अन्यथात्व' मिति सू०. टी०. प्र०. धा०. असौ – सर्वगुणोपसंहाराभावः । ८. आत्मेत्येवे'ति प्रमाणसिद्धत्वं पूर्वपक्षिणोक्तमित्यर्थः । ९. 'नवाप्रकरणे' (३-३-८) ति सूत्र०. टी०. प्र०. धा०. । १०. 'उपसंहारानुपसंहारयोः भिन्नाधिकारिकत्वेन । ११. एतेनेत्युक्तेस्तात्पर्यंव्यनक्ति – अभ्युपगमेति ॥ अनयोर्व्याहतिहेतुभूतानुपसंहारोपसंहारयोर्भिन्नाधिकारिकत्वाङ्गीकारादित्यर्थः ।

भिन्नविरप्यत्वांगीकारात् । **नचासौकर्तव्य इति** ॥ अशक्तेनेत्यर्थः । **यद्येकैकस्येति** । यदि कस्मिंश्चिदुपासने कस्यचिदधिकारः, कस्यचिन्नेत्येवंरूपो विभागो न स्यात् — अपितु सर्वेषांसर्वगुणोपासने ऽधिकारःस्यात्, तर्हि प्रकरणानि न भिद्येरन्निितिभावः। ननु — भवेदयंप्रकरणभेदः सर्वगुणोपसंहाराभावस्य ज्ञापकः, यद्येकैकस्मिन्प्रकरणे सर्वगुणानामुक्तिरसंभाविितास्यात्, नचैवं — 'काकेभ्योदधिरक्ष्यता' मित्यादौ काकमात्रग्रहणेऽपि उपलक्षणतया मार्जारादिग्रहणवत्, तत्तत्प्रकरणेषु शब्दविशेषसद्भावेऽपि उपलक्षणतया सर्वगुणग्रहणसंभवात् सर्वोपसंहारोपपत्तिरितिभावेन शङ्कते — **नन्विति** ॥ **सएषपरोवरीयानिति** ॥ अस्मिन्प्रकरणेतावत् यावन्तोगुणाः श्रूयंते तेषामेव ग्रहणम्, नोपलक्षणतया सर्वगुणानां ग्रहणमित्यभ्युपगन्तव्यम्, अन्यथा — परोवरीयः शब्देनैव उद्गीथत्वादीनामपि ग्रहणसंभवेन उद्गीथ इत्यादिशब्दवैय्यर्थ्यप्रसंगात्। अनेनैवन्यायेन सर्वाण्यपि प्रकरणानि स्वरसलभ्यगुणपराण्येव नोपलक्षणतया सर्वगुणपराणीतिभावः। **सूत्रयोजनातु** — न वा सर्वगुणोपसंहारः कार्यः प्रकरणभेदात्, तत्रप्रकरणं प्रतिपाद्यतयापरोवरीयस्त्वादि मात्रवदिति । अत्रसूत्रे मतुपोमकारस्य वकारश्छान्दसः। **उक्तमाक्षिप्यसमादधदिति** ॥ पूर्वोक्तमनुपसंहारमाक्षिप्य, उत्तमाधिकारिणामुपसंहारमंगीकृत्य, असमर्थपुरुषविषयमनुपसंहारं समादधत्सूत्रमित्यर्थः। एतेन — 'संज्ञातश्चे' दितिसूत्रे ऽनुपसंहारसमर्थनादर्शनात् 'आक्षिप्यसमादध' दित्ययुक्तमितिपरास्तम्। साँक्षादनुपसंहारसमर्थनाभावेऽपि उपसंहारस्तूत्तमानास्यादिति गूढाशयेनोपसंहारांगीकारेणाऽसमर्थानामनुपसंहारस्यसूचनात्। **सर्वविद्यानां ब्रह्मनामत्वेनेति** ॥ यद्यपि — अत्र वेदोक्तसर्वगुणोपसंहारं साधयता पूर्वपक्षिणा गुणाभिधानस्यचोपसंहारार्थत्वादुपसंहारः कार्यइत्येव वक्तव्यं नतु सर्वविद्यानां भगवन्नामत्वं तत्सा

---

१, २, ३, ४. 'नवाप्रकरणे' ति सूत्रटी०. प्र०. धा. । ५. मात्वविशिष्टमित्यर्थः । एतेन – परोवरीयस्त्वादितिमतुबन्तमिति सूचितम्–तर्हि स्त्वादिमदिति निर्देशेनभाव्यमिति शङ्कांवारयति – अत्रसूत्र इति ॥ ६. 'संज्ञातश्चे' (३-३-९) दितिसूत्र टी०. प्र०.धा०. ७. एतेनेत्युक्तहेतुं विवृणोति – साक्षादिति ॥ ८. 'संज्ञात' इति सूत्रटी. प्र. धा. ।

ध्ये वेदानां भगवद्गुण प्रतिपादकत्वे विवादाभावात्, विवक्षितेचोपसंहारकर्तव्यत्वे तस्यहेतुत्वाभावात्। तथापि — कर्मकांडस्य कर्मपरत्वेन भगवद्गुण प्रतिपादकत्वाभावात् न सर्ववेदोक्तगुणोपसंहारः कार्य इति तटस्थाऽऽशंकानिवृत्तये सर्वस्यापि वेदस्य भगवद्गुण प्रतिपादकत्वं समर्थयितुं सर्वविद्यानांभगवन्नामत्वेनेत्युक्तमितिबोध्यम्। ननु 'सोहं नाम विदेवास्मिनात्मवि' (छा०. ७ - १ - ३) दिति पाठबलेन सर्वविद्यानां ब्रह्मनामत्वव्युत्पादनमयुक्तम्, 'सोहंमंत्रविदेवास्मी' (छा०. ७ - १ - ३) ति पाठबलेन मंत्रत्वावगमात्। नच भाष्योदाहृतपाठबलेन मंत्रविदितिपाठगतमंत्रपदस्यापि नामत्वमेवार्थ इति युक्तं वैपरीत्यस्यापि संभवादित्यतआह -- यद्वैकिंचैतदिति ॥

**पूर्वपक्षस्तु** — नेश्वरः सर्ववेदोक्तगुणोपसंहारेण ध्यातव्यः, अशक्यत्वात्। ततश्च तदर्थमोपाद्यं सर्वज्ञानंव्यर्थमिति ॥

**सिद्धान्तस्तु** — सर्ववेदार्थानां आनंदादिगुणानामपहतपाप्मत्वादिदोषाभावानांच केषांचिदुपसंहारः केषांचिन्नेति विभागमकृत्वोपसंहारेण परमात्मा ध्यातव्यः। 'सर्वेगुणाः सर्वदैवह्युपास्या' इति विहितत्वात्। अन्यथा विहितसंध्यावंदनाद्यकरणे प्रत्यवायवत् प्रत्यवायः स्यात्। ननु — किं वेदप्रतीताः सर्वेऽपिधर्मा उपसंहर्तव्याः, न, वेदतात्पर्यविषयीभूताएवोपास्याः, नत्वतात्पर्यविषयीभूताः, 'सोरोदी' दित्यादिना प्रतीता रोदनादयः; दुःखकार्याणां तेषां परमेश्वरेऽयोगात्, अयोग्योपासनस्यानर्थहेतुत्वात्। ननु — 'आत्मेत्येवोपासीते' ति गुणान्तरोपसंहारनिषेधेन आत्मत्वमात्रोपासनस्य विहितत्वात्सर्वगुणोपसंहारे विहितक्रियालोप प्रसंग इतिचेत्, न — एतेगुणा नोपसंहर्तव्या इति विशेषप्रमाणाभावात्। 'सर्वैगुणैरेकएवेशितासावुपासितव्यो नतु दोषैः कथंचि' दिति वि-

१. नामत्वं=नामपरत्वम्। २. 'सोहंमन्त्रविदेवास्मी' ति पाठबलेन 'नामवि' दित्यत्रत्यनामपदस्यमन्त्रपरत्वमेवेति वैपरीत्यस्येत्यर्थः। ३. 'संज्ञात' इति सूत्र टी. प्र. धा.। ४. संपाद्यम्। ५. 'अन्यथात्व' मिति सूत्र सिद्धमर्थमाह — नन्वित्यादिना।
६. श्रुतावेवकारस्यान्ययोगव्यवच्छेदार्थकतया आत्मत्वातिरिक्तगुणोपसंहारानिषेध इतिभावः।
७. गुणान्तराऽनुपसंहारस्यविहितत्वंतु एवकारस्यान्ययोगव्यवच्छेदकत्वासिद्धम्।

शेषवचनाच्च । निरवकाशैतच्छ्रुतिविरोधादेव 'आत्मेत्येवोपासीते'(बृ.३-४-७)त्यवधारणस्याऽनात्मत्वरूपदोषव्यवच्छेदकत्वमेव नतु गुणांतरव्यवछेदकत्वमिति तदपि नाऽनुपसंहारेप्रमाणम् । अथवा — पुनरस्त्वनुपसंहारएवं सर्वगुणानां प्रकरणभेदात्, अन्यथा — प्रकरणानि न भिद्येरन्, सर्वाण्यपि प्रकरणान्युपलक्षणतया सर्वगुणपराणीति सर्वोपसंहृतिः कार्यैवेतिनमंतव्यम्, परोवरीयस्त्वादिप्रकरणस्य श्रूयमाणगुणमात्रपरत्वात्, अन्यथा — एकेनैवशब्देन सर्वगुणोपलक्षणसंभवेनोद्गीथादिशब्दवैयर्थ्यंस्यात् । नंनु — कर्तव्यएवसर्वगुणोपसंहारः सर्ववेदानां भगवन्नामत्वेन गुणाभिधायित्वात्, गुणाभिधानस्यच ध्यानार्थत्वादितिचेत्, अस्तु अस्माभिरपि सर्वगुणोपसंहारस्योक्तत्वेनेष्टत्वात् । 'नामवा एता ब्रह्मणः सर्वाविद्या तस्मादेकः सर्वैर्गुणै र्विचिंत्य' इति कौंडिन्यश्रुतौ विहितत्वेन प्रामाणिकत्वाच्च । अतः सर्वगुणोपसंहारस्य कर्तव्यत्वात् सार्थकमेव सर्वपरिज्ञानमितिसिद्धम् ( अ०. २ )



( ३ - अधिकरणम्, )

## ॐ प्राप्तेश्चसमञ्जसम् ॐ ( सू. १० )

**कर्तव्यतासमर्थनादिति** ॥ प्रागधिकारिभेदस्य व्यक्तमनुक्तत्वेन वक्ष्यमाणाभ्यधिकाशंकाप्राप्तिसद्भावादितिभावः । प्राक्संक्षेपेणोक्तस्यइह विस्तरेणाऽभिधानाद्भिन्नाधिकरणता । तदुक्तम् — 'संक्षेपविस्तराभ्यांच प्रवदन्ति मनीषिणः। बहुवारस्मृतेस्तस्यफलबाहुल्य कारणा' दिति । **नियामकाभावादिति** ॥ ननु— शक्तयशक्तयोरेव नियामकत्वेन कथंनियामकाभाव इतिचेत्, — कृच्छ्रेणाऽनुष्ठाने सर्वेषां शक्यत्वात् अन्यथा सर्वेषामशक्यत्वात् ॥

१. 'सर्वैर्गुणै' रि ति श्रुतीत्यर्थः । २. 'आत्मेत्येवे' ति श्रुति वचनम् । ३. 'नवाप्रकरणे' ति सूत्र सिद्धमर्थमाह — अथवेत्यादिना ॥ ४. एवेति ॥ सर्वेषामितिशेषः । ५. कार्यैवेति ॥ सर्वैरित्यादिः । ६. स्यादिति ॥ अनुपसंहारोऽशक्तविषय, उपसंहारः शक्तविषय इति टीकाक्षरार्थ निरूपणावसरे ग्रन्थकृता व्यवस्थाकृता । ७. 'संज्ञातश्चे' ति सूल सिद्धमर्थमाह — नन्विति ॥ ८. 'उपसंहाराधिकरणे (३-३-२) ९. अत्रैवाधिकरणेटीकाकृता 'तथाही' त्यादिनावक्ष्यमाणेत्यर्थः । १०. प्रकारद्वयेऽपि अनुपपत्तिरित्यभ्यधिकाशङ्केत्यर्थः । ११. 'कृत्यानांकर्तरि वे ( पा०. सू०. २-३- ) ति कर्तरिषष्ठी।

वरुणयोराचारदर्शनात् यदि श्रवणाद्यावृत्तिः, तर्हि - इन्द्रेण शतवारं अश्वमेध स्याऽनुष्ठितत्वात्तदाऽऽवृत्तिरपि कर्तव्यास्यादितिचेत् सत्यम् इन्द्रः शतवारमश्वमेधं करोति, तथापि - नसर्वसाधारण्येन प्रवृत्ताऽश्वमेधविधिचोदितःकरोति, किंनाम - इन्द्रगणस्थानधिकृत्य इन्द्रपदप्राप्तयेऽश्वमेधावृत्त्यभिधायकविधिचोदितः करोति, एवं च - तदनुष्ठानं प्राणिनामश्वमेधाद्यावृत्तौ न लिङ्गम्, विध्यंतरप्रयुक्तत्वात् तदनुष्ठानस्य । प्राणिनां च तद्विध्यनधिकारित्वात् । भृगोराचारस्तु 'श्रोतव्यो मन्तव्य' [ बृ. ४-४-५ ] इति विधिप्रयुक्त इति एतद्विधिबोधितश्रवणाद्यावृत्तौ तदाचारो लिङ्गमिति न किंचिदनुपपन्नम् । यद्यपिउपदेशोपि लिङ्गमेव, तथापि - पूर्वसूत्रोक्तोपदेशो गुरुव्यापारः, 'लिङ्गाच्चे' (ब्र. ४-१-२) ति सूत्रोक्तमावर्तन मपरोक्षज्ञानसाधकस्य पुरुषस्य व्यापार इत्यतिशयितमितिज्ञापनाय विशिष्य 'लिङ्गाच्चे'ति लिङ्गत्वमुक्तमिति द्रष्टव्यम् ।

**पूर्वपक्षस्तु** - सकृदेव श्रवणादिकमनुष्ठेयं तावतैव विधिपर्यवसानात्, अन्यथा - सकृदेव ज्योतिष्टोमादिकमनुष्ठायकृतीनस्यात्, एवंच - विहित - श्रवणाद्यनुष्ठानेन ज्ञानाऽदर्शनात् विधेरप्रामाण्यात् प्रमाणान्तरस्याप्यभावात् न श्रवणादि ज्ञानसाधनमिति.

**सिद्धान्तस्तु** – आवृत्तिरेव श्रवणादीनां फलहेतुः, न सकृदनुष्ठानम, अपरोक्षज्ञानासिद्धये उद्दालकेन [छा०. ६.] नवकृत्वउपदेशात् । 'सतपो तप्यत । पुनरेववरुणं पितरमुपससार' [तै. उ. ३-२-१] त्यावर्तनलिंङ्गाच्च । ततश्च श्रवणाद्यावृत्तौ नियमेन फलोपलंभेन तद्विधेः प्रामाण्यात् श्रवणादिकं ज्ञानसाधन मिति सिद्धम् [ १. अ. ]

[ २. अधिकरणम् ]

## ॐ आत्मेतितूपगच्छन्ति ग्राहयन्ति च ॐ ( ३ )

**आत्मत्वोपासनस्येति** ॥ उपलक्षणमेतत्, उपदेशस्येत्यपिग्राह्यम् । एवमेव संदेहे पूर्वपक्षे च द्रष्टव्यम् ।

**पूर्वपक्षस्तु** = न नित्यश आत्मत्वस्य उपदेश, उपासनं च, कार्यम्, अतिप्रसिद्धत्वात् , किंतु - अप्रसिद्धस्यैव कस्यचित्गुणस्य, ततश्च न तत्र वेदस्य महातात्पर्यं युक्तमिति ।

**सिद्धान्तस्तु** – विष्णुरात्मेत्युपदेश, उपासनंच, नित्यशः कार्यं मोक्ष साधनाऽभिज्ञैस्तथानुष्ठीयमानत्वात् तत्कुत इतिचेत् , ' नान्यं विचिन्तय' इत्यादि श्रुतेः, ' आत्मेत्युपासनं कार्य'मितिस्मृतेश्च । नच - प्रसिद्धत्वादनुपास्यत्वं - उपासनस्य फलहेतुतायाः प्रामाणिकत्वेन प्रसिद्धेरप्रयोजकत्वात् । नहि राजप्रीति साधनमतिप्रसिद्धत्वात् राजप्रीत्यर्थिभिः न वर्ण्यते, येनेहतथास्यात् अतोविष्णोः स्वामित्वस्य सदासर्वथोपास्यत्वात् युक्तं तत्र वेदानां तात्पर्यमिति सिद्धम् ॥२॥



[ ३ – अधिकरणम् ]

## ॐ न प्रतीके न हि सः ॐ ( ४ )

**भगवज्ज्ञानसाधनस्येति** ॥ यद्यपि प्रतीकैक्योपासनवर्जनं न भगवज्ज्ञानसाधनम् , किंतुश्रवणादिकमेव, तथापि - प्रतीकैक्योपासनस्य भगवद्दर्शनविरोधित्वात तदभावस्य कारणमात्रत्वात् , कारणमात्रे तस्मिन् साधनत्वोपचारः कृत इति बोध्यम् । **यथाखल्विति** ॥ यथा - आत्मत्वोपासनं समर्थितं, तथा प्रतीके ब्रह्मभेदे विद्यमानेपि ब्रह्मत्वोपासनसमर्थनसम्भवादित्यर्थः । एतेन – यथा समर्थितं तथा संभवादित्यस्याऽनन्वय इति परास्तम् ।

**भाष्ये – नामब्रह्मेत्युपासीतेति** ॥ अत्र शाखान्तरस्थः पाठोबोध्यः । एतेन - छान्दोग्ये ' नामोपास्वे'ति पाठदर्शनात ' ब्रह्मोपासीते'त्यभिधानमयुक्तमितिपरास्तम् । **नामब्रह्मेत्यादिनेति** ॥ भाष्यानुसारेण शाखान्तरस्थ वाक्यग्रहणमिदमिति बोध्यम् । **प्रथमादिविभक्तेरिति** ॥ यद्यपि - शाखान्तरे

'नामब्रह्मेत्युपासीते'ति प्रथमांततयापाठोस्ति, तथापि — तत्समानार्थक 'नामोपास्वे' (छा० ७ - १ - ५)ति छांदोग्यवाक्यव्याख्यानायाऽऽदिग्रहणम्। अत एव 'सप्तमुप्रथमे'त्येवसूत्रे उदाहर्तव्ये सप्तमु द्वितीयेति सूत्रान्तरमुदाहृतमिति द्रष्टव्यम् । उभयोर्नामादि ब्रह्मपदयोरिति ॥ शाखान्तरपाठाऽभिप्रायेण नामादिपदानां प्रथमान्तत्वमुक्तमितिबोध्यम् । एतेन - छांदोग्ये 'नामोपास्व, वाचमुपास्वे'त्यादीनां विस्पष्टं द्वितीयांतत्वात् प्रथमांतत्वाभिधानमयुक्तमिति परास्तम्.

**पूर्वपक्षस्तु** — प्रतीकं ब्रह्मतयोपास्यं 'नामोपास्वे'त्यादिविधीनां 'सयो मनो हि ब्रह्मे'ति पर्यालोचनया 'नामब्रह्मेत्युपासीते'ति शाखान्तरवाक्यपर्यालोचनया च प्रतीके ब्रह्मदृष्टिरिति तात्पर्याऽवगमात् । नच — प्रतीकब्रह्मणो र्भेदात्तथोपासनाऽसंभवः - उपासनायां फलस्यैव प्रयोजकत्वेन वस्तुतथात्वस्याऽप्रयोजकत्वात्, अतः प्रतीके ब्रह्मत्वोपासनस्य कर्तव्यत्वात् उक्तं स्वामित्वोपासनमयुक्तमिति ॥

**सिद्धान्तस्तु** — न प्रतीके ब्रह्मदृष्टिः कार्या 'नामोपास्वे' (छा०. ७ - १ - ४) त्यादिविधीनां प्रतीके ब्रह्मदृष्टयविधायकत्वात् प्रतीकस्याऽब्रह्मत्वेन मिथ्योपासाप्रसंगाच । न हि मिथ्योपासा फलहेतुः,अनर्थ हेतुत्वेन प्रमाणासिद्धत्वात् । कथं तर्हि उपासनाकार्येतिचेत् - तत्स्थत्वेनेतिगृहाण, द्वितीयाश्रवणात् कथमस्यार्थस्यलाभ इतिचेत् - महाव्याकरणमूलक 'सुपां सुपो भवन्ती'ति कात्यायनवचनेन द्वितीयायाः सप्तम्यर्थत्वात् । अतः प्रतीके ब्रह्मत्वोपासनस्याऽयोगादुक्तंयुक्तमितिसिद्धम् ॥ ३ ॥



( ४ — अधिकरणम् )

## ॐ ब्रह्मदृष्टिरुत्कर्षात् ॐ ( ५ )

**पूर्वपक्षस्तु** — ब्रह्मत्वं सदासर्वथानोपास्यम् उपासनंभगवत्प्रसादार्थं, सत्व

१ – 'सुपांसुलु' ७–१–३९ गिति पा० सूत्रस्थमिदं वचनम् .

प्रतिदिनं विविधगुणोपासनेनैवभवेदिति व्यर्थंब्रह्मत्वोपासनम् अतोब्रह्मत्वस्य सदोपास्यत्वाभावादुक्तमयुक्तमिति ।

**सिद्धान्तस्तु** – कार्यमेव सदासर्वथा ब्रह्मत्वोपासनं, यतस्तथोपासन एवहि ब्रह्म प्रसन्नंभवति । ननुब्रह्मत्वोपासनयोग्यानांतथोपासनमस्तु चतुर्गुणोपास कानां कथमितिचेत्, तैरपि आत्मत्वादिविशेषणतया ब्रह्मत्वोपासनंकार्यम् ' आत्मे त्येवयदोपासा तदाब्रह्मत्वसंयुते'तिवचनात् । अतः ब्रह्मत्वस्यविशिष्योपास्यत्वादुक्तं युक्तमितिसिद्धम् ॥ ४ ॥



## ( ५ – अधिकरणम् )

## ॐ आदित्यादि मतयश्चांऽगउपपत्तेः ॐ ( ६ )

**अन्यथेति** ॥ सूर्यादीनामितस्ततः संचारेपि भगवदंगाश्रितत्वमेवेत्यर्थस्य समर्थनद्वाराऽङ्गाऽऽश्रितत्वेनोपासनानियमसमर्थनाभावे भगवन्तमपहाय इतस्ततः संचारादेव नसर्वदा भगवन्नियम्यत्वमिति भ्रमापत्त्या प्रागुक्तमात्मत्वोपासनमयुक्तं-स्यादितिशङ्कास्यादित्यर्थः । **अतः सत्यपीति** ॥ कदाचिदाश्रयाश्रयिभावेसत्यपि तस्यसदातनत्वाभावेन तस्यसर्वथोपास्यत्वाभावात् तद्वत् कदाचित् स्वामिभावेसत्यपि सदातनत्वाभावान्नात्मत्वोपासनमावश्यकमित्यर्थः ॥

**पूर्वपक्षस्तु** — न सदासर्वथातथोपासनंदेवैः कार्यं सूर्यादीनामितस्ततः संचरणेन सदाभगवदंगाश्रितत्वाभावात् , तथापि- उपासनेऽन्यथोपासनत्वेनाऽनर्थ-प्रसंगात्, सत्त्वादिगुणान्तरेष्वस्वाश्रयत्वेन भगवदुपासने विशेषकारणाभावाच्च । अत आश्रयाश्रयिभावस्याऽसदातनत्वेन सर्वथोपास्यत्वाऽभावात् , तद्वत् सदात-नत्वाभावेन नाऽऽत्मत्वोपासनमावश्यकमिति ।

**सिद्धान्तस्तु** -- ' चक्षोः सूर्योऽजायते' ( तै०. अ०. ४. ) त्यादि

ना यदुक्तंस्वाश्रयत्वेन भगवदंगोपासानं, तत्, आदित्यादिदेवैः सर्वथाकार्यमेव, मुक्तौ तत्रलयस्याऽपेक्षितत्वात्, नचमिथ्योपासनाप्रसंगः - रूपान्तरेणांगानां-स्वाश्रयत्वात्, अतस्तदुपासनस्यावश्यकत्वादुक्तमात्मत्वोपासनं युक्तमिति सिद्धम् ॥५॥



( ६ - अधिकरणम् . )

## ॐ आसीनः संभवात् ॐ ( ७ )

**सर्वथाऽपेक्षितंनवेति** ॥ सर्वथापेक्षितमेववा, उत कृताकृतमितिसंदेह इत्यर्थः । **द्विविधेति**॥ द्विविधानि लोके साधनानिदृश्यंते, कानिचिदवश्यंभावीनि तद्यथापाककर्तुर्धान्यादीनि, कानिचित्कृताकृतानि, तद्यथातस्यैवदर्विपिठरादीनि, तदुभयदर्शनंसंदेहबीजमित्यर्थः । **नासनमिति** ॥ नासनंसर्वथाऽपेक्षितम्, अपितु कृताकृतमित्यर्थः । **तत्कृत्याभावादिति** ॥ तदावश्यकत्वापादकाऽनन्यसाध्यकृत्याभावादित्यर्थः । **तदुपदेशाप्रामाण्यमिति** ॥ पाक्षिकमनुपादानलक्षणमप्रामाण्यंस्यादित्यर्थः । **स्थातव्यमित्युपलक्षणमिति** ॥ यस्मिन्काले यस्मिन्नासने मनःप्रसादः सएवकालादिराश्रयणीयइत्यपिग्राह्यमितिभावः । **अस्मिन्नेवार्थइति** ॥ देशकालादिभिर्नध्यानेविशेषोभवति, नापितेन ज्ञानेविशेषोभवति, अतो यत्रैकाग्रता तत्रैवस्थातव्यमित्यस्मिन्नेवाऽर्थे स्मृतिमाहेत्यर्थः । स्मृतितएवसर्वस्याऽस्यलाभंदर्शयितुमाह – **अत्रापिपूर्ववदिति** ॥ देशकालादीनांकिमासनादिवत् ध्यानोपयोगितया आवश्यकत्वम्, उतप्रथममेव ज्ञानोपयोगित्वादित्यत्रापिविकल्पइत्यर्थः ॥

**पूर्वपक्षस्तु** -- नाऽऽसनंसर्वापेक्षितं किंतु कृताकृतं भगवद्दर्शनार्थंहि उपासनाद्यन्वेष्टव्यम् उपासनादिकंच विनाप्यासनं सिध्यति नचमनसः सम्यग्भगवद्विषयत्वसिध्यर्थमासनं, तेनविनापितत्सिद्धेः, कथमन्यथा 'स्मर्तव्यः सततं विष्णु'रितिसर्वदोपासनाभिधानंयुज्यते ततश्चासनस्याऽनावश्यकत्वात्तच्छास्त्रं-पाक्षिकमनुपादन लक्षणाऽप्रामाण्यं प्राप्नोतीति ।

**सिद्धान्तस्तु** – आसनयुक्तेनैव जिज्ञासुना विशेषत उपासनंकार्यं,सत्येवा सने उपासनस्यसम्यक्संभवात्, नचैतावतासर्वदोपासनाभावइतिमंतव्यं, ध्यानार्थमेवोपासनैनियमाभिधानात्, उपासनंद्विविधं स्मरणंध्यानंचेति, तत्रस्मरणंसर्वदा योग्यंविज्ञेयं, ध्यानोपासनंतु आसनएवेति । ननु -- न ध्यानार्थमप्यासननियमः, तत्साध्यस्यचित्तविक्षेपपरिहारस्य प्रत्याहारादिनापि संभवादितिचेन् - न, चित्तविक्षेप परिहारस्य आसनसाध्यशरीराचलत्वमपेक्ष्यैव प्रत्याहारादिना साध्यत्वात्, 'समंकायशिरोग्रीव'(गी०-६ १ ३)मितिस्मृतेश्च।नन्वेवंतर्हि 'पर्वताग्रेनदीतीर' इत्या दिवचनात् देशकालादिनियमोऽप्यंगीकार्य इतिचेत्, न - मनःप्रसादार्थत्वाद्देशकालादिनियमस्य यत्रैकाग्रता तत्रैव स्थातव्यं 'तमेवदेशंसेवेते'त्यादेः, अत आसनस्याऽऽवश्यकत्वात् तदुपदेशावैर्थ्यमिति ॥ ६ ॥



[ ७ – अधिकरणम्. ]

## ॐ आप्रायणात्तत्रापिहिदृष्टम् ॐ ( १२ )

**प्रायणांतत्वसमर्थनादिति** ॥ ज्ञानात्पूर्वमिवज्ञानोत्तरमपि प्रायणपर्यन्तमावश्यकत्वसमर्थनादित्यर्थः । **मुक्तौतारतम्येति** ॥ ध्यानफलप्रयुक्ततारतम्याभावाऽप्रसंगादित्यर्थः । एतेन - ध्यानफलाभावेपि श्रवणादिफलेन तारतम्यसंभवात्, तारतम्याभावप्रसंगादित्ययुक्तमितिपरास्तम् । **ज्ञानसाधनत्वमिति** ॥ ज्ञान साधनत्वश्रवणं ज्ञानिनामपि ध्यानदर्शनं संदेहबीजमित्यर्थः । **नच – ज्ञानसाधनस्यापीति** ॥ ज्ञानसाधनस्याविध्यानस्य ज्ञानेन मोक्षेजनयितव्ये सहकारित्वस्यापिभावात् मोक्षपर्यंतं ध्यानमावश्यकमिति नवाच्यमितिभावः । **नचेति** ॥ ज्ञानसाध्यावरणनिवृत्तिरूपमोक्षे तस्याऽजनकत्वेपि आनन्दाऽतिशयरूपमोक्षजनकत्वात् ध्यानमावश्यकमितिनवाच्यमित्यर्थः । आनंदातिशयसाधनेषु ध्यानस्यप्राबल्यात् ध्यानमावश्यकमित्यतआह – **ज्ञानएवेति** ॥ ननु – ध्यानमानंदातिशयसाधनेषुप्रधानं ज्ञानसाधनेषुप्रधान-

त्वादित्यनुमानादावश्यकत्वसिद्धिरित्यतआह – **नहीति** ।। यस्यएकत्वप्राधान्यं तस्यसर्वत्वप्राधान्यमितिव्याप्त्यभावादित्यर्थः । **ध्यानंविनेति** ।। ध्यानंतावत् ज्ञानपर्यंतमावश्यकं, ज्ञानसाधनीभूतप्रसादहेतुत्वात्, यदिज्ञानानंतरं ध्यानमनावश्यकंस्यात् तर्हि ध्यानं न कुर्यात्, ततश्चेश्वरोऽबहुमानितः स्यात् एवंच सति-ईश्वरोऽपरोक्षज्ञानमेवनदद्यात्, नहि प्रेक्षावान यद्दानानंतरं स्वस्मिनबहुमानो गच्छति तद्ददाति, येनेश्वरोऽपरोक्षज्ञानाऽनंतरं स्वस्मिन् बहुमानापगमेपि अपरोक्षज्ञानंदद्यात्, ददातिचाऽपरोक्षज्ञानमिति प्रायणान्तं ध्यानस्याऽऽवश्यकत्वमवर्जनीयमितिभावः । एतेन – ज्ञानात्पूर्वमावश्यकत्वस्य ज्ञानोत्तरमावश्यकत्वाऽसाधकत्वात्, तत्सिद्धये ज्ञानात्पूर्वमावश्यकत्वसमर्थनमयुक्तमितिपरास्तम् । **तथापीति** ।। सत्यं, ज्ञानोत्तर ध्यानस्यानावश्यकत्वे 'ईश्वरोज्ञानमेवनदद्या'दिति तर्कबलात् ज्ञानपर्यंतमावश्यकत्वं ज्ञानोत्तरमावश्यकत्वस्यसाधकं, तथापि – मुक्तिपर्यंतमावश्यकत्वमित्ययं विशेषः कुतः प्रमाणादवगम्यते, आगमसहकृतस्यैवानुमानस्याऽर्थसाधकत्वादितिभावः । एतेन – श्रुतिबलाज्ज्ञानोत्तरं ध्यानस्यावश्यकत्वसिद्धावपि हेतोरप्रयोजकत्वाऽपरिहारात्तदुदाहरणमयुक्तमिति परास्तम्, तर्कस्य श्रुतिमूलत्वसिध्यर्थमेव श्रुत्युदाहरणस्याभिमतत्वात्, सिंहावलोकनन्यायेन 'यावन्मोक्षस्तावदुपासनादि कार्यमेवे'ति भाष्यगतादिशब्दस्यकृत्यमाह – **ज्ञानात्पूर्वमिति** ।। ज्ञानात्पूर्वंध्यानालाभे तत्सिद्धये श्रवणादेः कर्तव्यत्व दर्शनाज्ज्ञानोत्तरमपि ध्यानाऽलाभे तत्कर्तव्यतासिध्यतीति तत्संग्रहायऽऽदिशब्दप्रयोगइत्यर्थः । एतेन – ध्यानालाभे श्रवणादीत्यादिनैवपूर्णत्वात् शेषवैयर्थ्यमितिपरास्तम् । **मोक्षविरोधादिति** ।। निरवधिकध्यानस्य ज्ञानोत्तरंविहितत्वे मोक्षेपि विधिबन्धापत्त्या मोक्षत्वविरोधः स्यादित्यर्थः ।

**पूर्वपक्षस्तु** – मुमुक्षुणा न मोक्षपर्यंतंध्यानंकार्यं ध्यानस्यज्ञानसाधनत्वेनाऽभिहितत्वात्, नचाऽऽनंदातिशयार्थं तदितिवाच्यम् - तस्यतद्धेतुत्वाभावात्, अस्तुत्वातद्धेतुत्वम्, तथापि न नियमेन कार्यं, श्रवणादिनापि तत्संभवात्, ततश्च शुकादीनां ज्ञानिनां तदाग्रहवैयर्थ्यमिति ।

**सिद्धान्तस्तु** – कर्तव्यमेवज्ञानिना मोक्षपर्यंतं ध्यानं, तस्यज्ञानद्वारा ऽऽनंदातिशयेपि प्रधानसाधनत्वात्, तथाचश्रुतिः–'सयोहवै तद्भगवान् मनुष्येषु प्रायणांतमोंकारमभिध्यायीते' (प्र०. ५ - १) ति, 'शृणुयाद्यावदज्ञान' मित्यादिस्मृतेश्च, अतोमोक्षपर्यंतं ध्यानस्यकर्तव्यत्वेन ज्ञानिनामपि तद्विचित्रफलेन मुक्तौ तारतम्यसिद्धिरितिसिद्धम् ॥ ७ ॥



( ८ – अधिकरणम् )

## ॐ तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॐ (१३)

**उभयविधार्थदृष्टिरिति** ॥ लोके साध्यत्वेनाभिमतस्य साधकाः केचनाऽर्था दृष्टाः, अन्येपुनरसाधकादृष्टाः, इति दर्शनं संदेहबीजमित्यर्थ, **अनियतदेशकालेति** ॥ ननु – अनियतकालविपाकएव युगपत्कायव्यूहविरोधी नत्वनियतदेशविपाकः, युगपदनेकदेशेषु कायव्यूहसभवात्, ततश्च देशग्रहणं व्यर्थमितिचेत् -- सत्यम्, अनियतकालविपाकएव युगपदनेककायव्यूहविरोधी, तथापि -- छत्रिन्यायेननियतदेशविपाकोपि युगपत्कायव्यूहविरोधित्वेनोक्तइति ध्येयम् । **विप्रतिपत्तेरिति** ॥ दृष्टांतइतिशेषः । प्रायश्चित्तोक्त्यन्यथानुपपत्त्या कर्मक्षयनिश्चयइत्यतआह– **ब्रह्मेति** ॥ यथा -- गृहदाहानंतरं गृहदाहेश्यधिकारः, तथा ब्रह्महत्याप्राप्तौ द्वादशाब्दव्रताधिकार इत्यर्थकत्वात् न कर्मक्षयसिद्धिरिति भावः । **नहि ज्ञानस्येति** -- आशु विनाशित्वादितिभावः । **चार्थस्तुशब्द इति**॥ अनेन तदवधेस्त्विति तुशब्दसंबंधः सूचितोभवतीतिज्ञेयम् । **पूर्वकृतेति** ॥ ज्ञानात्पूर्वकृतमकाम्यं कर्म ज्ञानलक्षणकार्यायभवति, तदुत्तरकृतमकाम्यं कर्म ज्ञानकार्यमोक्षातिशयायभवतीत्येवमुभयोरपि मोक्षानुप्रवेशित्वादबंधकत्वम् अबंधकत्वाद्बंधानिवृत्तिरितिनव्याख्यामित्यर्थः। अत्र भाष्यं'तुशब्दाद्ब्रह्मदर्शनवत्'इति तच्छेषं

१. अत्राधिकरणे सप्तसूत्राणि २. 'अनारब्धे' (४ - १ - १५) ति सूत्रयिटीप्रतीकधारणम्. ३. 'अग्निहोत्रा' [४–१–१६] दितिसूत्रीयटी. प्र०. धा०.

**पूरयति 'इति तमन्यस्माद्विशिनष्टी'तिशेषः ॥** यस्याग्निहोत्रादि मोक्षानुभवायभवति, तमन्यस्मात्द्वेषिणः सकाशात् व्यावृत्तये 'तु शब्दात्ब्रह्मदर्शनवत' इति विशिनष्टीत्यर्थः। अनेन 'तु ब्रह्मदर्शनवतः' अग्निहोत्रादिमोक्षानुभवायैवभवति 'सएनमविदितोनभुनक्ती' (बृ०. ३-४-१४)ति तद्दर्शना'दितिसूत्रार्थउक्तोभवति। **भाष्ये उभयोरस्त्यागेनेति॥** उभयोः पुण्यपापयोः त्यागेन परित्यागोभवतीत्याशयेन एकेषां पाठोऽस्तीत्यर्थः

**पूर्वपक्षस्तु** – न ज्ञानेन मोक्षो, नापिद्वेषेणतमः, प्रागापादितकर्मणां भावात् । न च -- तानि ज्ञानविद्वेषजन्मनि भुज्यन्ते विभिन्नाऽनेक शरीरभोग्य फलत्वात् । नच कायव्यूहेन युगपद्भोगः -- विभिन्नदेशकालविपाकत्वात् किंतर्हि -- क्रमेणभोगः, -- नचक्रमेणसर्वकर्मणां भोगेन क्षयानंतरंसदसन्मोक्षावुपपद्येते बहुकालान्तरितयोर्ज्ञानविद्वेषयोर्जीर्णधान्यवत्क्षीणशक्तित्वेन मोक्षजनकत्वाऽसंभवात् । तद्भोगसमये पुनरनंतकर्मानुष्ठानेन कर्मावसानासंभवाच्च । नच -- ज्ञानद्वेषाभ्यामेवाऽभुक्तानामेव पुण्यपापानां क्षयः 'नाभुक्तंक्षीयतेकर्मे'तिस्मृति विरोधात् । नच -- प्रायश्चित्तेनेवाऽभुक्तकर्मणामेवज्ञानेन क्षयसंभवः-विप्रतिपत्तेः, गृहदाहे दग्धगेहेष्वधिकारवत् कृतपापानामेव द्वादशाद्धादिकर्माधिकारित्वाभिप्रायेण 'ब्रह्महाद्वादशाद्वंव्रतंचरे' दित्यादिवचनानां प्रवृत्तत्वेनकर्मक्षयार्थमप्रवृत्तत्वात्, अतोज्ञानद्वेषाभ्यां सदसन्मोक्षाऽसिद्धेरुक्तमयुक्तमिति ।

**सिद्धान्तस्तु** – संभवतएव ज्ञानद्वेषाभ्यां सदसन्मोक्षौ, 'तद्यथापुष्करपलाशआपोनाश्लिष्यंते ( छां. ४ - १४ - ३ ) तद्यथैषीकातूल' (छां.४-२४-२) मित्यादिनाउत्तरपूर्वाघयोरश्लेषविनाशौ ज्ञानेन संभवत इति श्रवणात् । तथा 'एवं सुकर्मणश्चापिपततस्तमसिध्रुव'मितिद्वेषिकृतपूर्वोत्तरपुण्ययोः द्वेषेणाविनाशाऽश्लेषौभवतइतिस्मरणात् । नचैवंसति ज्ञानद्वेषोदयानंतरमेव मोक्षापत्तिः । अप्रारब्धानामेव प्राचीनपुण्यानां विनाशांगीकारेण प्रारब्धभोगायविलंबनस्य-

१. - 'अग्निहोत्रा' ( ४-१-१६ ) सूत्राय टी. प्र०.

२. 'अतोन्य' ( ४-१-१७ )। दितिसूत्रस्थभाष्यम्.

भाव्यत्वात् । ननु — ज्ञानिकृतपूर्वोत्तरपुण्ययोरश्लेषविनाशौविद्येते, नवा, नाद्यः— इष्टविघातिनोज्ञानस्याऽपुरुषार्थत्वप्रसंगात्, द्वितीयेमोक्षाभावप्रसंगः, प्राचीनबहु पुण्यभोगसमये पुनः पुनः पुण्यानुष्ठानसंभवेनाऽपर्यवसानादितिचेत् अत्रवक्तव्यं किमकाम्यानां पुण्यानामश्लेषविनाशौपृच्छसि, उतकाम्यानाम्, आद्ये नेतिब्रूमः, नच तावता मोक्षाऽसंभवः प्राचीनपुण्यस्य ज्ञानजन्मन्युपयोगात् । उत्तरस्यतु ज्ञानकार्यमोक्षानुप्रवेशात, तदुक्तम् — 'नहास्यकर्मक्षीयते, अस्माद्ध्येवात्मनोयद्यत्कामयते तत्तत्सृजत' ( बृ०. ३ - ४ १५ ) इति। द्वितीयेतु — मुक्तावनुभव कारणादन्यत्, अप्रारब्धमनभीष्टं पुण्यंयत्तद्विनश्यति, अलेपश्चज्ञानोत्तरंक्रियमाणस्येतिब्रूमः । 'तस्यपुत्रादायमुपयन्ति, सुहृदः साधुकृत्यां, द्विषन्तः पापकृत्या'मितिवचनात् । नच — यदुक्तं ज्ञानिकर्मणोमोक्षानुप्रवेश इति नतद्युक्तं कर्मणो नाशशिरस्काल्पफलत्वादितिवाच्यं — ज्ञानिकृतस्याऽनंतफलत्वात्। तदुक्तं-' यदेवविद्ययाकरोतिश्रद्धयोपनिषदावा तदेव वीर्यवत्तरं भवती' (छा०.१-१ १०) ति । ननु — एवमपि -- ज्ञानिद्वेषिणोर्नमोक्षतमसी सिध्यतः प्रारब्धप्रतिबन्धक सद्भावादितिचेत् -- न, उभावपिज्ञानिद्वेषिणौ भोगेनप्रारब्धकर्माणिक्षपयित्वा ब्रह्मतमसीप्राप्नुतः, तदुक्तम — ' आरब्धपुण्यपापस्यभोगेनक्षपणादनु । प्राप्नोत्येव तमोघोरं ब्रह्म वा नात्रसंशय' इति अत उक्तयुक्तमितिसिद्धम् ॥ (अ. ८ ).

इति श्रीमत्सत्यनिधितीर्थश्रीचरण चरणाराधक

श्रीमत्सत्यनाथयतिविरचितायां तत्वप्राकाशिकाव्याख्याऽभिनवचन्द्रिकायां

**चतुर्थाऽध्यायस्य प्रथमः पादः.**



# अथ द्वितीयः पादः

## श्री गुरुभ्योनमः

[ १ - अधिकरणम् ]

## ॐ वाङ्मनसिदर्शनाच्छब्दाच्च ॐ ( १ )

**एतत्पादार्थंदर्शयतीति** ।। 'अध्यायस्यैकार्थत्वात्पादभेदः ।किंनिबन्धन-इत्यत: फलेष्यवान्तरभेदेनपादभेद उपपन्न इतिभावेने'तिवर्तते, तस्याऽनेनसंबन्धः। **उपासनावदिति** ।। उपासनस्य बहुगुणत्वेन चतुर्गुणत्वेनेत्यधिकारिभेदेनाऽनेक-प्रकारत्वेऽपि उपासनत्वेनैक्यसद्भावात् उपासनापादस्यार्थैक्यवत् इहापि 'स्वोत्तमप्रवेश उत्क्रमण'मित्यवान्तरभेदसद्भावेऽवि देहक्षयत्वेनैक्यसद्भावेन एका र्थत्वसंभवात् नपादभेदइतिभाव: । **तत्पूर्वकादिति** ।। वाचोमनोजन्यत्वोक्तिः तत्रलयसंभावकत्वात्सन्देहबीजम् । एवमुत्तराधिकरणेष्वपि द्रष्टव्यम् । **अनियम-इत्युक्तेति** ।। केषांचिज्ज्ञानिनांमोक्षः केषांचिन्नेति नियममपहाय ज्ञानिमात्रस्य-मोक्ष इत्युक्तनियमव्याघातइत्यर्थः । **अत्रखल्विति** ।। अत्रमनः पूर्वरूपंवागुतर-रूपं, वाक्पूर्वरूपं मनउत्तररूप' (ऐ.आ. ३-१-१) मितिश्रुतिभ्यां नकिंचिदुच्यते किन्तु -- मुनिमतविवादएवोच्यते तथाच — श्रुत्योर्व्यामिश्रत्वमितिभावः । प्रसंगा दृषिमतयोः किंवरमिति जिज्ञासायामाह — **तत्रेति** ।। वर्णदेवतात्वविषये ऋष्युक्तयोः साम्यमित्यर्थः । हेतुमाह — **अन्यतरेति** ।। अन्यतरपक्ष-स्वीकाराय श्रुत्या विशेषाऽनभिधानादित्यर्थः । ननु — द्वयोरपि ऋषिवचनयो-र्वर्णदेवताविषये साम्योक्तिरनुपपन्ना विरुद्धत्वादित्वेन अन्यतराऽप्रामाण्याऽवश्यं भावादित्याशङ्क्य निषेधति — **नचेति** ।। **तत्र** -- वर्णदेवताविषये । ऋषि वचनयोः -- **व्यामिश्रता** -- विरुद्धार्थभाषितानेत्यर्थः। गुणप्रधानभावविपर्ययेतु

---

१. अत्राधिकरणेद्वेसूत्रे. २. आनन्दमयाऽधिकरणस्थटीकातो ऽत्राध्याये प्रथमपादे ऽनुवृत्तमत्रापि अनुवर्ततइत्यर्थः । तत्र 'समन्वय' इत्यस्यस्थाने 'फले' इतिनिवेशितम् ।

पुत्रवचनमेवग्राह्यं नतु नामतः शूरवीरस्य माण्डूकेयस्य वचनं ग्राह्यमितिभावे नाह – **गुणप्रधानभावेत्विति ॥** पितापुत्रवचनयोः साम्यमेवनास्ति किम त्वतत्वमिति कुतः संदेहः स्यादितिभावः । कुतः पुत्रमतस्याविशिष्टत्वमित्यत आह – ※ **मनसावाअग्रे संकल्पयतीति॥ अस्तुवाच इति ॥** अस्तुवाचो मनोवशत्वं तथापि वाचोमनसि लयः कुतः प्रमाणादंगीकर्तव्यः, उपन्यस्तस्य तद्वशत्वस्य संभावकत्वमात्रेण तेनतन्निश्चयायोगादित्यर्थः । तद्वशत्वस्य संभावकत्व मेवकुतइत्यतउक्तं – **नियामकानामिति ॥** देवानामित्यर्थः । इदमुक्तंभवति – वाचोमनसिलयंप्रतिज्ञाय तत्सिद्धये वाचोमनोवशत्वमुक्तम् , नचेदं तन्निश्चायकं वाचोमनोवशत्वमिव नियामकानां बहुत्वेन अन्यवशतापिविद्यते । मनोवशत्वेन मनसि लयसाधने ऽन्यवशत्वेना ऽन्यत्रापि लयसिद्धिप्रसंगात् , ततोऽकामेनापि नेदंप्रमाणम् , अपितु संभावकमात्रमिति वक्तव्यम् । नच — संभावनामात्रेणार्थः सिध्यतीति प्रमाणस्याऽऽवश्यकत्वात् किं तत्प्रमाणं, कुतो वाचो मनसि लयः प्रतिपत्तव्य इति । अत्र वाङ्मनः शब्दाभ्या, सुमारुद्रयो, र्ग्रहणमित्ययुक्तं, तन्मोक्षस्यकल्पांतरभावित्वेन इदानींलयकथनाऽयोगादित्यत आह – **अत्रोमा शब्देनेति ॥** ननु -- प्राक् 'उमाशब्देन वारुणीसौपर्णीचो'च्यतइत्युक्तत्वात् 'इंद्रउमायामिति श्रुतावपि उमाशब्देनोभयोर्ग्रहणंकार्यं, तच्चाऽयुक्तमेकस्योभयत्र-लयाऽयोगादित्यतआह -- **अत्रेति ॥ अग्नेः[3] सूर्यद्वारेणेति ॥** उपलक्षणमेतत् , सूर्यस्यगुरुद्वारेणेत्यपिग्राह्यम्।**अयमत्रलयक्रमः**- द्वौमार्गौ, शेषमार्गोगरुडमार्गश्चेति, देवानुगानां कुबेरे, कुबेरवरुणयोः सोमे, सोमस्य विष्वक्सेनादीनांचा, ऽनिरुद्धे, अनिरुद्धस्य सनादीनांचकामे, कामस्य वारुण्यां,वारुण्याः शेषे लयइति शेषमार्गः। शिष्टानांदेवानामग्नौलयः, अग्नेः सूर्ये, सूर्यस्याऽऽकाशपृथिव्योश्च गुरौ, मनुष्याणांसर्वेषां पितॄणां निर्ऋतेश्च धर्मे, धर्मस्यस्वायंभुवव्यतिरिक्तमनूनां प्रियव्रतादीनांच मनौ, भृग्वादीनांदक्षे, गुरौ मनो र्दक्षस्य मरुद्गणानांच इंद्रे, इंद्रस्य-

---

※ ऐ. आ०. १. क्वचिट्टीकापुस्तके पदेनेतिपाठोदृश्यते । २. 'अतएवचे' (४-२-१) ति कथारणमिदम् । ३. क्वचिट्टीकायामग्नेस्त्वितिपाठोदृश्यते ।

सौपर्ण्यौ, सौपर्ण्योः सुपर्ण इतिगरुडमार्गः । सुपर्णशेषयोर्वाण्यां, वाण्याब्रह्माणि, ब्रह्मणस्तुपरमात्मनि लयो भवतीति ।

**पूर्वपक्षस्तु**— न वाक् मनसिलीयते उभयोः समत्वात्, नहिसत्यपिसाम्ये वाक्मनसिलीयतेनमनोवाचीत्यत्रनियामकमस्ति, नच साम्याऽसिद्धिः, 'मनः पूर्वरूपं वागुत्तररूप'मितिमनसः प्राधान्यमिव, 'वाक्पूर्वरूपं मनउत्तररूप'मितिवाचोऽपिप्राधान्यश्रवणात्, अतो वाचो मनसिलयाऽभावेन मोक्षाभावात् 'अनियम' (ब्र०. ३-३-१९ -- अ०. ३२ - सू.) इत्युक्त व्याघातइति ।

**सिद्धान्तस्तु** ॥ अस्त्येववाचोमनसिलयः, 'तस्ययावन्नवाङ्मनसिसंपद्यत' इतिशब्दात् । नच — सत्यपिशब्देऽसंभावितत्वात् नवाचोमनसिलयसिद्धिः-संभावितस्यैवसाधनार्हत्वादितिवाच्यम् प्रत्यक्षत एव वाचोमनोवशत्वदर्शनेन तत्र तल्लयस्यसंभावितत्वात् । नच 'वाक्पूर्वरूपंमनउत्तररूपम् ,मनःपूर्वरूपं वागुत्तररूप' मित्यभिधानादुभयोः साम्यमितिवाच्यम् -- अत्रहि पूर्वोत्तरवर्णदेवतात्वविषये गुण, प्रधानभावेच मुनिमतविवादएवोच्यते नस्वयंकिंचिदभिधीयते, येन तयोः साम्य मितिप्रतिपद्येमहि, तथापि द्वयोर्मुनिमतयोः किंग्राह्यमितिचेत् पूर्वोत्तरवर्णदेवतात्वविषयेमतद्वयमपि ग्राह्यं विशेषाऽनुक्तेः, प्राधान्यविषयेतु मनः प्राधान्यवादिनऋषि पुत्रस्यैव मतं ग्राह्यं, 'मनसावाअग्रेसंकल्पयति अथवाचाव्याहरती'तियुक्तयाच मनः पूर्वकत्वस्य विशेषश्रवणात्, प्रत्यक्षानुसारित्वाच्च, वाचोलयनिर्णयेपि नसर्वदेवानांमोक्षः लयानिश्चयादितिचेत्, 'अग्नौसर्वेदेवाविलीयंत' इतिश्रुत्या यथानुकूलं सर्वदेवतालयनिर्णयात्, ततश्च — युक्त एव ज्ञानिनांमोक्षनियमइति सिद्धम् ॥१॥



[ २ – अधिकरणम् ]

### ॐ तन्मनः प्राणउत्तरात् ॐ ( ३ )

तन्मनोग्रहणं शक्यमकर्तुं पूर्वसूत्रादनुवृत्तमनःशब्देनैवा ऽन्वयसंभवात् । ननु — तद्वै सप्तमीनिर्दिष्टं प्रथमानिर्दिष्टेनचेहार्थः, मैवम् — अर्थाद्विभक्तिविपरि-

१. तन्मनइति पदमित्यर्थः । २. विवक्षितार्थानुसारादित्यर्थः ।

णामसंभवात् । तद्यथा – ' उच्चानि देवदत्तस्यगृहाणि आमंत्रयस्वे'त्युक्ते एनमिति गम्यते, तथा — इहापि ' वाङ्मनसिदर्शनाच्छब्दाच्चे' [ ब्र. ४ २-१ ] त्युक्ता 'प्राणउत्तरादित्युक्ते मनः प्राणेलीयत इति गम्यत एवेतिचेत् सत्य, मिहाऽनुवृत्तिः संभवति, तथापि — मनोग्रहणं तावत्कर्तव्यम्, अन्यथा मनसीति सप्तम्यंत मनुवृत्य प्राणइतिप्रथमांतंकृत्वा मनसिप्राणोलीयते उत्तरात् ' मनः प्राण' [ छा०. ६·१५-१ ] इत्येतस्मादप्युत्तरात् अपवादतयातदूर्ध्वं पठितत्वेनप्रबलात् 'प्राणस्तेजसी' [छा०. ६-१५-१] तिवाक्यात् ' तैजसानींद्रियाण्याहु'रितितेज : शब्दवाच्ये मनसि प्राणस्य लयाभिधानात् इति भ्रमः स्यात्, मनःशब्दे पुनः क्रियमाणे नदोषोभवति, तद्ग्रहणमपिकर्तव्यम्, अन्यथा — रुद्रस्यापि मनः शब्दवाच्यत्वात् रुद्रस्यप्राणेलयोविज्ञायेत, तद्ग्रहणे पुनः क्रियमाणे नदोषोभवति' ' वाङ्मनसी'ति [ब्र. ४-१-१ ] पूर्वसूत्रे वाचोलयाऽधिकरणत्वेन यौ गरुड शेषौ प्रकृतौ तयोरेवेह ग्रहणमित्यवगमात्। **मनः शब्दस्याऽन्यपरत्वादिति ॥** ' मनोवाववाचोभूय' ( छा०. ७·३-१ ) इत्यत्र मनःशब्दस्य ' एवंतस्या विमुक्तौच पर्जन्यः सर्वतोवरः । मनोभिमानीसप्रोक्त'इति प्रमाणानुसारेण पर्जन्यपरत्वादित्यर्थः । **नच – स्मरशब्देनेति ॥** ' स्मरोवावा [आ] काशाद्भूया' (छा०. ७·३· ) नित्यत्र स्मरशब्देन रुद्रग्रहणमिति नवाच्यमित्यर्थः । **नच मनस इति ।** अस्तु तयोः साम्यम् तथापि मनसः प्राणेलयोयुज्यते तत्र लये तदुत्पन्नत्वस्यैव प्रयोजकत्वेन तदवरत्वस्याऽप्रयोजकत्वादिति न च वाच्यमित्यर्थः । कुतो न वाच्यमित्यतआह – **तत्प्रागिति ॥ अत इति ।** मनसो भगवतिलयस्य त्वयाऽनंगीकारात्, अङ्गीकृतस्य प्राणे लयस्याऽनुपपन्नत्वात्, ' अनियम' [ब्र०. सू. ३-३-३२] इत्युक्तहानिरित्यर्थः । एतेन – प्राणसमत्वात् प्राणेलयाऽसंभवेपि प्राणवद्भगवति लयसंभवात् उपपन्नोमोक्ष इति परास्तम् । प्राणस्यजन्मांतरसद्भावात् मुच्यमानस्य तत्र लयकथनमयुक्तमित्यतआह —

१. मनइतिपदम् । २. तदितिपदमित्यर्थः । ३. ' मनोवावे'ति वाक्यीय भाष्यो दाहृतप्रमाणेत्यर्थः । ४. प्राणवदिति ॥ 'तत्रतस्येवेति षष्ठ्यन्ताद्वतिः ।

**अत्र प्राणपदेनेति ॥** नाऽत्र चतुर्मुखग्रहणं संभवति, 'प्राणस्तेजसी' (छा०. ६-) ति प्रकृतौ लयश्रवणात् प्रकृतिलीनस्य च संसाराऽवश्यंभावा दितिचेत्, न – 'प्राणस्यतेजसिलयो मार्गमात्रमुदाहृत'मिति औपचारिक-लयांऽगीकारात्, तस्य च – संसारानापादकत्वादिति ।

**पूर्वपक्षस्तु** – न प्राणे मनोलीयते, तत्समत्वात्, दृश्यतेहिप्राणस्येव मनसोपि प्रवर्तकत्वम् । नच – तदुत्पन्नत्वात्तत्रलयः तस्य भगवदुत्पन्नत्वश्रवणात्, ततश्च – भगवति लयस्य त्वयाऽनंगीकारात्, अङ्गीकृतस्यप्राणे लयस्या-नुपपन्नत्वात्, न मोक्ष इत्युक्तमयुक्तमिति ॥

**सिद्धान्तस्तु** – लीयतएवमनः प्राणे, 'मनः प्राण'इतिश्रवणात्, । नच – समत्वात्तत्रलयोऽनुपपन्नइतिवाच्यम् । 'मनउदक्राम (ऐ०. उ-१-) दित्यादिनानीचोच्चभावश्रवणात् । नच – तदनुत्पन्नत्वात्तत्रलयाऽसंभवः, 'वायो-र्वावरुद्रउदेती'ति तस्य तस्मादुत्पत्तिश्रवणात् । नच — भगवदुत्पन्नत्वोक्तिविरोधः-प्राणद्वारा भगवदुत्पन्नत्वार्थकत्वात्, अतो मनसः प्राणेलयसद्भावादुक्तं युक्तमिति सिद्धम् ॥ २-अ०. ॥



[ ३. अधिकरणम् ]

## ॐ सोऽध्यक्षे तदुपगमादिभ्यः ॐ ( ४ सू. )

**तस्य तदधीनत्वेति ॥** अत्र नञो बुध्द्याविवेकेना ऽतदधीनत्वनिश्चया-दिति संबन्धोबोध्यः । एतेन — तदधीनत्वनिश्चयाभावे तत्रलयसंदेह एवस्यात्, नतु न तत्रलीयत इति पूर्वपक्षसिद्धिः स्यादितिपरास्तम् । 'चक्षुरादिव' [ब्र. सू०. २-४-११] दिति सूत्रे तदधीनत्वस्य निर्णीतत्वात् नाऽभाव निश्चय इत्याक्षिप्य निषेधति — **नचवाच्यमिति ॥ तस्येति ॥** प्राणस्य परमात्माऽनधीनत्वेपि श्रुतिसद्भावात्, नप्राणस्याऽधीनत्वनिश्चय इति भावः । **गत्यन्तरमिति ॥** प्राणस्य अनन्याधीनताप्रतिपादकस्य 'प्राणादिदमाविरासीत्,

प्राणोधत्ते प्राणेलयमभ्युपैति, न प्राणः किंचिदाश्रितः, यदाश्रयादस्यचेष्टा सोऽन्यं कथमुपाश्रयेत्, । यथा प्राणः तथा राजा सर्वस्यैकाश्रयो भवे'दिति वचनस्य 'अनन्येश्वरताप्राणे तदन्येश्वरवर्जना'दिति गतिरुक्ता । ततश्च – प्रतिप्रमाणस्यहीनबलत्वात् तदधीनतानिश्चयः संभवतीति नवाच्यमित्यर्थः । **वैपरीत्यस्यैवेति** । तदधीनताप्रतिपादकवचनस्य हीनबलत्वात् बहुत्वेन प्रबलैरनधीनतावचनैरनधीनत्वानिश्चय इति भावः । **नच — तदनिर्णयइति॥** अनधीनताप्रतिपादकबहुप्रमाणविरुद्धेन तदधीनतावचनेन न तन्निर्णय इति नवाच्यमित्यर्थः । तर्हि 'प्राणस्तेजसी' (छा०. ६-१४-१) तिश्रुतिः सर्वथा-मुख्यार्थैवेति जिज्ञासायामाह — **प्राणत्वइति** । हिरण्यगर्भस्यैव प्राणत्वावस्थायां तेजासिलयो ऽस्त्येवेति मुख्यार्थापिश्रुतिरितिभावः ।

**पूर्वपक्षस्तु** -- प्राणो न परमात्मनिर्लीयते, तस्याऽतदधीनत्वात् । नचवाच्यं 'चक्षुरादिव' (ब्र०. २-४-४४) दित्यादौ प्राणस्य तदधीनत्वमुक्तमिति, तस्याऽनन्याधीनत्वे बहुश्रुतिसद्भावात् । नच -- बहुबाधोयुक्तः, वैपरीत्यस्यैवोचितत्वात् । 'महान्तमस्यमहिमानमाहुरनयमानो यदनन्नमतीं'ति लयाभावोक्तेश्च, अतः प्राणस्यलयाभावात् न कस्यापि मोक्ष इति ।

**सिद्धान्तस्तु** – प्राणो हिरण्यगर्भः परमात्मनिलीयत एव, तस्य तदधीनत्वात् । नच -- तदनिर्णयः, निरवकाशबहुश्रुतिसद्भावात् । अनधीनत्वश्रुतीनांतु ईश्वरान्याधीनत्वाभावपरत्वेन सावकाशत्वात्, । ननु -- 'प्राणस्तेजसी'ति श्रुतेः कथं परमात्मनिलय इतिचेत् -- न, तच्छ्रुतेस्तेजसो द्वारमात्रपरत्वेन तत्र लयपरत्वाभावात् । तदुक्तम् 'प्राणस्य तेजसिलयो मार्गमात्रमुदाहृत'मिति । अतो विरिंचस्य लयसद्भावात् युक्त सर्वज्ञानिनां मोक्ष इति सिद्धम् ॥ ३ ॥



( ४ – अधिकरणम् )

## ॐ भूतेषु तच्छ्रुतेः ॐ ( ५-सू. )

**प्रागुक्तन्यायबाधः स्यादिति** ॥ 'अग्नौसर्वेदेवाविलीयन्त' इति उत्तमानामपि अग्नौ लयश्रवणात् तल्लये 'तदधीनत्वमेव प्रयोजक' मित्युक्तन्यायबाधप्रसंगात् समर्थनीयमेतदित्यर्थः । **किमिति** ॥ केचिदग्नौ, केचिद्भूतान्तरे, उत सर्वे अग्नावेवलीयन्त इतिसंदेह इत्यर्थः । **विपर्यय इति** ॥ भूतान्तरेपिलयइत्यर्थः । **येऽत्राविशिष्योक्तेभ्य इति** । वाङ्मनसी' [ब्र०. ४-२-१] त्याद्यधिकरणत्रयोक्तेभ्यः वारुणीशेषसौपर्णीसुपर्णचतुर्मुखेभ्यो ऽन्ये येदेवाः तेषां यथायोगं पंचस्वपिभूतेषु लयः, नतु अग्नावेवेतिनियम इत्यर्थः । यद्यपि – वारुण्यादिचतुर्णाम् इन्द्रादिवदस्तिवायौ देहलय इति, उक्तेभ्योऽन्येषां भूतेषुलय इति न वक्तव्यम्, तथापि – न भूताभिमानित्वं तद्देहलयप्रयोजकं, किंतु – प्राणत्वमेव, भूतेषु लयप्रतिपादक 'वरुणोऽश्विना'वित्यादिश्रुतौ 'वायाविन्द्र'इतिविशिष्योक्तेः, अन्यथा — वायाविन्द्रादय इत्यवक्ष्यत् इति भावेन विशिष्योक्तेभ्योऽन्य इत्युक्तम् ।

**पूर्वपक्षस्तु** — अग्नावेव सर्वेषांदेवानांलयो नतु — ऋभूणांपृथिव्याम्, अग्नीनामग्नौ, अश्विनोर्वरुणे, वायाविन्द्रस्य, साध्यानामाकाश इतिसिद्धान्त्यभिमतो विभागेनभूतेषुलयः, 'अग्नौसर्वेदेवाविलीयन्त'इतिश्रुतेः, विपर्ययेचप्रमाणाभावात्, अतोऽशेषदेवानामग्नौ लयादुक्तमयुक्तमिति ।

**सिद्धान्तस्तु** — नाऽग्नावेवसर्वेषांलयः विशिष्योक्तेभ्योऽन्येषां योग्यताऽनुसारेण तत्तद्भूतेषु लयः, 'भूतेषुदेवाविलीयन्ते'इतिश्रुतेः नचा'ऽग्नौसर्वेदेवा'इति श्रुतिविरोधः — 'भूते'ष्वितिनिरवकाशबहुवचनश्रवणबलेन पूर्वश्रुतेः संकोचनीयत्वात्, अतः सर्वेषामग्नौलयाभावादुक्तंयुक्तमितिसिद्धम् (४-अ)



१. 'नैकस्मि (४-२-६) न्नित्युत्तरसूत्रउदाहरिष्यमाणश्रुताविव्यर्थः।

( ५ - अधिकरणम् . )

## ॐ नैकस्मिन् दर्शयतोहि ॐ ( ६-सू. )

**अत्रपुनरिति** ॥ भवेदेवाऽग्नावेवसर्वदेवानांलयः, अग्नेर्भूतवायौ, भूतवायोश्चाकाशे, लयाङ्गीकारात् इत्यभ्यधिकाशंकापरिहाराय पुनः समर्थ्यत इतिभावः । **नचाऽश्विप्रभृतीनामिति** ॥ 'वरुणेऽश्विना'वित्युक्तावपि नाऽश्विप्रभृतीनां वरुणादौलयः तेषां वरुणाद्युत्पन्नत्वाभावात्। किंतु – वरुणादिशब्दएव तदुत्पत्तिस्थानस्य लक्षक इतिनवाच्यमित्यर्थः । **तेषामिति** ॥ अश्विप्रभृतीनां वरुणाद्युत्पन्नत्वाभावेपि वरुणादीनांस्वसमानाऽवादिदेवतालयस्थानत्वादुत्तमत्वेन-लयाऽसंभवाभावात् ।' वरुणेऽश्विना'वित्यादिविशेषश्रुतेश्च,विशेषवचनाभावेऽपवाद-काभावे यथाश्रुतस्यैव ग्राह्यत्वेन लक्षणास्वीकारायोगादितिभावः । एतेन – 'वरुणेऽश्विना'विति विशेषवचनबलादेवा ऽश्विप्रभृतीनां स्वसमानाऽवादिलयस्थानेवरुणादौ लयइतिवक्तव्यत्वेन विशेषवचनाभावेलयइतिकथनमयुक्तमितिपरास्तम् । विशेषवचनाऽभावइत्यनेना ऽपवादाऽभावे श्रौतार्थो नत्याज्य इत्यर्थस्यविवक्षितत्वात्। **अन्यथाव्याख्यानमिति** ॥ 'भूतेषुदेवाविलीयन्त'इतिश्रुते 'रग्नेर्वायौ' इत्यादिना कृतमित्यर्थः । मुक्तिप्रकरणत्वात्पूर्वश्रुतौ वायुग्रहणम्, उत्तरश्रुतौ मारुतग्रहणंचाऽयुक्तमित्यतआह — **अत्रवायुमारुतपदाभ्यामिति** ॥ **उक्तक्रमेणेति** ॥ 'इन्द्रस्यसौपर्ण्यां, सौपर्ण्याः सुपर्णे, सुपर्णस्यवाण्यां, वाण्याब्रह्मणि, इत्युक्तक्रमेणेत्यर्थः । अत्रश्रुतौ सोमआदित्यो, बृहस्पतिर्वायौ, लीयतइत्यर्थोऽभिमतः, तद्घटनाय सोमस्यशेषमार्गस्थत्वात्सोमस्य वायौलये द्वाराण्याह – **सोमस्येति** ॥ सूर्यस्यगरुडमार्गस्थत्वात् द्वाराण्याह – **सूर्यस्येति** ॥ 'मरुतोमारुत' इत्येतद्घटयति – **मरुतामिति** ॥ इन्द्रसौपर्णी सुपर्णवाणीद्वारेत्यर्थः । **अनुसर्गप्रतिपादनादिति** 'अनन्तरभाविसर्गोऽनुसर्गः सएव 'आकाशाद्वायु' (तै. उ. ३-१-२) रित्यत्र देवानामुच्यते नतु प्राथमिको मुख्यसर्गः सएवलयप्रयोजको नाऽनुसर्गइतिभावः । **निर्दिष्टानामेवेति**॥ 'अग्नावग्नय' इत्यत्र निर्दिष्टानामग्नीनामेवेत्यर्थः । ननु – अत्र निर्दिष्टानामेव

'अग्नौसर्वेदेवाविलीयन्त' इत्यनेनलयउच्यत इत्यनुपपन्नं, तथात्वे विशिष्या-ऽनुक्तानांलयाऽभावेन मोक्षो नस्यादित्यतआह — **उपलक्षणमेतदिति॥** 'अग्नावग्नय' इतिश्रुतिगत 'मग्नय'इतिपदं देवान्तरोपलक्षणमित्यर्थः । 'अग्नावग्नय' इतिश्रुते रुपलक्षणतया सर्वसंग्राहकत्वेन एतच्छ्रुत्युक्तानामेवा 'ऽग्नौसर्वेदेवा-विलीयन्त'इत्यत्र लयः प्रतिपाद्यत इत्युक्तिरुपपन्नेतिभावः ।

**पूर्वपक्षस्तु** — अग्नावेव सर्वेषांदेवानां लयः 'अग्नौसर्वेदेवाविलीयन्त' इतिश्रुतेः, । नच -- भूतेषुदेवाविलीयन्त'इतिश्रुतिविरोधः सर्वेषांदेवानामग्नौ, अग्नेर्वायौ वायोराकाशे लयांगीकारेण भूतेषुलयस्याऽङ्गीकृतत्वात्, अतो ऽग्ना-वेवसर्वेषांदेवानां लयइति अभमानामुत्तमेषु लयइत्युक्तव्यवस्था ऽनुपपत्तिरिति ॥

**सिद्धान्तस्तु** — एकस्मिन्नग्नावेवभूते सर्वदेवानांलयो न वाच्यः 'पृथि-व्यामृभवो विलीयन्ते, आकाशएव साध्या विलीयन्त'इतिश्रुतिभ्यांपञ्चस्वपिभूतेषु लयाऽभिधानात्, का तर्हि 'अग्नौसर्वेदेवाविलीयन्त'इतिश्रुतेर्गतिरितिचेत् एत-च्छ्रुतिबलेन सर्वशब्दंसंकुच्य अग्नौलययोग्यानामेव देवानां लयपरत्वमितिब्रूमः अतो ऽग्नावेव सर्वेषां लयाभावा दुक्तव्यवस्था युक्तेति सिद्धम् ॥ ( ५ - अ )



[ ६ — अधिकरणम्. ]

## ॐ समनांचा ऽसृत्युपक्रमादमृतत्वंचाऽनुपोष्य ॐ ( ७ )

**अस्तिशास्त्रादि संगतिरिति ॥** अस्याऽधिकरणस्य शास्त्रेणाऽन्तः-र्भावलक्षणा संगतिः अध्यायपादाभ्यां प्रासंगिकी संगतिरस्तीत्यर्थः । एतेन — प्रकृते विष्णौ लयाऽभावसाधनादस्ति शास्त्रादिसंगतिरित्ययुक्तं लयसमर्थनस्यैवा-ऽन्तर्भावप्रयोजकत्वेन लयाऽभावसमर्थनस्य तद्विरोधित्वादितिपरास्तम् । **उक्त-बाधइति ॥** अधिकारिणांप्राणाऽवसानत्वबाधः स्यादित्यर्थः । **भगवद्धी-**

१. अत्राधिकरणेऽष्टौसूत्राणि.

**नत्वं नित्यमुक्तत्वंचेति** ॥ प्रकृतेस्तावन्नित्यमुक्तत्वंश्रूयते नित्यमुक्तत्वंचोत्पत्तिलयादिविरोधि तथाभगवदधीनत्वंश्रूयते पराधीनस्य च लयोनियतः, एवंच— नित्यमुक्तत्वं पराधीनत्वंच विरुद्धम्, किमत्रतत्वमिति न जानीमइति विमर्शवतः सन्देहउपजायते किं भगवदधीनत्वात्प्रकृतिर्लीयतेइत्यभ्युपगन्तव्यम्, उतनित्यमुक्तत्वमिति. । एतेन — लयस्यमुक्तयर्थत्वात् नित्यमुक्तत्वदर्शनेच लयाऽभावनिर्णयात्सन्देहाऽनुपपत्तिरितिपरास्तम् । ननु — कामस्यरुद्राधीनत्वेऽपि तत्रलयाऽभावेन व्यभिचारान्नतदधीनत्वं तत्र लये प्रमाणं किंतु — संभावकं, नच संभावकनिरूपणमात्रेणाऽर्थः सिध्यतीति प्रमाणंवाच्यम्, नचाऽत्र प्रमाणमस्ति, ततो न प्रकृतिः परमात्मनिलीयत इत्याशङ्क्य निषेधति — **नचेति॥ तेजः परस्यां देवतायामिति॥** नवयं संभावकमात्रेणाऽर्थंसाधयामः, किंनाम — संभावनया, श्रुत्याचेतिभावः । **अन्यथेति ॥** श्रुत्यनादरइत्यर्थः । अत्रसूत्रे अनुपोष्याऽमृतत्वमुच्यते नचैतावता लयाऽभावः सिध्यति तन्मोक्षस्योपवासव्रतजन्यत्वनिषेधेपि श्रवणाद्युपासनासाध्यत्वाऽनिषेधात् इत्याशङ्क्य परिहाराय 'अनुपोष्ये'तिपदमनूद्य तल्लक्ष्यार्थमाह — **अनुषोष्येति ॥ कदापिसंसारइति ॥** कदापिसंसारसंबन्धाभावादित्यर्थः । संसारसंबन्धाऽभावादित्येतावतापूर्णे यत् 'कदापी'तिवचनं तत्सीताद्यवतारेषु दुःखश्रवणात् तदासंसारोऽस्तीति भ्रमनिरासायेतिबोध्यम् । एतेन — संसारस्याऽनादित्वेन संसारोपक्रमस्य क्वाप्यभावात् महालक्ष्म्या स्तदभावाऽभिधान मसंगतमिति परास्तम् । **परमपुरुषवत्सर्वगतत्वादिति ॥** परमपुरुषवदिति नित्यत्वविशेषणम्[1] । यथाहि — परमपुरुषस्य रामकृष्णादिसर्वरूपेणनित्यत्वम्, एवं — महालक्ष्म्याअपि सीतारुक्मिण्यादिरूपेण नित्यत्वादसंसार', नहि संसारिणोदेवदत्तादेः देवदत्तादिसंज्ञकदेहाऽवच्छिन्नतया नित्यत्वंविद्यत इतिभावः । एतेन — नित्यानामेवजीवानां संसारदर्शना त्संसाराऽभावसिद्धये नित्यत्वाऽभिधानं नयुक्तमितिपरास्तम् । ननु — अनेनवचनेन प्रकृतेः स्वातन्त्र्यपरिहारो नोपलक्ष्यते, ततश्च

१. 'तत्रतस्यैव' (पा०-५-१.) तिषष्ठ्यन्ताद्वतिः परमपुरुषस्येवेत्यर्थः ।

देशतः कालतश्चे'ति प्रमाणोदाहरणमयुक्तमित्यतआह — **एवंनित्यमुक्तत्वादि साम्येपीति॥ भाष्येद्विधाहीदमवदृश्यत इति ॥** इदम् = परब्रह्म, प्रकृति शद्वितंचेति वस्तुद्वयम्, द्विधादृश्यते = कथम् -- ऊष्मावदनूष्मावत् तत्रैकं परेंद्रियाऽभिभवशक्तिमत् अन्यत्तु ऊष्मावच्चाऽनूष्मावच्च दृश्यते, तत्रोष्मावत्परं ब्रह्म, तत्रहेतुमाह — **यन्नाजिघ्रन्तीत्यादिना ॥** अत्र प्रकृतिः — महा लक्ष्मीः, प्राकृतं — सीतारुक्मिण्यादि, अनूष्मावत् — ईश्वरेन्द्रियाऽभिभव-शक्तिविधुरम्, उपलक्षणमेतत् तदन्येन्द्रियाऽभिभवशक्तियुक्तंच उभयत्रहेतु-माह — **यन्नाजिघ्रन्तिजिघ्रन्तीत्यादिना ॥** तत्रेश्वरः स्वातंत्र्येण तदाघ्राणा-दिकं करोति, ऋजवस्तु तदनुग्रहएव साकल्येनजिघ्रन्ति, तदन्येतु महालक्ष्म्या ऽपहृतेन्द्रियशक्तयः साकल्येन नजिघ्रन्तीत्यर्थः ।

**पूर्वपक्षस्तु** — प्रकृतिः परमात्मनि लीयते 'तेजः परस्यांदेवतायां' (छा० ६-१५-१) मितिश्रुतेः, नच — असंभावितत्वात् 'उत्तानांवेदेवगवावह-न्ती'तिश्रुत्या देवगवानामुत्तानानां वहनाऽसिद्धिवत् प्रकृतेर्लयश्रवणेपि तदसिद्धि-रितिवाच्यम् — तदधीनत्वेसंभावितत्वात् ततश्च भगवतिलयसद्भावात् अधि-कारिणां प्राणावसानत्वोक्तिरयुक्तेति ।

**सिद्धान्तस्तु** — न प्रकृतिर्विलीयते नित्यमुक्तत्वात् कुतोनित्यमुक्तत्वं संसारसंबन्धाऽभावात्, तदपिकुतः — विभुत्वात्, परमात्मवत्सीतारुक्मिण्यादि-रूपेणाऽपि नित्यत्वाच्च । नहि मूलरूपवत्सीताद्यवताराणामपि नित्यत्वे गर्भ-वासादिरूपः संसारसंबन्धः संभवति । नच — एतावतासाम्यम् — प्रकृतौ-लीनस्य संसाराऽभिधानात् परमात्मनिलीनस्य मुक्तत्वाभिधानात् प्रकृतेरपि परमात्मनः सूक्ष्मत्वस्य, ज्ञानानंदादिपरिमाणाधिक्यस्यचा, ऽभिधानाच्च । नच-प्रकृतिपरमात्मनोः साम्यवचनान्यपिदृश्यन्ते, असाम्यवचनान्यपिदृश्यन्ते, ततो न किंचिदपि सिध्यतीतिवाच्यम् — ये तस्यविशेषगुणा ज्ञानानन्दादिपरिमाणा

---

१. 'नोपमर्देने' (४-२-१०) सूत्रीयटी०. प्र.

२. 'अस्यैवचे' (४-२-१५) ति सूत्रीयभाष्यप्रतीकधारणम्.

धिक्यादय स्तेषामनुपमर्देन नित्यमुक्तत्वादिना सा्म्याऽङ्गीकारे बाधकाभावात्। 'द्विधाहीदमवदश्यतऊष्मावदनूष्मावच्चे' त्यादिना किंचित्साम्योक्तेश्च 'असमोवा एषपर' इतिसाम्यप्रतिषेधात् न प्रकृते स्तत्साम्यमितिचेत्, न — शारीरा-देवाऽत्रसाम्यस्य प्रतिषिद्धत्वात् 'प्रकृतिर्वाविसमाऽसमे'ति स्पष्टमाध्यंदिनाय-नश्रुतेश्च, 'मत्स्यकूर्मवराहाद्या' इतिस्मृतेश्च, अतः प्रकृते नित्यमुक्तत्वादिना लयाऽभावात् युक्तं प्राणावसानत्वमधिकारिणामितिसिद्धम् ॥ (६-अ.)



[ ७ – अधिकरणम् ]

## ॐ तानिपरेतथात्याह ॐ ( १५ )

**उभयथासंभव इति** ॥ तथाहि — देवानांभूतेषुलयः, देव विशिष्टानां भूतानां प्राणे, सर्वदेवविशिष्टस्यप्राणस्येश्वरे लय इत्येकः प्रकारः, अस्मिंस्तुपक्षे भूतेषुलीनानांदेवानां परमात्मनिलयसंभवः । अपरस्तु — केषांचित्साक्षात्, अन्येषांतु — परंपरयेति सर्वेषां प्राणे लयः, प्राणस्तु स्वस्मिन्लीनान् देवान्बहिर्निष्कास्य स्वयमेकएव परमात्मनि लीनोभवति । तद्यथा — अमात्यो गजतुरगपदातिभि र्युक्तो राजद्वारपर्यन्त-मागत्य तान् बहिः प्रस्थाप्य स्वयमेकएव राजद्वारमाविशतीति, अस्मिं स्तुकल्पे न देवानांपरमात्मनि लयइति भूतेषुलयोक्तेरुभयथासंभवः सन्देहबीज-मित्यर्थः । **नदेवानामिति** ॥ न देवानांप्राणेनसह परमात्मनिलयः, अपितु-वाण्याः प्राणेलयपर्यन्तमेव सर्वदेवाऽनुवृत्तिः प्राणलयावसरेतु अमात्यभृत्यन्यायेन बहिर्भावइत्यर्थः । स्वोत्तमेषुलीनानां वाणीलयपर्यन्त मनुवृत्तौहेतुं, तथा प्राणलयकाले बहिर्भावेच हेतुं, प्रमाणोदाहरणपूर्वकमाह — **प्रतिबिम्बोहरि-रिति** ॥ अमात्यभृत्यन्यायेन प्रवृत्तं पूर्वपक्षं निषेधति — **नचेति** ॥

**पूर्वपक्षस्तु** — न देवा परमात्मनिलीयन्ते तत्प्रतिबिम्बत्वशून्यत्वात्, किंतु — प्राणे, तत्प्रतिबिम्बत्वात् श्रूयतेहि देवानां प्राणप्रतिबिम्बत्वं, परमात्म-

प्रतिबिम्बत्वाभावश्च, 'प्रतिबिम्बोद्दरेः प्राणः प्राणस्याऽन्याः कला' इत्यादिना, अतोहिरण्यगर्भेतरदेवानां हिरण्यगर्भप्रविष्टाना ममात्यभृत्यन्यायेन हिरण्यगर्भलयकाले वहिर्भावंकृत्वा तस्यैकस्यैव परमात्मनि लयात्, न देवानां मोक्षइति।

**सिद्धान्तस्तु** — देवाः प्राणद्वारा परमात्मनि लीयन्तएव तत्प्रतिविम्बत्वात्, 'सर्वेदेवाः प्राणमाविश्ये'ति श्रुतेश्च, अतो देवानां परमात्मनिलयसद्भावादुक्तं युक्तमितिसिद्धमिति ॥ (७-अ०.)

( ८ – अधिकरणम्, )

## ॐ अविभागोवचनात् ॐ [ १६ ]

**शास्त्रादिसंगतिरिति** ॥ शास्त्रेणाऽन्तर्भावलक्षणा, अध्यायपादाभ्यां प्रासंगिकी संगतिरित्यर्थः । **किं मुक्तौस्वतन्त्रा इति** ॥ यद्यपि -- मुक्तानां श्रूयमाणं सत्यकामत्वं किं मुख्यं, अथ भगवत्कामानुसारित्वादमुख्यमितिसंदेहः । मुख्यमेवेति पूर्वःपक्ष इत्यादिवक्तव्यम्, सूत्रे 'अविभाग' इति तस्यैव साध्यत्वोक्तेः ; भाष्ये 'परमेश्वरकामाद्यविभागेनैव तेषां सत्यकामत्व'मित्युक्तेश्च, तथापि — स्वतः सत्यकामत्वं स्वातन्त्र्यमेव नान्यदितिद्योतनाय स्वतन्त्रा इत्याद्युक्तम् । श्रुतिंचाह — **एतेदेवा इति** ॥ सत्यकामत्वस्वातन्त्र्ययोरभेदात्स्वातन्त्र्यसिद्धये सत्यकामत्वश्रुत्युदाहरणं युक्तमितिबोध्यम् । संसारित्वाविद्यमाना नियमेनभगवदिच्छया कामितप्राप्तिः कथं मुक्तानांस्यात् भगवत्संकल्पवैपरीत्येन कामनासंभवादित्याक्षिपति — **कथमिति** ॥ उक्ताऽऽशङ्कानिवर्तकत्वेन 'हृदया-द्धृदयंमृत्यो'रित्यंशंव्याचष्टे — **ईश्वरेच्छाया इति** ॥

**पूर्वपक्षस्तु** – मुक्ताः स्वतन्त्रा, न पराधीनाः मुक्तत्वात् 'एतेदेवा'इति सायुज्यभाजां सत्यकामत्वश्रुतेश्च अतो मुक्तानां स्वातन्त्र्यात्, परमेश्वरस्यसर्वोत्तमत्वोक्तिर्विरुद्धेति ।

---

१. क्वचित्टीकायामिच्छयेति पाठः ।

**सिद्धान्तस्तु** — परतंत्राएव मुक्ता, मुक्तत्वात् नहि स्वतन्त्रस्य संसारो युज्यते यतोमुक्तिर्नामस्यात्, नापि मुक्तौ स्वातंत्र्ये मुक्तिर्नाम घटते, नहि प्रेक्षापूर्वकारिणो निगडबद्धंस्वाधीनंसन्तं मुक्तौस्वातंत्र्यसंभवे मोचयन्ति, अपितु— मुक्तावपि स्वाधीनमेव येनेहमुक्तौ स्वतंत्रान् प्रेक्षापूर्वकारी परमेश्वरो मोचयतीति प्रतिपद्येमहि, नच — श्रुतिविरोधः, श्रुत्या परमेश्वरकामानुमारिकामित्वरूपपारिमाविकमत्यकामत्वस्यैवा ऽभिधानात् 'कामेनमेकामआगा' (तै०. ३-१५-४) दितिश्रुतेः, 'मुक्तानांसत्यकामत्व'मितिस्मृतेश्च, अतोमुक्तानां स्वातंत्र्याभावा त्परमेश्वरस्यैव सर्वोत्तमत्वमिति सिद्धम् ॥ (८- अ०.)

( ९. -- अधिकरणम् . )

## ॐ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दाऽनुगृहीतः शताऽधिकया ॐ ( १७ )

**मुक्त्यर्थमिति** ॥ मनुष्याणांमुक्त्यर्थं जायमानस्य देहोत्क्रामस्या ऽपरोक्ष ज्ञानाऽतिशयसिद्धयेऽज्ञमरणविलक्षणत्वसमर्थनादित्यर्थः । **अन्योऽन्यप्रवेशेनेति**॥ उत्तमोत्तमप्रवेशेनेत्यर्थः । **देहादुत्क्रमणंविषय इति** ॥ चरमोत्क्रमणंविषयइत्यर्थः । **तस्यापिति** ॥ चरममरणस्यापि ज्ञानिसंबन्धिमरणान्तरवत्प्रारब्धनिबन्धनत्वादित्यर्थः । **इदमुक्तंभवति** — ज्ञानिनस्तावन्नैकमेवमरणं किंतु बहूनिमरणाणि तत्रचरममरणव्यतिरिक्तानिमरणानि अज्ञमरणव्यतिरिक्तानिमरणानि, अज्ञमरणवदेव भवन्ति, तत्रच प्रारब्धकर्मनिबन्धनत्वमेवकारणं तच्च चरममरणे ऽपिवर्ततइति तदपिमरणं ज्ञानिप्राचीनमरणवत् अज्ञमरणवदेव प्रतिपत्तव्यमिति । **नचसत्यपीति** ॥ चरममरणदशायां ज्ञानिपूर्वमरणदशायामिव प्रारब्धकर्मणिसत्यपि अज्ञमरणाद्विलक्षणमेव ज्ञानिचरममरणं, नतु पूर्वमरणवदज्ञमरणसदृशमिति नवाच्यमित्यर्थः । **विशेषकारणेति** ॥ पूर्वमरणाच्चरमम-

१. अत्राधिकरणे पंच सूत्राणि.

रणस्य विशेषेकारणाऽभावात्कार्यवैलक्षण्य मनुपपन्नमितिभावः । **तत्कुतइति** ॥ कुतः प्रमाणादित्यर्थः । तर्हि – विरजातरणात्प्राक् ज्ञानं सर्वथाफलप्रदं नभवतीत्यागतमित्यतआह – **स्वोदयादिति** ॥ स्वोदयमारभ्यैव ज्ञानंफलप्रदं नतु प्रारब्धकर्मणाप्रतिबद्धं सत् सर्वथाकार्याक्षममित्यर्थः । तर्हि ज्ञानेन प्रतिबद्धंकर्म सर्वथानकार्यक्षममितिप्राप्तमित्यतो नेत्याह – **आदेहमिति** ॥ प्रारब्धकर्म केषांचि दादेहं फलप्रदं केषांचि द्रविप्राप्तिपर्यन्तम् । उपलक्षणमेतत् केषांचिद्वैश्वानरपर्यन्तम्, अन्येषांतुनदीपर्यन्तम्, एषुस्थानेषु अधिकारिभेदेन सर्वदुष्कर्म क्षीयते, ततःपरं केवलपुण्यप्रारब्धयुक्तस्य शिंशुमारप्राप्तिरिति ज्ञेयम् । **लोकन्तरगमनार्थमिति** ॥ देवलोके चिरं रत्वा यस्तुमुच्यते तस्य नाड्यन्तरेणोत्क्रमणमितिभावः । तदुक्तं – 'देवलोकेचिरं रत्वायस्तुमुक्तिं व्रजिष्यति । सतुतद्देवताद्वारेणोत्क्रामतिनसंशयः ॥ विष्णोर्लोकंपरंगच्छन्नुत्क्रामेन्मूर्ध्न एवतु । तथैवब्रह्मणोलोकं सुषुम्नायाविभेदतः' इति । **नाड्यंतरस्तमसैवगमनं स्यादिति** । ततश्चातिवैलक्षण्यापादकत्वलक्षणं महामाहात्म्यं नस्यादितिशेषः । एतेन नाड्यंत स्तमसैव गमनं नाऽनिष्टं, द्वारमारभ्यप्रकाशसद्भावेन ज्ञानिमरणस्य वैलक्षण्यसंभवेन तदविघातकत्वादिति निरस्तम् । यदनंतकालसंबद्धं तदुच्यते – **सर्वदेति** ॥ यथाकाशः सर्वदा, वेदाः सर्वदेति । यदसार्वकालिकमपि कालविशेषे नियमेनास्ति, तदप्युच्यते – **सर्वदेति** ॥ तद्यथा शुश्रूषमाणं विनीतंशिष्यमाह, अलंसेवया भुङ्क्ष्वेति, स गुरुमाह, मम भोजनं सर्वदाऽस्ति भवत्सेवैव दुर्लभेति । यदपि यावद्देहभावि तदप्युच्यते – **सर्वदेति** ॥ तद्यथा – सर्वदाभयंसाधुरिति । एवंच 'सर्वदासंबंधा'दिति भाष्यस्य त्रेधाप्यर्थसंभवं मनसिकृत्वा पृच्छति – **नाडीरश्मिसंबंध इति** । एतेन–देहपातपूर्वकालीन इति द्वितीयकल्पाऽप्रसक्तिरितिनिरस्तम् । **कदाचित्ज्ञानिनइति** । रश्मिसंबंधस्यबहुकालानुवृत्त्यभावात् गमनकाले दीपानुद्भावनोपि

१. रश्म्यनुसारी (४-२-१८) सूत्र टी०. प्र०. । २. 'यावद्देहे' (४-२-२०) तिसूत्रटी०० प्र. । ३. 'निशिनेतिचे' (४-२-१९) निसूत्रीयभाष्यस्येत्यर्थः ।
४, 'याव द्देहे' (४-२-२०) तिसूत्रटीका०. प्र०.

राजमृत्यस्य दीपधारिविलंबेन क्षणमात्रं तमसागमनवत् ज्ञानिनोपि ईषत्तमसागमनंस्यादितिभावः । **साक्षान्मोक्षस्य सुषुम्नैकगम्यत्वादिति** । साक्षान्मोक्षस्य मुख्यब्रह्मलोकस्य, सत्यलोकविष्णुलोकरूपस्येत्यर्थः। नन्वेवंतर्हि – 'ब्रह्मोत्तरायण'इति वचनविरोधः, तत्रउत्तरायणमरणस्य ब्रह्मलोकप्राप्तिफलकत्वाभिधानादित्यतआह — **तेषां[2] चेति** । ननु – 'आजनान्नजनिर्भुवि'इत्यादिना-जनादिलोकस्यैवाऽपुनरावृत्तिस्थानत्वेनोक्तत्वात् कथमेतदित्यतआह – **महर्लोका[3] दीति** । ननु -- 'नतुकालविशेषोस्ति' इत्ययुक्तं कालविशेषस्य प्रमाणसिद्धत्वादित्यतआह – **नतु[4]काल इति** । अत्रकालविशेष इत्यनंतरं विवक्षितइतिशेषः । अस्तीत्यस्यव्याख्यानं भवतीति । ततश्चैवंमूलयोजना – 'दक्षिणेमरणाद्याती'तिस्मृतौ[5] दक्षिणादिशद्बैःनाड्यो निगद्यते=निगद्यंते, नतु कालविशेषोविवक्षितोभवतीति –. 'दक्षिणेमरणाद्याती'तिस्मृतिवचनस्य नाडीमरणमेव मोक्षादिहेतुतया विवक्षितं, नतु कालविशेषमरण, मिति व्याख्यानपरतया 'उत्तरंदक्षिण' मिति भाष्योदाहृतप्रमाणं व्याख्याय, 'नतु कालविशेषोस्तीतीममंशं प्रकारान्तरेण योजयितु मवतारयति – **कुतो[6]यमिति** ॥

**पूर्वपक्षस्तु** – ज्ञानिचरममरणं प्रारब्धनिबंधनत्वात् तत्पूर्वमरणवत् पृथ[7]ग्जनमरणसदृशं, ततश्च – ज्ञानिमरणस्याऽज्ञमरणवैलक्षण्याऽभावात् न ज्ञान मतिशयवदिति ॥

**सिद्धान्तस्तु** – ना ऽज्ञमरणवत् ज्ञानिनश्चरममरणं, कथंतर्हि — ज्ञानसामर्थ्यात् तस्यसामर्थ्यात् तस्य हृदयस्याऽग्रंप्रद्योतते परमात्मा तत्प्रकाशितद्वारं, जीवमादाय सुषुम्नानाड्या निष्क्रामति प्राणा एनमनुव्रजंति । नच – ज्ञानसामर्थ्यात् पूर्वमरणस्याप्येवं विश्वत्वप्रसंगः गत्यनुस्मरणरूपसहकारि विरहात् नाड्यंतस्तु सौररश्मिप्रकाशेन गच्छति, नचैवंसति रात्रौदेहारंभक कर्मक्षयेऽपि मरणाभावः — रात्रौबाह्यादित्याभावेऽपि अन्तरादित्यस्य सत्त्वात् । तद्रश्मिसंबंधस्य सर्वदाना-

१, २, ३, ४. 'अतश्चायने' (४-२-२९) ति सूत्रटीका प्र०। ५. 'अतश्चे'ति सूत्रीयभाष्येत्यर्थः। ६. 'अतश्चाहेति सूत्रीय टी०. प्र०. ७. अज्ञजनेत्यर्थः ।

डीषु सद्भावेन रात्राविवमरणोपपत्तेः तदुक्तम — ' संसृष्टावाएते आदित्यस्य-रश्मयश्चनाड्यश्च नैनांवियोगोयावदिदंशरीरम , अत एतैःपश्यतिएतैरुत्क्रामति, एतैः प्रवर्तत'इति । अतएव दक्षिणायने मरणंयुज्यते । नच – ' दक्षिणेमर-णाद्याती'तिस्मृतिविरोधः, स्मृतेः दक्षिणायनसंज्ञकनाडीमरणस्य स्वर्गहेतुत्वं, उत्तरायणसंज्ञकनाडीमरणस्य जनलोकादिहेतुत्वमित्यर्थत्वात् । ' शतंपंचैव-सूर्यस्ये'ति वचनात । **अयमत्रविवेकः** – ये सद्यो विष्णुलोकंगच्छंति ते सुषुम्नयानिष्क्रामंति, ये सत्यलोकंगच्छंति ते सुषुम्नाप्रभेदेन, येतु जनलो कादिषु चिरंरत्वा विष्णुलोकंगच्छन्ति तउत्तरायणरश्मिभिर्निर्गच्छंति, इति । अतो ज्ञानिनामुत्क्रमणस्या ऽज्ञमरणविलक्षणत्वात् ज्ञानमाहात्म्यं युक्तमिति सिद्धम् ॥ ९ ॥



( १० – अधिकरणम् )

## ॐ योगिनः प्रतिस्मर्येते स्मार्ते चैते ॐ [ २२ ]

**आवश्यकत्वसमर्थनादिति** । साधनत्वसमर्थनादित्यर्थः । **अन्यथेति** । कारणत्वसमर्थनाऽभावे अप्रामाणिकत्वात् ज्ञानस्यगतिरूपमोक्षकारणत्वाप्रसंगा-दित्यर्थः । उपलक्षणमेतत् , ' गत्यनुस्मृतेरपिगतिकारणत्वाभावप्रसंगा'दि त्यपिग्राह्यम् ! ' गत्यनुस्मरणं नापेक्षित'मिति साध्यांशे, हेत्वंतरमाह – **लोक-इति । नचस्मृतिविरोधइति** । ' यंयंवापिस्मरन्भाव' ( गी०. ८-६. ) मिति-स्मृतिविरोध इत्यर्थः । **तस्यालोकाननुसारित्वेनेति** । यंयमन्नाद्यंकामयमानः प्राणी प्राणंत्यजति, तच्छ्राद्धादौतत्तदन्नाद्यं ब्राह्मणेभ्यो देयं तेन च संतुष्टो-भवतीत्येवमर्थान्तरे योज्यं, सति चैवं – लोकानुगुण्यंलभ्यते, लोकेहि श्राद्ध-दिने भार्याप्रतिवक्तारोभवंति, इदंमन्नाद्यं पितुः प्रियतरं त्वं साधुकुर्विति, साच तथैव करोतीतिभावः। **लिङ्गस्यापीति** । ' आचार्यस्तु तेगतिंवक्ते' ( छां ४-१४-१ ) ति लिङ्गस्येत्यर्थः । ' न केवलं कालादिकृते ब्रह्मचन्द्र-

१. इत्यर्थकत्वादित्यर्थः ।

गती स्मर्येते किंतु — ज्ञानयोगिनः कर्मयोगिनश्चे'ति भाष्यं, गत्यर्थं विद्यानुस्मृती इव कालमरणमपि अपेक्षितमित्यन्यथाप्रतीति निरासाय, अपेक्षिताऽध्याहारेण व्याचष्टे — **यदुक्तमित्यादिना** ॥ 'अनेन '[1]स्मर्येते'इत्यतः परम्, 'अतो न गत्यर्थं विद्यानुस्मृती अपेक्षिते इति यदुक्तं त'दितिशेषः। तस्यच नञासंबन्धः, किंत्वितिशब्दो यतइत्यर्थे, 'नकर्मयोगिनश्चे'ति चशब्द एवार्थ इत्युक्तं भवति। एतेन भाष्ये न केवलं कालादिकृते किंतु कालकृते इति निषेधात्, भाष्यटीकयोर्विरोध इति परास्तम्। ननु — 'धूमोरात्रि' (गी०) रितिश्लोके योगीतिपदवत् 'अग्निर्ज्योति' (गी०) रिति पूर्वश्लोके योगीतिपदाभावात् योगीतिविशेषणादितिभाष्यमयुक्तमित्यत आह — **उपलक्षणमेतदिति।** योगीति विशेषणादित्युपलक्षणं, ब्रह्मविद इति विशेषणादित्यपिग्राह्य मित्यर्थः। **अन्यतोक्तत्वादिति** ॥ गीताभाष्यतात्पर्ययोः एतच्छ्लोकव्याख्यानावसरइत्यर्थः।

**पूर्वपक्षस्तु** — न गत्यर्थं विद्यागत्यनुस्मृती अपेक्षिते 'अग्निर्ज्योति' (गी०.८-२४) रितिस्मृतौ केवलकाल मरणभावेऽपि फलदर्शनेन तथैवइहापि कल्प्यत्वाच। ततश्च — नज्ञानं संपूर्णमोक्षसाधनमिति।

**सिद्धान्तस्तु** — स्मृत्युक्ते एते गती ज्ञानकर्मयोगाभ्यामेव स्मर्येते, न कालमरणात् 'अग्निर्ज्योति'रितिश्लोके ब्रह्मविद इति विशेषणात् 'धूमोरात्रि' (गी० ८-२५) रितिश्लोके योगीतिविशेषणात्। नच — लोकानुसारिता, सर्वथालोकानुसारित्वस्य छिद्रादावप्यभावेनाऽदोषत्वात् कथंचित्साम्यस्येहापिभावात्, अतो विशिष्टोत्क्रमणस्य विद्यादिसापेक्षत्वात् युक्तं ज्ञानस्य संपूर्णमोक्षसाधनत्वमिति सिद्धम् ॥

इति श्रीमत्सत्यनिधितीर्थ श्रीचरण चरणाराधक
श्रीमत्सत्यनाथयतिविरचितायां
श्रीमत्तत्वप्रकाशिकाव्याख्याऽभिनवचन्द्रिकायां
**चतुर्थाऽध्यायस्य द्वितीयः पादः**

---

१. 'भाष्यस्थस्मर्येते'इतिपदादुत्तरमित्यर्थः।

## अथ तृतीयः पादः

### श्री गुरुभ्योनमः

[ १ - अधिकरणम् ]

### ॐ अर्चिरादिना तत्प्रथितेः ॐ [ १ ]

**एतत्पादार्थमिति** ॥ 'अध्यायस्य एकार्थत्वात् पादभेदः किं निबंधन इत्यतः फलेष्ववान्तरभेदेन पादभेद उपपन्न इति भावेने'ति वर्तते, तस्या ऽनेन संबंधः । **मार्गाऽनिर्णयइति** । ननु — ' आचार्यस्तुतेगतिंवक्त' (छा०. ४-१४-१) ति लिंगात् सर्वज्ञगुरूपदिष्टो मार्गमनुस्मरति न ग्रन्थपर्यालो- चनया, एवं च — ग्रन्थे तन्निर्णयकथनं व्यर्थमितिचेत्, न — ग्रन्थोक्त- मार्गेण मननं कुर्वत एव सर्वज्ञोपदेश इति नियमात् तत्सिध्यर्थमेवेह मार्ग- निर्णयस्याऽऽवश्यकत्वात् । **अतोमार्ग नियमेति** ॥ अयं मया स्मर्तव्योमार्ग इति निश्चयाऽभावात् आचार्योपदेशात्प्राक् मार्गस्मरणानुपपत्तिरित्यर्थः । एतेना ऽऽचार्योपदेशेन मूर्तिविशेषस्य निर्णयेन ध्यानवत्, मार्गस्यापि मरणे स्मरण- मनुपपन्नमिति परास्तम् ।

**पूर्वपक्षस्तु** — द्वौमार्गौ — तत्र एकस्मिन्मार्गे ऽर्चिषोलोकः प्रथमः, मार्गान्तरेतु वायुलोकः ' तेऽर्चिषमभिसम्भवन्ति (छा०. ५-१०-१) स वायुमागच्छती' [ बृ. ७-१०-१ ] त्युभयविधश्रुतेः, ततश्च गुरूपदेशात्प्राक् मार्गनिर्णयाभावात्, स्मरणानुपपत्तिरिति ।

**सिद्धान्तस्तु** - एकएव विपश्चितां मार्गः, 'द्वावेवमार्गौ प्रथिता वर्चिरादि विपश्चिताम् । धूमादिः कर्मिणांचैव सर्ववेद विनिर्णयादि'ति स्मृतेः, तत्र द्वावग्नेः सुतौ एकस्मिन्पुरे संस्थौ तत्र एकोऽग्निनामकः, अपरो ज्योति-

---

१. प्रथम द्वितीयपादयोरनुवृत्तमत्रापि अनुवर्ततइत्यर्थः ।

र्नामकः, तदुभयाधिष्ठितस्य लोकस्य प्रथमप्राप्तिः, नच — 'सवायुमागच्छती'ति श्रुतिविरोधः — प्रबलैतच्छ्रुतिविरोधेन अर्चिरनन्तरार्थत्वोपपत्तेः, अतोमार्गनिर्णयादनुस्मृतिसंभव इतिसिद्धम् ॥ अ०. १ ॥

[ २. अधिकरणम् ]

## ॐ वायुशब्दादविशेष विशेषाभ्याम् ॐ ( सू. २ )

सूत्रयोजनातु — 'सुपांसुपोभवन्ती'ति वचनात् पञ्चमीद्विवचनस्य पञ्चम्येकवचनादेशः, अविशेषविशेषाभ्यां सामान्यविशेषात्मकाभ्यां वायुशब्दोपेतश्रुतिभ्यां वायुरेव द्वितीयप्राप्य इति । इदंसूत्रं पृथगधिकरणतया योजयित्वा-पूर्वाधिकरणशेषतयापि योजनां सूचयितुं — प्रतिजानीते — **वायुश्रुतेरिति** ॥ अस्मिन्पक्षे वायुशब्दादितिपञ्चमी षष्ठ्यर्थे, वायुशब्दोपेतस्य 'सवायुमागच्छती' ति श्रुतिवाक्यस्य वायोर्द्वितीयप्राप्यत्वमेवार्थोऽवगन्तव्यः, सामान्यविशेष भावोपपन्नाभ्यां श्रुतिभ्यामेकस्यैवाऽर्थस्य प्रतिपत्तव्यत्वादिति सूत्रयोजना ।

**पूर्वपक्षस्तु** — अधिकारिभेदेन मार्गभेदाद्वायुलोकस्येवा ऽहर्लोकस्यापि-द्वितीयप्राप्यत्वं 'सवायुमागच्छति [ बृ. ७-१०-१ ] अर्चिषोऽह' (छ०. ५-१०-१) रित्युभयत्रापि श्रुतिसद्भावात् । नच — एकस्य पूर्वत्वम्, अपरस्याऽऽनंतर्यमितिव्यवस्था — विशेषे प्रमाणाभावात् । अतो मार्गनिर्णयाभावादनुस्मृत्ययोग इति ।

**सिद्धान्तस्तु** — नात्रमार्गभेदः किंतु — एकएवमार्गः तत्रापि अर्चिषो वायुंगच्छति तदनंतरमहः 'सवायुमागच्छती'ति वायोः प्रथमप्राप्यत्वश्रुतेः, सामान्यश्रुतेश्च मुख्यप्राथम्यबाधे ऽमुख्यप्राथम्यपरत्वात्, तद्यथा — 'न

१. सुपांसुलुगितिपाणिनि सूत्रस्थवार्तिकादित्यर्थः । २. वायुशब्दादित्यत्रेत्यवधेयम् । ३. अनेन - सूत्रेवायुशब्दशब्दः अर्शआद्यजन्तः वायुरि तिशब्दोयस्मिन्निति बहुव्रीहिर्वेति सूचितम् ।

हिंस्या'दिति निषेधस्य यागीयपशुहिंसानिषेधपरत्वासंभवेन बाह्यहिंसानिषेधपरत्वम्, 'सइतोगतोद्वितीयांगतिंवायुयागच्छती'ति विशेषश्रुतेश्च । अतोमार्ग निर्णयात् युक्ता तदनुस्मृतिरितिसिद्धम् । अथवा पुनरस्तु — 'वायुशब्दादविशेष विशेषाभ्या'मितिसूत्रं 'सवायुमागच्छती'ति श्रुतेरप्रामाण्यप्रसंगपरिहाराय गतिप्रदर्शनार्थं सत् पूर्वाधिकरणशेषः ॥ अ०. २ ॥

[ ३ — अधिकरणम्. ]

## ॐ तटितोऽधिवरुणः संबन्धात् ॐ ( सू. ३ )

**पूर्वपक्षस्तु** — वरुणतटितोरुभयोरपि संवत्सरानन्तर्यम् । 'मासेभ्यः संवत्सरं संवत्सराद्वरुणलोकम्, तथा — 'संवत्सरात्तटितमागच्छती'त्युभयथाश्रुतेः, मार्गभेदेन उभयोरपि संवत्सरानंतर्योपपत्तौ अन्यतरस्वीकारे कारणाभावात् । अतोमार्गनिर्णयाभावात् तदनुस्मरणानुपपत्तिरिति ।

**सिद्धान्तस्तु**— न वरुणतटितोरुभयोरपि संवत्सरानंतर्यंग्राह्यम्, किंतु— एकएव मार्गः, तत्र संवत्सरानन्तरं तटितमेवगच्छति नच — [1] श्रुत्यन्तरविरोधः — तटितोऽनन्तरं वरुणस्य प्राप्यत्वेन तदर्थत्वोपपत्तेः । अतोमार्गैक्येना ऽनुस्मरणमुपपद्यत इति सिद्धम् ॥ ( अ०. ३ )

( ४ अधिकरणम्. )

## ॐ आतिवाहिकस्तल्लिङ्गात् ॐ [ सू. ४ ]

'सवायुमागच्छती'ति प्रथमप्राप्यतयोच्यमानो वायुरातिवाहिकः, तस्मादेव पूर्वगमनरूपाल्लिंगात् ज्ञापकादिति सूत्रार्थः । **इदमुक्तंभवति** – 'सवायुमागच्छती'ति वायुः प्रथमप्राप्यतया श्रूयते, प्रथमत्वंच — उत्तरमार्गावधिकत्वं तत्र यद्यपि — उत्तरावधिकत्वरूपं प्रथमत्वं आर्चिरादिविद्युत्पर्यंतं सत्वात् नाऽऽतिवाहिकत्वसाधनाया ऽलम्, तथापि — वायुत्वनिश्चयसहकृतं पूर्वप्राप्यत्वम्

१. वरुणांत ॥ मार्गभेदेनत्यादिः । [1] नेति ॥ 'सवत्सराद्वरुण'मिति श्रुतीत्यर्थः ।
२. अत्राधिकरणे द्वेसूत्रे ।

आतिवाहिकत्वं साधयेदेव, तादिदमुक्तं लिंगादिति। एतेन — 'आतिवाहिकस्तस्मा'दित्येतावता पूर्णत्वेन सूत्रे लिंगग्रहणं व्यर्थमितिपरास्तम्, तस्य-केवलस्य पूर्वप्राप्यत्वस्य अर्चिरादौ व्यभिचारेणाऽसाधकत्वेपि वायुत्वनिश्चय-सहकृतस्य साधकत्वमिति ज्ञापनार्थत्वात्। अनेनसूत्रेण संशयपूर्वपक्षयोर-निवृत्तिरित्याक्षेपपरत्वं 'कुत' इतिभाष्यस्याह — नन्विति। तथापि = पूर्वगमनोक्तावपि कथमस्याऽऽतिवाहिकत्वसिद्धिः, न कथमपीत्यर्थः। मुख्य-वायोरप्राप्तिप्रसंगरूपबाधकसद्भावात् पूर्वपक्षोनुवर्तत इतिभावः। पूर्वपक्षनिवृत्तौ-कारणंशङ्कते — अथेति॥ अस्तु तर्हि — पूर्वपक्षनिवृत्तिः, संशयानु-वृत्तिस्तुनपरिहार्येत्याह — तथापीति॥ मुख्यस्यापीति॥ अग्न्युत्तमस्यापि सोमस्याऽग्नेःपूर्वं, ध्रुवादुत्तमस्यापि इंद्रस्य ततःपूर्वं, प्राप्तिदर्शनादितिभावः।

पूर्वपक्षस्तु — 'सवायुमागच्छति'इति प्रथमप्राप्ततयोक्तोवायुर्मुख्यः. वायुशब्दस्य तत्रैवमुख्यत्वात्, बाधकंविना मुख्यार्थत्यागायोगात् मुख्यस्यापि प्राप्यत्वात्। अतो वायोरर्चिषोऽनन्तरं प्राप्यत्वात् नतस्याऽधिक्यमिति।

सिद्धान्तस्तु — आतिवाहिक एवायं वायुः, पूर्वगमनलिङ्गात्, पूर्वगमनमात्रस्य ऽर्चिरादिगतत्वेन आतिवाहिकत्वाऽसाधकत्वेपि वायुत्वनिश्चय-सहकृतस्य तत्साधकत्वमुपपन्नमेव, तद्यथा — त्रिवर्णेतरत्वमात्रस्याऽन्त्यजादि-गतत्वेन शूद्रत्वाऽसाधकत्वेपि वर्णनिर्णयसहकृतस्य शूद्रत्वसाधकत्वमुपपद्यते। नन्वेवमपि नायं पूर्वपक्षो निवर्तते, मुख्यस्य प्रथमप्राप्यत्वानंगीकारे तदप्राप्ति-प्रसंगरूपबाधकसद्भावात्। अथमतं 'द्यौर्वावविद्युत् तत्पतिंवायुमुपगम्ये'ति पुनरपि वायुप्राप्तिः श्रूयते, समुख्योभविष्यतीति न मुख्याऽप्राप्तिदोष इति न पूर्वपक्षाऽनुवृत्तिरिति। हन्ततर्हि संशयाऽनुवृत्तिदोषः — किंपूर्वोक्त आति-वाहिकः उत परः, तथा — परोक्तआतिवाहिकः, किंवा परइति संशयनिरास क कारणाभावात्, एवंचाऽयमातिवाहिक इतिनिश्चयो न घटत इतिचेन्न —

१. 'उभये'। (४-३-५) ति सूत्रीयटी०. प्र०. धा०.

२. 'उभये' ति सूत्र टीकास्थपदानुवादः। ३. - ४,५. 'उभये'ति सूत्रीयटी०.प्र०.धा०.

उत्तरे दिवस्पतित्वविशेषणेन मुख्यवायुत्वनिश्चये परत्र परिशेषेणैव आतिवाहिकत्वनिश्चयोपपत्तेः । 'उत्क्रांतस्तु शरीरात् स्यात् गच्छत्यर्चिषमेवतु । ततोहि वायोःपुत्रंच योऽसौ नाम्ना ऽऽतिवाहिक'इतिस्मृतेश्च । अतः प्रथमप्राप्यस्य आतिवाहिकत्वात् युक्तं मुख्यस्यमुख्यत्व मितिसिद्धम्. ॥ ( अ०. ४ )



( ५ - अधिकरणम्, )

## ॐ वैद्युतेनैव ततस्तच्छ्रुतेः ॐ ( सू. ६ )

**अन्यथेति** । ननु — वायोरन्तिमत्त्वसाधनं विनापि श्रुतिप्रामाण्यादेव अतिप्राधान्यसिद्धिर्भविष्यति, नहि भवति सोमेन्द्रयोः अग्निध्रुवाभ्यां परतः प्राप्यत्वं न समर्थितमित्येतावता विद्यमानमपि तदुत्तमत्वावेदकंप्रमाणमनादृत्य तयोरुत्तमत्वाऽसिद्धिः, ततश्चेद मधिकरणमनारंभणीयमितिचेत् .— सत्यं सिध्यत्येव प्रमाणबलात् अधिकार्युत्तमत्वंप्राणस्य, तथापि — साक्षाद्भगवत्प्रापकत्वलक्षणं माहात्म्यं न सिध्यति, तद्यथा – अमात्योत्तमस्यापि भाविपदनियुक्तस्य राजपुत्रस्य, राजेच्छाविरहात् न राजप्रापकत्वरूपं माहात्म्यम्, अपितु — अवरस्याप्यमात्यस्य तन्माहात्म्यं, तद्वदिहापि मुख्यप्राणस्य तन्माहात्म्यंनेति भ्रमनिरासाय समर्थनीयमेव चरमप्राप्यत्वमिति । **बाधकाभावादिति** ॥ ननु – मुख्यवायुनन्तरं प्राप्यान्तरसद्भावे प्रमाणमस्ति नवा ; आद्ये तदेव वक्तव्यं, मानाधीनत्वान्मेयासिद्धेः, किं बाधकाभावोपन्यासेन, द्वितीयेवायुनंतरं अन्यः प्राप्योऽस्तीति रिक्तं वचः, नहि भवति नास्तिप्रमाणं अस्तितत्प्रमेयमिति इतिचेत्, सत्यम् — प्रमाणमेव प्रमेयसिध्यर्थं वक्तव्यम्, उक्तंच — पूर्वपक्षिणा यदयमंगीकारे बाधकाभावमाह तदेव तत्रप्रमाणं बाधकाभावस्य वस्तुतथात्वेन विनाऽनुपपद्यमानत्वात् ; तद्यथा – रात्रिभोजनं विना ऽनुपपद्यमानं पीनत्वं तत्र प्रमाणमिति । **अतिशयेन प्राधान्यमिति** ॥ सर्वेषां साक्षाद्भगवत्प्रापकत्वरूपाऽतिशय सहित प्राधान्यमित्यर्थः । एतेन – इंद्रादीना-

१. अन्यत्रेत्यर्थः, पूर्वत्रेतियावत्। २. मुख्यवायोरित्यर्थः ।

मिव प्रथमप्राप्यत्वेपि स्वाभाविकस्वमाहात्म्याऽनपायात् अतिशयेन प्राधान्यं तस्या-
दित्ययुक्तमिति परास्तम् ।

**पूर्वपक्षस्तु** — वायोः परतः ब्रह्मणोऽर्वाक्‌गन्तव्योऽस्ति, तथाङ्गी-
कारेबाधकाभावात् एवंच न वायोः ब्रह्मप्रापकत्वरूपंविशिष्टंमाहात्म्यमिति ।

**सिद्धान्तस्तु** — नास्त्येव वायोरनन्तरं प्राप्य , यतः — विद्युत्पतिना-
वायुनैव ब्रह्मप्राप्तिः, नतु — तदन्येन तस्य ब्रह्म प्रापणसामर्थ्याभावात् नच —
वायोरपि प्रमाणाभावेन तत्सामर्थ्याभाव इतिवाच्यम् , ' सएनान् ब्रह्मगमयति'
इतिश्रुते , 'विद्युत्पतिर्वायुरेव नये द्ब्रह्म न चा ऽपरः । कुतोऽन्यस्य भवे-
च्छक्तिस्तमृते प्राणनायक'मितिस्मृतेश्च अतोत्रायोरेवान्तिम प्राप्यत्वात् युक्तं तस्या
ऽतिशयेन प्राधान्यमिति सिद्धम्. ॥ [ ५ - अ०. ]

( ६ - अधिकरणम् . )

## ॐ कार्यं बादरिरस्य गत्युपपत्तेः ॐ ( सू . ७ )

**तेनमार्गेण गतानामिति** । ननु — अर्चिरादिमार्गेण गतानां गम्यनि-
रूपणादित्ययुक्तम्. अप्रतीकालम्बनानामुत्तमेषु लयाधिकारिणां मार्गशून्यत्वात्
नच — अप्रतीकालम्बनानामपि मार्गोऽस्तीति वक्तुंयुक्तम् । ' उत्क्रान्तेस्तु
शरीरात्तुस्वात् गच्छत्यर्चिपमेव'त्विति उत्क्रान्तानामेव अर्चिरादिमार्गाभिधाना-
दितिचेत् , उच्यते — द्विविधाहि अप्रतीकालम्बनाः — स्वोत्तमेषु देहलययोग्याः,
उत्क्रांतियोग्याश्चेति । तत्रदेहलययोग्यानां मार्गाभावे उत्क्रान्तियोग्याना मृषीणां
राज्ञांच अस्त्येव मार्गइति । ' अप्रतीकालम्बनान्नयती' [ ब्र. ४-३-१५ ] ति
सूत्रे ऋष्यादीनामेव गम्यमुच्यत इति । उक्तंच — ऋष्यादीनामप्य प्रतीका-
लम्बनत्वम् ' अप्रतीकादेवतास्तु ऋषीणां शतमेवच । राज्ञांच शतमुद्दिष्टं
गन्धर्वाणां शतंतथे'ति । **एकस्योभयप्राप्त्यसंभवादिति** । एकस्यैवावस्था-

१. अत्राधिकरणेदश (१०) सूत्राणि । २. 'उभयव्यामोहा' (४-३-५)दिति सूत्रेभाष्यो
दाहृतप्रमाणमिदम् । ३. 'अप्रतीक' (४-३-१५) ति सूत्रेभाष्योदाहृतंप्रमाणमिदम् ।

नायोभयप्राप्त्यसंभवादित्यर्थः । एतेन — एकस्यैव आर्चिरादिसर्वलोकप्राप्तिवत् उभयप्राप्तिसंभवात् उभयप्राप्त्यसंभवादित्ययुक्त मिति परास्तम् । एकस्यमार्गतया अपरस्यगम्यतया प्राप्तिसंभवेपि उभयोरपि गम्यतया प्राप्त्यसंभवस्याऽपरिहार्यत्वात् । **अर्थः स्यादिति** । ' सएनान् ब्रह्मगमयती' [ छा०. ५-१०-२ ] ति श्रुत्यर्थः स्यादित्यर्थः । **केनचित् क्रमेणेति** ॥ किंचिन्नियामकमपेक्ष्योभयप्राप्तिर्भवति, उताऽनपेक्ष्येत्यर्थः । **क्रमोपीति** ॥ नियामकभूतधर्मोपीत्यर्थः। **इतिजैमिनिराचार्योमन्यत इतिभाव इति** ॥ इतिपूर्वपक्षीमन्यत इतिभावः । ※ एतेन 'मुनिमतयोश्चान्यानिषेधकत्वेनाऽविरोधा'दित्युत्तरग्रन्थ विरोधइति परास्तम् । **प्रतिपत्त्यभावादिति** ॥ उपासनाभावादित्यर्थः । एवं बादिरिजैमिनिमतानुसारिपूर्वपक्षमुक्त्वा, उभयप्राप्तेः श्रुत्यर्थत्वमङ्गीकृत्य, सिद्धान्त्यभिमतं विशेषं दूषयतः पूर्वपक्षमाह — **तृतीयपक्षेपीति** ॥ **पक्षद्वयेऽपीति** ॥ अर्चिरादिमार्गेण गतस्यपरप्राप्तिः, कार्यप्राप्ति, रिति पक्षद्वयेपीत्यर्थः । **क्रमस्येति** ॥केषांचित्कार्यप्राप्तिरेव, न केषांचित् कार्यप्राप्तिरिति नियमप्रयोजकस्याऽधिकारिगतस्यक्रमस्यतारतम्यस्याऽदर्शनादित्यर्थः। क्रममङ्गीकृत्यापि सिद्धान्त्यभिमतं विशेषं दूषयति — **क्रमपक्षेत्यादिना** ॥ **सौकर्यमिति** । सौलभ्यं शक्तिरितियावत् । नास्त्येव तारतम्यं, राजमंदिरे भोजनोपविष्टानां राजपुत्राणामिच्छया व्यंजनादिप्राप्तिवत् अधिकारिणामिच्छयैव कार्यपरयोः प्राप्तिरिति प्रागुक्तम् । इदानींतु — अस्त्येवतारतम्यं, किंतु — नयोग्यतारूपम्, अप्रामाणिकत्वात्, किंतर्हि — अतिफलितमाम्रवृक्षंगतवतो यस्याऽऽरोहणशक्तिः तस्य महाफलप्राप्तिः, यस्य नारोहणशक्तिः तस्य गलितफलप्राप्तिरितिदर्शनात्, यस्य परब्रह्मप्राप्तौशक्तिः तस्यतत्प्राप्तिः, यस्यतु सत्यलोकपर्यन्तं गतस्य शक्तिक्षयः तस्य कार्यप्राप्तिरुच्यत इतिभेदः । **महाफलइति** ॥ महाफले

१. 'परंजैमिनि' (४-३-१२) रि ति सूत्रटी०. प्र०.धा०' ※ पूर्वपक्षीमन्यते इतिकथनेनेत्यर्थः । २. 'नचकार्ये' ( ४-३-१४ ) इति सूत्रटी०. प्र०. धा०. ३, ४, ५, ६, ७, ८, 'अप्रतीके' (४-३-१५) ति सूत्रटीका प्रतीकधारणम्. ।

क्रमस्य तारतम्यभावस्याऽयोगात् । स्वरूपतारतम्यस्याऽदर्शनात् शक्तितारतम्यमेव विवक्षितमितिभावः । बादरिजैमिनिमतावलंबिम्यामुक्तः ‡ श्रुत्यर्थः कुतो नप्राह्यइति पृच्छति — **कुतइति**[1] ॥ **उभयपक्षेति**[2] ॥ परस्परं निरूपितदोषादेव श्रुतेरर्थद्वयं न भवतीत्यर्थः, तदेवविशदयति — **परप्राप्तीत्यादिना**[3] ॥ अस्माद्वाक्यात्परं लेखकदोषात् उत्तरत्रपतितं 'नापि परमेवेत्यवधारणं हेतुरस्ती' ति वाक्यं ग्राह्यम । **कार्यप्राप्तिपक्षइति**[4] ॥ इतःपरं लेखकदोषादुत्तरत्र पतितं 'कार्यमेव नयतीत्यन्यव्यावृत्त्या कार्यप्राप्तौ विशेषहेत्वभावा'दितिवाक्यं ग्राह्यम्, ततश्चैवं **टीकावाक्यपाठः** — 'परप्राप्तिपक्षे गत्यनुपपत्त्या दोषस्योक्तत्वा न्नापि परमेवेत्यवधारणे हेतुरस्ति, कार्यप्राप्तिपक्षेच ब्रह्मशब्दाऽमुख्यत्वादिदोषाणामुक्तत्वा त्कार्यमेव नयतीत्यन्यव्यावृत्त्या कार्यप्राप्तौ विशेषहेत्वभावात् । नचोभयप्राप्तिग्रहणे दोषद्वयापातः — येषां परप्राप्ति स्तेषां बद्धत्वेपि प्रमाणबलेन गत्युपपत्तेः, श्रुत्यादीनांचा ऽन्यनिषेधकत्वाभावात् । केषांचित्कार्यप्राप्तेरेव प्रमाणबलेनोपपत्ते'रिति। अवश्यंचैतदेवंविज्ञेयम् । '[8] नच — उभयप्राप्तिग्रहणे दोषद्वयापात' इति प्रतिज्ञाय 'कार्यमेवनयतीत्यन्यव्यावृत्त्या कार्यप्राप्तौ विशेषहेत्वभावा' दित्यभिधानस्या ऽसंगतत्वात् । ननु — कार्यब्रह्मदर्शनाभावात्कार्ये प्राप्तिरयुक्तेत्यत आह — **कार्यप्राप्तिमतांचेति**[5] ॥ एवंतर्हि मुनिमतयोर्विरोध इत्यतआह— **मुनिमतयोश्चेति**[6] ॥ **क्रमानुसारीति**[7]॥ योग्यतातारतम्यानुसारीत्यर्थः ।

**पूर्वपक्षस्तु** — अर्चिरादिमार्गेण गतानां सर्वेषांकार्यब्रह्मप्राप्तिरेव न परप्राप्तिः तत्प्राप्तेरेवोपपन्नत्वात्, देवव्यतिरिक्तानां परप्राप्त्ययोग्यत्वस्य 'ऋतेदेवान् परंब्रह्म कःपुमान् प्राप्नुयात्कचित्' इतिस्मृतिसिद्धत्वात्, 'यदिहवा परमभिपश्यति प्राप्नोतिब्रह्माणं चतुर्मुख प्राप्नोतिब्रह्माणं चतुर्मुख'मिति श्रुतेश्च । नच — ब्रह्मविदाप्नोतिपर [तै०. उ. २ १] मिति साक्षाद्ब्रह्मप्राप्त्युक्तिविरोधः — उदाहृतश्रुतेः कार्यब्रह्मप्राप्त्यनन्तरं समीपएव परप्राप्तिरित्यर्थकत्वात् । कदा परब्रह्मप्राप्ति

‡ सएनानितिश्रुत्यर्थः। १, २, ३, ४, ५, ६, ७. 'अप्रतीके' ति मूलस्थ टी०, प्र०.था०. ६. क्वचित्टीकायां न्यायविवरणेच क्रमानुरागानि पाठोदृश्यते । ८ नचेति॥ अन्यथेत्यादिः ।

रितिचेत् – उच्यते — समस्तकार्यविलयानन्तरं कार्याऽधिपतिना चतुर्मुखेन सह तत्प्रसादान्मुमुक्षुः परं प्राप्नोति ' नहिब्रह्माणमभिसंपद्य यदैतद्विलीयतेऽथसह ब्रह्मणा परमभिगच्छती।'त्यभिधानात्, 'ब्रह्मणासह ते सर्वे संप्राप्ते प्रतिसंचर' इतिस्मृतेश्चेत्येकः ;

**अपरस्तु पूर्वपक्षः** — अर्चिरादिमार्गेण परमेवब्रह्म प्राप्नोतीति 'सएः नान्ब्रह्मगमयती' ( छा० ५-१०-२ ) ति श्रुतेरर्थः, ब्रह्मशब्दस्य तत्रैवमुख्यत्वात् । नच — संसारिणां ब्रह्मप्राप्त्य संभवान्मुख्यार्थ परित्याग इतिवाच्यम् श्रवणादिसाधनैः परब्रह्मणएत्रा ऽपरोक्षीकृतत्वेन तत्प्राप्तेरेवयुक्तत्वात्, प्रत्युत कार्यप्राप्तिरेवाऽनुपपन्ना तद्दर्शनाऽभावात्, किंच – नकार्यविषये उपासना, नापि कार्यं ब्रह्म प्राप्तवानीत्यभिसन्धिर्विद्यते नहि दर्शनोपासनाऽभिसन्ध्यभावे तत्प्राप्तिर्युक्ता परब्रह्मविषयेतु सन्त्येव दर्शनोपासनाऽभिसन्धयः, ततश्चपरप्राप्तिरेव श्रुत्यर्थः कार्यप्राप्तिर्वा उभयप्राप्तिर्वा न श्रुत्यर्थइति ।

**अन्यस्तु पूर्वपक्षः** — कार्यप्राप्तिमात्रं न श्रुत्यर्थः, ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वस्य सर्वात्मनात्यागायोगात् नापि परब्रह्मप्राप्तिमात्रं श्रुत्यर्थः 'प्राप्नोति ब्रह्माणंचतुर्मुख'मिति श्रुतिविरोधात्, किन्तु – उभयप्राप्तिः श्रुत्यर्थः, परंतु – कार्यपरब्रह्मगन्तॄणां तत्प्राप्तौ न स्वरूपतारतम्यं निमित्तं, किंतु – राजपुत्राणां भोजनसमये विलक्षणव्यञ्जनप्राप्तिविवेच्छैव शरणमित्येकः **पूर्वःपक्षः**। **अपरस्तु पूर्वपक्षः** — अस्त्येवकार्यपरब्रह्मप्राप्तौ साधनतारतम्यं निमित्तं महाफलस्य साधनतारतम्यमन्तराऽयोगात्, किंनाम न तद्योग्यता तारतम्यम्, अपितु — यस्य कार्यप्राप्तौसौकर्यं तस्यतत्प्राप्तिः, यस्य परप्राप्तौ सौकर्यं तस्य तत्प्राप्तिरिति ।

**सिद्धान्तस्तु** — ॐ ' वायुः प्रतीकालंबनान्मनुष्यांश्च कार्यंनयती'

---

१. निमित्ततयाविवक्षित तारतम्यबोधनायाह – किं नामेति॥ एतदितिशेषः निमित्ततया विवक्षितं तारतम्यं किं = कीदृशं किं योग्यतारूपं, सौकर्यरूपंवाइत्यर्थः । तत्राद्यंनिषिध्य द्वितीयंसंमतमित्याह -- नेत्यादिना॥ तत् -- निमित्तभूतं तारतम्यम् । ॐ पंक्ति पातः ।

त्यर्थत्वे 'सर्वान्परमेवनयती'त्यर्थत्वेच दोषसद्भावात्. १ नच – इच्छा वशेनैव कार्यपरप्राप्त्योः संभवात् अप्रतीकालम्बनत्वादिविशेषाऽङ्गीकारो व्यर्थ-इतिवाच्यम् — 'सयथाकामो भवती'ति श्रुतौ तत्प्राप्तीच्छूनामिच्छानुसारेण तत्प्राप्तिप्रतिषेधात्, नच – प्रतीकालम्बनत्वादिविभागे प्रमाणाऽभावः — 'प्रतीकं देहउदिष्टो येषांतत्रैवदर्शन'मिति स्मृतेः, 'अन्तः प्रकाशा बहिःप्रकाशा' इतिश्रुतेश्च तत्रप्रमाणत्वात्। अतो ज्ञानिनां प्रळये पूर्वं परब्रह्मप्राप्तिसद्भावात् तथाऽनुस्मृतिरुपपन्नेति सिद्धम् (अ०. ६)

इति श्रीमत्सत्यनिधितीर्थ श्रीचरण चरणाराधक
श्रीमत्सत्यनाथयतिविरचितायां
श्रीमत्तत्वप्राकाशिकाव्याख्याऽभिनवचन्द्रिकायां

**चतुर्थाऽध्यायस्य**
**तृतीयः पादः समाप्तः.**



१. अत्र 'प्रतीकालम्बनान्कार्यम्, अप्रतीकालम्बनान्परंनयतीति उभयप्रापणमेवश्रुत्यर्थ' इत्यादिपङ्क्त्याभाव्य मितिभाति।

श्री रामचंद्रायनमः .

# अथ चतुर्थः पादः

श्री गुरुभ्योनमः

[ १ - अधिकरणम् ]

## ॐ संपद्याऽविहाय रेवनशब्दात् ॐ

**एतत्पादार्थमिति** ।। 'अस्याऽध्यायस्यैकार्थत्वात्पादभेदः किंनिबन्धन-इत्यतः फलेप्यवांतरभेदेन पादभेद उपपन्न इतिभावेने'ति [१] वर्तते तस्या [२] ऽनेन संबन्धः । **यस्तत्रभोग इति** । अनुभवार्थकोभुजिधातुः, [३] कर्मणिल्युत्पन्नो-विषयवाची, भावेल्युत्पन्नस्तु अनुभववाची ततश्चेहप्रकरणे भोगशब्देन यथायोगं-क्वचिद्विषयग्रहणं, क्वचिदनुभवग्रहणमितिबोध्यम । **अर्चिराद्यतिक्रमोक्तिरिति**।। श्रीमद्भागवते — 'वैश्वानरं यातिविहायसा गतः सुषुम्नया ब्रह्मपथेन शोचिषा। विधूतकल्कोऽथ हरे रुदस्ता त्प्रयाति चक्रं नृप शैंशुमार'(२.स्कं०.२.अ०२५श्लो) मिति अर्चिरादिवत् शिंशुमारस्यापिहरेः प्राप्तिमुक्त्वा 'तद्विश्वनाभं प्रतिपद्य विष्णो रणीयसा विरजेनाऽऽत्मनैकम्। नमस्कृतं ब्रह्मविदा मुपैति कल्पायुषो यद्विबुधा रमन्त' (भाग. २-३-२७) इत्यतिक्रमोक्तिः, 'सएनान् ब्रह्मगमयती' (छा०. ५-१०-२) ति गम्यत्वोक्तिश्च, संदेहबीजमित्यर्थः । एतेनाऽर्चिरादीना-मतिक्रमोक्तेः, ब्रह्मणोगम्यत्वोक्तेश्च, भिन्नभिन्नविषयत्वेन विरुध्दोक्तित्वाभावात् असंदेहबीजत्वमिति परास्तम्। परमात्मनोपि अर्चिराद्यन्तर्गतत्वेनाऽतिक्रमप्राप्त्यु-क्त्योः एकविषयत्वात् भिन्नमूर्तिद्वयाऽविषयत्वेन [५] विरुद्धताविज्ञानात् , [६] प्राक्संदेह-हेतुत्वस्याऽवर्जनीयत्वात् । अथवा — अर्चिरादिवत् ब्रह्मणआपातत 'एतं

१. त्रिपाद्यामादिमभागे ऽनुवृत्तमत्राऽनुवर्ततइत्यर्थः । २. अत्रेत्यादिशेषः ।
३. तस्मादित्यादिः, घत्रीतिशेषः, धातूनामनेकार्थत्वा दनुभवार्थकभुजेः कर्मणि घत्रि सतीत्यर्थः । ४. घत्रि सतीतिशेषः । ५. विरुद्धताया विज्ञानात् , प्रतीतेरित्यर्थः ।
६. प्रथमतः आदावित्यर्थः ।

सेतुंतीर्त्वे' [ छा०. ८-४-२ ] त्यतिक्रमोक्तिः, गम्यत्वोक्तिश्च, संदेहबीजमित्यर्थः । **श्रुतिविरोधइति** । 'एतं सेतुंतीर्त्वे'ति श्रुतिविरोध इत्यर्थः ।

**पूर्वपक्षस्तु** — मुक्तो ब्रह्माऽतिक्रम्य भोगान् भुङ्क्ते 'एतंतीर्त्वे'ति ब्रह्मातिक्रमानन्तरं स्वरूपाविर्भावस्य उक्तत्वेनाऽनतिक्रम्य स्थितस्य स्वरूपानुभवा ऽयोगात् , अतो मुक्तस्यब्रह्मातिक्रमनियमात्तद्गम्यामिति ।

**सिद्धान्तस्तु** — ब्रह्मसंपद्याऽविहायैव भोगान्भुङ्क्ते 'सएवंविदेवं मन्वान'इति श्रुतेः, 'परंज्योतिरुपसंपद्यस्वेने' ( छा०. ८-३-२ ) ति श्रुतेश्च, नच — 'एतंसेतुंतीर्त्वा'इति श्रुतिविरोधः — ब्रह्मप्राप्तये ऽन्यतरणस्यैव तदर्थत्वात्, अतो मुक्तस्य ब्रह्मातिक्रमाऽभावात् तदेवगम्यमिति सिद्धम् . [अ०.१]



( २ — अधिकरणम् )

## ॐ मुक्तः प्रतिज्ञानात् ॐ ( ·सू . २ )

ननु — भाष्ये साधकोक्तावपि कृतिराहित्यरूपबाधकाऽनुद्धारात् न्यूनतेत्यतआह — **अतएवेति**।। 'अथयदेनंमुक्तो नुप्रविशती'ति मुक्तस्यापि स्पष्टंक्रियाप्रतीतेः तद्विरोधात् मुक्तस्याऽकृतिमत्त्वंपरास्तमितिभाव इतिसंबन्धः ।

**पूर्वपक्षस्तु** — 'सतत्रपर्येती' ( छा०, ८-१२-३ ) ति श्रुत्युक्तो न मुक्तः पर्येतीति क्रियाप्रतीतेः, मुक्तस्यहि न क्रिया संभवति, कृतकृत्यत्वात् , नच— अमुक्तस्य एवंविधभोगासंभवः —प्रागभावसंभवोपि परमात्मप्राप्त्यनन्तरं संभवात्। नच — श्रुत्युक्तस्या ऽमुक्तत्वे 'स्वेनरूपेणे' [ छा०. ८-३-४ ) ति वाक्यविरोधः तत्रनिर्गुणोपासकस्य स्वरूपाविर्भावाऽभिधानात् । 'सतत्र' [छा०.८-१२-३ ]ति दहरविद्योपासकस्या ऽमुक्तस्यैव भोगाभिधानात् , अतः श्रुत्युक्तस्यऽमुक्तत्वात् न मुक्तस्य भोगइति ।

**सिद्धान्तस्तु** — 'सतत्रपर्येती' ( छा०.८-१२-३ ) त्यत्र मुक्तएवो-

---

१. इत्यादिभाष्योदाहृतश्रुतावित्यर्थः । २. 'सतत्रपर्येती'ति श्रुत्युक्तस्य।

च्यते, मुक्तत्वंविना एतद्भोगासंभवात् स्वरूपाविर्भावोक्तेश्च, नच — एकप्रकरणत्वसंभवे भिन्नप्रकरणत्व कल्पना युक्ता, अतिप्रसंगात् अतो युक्तएव मुक्तस्य भोगइतिसिद्धम् ॥ [ अ०. २ ]



( ३ – अधिकरणम, )

ॐ आत्मा प्रकरणात् ॐ [ सू. ३ ]

**नाविष्णुरि ति** ॥ न विष्णुः, अपितु – सूर्यइत्यर्थः । हेतुं वक्तुं संभावकं तावदाह — **ज्योतिःशब्दस्येति**॥ ज्योतिःशब्दस्याऽऽदित्ये प्रयोगोहेतुत्वेनोक्त इति मन्यमानस्य शंकामनूद्य निषेधति — **नचेति** ॥ **प्रतिज्ञामनुवदन्** तत्रहेतुमाह — **अत्रादित्याङ्गीकार इति**॥ **अत्र – परंज्योतिःशब्देनेति**॥ अत्र यद्यपि — विषयसंशयतद्बीज पूर्वपक्षप्रदर्शनानुरोधात् ज्योतिःशब्देन परमात्मैवोच्यत इतिवक्तव्यम् , तथापि = ज्योतिःशब्दमात्रस्याऽन्यगामित्वेपि परशब्दविशिष्टस्य ज्योतिःशब्दस्य विष्ण्वेकनिष्ठत्वात् , अत्र विष्णुरेव विवक्षितइति द्योतनाय ' परंज्योतिः शब्देने'त्युक्तम् ।

**पूर्वपक्षस्तु** — ' परंज्योति'रिति ज्योतिःशब्दोक्तो न विष्णुः किंतु – आदित्यः ' स तेजासि सूर्ये संपन्नो यथापादोदरस्त्वचा विनिर्मुच्यत' (प्र०.उ०. ५-५ ) इतिसमाख्यानात् एवंच न मुक्तस्य ब्रह्मसमीपे भोगइति ॥

**सिध्दान्तस्तु** — परंज्योतिःशब्देन परमात्मैवोच्यते ' यआत्मापहतपाप्मे ( छा०.८-७-१ )ति परमात्मनएव आरभ्याऽधीतत्वेनऽस्य तत्प्रकरणत्वात् । प्रकरणस्य समाख्यातो बलवत्त्वात् । सूर्यमण्डलप्राप्त्यनन्तरं पापकर्मविनाशाङ्गीकारेण ' सतेजासिसूर्ये संपन्न' इति वाक्यस्य किंस्तुघ्नप्राप्तिपूर्वकालिक सूर्यप्राप्ति परत्वेन सावकाशत्वाच्च परंज्योतिःशब्दस्य अन्यत्राऽभावाच्च, अतः — परंज्योतिः

१. ' परंज्योति'रितिवाक्यस्य, ' सतत्रे'ति वाक्यस्यच मुक्तविषयकत्वरूपैक प्रकरणत्वसंभव इत्यर्थः । २ ' परंज्योति'रितिवाक्यस्य निर्गुणोपास्तिफलपरत्वम् , ' सतत्रे'ति वाक्यस्य दहरविद्यया सगुणोपास्तिफलपरत्वमिति भिन्नप्रकरणेत्यर्थः ।

ब्रह्मैवेति तत्प्राप्य अविहायैव मुक्तो भोगान् भुङ्क्त इतिसिद्धम् [अ०. ३]



( ४ -- अधिकरणम् . )

## ॐ अविभागेनदृष्टत्वात् ॐ ( सू . ४ )

**अत्रसायुज्यभाजामिति।।** अत्र यद्यपि सूत्रभाष्याभ्यां मुक्तमात्रस्य विषयत्वंप्रतीयते, तथापि — यस्मिन्नाधिकरणे विषयत्वेन यदुदाहियते तदेवविषयइति न मन्तव्यम्, किन्नाम — यावान् तन्न्यायगोचरः स सर्वोऽपिविषयः, विषयायुक्तिस्तु उदाहरणमात्रमितिज्ञापनाय सायुज्यभाजामित्युक्तम् — अतएव–येभोगाः परमात्मना भुज्यंते तएव मुक्तै र्भुज्यंतइति सिद्धन्ते सामान्येन मुक्तग्रहणम् ।

**पूर्वपक्षस्तु** — मुक्ताः परमात्माऽभुक्तभोगान्भुंजते अवाप्तमहापुरुषार्थत्वात्, अन्यथा कदाचित् मुक्तानां भोगेच्छायामपि अवाप्तकामत्वेन परमात्मनस्तदनिच्छायां मुक्तानां भोगो न स्यात् । परमात्मभोगंविना, तषां भोगायोगात् [१] ततश्च भगवद्भुक्तभोगभोक्तृत्वात् युक्तं तस्य सर्वभोक्तृत्वमितीतिसिद्धम् ॥ (अ०. ४)



( ५ - अधिकरणम् . )

## ॐ ब्राह्मेणजौमिनिरुपन्यासादिभ्यः ॐ ( सू . ५ )

**नाद्वितीयइति ।** द्वितियःपक्षो नांगीकर्तुमुचित इत्यर्थः । एतेन 'नाद्य' इत्याद्यपक्षं निषेधता द्वितीयक्षस्यांऽगीकृतत्वेन पुनस्तन्निषेधे व्याघातइतिपरास्तम्। **नचोक्तविकल्पइति ।।** प्रसज्यतइति शेषः ।

**पूर्वषक्षस्तु** — न मुक्तानां भोगो युक्तः शरीराभावात्, नच — तेषामपिदेहोविद्यतेइतिवाच्यम् -- मुक्तत्वव्याघातात् । अतो मुक्तौ भोगाऽसंभवात् मुक्तेरपुरुषार्थत्वमिति ।।

---

१. अत्रपंक्तिपातः ।　　२. अत्राऽधिकरणे त्रीणिसूत्राणि ।

**सिद्धान्तस्तु** — नास्त्येवमुक्तानांदेहः तथापि — ब्राह्मेणदेहेन भोगो-युज्यते ' सवाएषब्रह्मनिष्ठ इदंशरीरंमर्त्यमतिसृज्य ब्रह्माऽभिसंपद्य ब्रह्मणापश्यती' त्युपन्यासात्, ' आदत्तेर्हा हस्तेने'ति स्मृतेश्चेति जैमिनिराचार्यो मन्यते, 'मुक्ता-नामपि चिन्मात्रदेहो विद्यते, ' सर्वैवा एनदाचित्परि रित्यज्य चिन्मात्रएव एष भवती'त्युद्दालकश्रुतेः चिन्मात्रेणदेहेन मुक्ता भोगान् भुंजत इत्यौडुलोमिराचार्यो मन्यते, नच — एतन्मतयोर्विरोधइतिवाच्यम् – ' सवा एतस्मात् मर्त्याद्वि-मुक्तः चिन्मात्रो भवति, अथ तेनरूपेणाऽभिपश्यती'ति सौपर्णश्रुतौ उपन्यासात् जैमिन्युक्तस्यापि प्रामाणिकत्वात् अविरोधइति बादरायणोक्तेः भोगसंभवात् युक्त-मुक्तेःपुरुषार्थत्व मितिसिद्धम् (अ०.५)

( ६ – अधिकरणम्. )

## ॐ संकल्पादेवचतच्छ्रुतेः ॐ [ सू . ८ ]

ननु – सूत्रस्थच शद्वाऽव्याख्यानात् न्यूनतेत्यतआह — **चशद्व इति**।। ' न तेषां भोगादिषु प्रयत्नापेक्षेति भाष्येणे'तिशेषः ॥

**पूर्वपक्षस्तु** — तत्तदुपायसाध्य साधनसाध्यो मुक्तभोगः ओकसिस्थित-भोगत्वात्, पृथिव्याद्योकसिस्थित संसारभोगवत्, अन्यथा — लोकविरोधात्। ततश्च — संकल्पसाध्यत्वाभावात् मुक्तेरपुरुषार्थत्वमिति ।

**सिद्धान्तस्तु** — संकल्पसाध्यएवमुक्तभोगः नोपायसाध्यः 'सयदि पि-तृलोक कामोभवति संकल्पादेवाऽस्य पितरः समुत्तिष्ठन्ति ( छा०. ८-२-१ ) इतिश्रुतेः। नच—लोकविरोधः निर्दोषे भगवदोकसि तथात्वस्यैव युक्तत्वात्। अतो मुक्तभोगस्य संकल्पमात्रसाध्यत्वात् युक्तं मुक्ते पुरुषार्थत्व मितिसिद्धम् (अ०.६)

[ ७ – अधिकरणम्. ]

## ॐ अतएवचानन्याधिपतिः ॐ ( सू . ९ )

सौत्रचशद्वार्थमाह — **चशद्व इति** ॥ चशद्वः पूर्वपक्षव्यावृत्त्यर्थ इत्यर्थः।

तस्यैवविवरणम् — 'अनन्याधिपति'रिति सौत्रपदमितिभावः । एतेन अतएव-चेत्यनेनैव पूर्णत्वात् अनन्याधिपति रितिव्यर्थमितिपरास्तम् ॥

**पूर्वपक्षस्तु** — मुक्ताः स्वावरनियम्याः सर्वाधिपतिसदननिविष्टत्वात् राजसदननिविष्टाऽमात्यादिवत् दृश्यन्तेहि — अमात्याअपि राजसदननिविष्टा नीचैरपिप्रतिहारैर्नियम्यमानाः, अन्यथालोकविरोधःस्यात् । अतो मुक्तस्याऽधमनियम्यत्वात् मुक्तेः संसारसमानधर्मत्वमिति ।

**सिद्धान्तस्तु** — सर्वेषां परमात्माऽधिपतिः, प्राणादिनामपर्यन्ता देवाः क्रमेणाऽधिपतयः यैर्ज्ञानं सुप्रतिष्ठितं त आचार्या अपि अधिपतयः । नाऽतोऽन्यो नीचोऽधिपतिर्विद्यते, सत्यसंकल्पत्वात् । लोके अवरनियम्यत्वं हि अनपेक्षितमेव भवति, तत्र मुक्तस्य सत्यसंकल्पत्वादिवनयुज्यते, उक्तंच — 'परमोधिपतिस्तेषां विष्णुरेवनसंशय' इत्यादिना, अतो मुक्तस्याऽधमाधिपतिशून्यत्वात् युक्तं मुक्तेः संसारवैलक्षण्यमिति सिद्धम् [ अ०. ७ ]



[ ८ — अधिकरणम् ]

## ॐ अभावंबादरिराहह्येवम् ॐ [ सू. १० ]

**यथाखलु द्वादशाहेनि** ॥ अत्रक्रतुरित्यहीनउच्यते, अहीनत्वंच अहर्गणसाध्यक्रतुत्वम् यथा 'द्वादशाहमृद्धिकामाउपेयु'रित्युपेयचोदने 'यएवंविद्वांसः सत्रमुपयंति' इतिचोपेयचोदने द्वादशाहस्य सत्वं बहुकर्तृकत्वात्गम्यते, एवं-तस्यैव द्वादशाहेन 'प्रजाकामं याजये'दिति यजतिचोदनेन एककर्तृकत्वात् 'द्विरात्रेणयजती'त्यादिनेव अहीनत्वंगम्यत इति तदुभयं द्वादशाहस्याऽविरुद्धं तथा—मुक्तस्य सशरीरत्वम् अशरीरत्वं च प्रामाणिकत्वादविरुद्धमितिभावः ननु — 'भावेजाप्रद्व' (ब्र. ४-४-१४) दिति सूत्रमनारंभणीयं । शरीराभावे, भोगासंभ-

१. तृतीयातत्पुरुषः । २. अत्राऽधिकरणे सप्त (७) सूत्राणि । ३. 'द्वादशावद्व' (४-४-१२) दितिसूत्रीयटी०. प्र०. धा०. ।

वस्याऽनापादितत्वेन तदुपपादनवैयर्थ्यादित्यत आह — **वक्ष्यमाणेति** ॥ 'प्रदीपवदावेशस्तथाहिदर्शयती (ब्र. ४-४-११) ति वक्ष्यमाणप्रस्तावायेर्थः। ननु — तत्प्रकाशयन्त इतिव्यर्थमित्यतआह—**तत्प्रकाशयन्त इति** ॥ सूत्रे प्रदीपदृष्टान्तग्रहणस्यापि प्राय उच्यत इत्यर्थः । अत्रगुणसूत्रम् — 'स्वाप्ययसंपत्योरन्यतरापेक्षमाविष्कृतंही (ब्र. ४-४-१६) ति । 'तीर्णोहीति वाक्यं सुप्तिमोक्षयोरन्यतरापेक्षम् अन्यतरप्रतिपादकं हि यस्मात् अत्रपिताऽपिताभवति'इत्याविष्कृत'मिति सूत्रार्थः । श्रुतेस्तावदर्थद्वयम् — एकस्यांयोजतायां स्वाप्ययपरत्वं, योजनांतरेतु संपत्तिपरत्वम् इत्यन्यतराऽपेक्षत्वमितिभावः । एतेन — संपत्तिपरत्वस्यैव वक्तव्यत्वात् अन्यतरापेक्षमिति संदिग्धत्वकथनं अयुक्तमितिपरास्तम् ।

**पूर्वपक्षस्तु** — न मुक्तनां भोगोयुज्यते देहभावाभावयोर्विरोधात् तथाहि— मुक्तस्यत्राह्यदेहोविद्यते, नवा, नाद्यः—दुःखसंगात्, द्वितीये भोगाऽसंभवः अशरीरिणोभोगायोगात् । नच — चिच्छरीरेण भोगोपपत्तिः सुप्त्यादौ विद्यमानस्यापि तस्य भोगायतनत्वाऽदर्शनात् । नच — ब्राह्मणदेहेन तदुपपत्तिः परदेहस्य परंप्रति भोगायतनत्वायोगात् । अतः कथमपि मुक्तानां निर्दुःखभोगायोगात् अपुरुषार्थत्वं मुक्तेरिति ।

**सिद्धान्तस्तु** — युक्तएव मुक्तानां भोगः चिन्मात्रदेहसद्भावात् नच तस्यसुप्त्यादर्शनात् भोगायतनत्वासंभवः अज्ञानाद्यावृतत्वेन तदा भोगायतनत्वाभावेपि अज्ञाननिवृत्त्यनंतरं तत्संभवात् तर्हि — प्रतिबद्धंकारणं कार्यंनजनयतीत्येतावता तदपगमेपि कार्यंनजनयतीति सांप्रतम् । नच -- दुःखप्रसंगः बाह्यदेहाभावात् 'अशरीरंवाव संतं न प्रियाप्रिये स्पृशत' इति आम्नानादिति बादरिराचार्योमन्यते, तथा -- युक्तएवमुक्तानांभोगः बाह्यदेहस्यसद्भावात् नच — तत्र प्रमाणाभावः 'त्रिताचा त्रिताचा नित्येनवाऽथानंदीभवति' इति विकल्पाम्ना-

---

१. 'भावेजाग्रद्व' (४-४-१४) दिति सूतीयटीका०.प्र०.धा०. । २. 'प्रदीपव' (४-४-१५) दिति मूलाग्रटी०. प्र०. धा०. । ३. सुप्तिपरत्वमित्यर्थः । ४. मोक्षपरत्व मित्यर्थः ।

नात् इति जैमिनिराचार्यो मन्यते। पक्षद्वयेपि प्रमाणसद्भावात् मुक्तानां बाह्य-देहोविद्यते नविद्यत इति भगवान्बादारायणो मन्यते, नच — शरीरभावाभावयो-रसंभवः द्वादशाहपरिसमाप्यस्य यागस्य इच्छया एकस्यैवकर्तृत्वे ऽहीनत्वम्, अनेकेषां कर्तृत्वे सत्रत्वमिव मुक्तानाम् इच्छया शरीरभावा भावयोरुपपत्तेः, नच — शरीराभावदशायां भोगाभावः, शरीराभावेपि स्वप्नवदुपपत्तेः । ननु — शरीर-दशायां जाग्रद्वत् मुक्तनांबाह्यदेहेन भोगोभिमतः एवंचसति दुःखमपिप्राप्नो-तीतिचेन्न — यथा — प्रदीपो दीपिकां प्रविश्य तस्थंतैलाद्येवभुंक्ते नतु कार्ष्ण्यम् एवं बाह्यशरीरमनुप्रविष्टोपि मुक्तः तत्रसुखमेवभुङ्क्ते, नतु दुःखं 'तीर्णोहितदासर्वाञ्शोकान्हृदयस्यभवती' (बृ०.६ ३-२२) ति श्रुतेः । नन्वियं श्रुतिः स्वर्गादिस्थविषयेति न मुक्तानां दुःखाभावे प्रमाणमितिचेत्, अस्यवा-क्यस्य सुप्तिमुक्तिविषयत्वात् 'अत्रपिताऽपिताभवति अनन्वागतंपुण्येना ऽनन्वागतंपापेने' (बृ०. ६-३-२२) त्याद्यविष्कृतत्वात् । अतो मुक्तानां निर्दुः खभोगानुभवो युक्तएवेति उपपन्नं मोक्षस्यपुरुषार्थत्वमिति सिद्धम् ॥ (अ०.८)



( ९ - अधिकरणम्, )

## ॐ जगद्व्यापारवर्जम् ॐ [ सू. ११ ]

**भोगेयत्तासमर्थनादिति** ॥ नमुक्तानं निरुपचरितसर्वकामाऽवाप्तिः अपितु — स्वयोग्यसर्वकामाऽवाप्तिरिति समर्थनादित्यर्थः । **भगवत इति**॥ उप-लक्षणमेतत्। मुक्तेषुतारतम्याभावप्रसंगात् इत्यपिग्राह्यम् । **सृष्ट्यादिव्यापारा-निति**॥ इदंतुसंदेहप्रदर्शनमुदाहरणमात्रं। मुक्ताःस्वोत्तमैश्वर्यंलभंते नवेत्यपिग्राह्यम् । **सिद्धांतयत्सूत्रमिति**॥ 'सर्वान्कामानाप्त्वे' ऐ०.२-४-४) तीति श्रुत्यर्थकथनेन मुक्तस्य जगद्व्यापारप्राप्ते र्निष्प्रामाणिकत्वसूचनमुखेन सिद्धान्तंसूचयत्सूत्रमुपन्यस्य-व्याचष्टइत्यर्थः एतेन — सूत्रे सिद्धांतहेत्वनभिधानात् सूत्रस्यसिद्धांतप्रापकत्वा-भिधानमयुक्तमितिपरास्तम् । सूत्रे प्रतिज्ञाऽभावात् प्रतिज्ञामध्याहरति — न

१. अत्राधिकरणे चत्वारि सूत्राणि ।

( पा. नं. ७. )

**मुक्तानामिति ॥** प्रतिज्ञयासूत्रसंगमयितुं शङ्कते — **सर्वान्कामानिति ॥ सत्यं तत्रापीति ॥** सत्यंसर्वकामावाप्तिः श्रुत्योच्यत इति तत्रापि तथापि — साश्रुतिर्नास्माकं बाधिका तस्याः श्रुतेः जगद्व्यापारवर्जमेव सर्वान्कामानाप्नोतीत्यर्थोपपत्तेरितिभावः । **कुतःश्रुतेः संकोच इति ॥** 'सर्वान्कामानाप्नो'तिश्रुतेः कुतोजीवपरत्वम् , जीवपरत्वेपि कुतः श्रुत्यर्थसंकोचइति तदेतद् आक्षिपतीत्यर्थः । पक्षसाध्यंनिर्दिशति — **युक्तएवेति ॥** जीवपरत्वेपि , कुतः श्रुत्यर्थसंकोचइति द्वितीयाक्षेपंपरिहरति — **जीवानांचेति ।** प्रकरणात् श्रुत्युक्तोजीवः, असन्निहितत्वात्तु श्रुत्यर्थसंकोचइति सूत्रयोजना द्रष्टव्या । एतेन असन्निहितत्वादित्येतावतैवपूर्णत्वात् सूत्रे प्रकरणादितिव्यर्थम् समुच्चयायोगइतिच परास्तम् । **ताश्चएता इति ॥** ताश्चएताः = प्रसिद्धाः, चतस्रः = भूर्भुवःस्वर्महरिति चतुर्विधव्याहृतिप्रतिपाद्याः अनिरुद्धाद्याः भगवन्मूर्तयः , प्रत्येकं अनिरुद्धादिभेदेन चतुर्धाः या एताः चतस्रः = अनिरुद्धाद्याः, चतस्रः = प्रत्येकमनिरुद्धादिभेदेन चतस्रः व्याहृतिप्रतिपाद्याः, ता एताः षोडश भगवन्मूर्तीः, यो वेद स ब्रह्मवेदेत्यर्थः । **अमुक्तज्ञानिनामिति ॥** अमुक्तस्वरूपं साकल्येनपश्यतां ज्ञानिनाममुक्तनिष्ठतया जगदैश्वर्यादर्शनात् नायंश्रुत्यर्थ इत्यर्थः । किमेतच्छ्रुतिबलेना ऽशेषमुक्तानां परमेश्वरवत् जगदैश्वर्यमुच्यते, उत — हिरण्यगर्भस्यैवेति विकल्पं मनसिकृत्वा पक्षद्वयप्रतिषेधं [ युगपत्प्रतिजानीते — **नैतच्छ्रुतिबलेनेति ॥** एतच्छ्रुतिबलेन हिरण्यगर्भस्यवा अशेषमुक्तानांवा, जगदैश्वर्यं नसिध्यतीत्यर्थः । प्रतिज्ञाद्वये युगपत् हेतुमाह — **मुक्तहिरण्यगर्भस्यैवेति ॥ अतायं विवेकः** हिरण्यगर्भमात्रविषयत्वाच्छ्रुतेः नाऽनया सर्वेषां जगदैश्वर्यसिद्धिः, हिरण्यगर्भस्यापि मंडलाधिपत्यप्रतिपादकत्वात् नाऽनयास्यैश्वर्यसिद्धिरिति । **आधिकारिकपदमिति ॥** श्रुत्यन्तरसिद्धस्य स्वावरनियामकत्वस्य सूचनायाऽऽधिकारिक पदमित्यर्थः । **ननु मुक्तानामिति ॥** मुक्तेष्वतारतम्यमदृष्ट्वा सर्वमिदमुपपन्नं भवेत् तदयुक्तं इत्यतः प्रमाणोदाहरणेन तारतम्योक्तिपूर्वकं हिरण्यगर्भस्य सर्वाधिपत्यकत्वं

१, २, ३. ' प्रकरणा' (४-४-१९) दिति सूत्रार्थटी० प्र० पा०

१, २, ३, ४, ५, ६, ' प्रत्यक्षोपदेशा' दिति सूत्रार्थटी० प्र० पा०

दैवानां स्वावरनियामकत्वंचाहाऽऽचार्यो भाष्यकार इत्यर्थः। आत्मत्वोपासकानां श्वेतद्वीपगमनोक्तिरयुक्ता 'योग्यत्वंचात्र विवक्षित'मिति गीताभाष्ये न सर्वेषु मुक्तानांश्वेतद्वीपावाप्तिः, किंतु — अत्र श्वेतद्वीपावाप्तौ योग्यत्वंच विवक्षितमिति अभिधानादित्यतआह — योग्यत्वंचेति ॥ गीताभाष्ये मिवासार्थमेव योग्यत्वमुक्तं 'नतु दर्शनार्थमुक्तमितिनतद्विरोध इतिभावः। पृथिवीमारभ्येति। पृथिवीमारभ्यकेचिदत्रैवमुच्यन्ते' इत्युक्तक्रमेण स्थितेषु यावत्सुस्थानेषु नारायणोऽस्ति तावत्सर्वस्थानेषु सालोक्याद्यस्त्येवेत्यर्थः। ननु — नारायणावस्थानं नसालोक्यादिप्रयोजकं नरकादावपि तत्प्रसंगादित्यतआह — ईश्वरस्येति ॥ मुक्तप्राप्यत्वरूपविशेषस्यउक्तस्थानेष्वेवावस्थितेरत्रैव सालोक्यादीतिभावः। अत एवमूले क्षीरसागर इति यावत्सुस्थानेषु नारायणोऽस्ति तावत्सु सालोक्याद्यस्तीत्युक्तम् ,अन्यथा— क्षीरसागर इतिपदं व्यर्थंस्यात् चकारेणेति ॥ 'प्रत्यक्षोपदेशान्ने'ति [1] नकारः चकारेणाऽनुषज्यत इत्यर्थः। ननु — किं चकारंप्रयुज्य तेन नकारानुकर्षणेन नकारएव किं न प्रयुज्यते; नच — सूत्रलाघवंभवति; चकारप्रयोगेवा नकारप्रयोगेवा साम्यात्; प्रत्युत चकारप्रयोगे प्रतिपत्तिगौरवमितिचेन्न — अनुवृत्त्यैवलभ्यस्य नकारस्य प्रयोगायोगात्। नच — चकारवैयर्थ्यं चकारप्रयोगे उत्तरसूत्रेषु नकारानुवृत्तिर्विज्ञायेत, 'तन्माविज्ञायी'ति चकारप्रयोगः, 'चानुकृष्टं नसर्वत्रे'ति नियमात् चकारप्रयोगे उत्तरसूत्रेष्वनुवृत्त्यभावो विज्ञायते।यद्यपि उत्तरत्रनत्रोऽन्वयानुपपत्त्यापि अनुवृत्त्यभावोविज्ञातुंशक्यः, तथापि — अंतरंगज्ञापकाभावएव बहिरंगमन्वेषणीयम् इहतु — शिष्यहितैषिणा सूत्रकृता अन्तरंगज्ञापकमुक्तम्। मानवमावर्तमिति पदद्वयेनोक्तमर्थं तद्वाचकप्रसिद्धपदस्य व्युत्पत्तिप्रदर्शनमुखेन ज्ञापयति — मानवायत्रेति ॥ एतेन मानवावर्तमिति समस्तपदस्य मूलेऽभावात् तव्द्युत्पत्ति प्रदर्शनमयुक्तमिति परास्तम्।

**पूर्वपक्षस्तु** — मुक्ताअपि पारमेश्वरं जगद्व्यापारमाप्नुवन्ति, 'सर्वा-

---

१, २, ३. 'प्रत्यक्षोपदेशा' दिति सूत्रायटी०. प्र०. धा०.

४. 'विकारावर्ता' (४-४-२०) ति सूत्र टी०. प्र०. धा०.।

[1] इति सूत्रादित्यर्थः। चकारेति ॥ क्वचित्टीकायां चशब्देनेतिपाठः।

न्कामानाप्नोती'तिश्रुतेः । नच — सर्वशब्दसंकोचः बाधकाभावात् । अन्यथा-सत्यकामत्वव्याघातः कामिताऽप्राप्तौदुःखप्रसंगश्च, अतो मुक्तनां जगज्जन्मादि-कर्तृत्वात् अयुक्तं लक्षण सूत्रमिति ।

**सिद्धान्तस्तु** — ॥ नमुक्तनां सर्वकामावाप्तिः, प्रमाणाभावात् । नच— 'सर्वान्कामानाप्स्वे' ति श्रुतिस्तत्रप्रमाणमितिवाच्यम्, योग्यसर्वकामाऽवाप्तेरेव-श्रुत्यर्थत्वात् । ननु — 'सर्वान्कामानाप्स्वे' ति श्रुतेः ईश्वरपरत्वेन जीवपरत्वा-भावात् नानयाश्रुत्यामुक्तस्य जगद्व्यापारसिद्धिरित्येवोत्तरं युक्तमितिचेत् — उच्यते— संकोचेनैवोत्तरंयुक्तं. श्रुतेर्जीवपरत्वात् तत्कुत इतिचेत्, 'शरीरभेदादुत्क्रम्ये'ति जीवप्रकरणात् । अस्तुश्रुतेः जीवपरत्वं, संकोचः कुतइतिचेत् — जीवस्य तादृक्सामर्थ्यविधुरत्वात् । ननु — अस्त्येव मुक्तानां जगदैश्वर्यं, 'सर्वेस्मैदेवा-बलिमावहन्ति' इति प्रत्यक्षोपदेशादितिचेन्न — किमनयाश्रुत्या सर्वमुक्तानां जग-दैश्वर्यं सिध्यतीत्युच्यते, उत चतुर्मुखस्य, नाद्यः — श्रुतेश्चतुर्मुखविषयत्वात्, नापिद्वितीयः — चतुर्मुखस्य मुक्ताऽऽधिकारिक मंडलाधिपत्यस्यैवा ऽभिधानेन सर्वाधिपत्यानभिधानात् । ननु — ब्रह्मादिदेवानां मुक्तनियामकत्वमात्रमेव कुतो गीक्रियते संसारिनियामकत्वमपि किं न स्यात् इतिचेत्, न — 'इमंमानवमावर्तं नावर्तंत' इति निषेधात् अतो मुक्तानां जगद्व्यापाराभावात् युक्तं लक्षणसूत्रमिति-सिद्धम् ॥ ९. ॥



( १० — अधिकरणम् )

## ॐ स्थितिमाहदर्शयतश्चैवं प्रत्यक्षाऽनुमाने ॐ (सू. २१ )

**अस्त्येवेति** ॥ ननु — ह्रासस्य संसारसमानधर्मत्वापादकत्वात् सएव पूर्वपक्षिणा वक्तव्य, निराकर्तव्यश्च सिद्धांतिना ' ननु — पूर्वपक्षिणा आनं-दादिनां वृद्धिर्वक्तव्या, तस्याः संसारसमानधर्मतानापादकत्वेन मुक्तेरपुरुषार्थत्वा-नापादकत्वात् इतिचेत् — उच्यते — मुक्तयनंतरमपि उपासनादिना वृध्यंगी-कारे अधमोपि मुक्तो जीवः दीर्घेणकालेना ऽनुष्ठितया भगवदुपासनया उत्त-

१. अत्राऽधिकरणे द्वेसूत्रे ।

मानपि अतिक्रमेत्, ततश्च उत्तमानाम धमनियम्यत्वं प्रसज्येत तच्चानिष्टमिति ह्रासवत् वृद्धिरपि पूर्वपक्षिणा वक्तव्या निराकर्तव्याच सिद्धांतिना। अथवा–मुक्तवृद्धेःतत.पूर्वं कृतकृतत्यताविरोधित्वेन संसारसमानधर्मताऽऽपादकत्वात् ह्रासवत् वृद्धिरपिपूर्वपक्षिणा वक्तव्या निराकर्तव्याच सिद्धांतिनेति द्रष्टव्यम्। वृद्धौह्रासत्वेहेतुमाह — **उपासनादि श्रवणादिति** ॥ उपासनाहि वृद्धिहेतुरितिप्रसिद्धैव भगवदुपासनया ऽऽनंदवृद्धेराभिहितत्वात् उपासनैव तध्द्रासहेतुश्चभवति उत्तमातिक्रमप्रयत्नत्वात्। तद्यथा — स्वोचदारपरिग्रहश्चन्द्रसुग्रीवयोः तात्कालिकेष्टहेतुरपि बलव्दनिष्टहेतुरपिभवति, एवंमुक्तोपासनापि तात्कालिकवृद्धिहेतुरपि उत्तमातिक्रमप्रयत्नरूपत्वात् पश्चाद्धाव्यानन्दादिह्रासहेतुरपिभवतीतिभावः। आस्तांतावदुपासना मुक्तानांतावत् 'स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा ऽज्ञातिभिर्वे' (छा०. ८-१२-३) ति विकल्पेन उत्कृष्टापकृष्टभोगसाधनावाप्तिःश्रूयते, तयैव वृद्धिसिद्धिरित्याह — **भोगानामिति** ॥ भुज्यंतेऽभिरितिभोगाः भोगसाधनानि, तेषां मध्ये केषांचिदुत्कृष्टत्वात् केषांचिदपकृष्टत्वादित्यर्थः। भोगसाधनस्त्र्यादि तारतम्येऽपि आनंदादि तारतम्यं कुतइत्यतआह — **कारणानुगुणत्वादिति** ॥ वृद्धिसिद्धौपूर्वोक्तरीत्याह्रासः स्वयमेवसिध्यतीति वृद्धिसिध्यर्थं हेतुमाह — **मुक्तस्यवशित्वेनेति** ॥ अत्रगुणसूत्रम् — **'भोगमात्रसाम्यलिङ्गच्चे'** ति भोगमात्रेपि उत्कृष्टापकृष्टभोगसद्भावेपि मुक्तस्यसाम्यलिंगात् न मुक्तस्यवृद्धिह्रासौयुक्ताविति सूत्रयोजना। **एवंचेति** ॥ भोगमात्रस्य = स्त्र्यादिसर्वभोगस्य, विशेषे = तरतम्ये सत्यपि, यच्छ्रुत्युक्तं मुक्तानांसाम्यं तदेव भोगविशेषः तद्वृध्यादौ नकारणमित्यस्मिन्नर्थे लिंगम्। अन्यथा — भोगविशेषस्य वृध्यादिकारणत्वाङ्गीकारे साम्यानुपपत्तिः स्यादितिभावः ॥

**पूर्वपक्षस्तु** — मुक्तानामप्यानंदादीनां वृद्धिह्रासौविद्येते। 'एतत्सामगाय न्नास्त' (तै.उ.३-१०) इत्यादिना तरयाप्युपासनादि श्रवणात्, किंच — भोगानां 'स्त्रीभिर्वायानैर्वे'त्यदिना वृद्धिह्रासौदश्येते कारणानुगुणत्वात्कार्यस्य आनंदादीनामपि

१. 'भोगमात्रे'(४-४-२२)ति सूत्रंयटी०. प्र०. धा०.। क्वचित्टीकायाम् इदंचेतिपाठः।

तावंगीकर्तव्यौ अतोमुक्तानामपिवृद्धिदर्शनात् संसारेसमानधर्मत्वेन मुक्तेर-पुरुषार्थत्वमिति ।

**सिद्धान्तस्तु** -- न मुक्तानन्दादीनां वृद्धिह्रासौ "सएषएतस्मिन्ब्रह्मणी" ति जाबलश्रुतेः । महतांप्रत्यक्षात् कारणाभावलिंगाच्च । नमु — नमुक्तानंदादि-वृद्धिह्रासेच कारणाभावः, कदाचित्भोगवृद्धेः कदाचित्तदभावस्य प्रमितत्वा-दितिचेन्न — ' एतमानंदमयमात्मानमनुविश्ये'ति श्रुतौ भोगानां वृद्धिह्रासेऽपि मुक्तानंदसाम्याऽभिधानेन मुक्तभोगानां वृद्धिह्रासयोः तदानंदवृद्धिह्रासौ प्रति अकार णत्वात् । ननु माभूत् ह्रासः वृद्धिस्तुभविष्यति तस्यसत्यकामत्वेन कामिताऽशेष-प्राप्त्यावृद्धिसंभवात् । नच — नासौ कामयतइति युक्तम् आनंदवृद्धेरिष्टत्वेन कामनानंगीकाराऽयोगात् इतिचेन्न — योग्यस्यप्राप्तत्वात् अयोग्यकामनायाश्च ' नचायोग्यंविमुक्तोपी'त्यनेननिषिद्धत्वेन कामनांगीकारस्यायुक्तत्वात् ' अवृद्धिह्रास-रूपत्वं मुक्तानां प्रायिकंभवेत् । कादाचित्कविशेषस्तुनैवतेषांनिषिध्यत' इति वचनात् कादाचित्कविशेषस्त्वभ्युपगंतव्यः । अतो मुक्तानां वृद्ध्याद्यभावेन न संसारसमान-धर्मत्वं मुक्ति रितिसिद्धम् ॥ ( अ० १० )

[ ११ – अधिकरणम् ]

## ॐ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॐ ( सू० २२ )

**पूर्वपक्षस्तु** – मुक्तःपुनरावृत्तिमान् , स्वस्थानंविहायाऽन्यत्रगतत्वात् स्वर्गा-दिगतत्ववत् । नच स्वर्गगतस्ययुगमन्वंतरादिमात्रवासित्वात् युक्तापुनरावृत्तिः, नतु मुक्तस्य , तस्याऽनंतकालवासित्वादितिवाच्यम् – अनंतस्यापि कालस्य भारत-युद्धे त्रयोदश्याः पंचदशीत्ववत् एकैकस्याः तिथेः अनेकतिथ्यात्मकत्वेन समाप्ति-संभवात् अतः पुनरावृत्तिसद्भावात् नपुरुषार्थतामुक्तेरिति ।

**सिद्धान्तस्तु** — न मुक्तः पुनरावृत्तिमान् 'नच पुनरावर्तते नचपुनरा वर्तते' [ छा० ८-१५-१ ] इति शब्दात् , किंच — सत्यकामस्य मुक्तस्य नमुक्तेः परावृत्तिः युक्ता, कामनाविरहात् अनन्तकालस्थायित्वाच्च न परावृत्तिः, नच —

अनन्तस्याधिकालस्य समाप्त्यनन्तरं परावृत्तिरस्त्विति नाव्ययम्। अनन्तकालस्य समाप्तिमभिधाय अनन्तरमितिपुनः कालसङ्ख्याके व्याहतत्वात्, अतो मुक्तानां पुनरावृत्त्यभावात्युक्तंमुक्तेः पुरुषार्थत्वमिति सिद्धम्। [अ० ११]

इत्यशेषमति मङ्गलम्

❀

वालित्थेत्यादिवेदवचन इति॥ अयमत्रसूक्तार्थः— 'बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसोयतोजनि' सहसः=सहोरूपस्य देवस्य क्रीडादिगुणसंपन्नस्य वायोः मूलरूपं वट्=बलात्मकं, दर्शतं =ज्ञातरूपं, भर्गः = भरणगमनगुणं, तत् = मूलरूपम्, इत्था = इत्थंभूतमेव, मूलरूपत्वेन, वपुषे = रूपत्रयाव तारास = यतः = अस्मात् = भगवता, धायि = निहितं भगवताप्रेरितमित्यर्थः तस्मात अजनि। (१)

प्रथमावतारस्वरूपमाह— 'यदीमुपह्वरतेसाधतेमतिऋतस्यधेनाअनयंतसस्तुतः'। यदीम् = यदेव, मतिः = हनुमदाख्यप्रथमरूपम्, उपह्वरते, = रामस्य समीपेतिष्ठति, साधते = रामस्यकार्याणि साधयति, तेन = हनुमता, ऋतस्य = सत्यरूपस्यरामस्य, सस्तुतः = अमृतस्वावयुक्ताः, धेनाः = वाचः, अनयन् = सीतांप्रतीतिशेषः। (२)

द्वितीयावतारस्वरूपमाह— 'पृक्षो वपुःपितुमान्नित्य आशये द्वितीय मा सप्तशिवासु मातृषु' द्वितीयंवपुः = भीमाख्यं, पृक्षः = पृतनाक्षयकारि, पृतनायाः पृत्, क्षि क्षयेइत्यस्मात्डसूप्रत्यये पृक्षइतिरूपम् पितुमान् = अन्नवान्, बहुभुगितिभावः, नित्यः = नित्यम्, सप्तशिवासु = परम मंगलरूपासु, सततमातृषुप्रमाणभूतासु, ऋगादिषु. आशये = शेते, तद्विचारयतीतिभावः। अनेन द्वितीयावतारवाचकभीमशब्दार्थ उक्तोभवति। (३)

तृतीयावतारस्वरूपमाह— 'तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषण'। अस्यवृषभस्य = श्रेष्ठस्यवायोः, तृतीयं = वपुः, दोहसे =

१. इदंसूक्तं (ऋ. २-२-८)

ज्ञानदोहाय, दशप्रमतिम् = पूर्णप्रज्ञनामकम्, योषणः = नार्यः, गुरुत्वा-द्बहुवचनम्, जनयन्त = अजनयन्त । (४)

'निर्यदीं बुध्ना न्महिषस्य वर्पस ईशानासः शवसा क्रन्तः सूरयः' बुध्नात् = ज्ञानरूपात्, यदीम् = यस्मादवे, महिषस्य = महितषड्गुणस्यहरेः, वर्पसः = वरणीयत्वात्, पालकत्वात् वर्पोनामकानगुणान्, ईशानासः = रुद्राद्यादेवाः, अन्येसूरयः = ज्ञानिनश्च, शवसा = सुखेन, निर् क्रन्त = ज्ञातवन्तः, एतत्-तृतीयंवपुरितिपूर्वेणसंबन्धः । (५)

'यदी मनु प्रदिवो मध्व आधवे गुहासन्तं मातरिश्वा' मथायति यएव प्रदिवा = प्रकृष्टप्रकाशरूपः, मध्वः = आनन्दतीर्थाह्वयः, मातरिश्वा = वायुः, गुहासन्तम् = जीवेश्वरैक्यंवदद्भिः, गूहितं-भगवन्तम्, आधवे = आसमन्तात् पतित्वविषये,मथायति = मथ्नाति शास्त्रेणविचार्य पतित्वं निश्चाययतीतिभावः। (६)

'प्रय त्पितुः परमा न्नीयते पर्या पृक्षुधोवीरुधो दंसु रोहति' यत् = रूपत्रयम्, पितुः = परमात् — उत्तमाद्विष्णोः प्रणीयते = प्रकर्षेणप्रेर्यते, पृक्षुधः = प्रश्न रूपान्, वीरुधः = स्तंबादीन्, दंसु = दन्तेषु, पर्यारोहति = चर्वितवत् शकलीकरोतीत्यर्थः । (७)

'उभायदस्य जनुषं यदिन्वत आदिद्यविष्ठो ऽभवद्घृणाशुचिः' यत् = यस्मात्, जनुषं = जन्म अवतारम्, उभा = उभौलक्ष्मी-नारायणौ, इन्वतः = प्रेरयतः, तस्मात्, घृणाशुचिः = कृपयाशुद्धः, सआ-दित् = आभ्यांलक्ष्मीनारायणाभ्यामेव, यविष्ठः = अवरः, अभवदित्यर्थः। (८)

गर्भसंबन्धानिमित्त दुःखलेशोपि नास्तीत्याह — 'आदिन्मातृराविश द्या-स्वाशुचि रहिंस्यमान उर्विया विवावृधे' यतोवायुः, आदित् = प्रकृतलक्ष्मी-नारायणप्रेरणयैव (णादेव) मातृः आविशत् = नपुनरस्यगर्भवासादिनिमित्तं (किं) कर्मा ऽस्तीतिभावः । यासुमातृषु, आ = समन्तात्, शुचिः, शुचित्वमेवाह — उर्वियेति ॥ उर्विया = उत्कृष्टया गर्भवासपीडया, अहिंस्यमानः = विवा-वृधे = विशेषेणाऽभिवृद्धो ऽभूदित्यर्थः । (९)

'सत्ताशिवासुमातृ'ष्वित्युक्तं तत्र विशेषमाह — 'अनुयत्पूर्वा अरूह त्सनाजुवो निनव्यसी ष्ववरासु धावते' सनाजुवः = सनातनं जुषन्तेप्रतिपादयन्तीति सनाजुवः, पूर्वाः = ऋगाद्याः, आरुहदितियत् तत् अनु = क्रमादेव, उपक्रमाद्यनुसारेणैवेत्यर्थः। नव्यसीषु=पौरुषेयत्वेन नूतनासु, अवरासु=तिसृषु इतिहासपुराण पञ्चरात्राख्यासुमातृषु निधावते उपक्रमादिपर्यालोचनांविनैव शीघ्रमेव - अर्थविचारयतीत्यर्थ इति। (१०)

स्वप्रतिपादितगुणादिविशिष्टतया संकीर्तनपूर्वकं तत्प्रीतिं प्रार्थयते — उत्पत्तीति॥ ननु — सर्वज्ञकल्प पद्मनाभतीर्थादिभि र्व्याख्यातभाष्यव्याख्यानाय स्वप्रवृत्तिरपहासहेतुरित्याशङ्का मया करोति — अगाधबोधैरिति॥ स्वग्रन्थस्य-प्रचयं प्रार्थयते — मध्वेति॥

सद्यो मोक्षं सतां रामचन्द्राऽभिनव चन्द्रिका।
हस्तप्राप्तमिवा ऽऽनेने चतुर्थाध्यायसंगता॥ १॥

इति श्रीसत्यनिधितीर्थ श्रीचरण चरणाराधक-
श्रीमत्सत्यनाथयति विरचितायां
श्रीमत्तत्त्वप्रकाशिकाव्याख्याऽभिनवचन्द्रिकायां
**चतुर्थाध्यायस्य चतुर्थःपादः समाप्तः**
चतुर्थाध्याय, ग्रन्थश्चायंसमाप्तः॥



१. आचार्यकल्पेत्यर्थः।